॥ श्री हरिः ॥

# वेदस्वरूप

## विमर्शः





श्रीकरपात्रस्वामी

॥ श्रीहरिः ॥

# वेदस्वरूप-विमर्शः





परमहंसपरिव्राजकाचार्यवर्यानन्तश्रीविभूषित-

**स्वामिश्रीहरिहरानन्दसरस्वती (श्रीकरपात्र) महाराजैः**

प्रणीतः ।





सम्पादकः

पण्डितश्रीरामगोविन्दशुक्लः

न्याय-व्याकरण-साहित्याचार्यः ।



प्रकाशिका

**भक्ति-सुधा साहित्य परिषद**

कलकत्ता

प्रकाशिका
भक्ति-सुधा-साहित्यपरिषद्
१४५, काटन स्ट्रीट
कलकत्ता—७

॥ श्रीः ॥



प्रथमं संस्करणम् : २०००
अनन्तचतुर्दशी : २०२६ वि०
मूल्यम् : रूप्यक-सप्तकम्



मुद्रक :
नारायणस्वरूप ब्रह्मचारी
सन्मार्ग प्रेस
वाराणसी

# किञ्चिन्निवेदनम्।

वेदाः सर्वस्य लोकस्य कारणानि इत्यामनन्त्याम्नायविदः। वेदादेव स्थावरजङ्गमात्मकस्य लोकस्य प्रादुर्भावः। तस्यैव सर्वकारणकारणस्य वेदस्य वास्तविकं स्वरूपं को नाम वक्तुमीष्टे विना तपःप्रभावप्रकाशितत्रिकालेन पुरुषेण। अत्र पुराणानि, सेतिहासानि दर्शनानि, वेदाङ्गानि च बहुवदन्ति येनाल्पधियां व्यामोहो नास्वाभाविकः। अतएव परमकारुणिकैः, वेदप्रतिपादितधर्मप्रतिष्ठापनाचार्यैः, अशेषशास्त्राध्ययनबोधाचरणप्रचारणपरैः, युगेऽस्मिन् वैदिकधर्मवितानस्याधारस्तम्भैः अनन्तश्रीस्वामिहरिहरानन्दसरस्वती (श्रीकरपात्री जी) महाराजैः सर्वोपादेयतामाकलय्य वैदिकमार्गविप्लावनपराणां वेदविज्ञानवादिनां, अन्येषां च ईश्वरप्रणीतत्वं ऋषिप्रणीतत्वं चांशतः वदतां, ब्राह्मणानां च वेदत्वमस्वीकुर्वतां मतानि युक्तिप्रमाणाभ्यां निराकृत्य वैदिकधर्मस्य मर्माधिजिगांसूनां कृते अयं **'वेदस्वरूपविमर्शो'** नाम रुचिरो ग्रन्थः निरमीयत।

पूज्यचरणाः श्रीस्वामिपादाः १९०५ ईस्वीयवत्सरे उत्पन्नाः ज्योष्पीठाधीश्वरशङ्कराचार्यानन्तश्रीस्वामिब्रह्मानन्दसरस्वतीमहाराजसविधे गृहीतसंन्यासव्रताः, स्वात्मनोऽलौकिकया प्रतिभया व्याकरणं दर्शनानि चाधीत्य गङ्गातटे भ्रमन्तः देशस्य प्रतिकोणं गोवधं, धर्मत्यागं, वैदिकधर्मस्य विशृंखलतां चावलोक्य खिन्न-मानसाः धर्मसंघस्थापनेन यागादिना अपूर्वमुत्पाद्य वैधानिकेनान्दोलनेन खिन्नमनसामपि हृदये पुनः स्वाज्यप्राप्तेः उत्साहं, परराष्ट्रे तद्राष्ट्रस्य दुर्भाग्यसूचकं समाजवादशासनं च प्रकटय्य देशस्य महान् कार्यभारः देशस्य जनतायाः हस्तगतमकार्षुः। अधुना च वेदमार्गप्रतिष्ठापनाय, गोवधनिरोधाय, देशे विशृंखलस्य शासनस्य सुस्थिरता सम्पादनाय विविधैरुपायैः प्रयन्तं कुर्वन्तः विराजन्ते।

एभिः भक्तिमार्गे, ज्ञानमार्गे, राजनीतौ, धर्मनीतौ, वेदमार्गे च वास्तवि-

ज्ञानप्राप्त्यै हिन्दीभाषायां संस्कृते च अनेके ग्रन्था निबद्धाः। तेषु प्रकाशमानीतास्तु इमे—

१—भगवत्तत्त्व ( हिन्दी )
२—संकीर्तन और वर्णाश्रममर्यादा ,,
३—रामराज्य और मार्क्सवाद ,,
४—भक्तिसुधा १—३ भाग ,,
५—वेदकास्वरूप और प्रामाण्य१—२ भाग
६—राहुल की भ्रान्ति ,,
७—अहमर्थ और परमार्थसार ,,
८—समाधान ,,
९—संघर्ष और शान्ति ,,
१०—जाति राष्ट्र और संस्कृति ,,

१—भक्तिरसार्णवः ( संस्कृतम् )
२—समन्वयसाम्राज्यसंरक्षणम् ,,
३—वेदप्रामाण्यमीमांसा ,,
४—वेदस्वरूपविमर्शः ,,
५—महात्रिपुरसुन्दरीवरिवस्या ,,
६—तिथिनिर्णयः

अयमस्ति प्रस्तुतः ग्रन्थः वेदस्वरूपविमर्शो नाम। अत्र चत्वारः भागाः सन्ति। ते यथा—

१—वेदस्वरूपविमर्शः
२—वेदप्रामाण्यविमर्शः
३—वेदापौरुषेयत्वविमर्शः,
४—ब्राह्मणानां वेदत्वविमर्शः।

अत्र ग्रन्थे वेदविज्ञानसम्बन्धिग्रन्थानां, निबन्धानां, दयानन्दमतानुयायिनिबन्धानां वेदसम्बन्धिनां तथा युक्तिभिस्तर्कैः प्रमाणैश्चाप्रामाण्यं प्रतिपाद्य सिद्धान्तपक्षः महताटोपेन विवृतो वर्तते।

यद्यपि अयं ग्रन्थः श्रीचरणैः पूर्वमेव लिखित आसीत् तथा श्रीस्वामिचरणैः रचितग्रन्थसम्पादनपराणां श्रीगोविन्दवैजापुरकरमहोदयानां सम्पादकत्वे नियुक्तश्चासीत्। तथापि प्रकाशनकर्मणि शीघ्रतामाकलय्य सबहुमानं कृपया मह्यम् अदायि येनास्य सम्पादनभारः श्रीचरणानामाशीर्भिर्मया निर्व्यूढः।

सन्मार्गमुद्रणालयव्यवस्थापकाः पं० श्रीनारायणस्वरूपद्विवेदब्रह्मचारिणोऽपि धन्यवादार्हाः। येषां सहयोगेन अयं ग्रन्थः नव्यैः भव्यैश्च शीशाक्षरैः मुद्रितः सहृदयानां पाठकानां मनांसि आवर्जयति।

वाराणसेय संस्कृतविश्वविद्यालयसाहित्यविभागाध्यक्षाः साहित्यमीमांसाचार्याः श्रीमन्तः पट्टाभिरामशास्त्रिमहाभागाः सविशेषं धन्यवादार्हाः । येन विषयप्रवेशकारिण्या भूमिकया सौरभ्यमानीतोऽयं ग्रन्थः ।

यतिकुलकमलदिवाकरणां सर्वप्रकारेण मयि वत्सलां दृष्टिमादधतां अनन्तश्रीस्वामिकरपात्रमहाराजानां चरणकमलयोः सप्रणिपातं प्रणम्य केवलं तदीयोऽहमित्युक्त्यैवात्मानं बहु मन्ये ।

अस्य ग्रन्थस्य मुद्रणालयप्राप्तेः पूर्वं यदपि सम्पादकस्य कृतेऽनिवार्यतयावश्यकं भवति तत्सर्वं विद्वद्वाराणां श्रीमार्कण्डेयब्रह्मचारिमहोदयानां सहयोगेन दुर्लभं नाभवत् अतस्तेऽस्मिन् विधौ सगौरवं स्मरणीयाः । अत्र अवसरे वेदान्तिश्रीसन्तशरणमहोदयाः धन्यवादार्हाः येषां प्रकाशनकर्मणि अवश्यकः सहयोगः उत्साहयति । श्रीमन्तः वासुदेवब्रह्मचारिणोऽपि धन्यवादार्हाः येषामविश्रान्तं प्रवर्तमाना लेखनी सुवाच्यतामनयत् ।

सर्वमप्येतत् कार्यं प्रकाशनायत्तम् विना प्रकाशकेन पाठकानां करसरसीरुहेषु समर्पणं दुःशकं स्यात् । अत्र कर्मणि दिल्लीस्थसर्वविदशाखासम्मेलनदत्तार्थसाहाय्येन कलिकातास्थ भक्तिसुधा साहित्य परिषत् सदस्यैः प्रकाशनस्य भारो गृहीतः । तेऽपि मुख्यतया धन्यवादभाजो भवन्ति । तत्र श्रेष्ठिप्रवरं श्रीहनुमानप्रसादधानुकामहोदयं शुभाभिराशीर्भिः युञ्जन्श्रीविश्वेश्वरचरणकमलयोः पुष्परूपेण ग्रन्थमिमं समर्पयामि ।

रामगोविन्दशुक्लः

अनन्तचतुर्दशी
२०२६ विक्रमे ।





## प्रस्तावना

अथेदानीं वेदस्वरूपविमर्शाभिधो ग्रन्थः अनन्तश्रीकरपात्रिस्वामिभिस्तपोमूर्तिभिर्विरचितः प्रकाशपथमानीयते। बौद्धमतावलम्बिनां वैज्ञानिकदृष्टिमावहतामाधुनिकानाम् आर्यसमाजान्तर्गतानां विवेचकानाञ्च या विचारधारा वेदस्वरूपविषये, साऽत्र स्वामिचरणैः परिशीलिता वर्तते। स्वामिपादैः परिशीलितविशेषतायाः प्रतिपादनात्पूर्वं विषयप्रवेशाय किञ्चिद्वक्तुमिच्छामि

आस्तिकनास्तिकभेदेन विभक्तेषु दर्शनप्रस्थानेषु आस्तिकदर्शनप्रस्थानानि वेदस्वरूपविषये मतभेदमावहन्त्यपि तत्प्रामाण्यविषये न तेषां काचन विप्रतिपत्तिः। शब्दस्य पृथक्प्रामाणत्वमनङ्गीकुर्वन्तो वैशेषिका अपि वेदप्रामाण्यं निर्विचिकित्समभ्युपयन्ति। आस्तिकदर्शनेष्वेकैकस्य तत्तत्सूत्रकारानुमता स्वस्वदर्शनानुकूला पद्धतिः मर्यादा च काचन नियता। नियताया अस्याः पद्धतेः मर्यादायाश्च निर्वाहाय तत्तत्सूत्रकारानन्तरकालीनाः सर्वेऽपि दार्शनिकास्सम्प्रवृत्ताः। अमीषां पदार्थेषु तदुपपादकप्रकारेषु तत्प्रामाण्याधायकेषु च प्रमाणेषु सत्यपि मतभेदे, वेदप्रामाण्यप्रतिक्षेपाय प्रवृत्तानां वेदबाह्यानां मतनिरासाय 'अन्यैस्सह विरोधे तु वयं पञ्चोत्तरं शतम्' इति न्यायमवलम्बमाना दार्शनिका एकीभवन्ति।

तत्र मीमांसादर्शनं विहायान्येषां दर्शनानां वेदस्वरूपतत्प्रामाण्यप्रसाधनं न मुख्यं प्रमेयम्, किन्त्वानुषङ्गिकम्। यावदेकं सर्वप्रमाणमूर्धन्यं किञ्चित्प्रसाधितं न भवति तावद्विविच्यमानानां प्रमेयाणां यथायथं स्वरूपं न प्रसिध्येदिति हेतोः वेदप्रामाण्याभ्युपगमो दार्शनिकानाम्। मीमांसकानान्तु मुख्यं प्रमेयं वेदस्वरूपतत्प्रामाण्यतद्वाक्यार्थप्रसाधनमेव। अन्यानि प्रमेयाणि प्रमाणानि चानुषङ्गिकतया मीमांसकैर्विविच्यन्ते।

अतएव भगवान् महर्षिर्जैमिनिः स्मृत्यधिकरणे स्मृतिग्रन्थानां

सूत्रग्रन्थानां पुराणानामार्षग्रन्थानाञ्च वेदमूलकत्वेन प्रामाण्यं, विरोधाधिकरणे च वेदविरुद्धानां तेषामप्रामाण्यं प्रसाध्य पुनः कल्पसूत्राधिकरणे विषयस्यास्य पुष्टिं प्रत्यपादयत् । आचाराधिकरणे च शिष्टपरिगृहीतानामाचाराणां द्व्यन्तरितम् अर्थादाचारैः मूलभूतां स्मृतिं परिकल्प्यानन्तरं श्रुतिञ्चानुमाय प्रामाण्यं समसाधयत् । होलाकाधिकरणे च तत्तद्देशभेदेन प्रवृत्तानामाचाराणां तैस्तैर्महर्षिभिः तथा प्रवर्तितानां स्मृतिसूत्रनिबन्धग्रन्थानाञ्च तत्तद्देशीयैरेव प्रामाण्यमभ्युपेयम् उत सर्वदेशीयैरपीति विकल्प्य सर्वदेशीयैरपीति व्यवस्थापयामास । एभिस्सन्दर्भैरिदमत्र निश्चेतव्यं भवति—यज्जैमिनिः परीक्षकेष्वग्रणीः वैदिकत्वेन सर्वाण्यास्तिकदर्शनानि स्मृतयो निबन्धाश्चैकरूपतामापन्नाः वैदिकस्य मतस्य परिपोषणे व्यापृता भवन्त्विति निश्चयेन विविधान् न्यायानाविरकार्षीदिति ।

वेदस्वरूपतत्प्रामाण्यतदर्थनिर्णये विमर्शकाग्रेसरस्य जैमिनेः दार्शनिकानाञ्च दृष्टिरन्यादृशी, विदेशीयानां तदनुयायिनां च भारतीयानां दृष्टिरन्यादृशी । मिथो विरुद्धे इमे दृष्टी भवतः । पुरुषदोषासंस्पृष्टत्वम् , अनुपहनीयत्वम्, अलौकिकार्थविदकत्वम्, शब्दार्थयोर्नित्यसम्बन्धवत्त्वम्, महर्षिषु मन्त्रद्रष्टृत्वम् इत्यादयो धर्माः प्रथमायां दृष्टौ, अपरत्र च कृत्रिमत्वम् उपहसनीयत्वम् लौकिकार्थविदकत्वम् शब्दार्थयोरनित्यसम्बन्धवत्त्वम् मन्त्रकर्तृत्वं महर्षीणामित्यादयः । एवं दृष्टिभेदे मुख्यमिदं कारणं यद् वेदसन्दर्भे जैमिनेर्दार्शनिकानां च स्वीयत्वभावना, विदेशीयानां च परकीयत्वभावना । यादृशोऽभिनिवेशः यादृशी च श्रद्धा भारतीयानां वेदसंरक्षणे तदध्ययने च न तादृशोऽभिनिवेशः, न च तादृशी श्रद्धा देशान्तरीयाणां भवितुमर्हति ।

प्राचीनभारते स्वाध्यायाध्ययनं नियतकर्तव्यमासीद् द्विजानाम् । स्वाध्यायाध्ययन व्यापारात्प्रच्युतिर्महते दोषाय पर्यगण्यत । सहस्रशः शतकानि वत्सराणां स्वाध्यायाध्ययनतन्तुमेनमविच्छिन्नं परिरक्षन्तः पूर्वजा यापयाम्बभूवुः । अध्ययनमध्यापनम्, नित्यानां नैमित्तिकानाञ्च

कर्मणां यथायथमनुष्ठानम् मीमांसया वेदवाक्यार्थावधारणं तत्परिशीलनमित्यादीन्यनेकानि वेदानां परिरक्षणसाधनानि। एतेषु यदा किञ्चिच्छैथिल्यमन्वभूयत पूर्वजैः तदा परम्परासमागतं क्रममवलम्ब्य सूत्रलक्षणग्रन्थाः प्रणीताः। कल्पसूत्राणां स्वरवैदिकप्रक्रियाया अन्येषाञ्च लक्षणग्रन्थानां प्रातिशाख्यप्रभृतीनां विरचनात्पूर्वमपि पूर्वोक्तस्तन्तुरविच्छिन्न एवासीदित्यत्र न कश्चन संशयः। प्रत्नं किमपि न निर्मितमेभिः। परम्परया समागतानेव पुरातनान् नियमानिमे सङ्गृहीतवन्तः। 'स्वाध्यायेऽनध्यायो मन्त्राणां न कर्मण्यर्थान्तरत्वात्' इत्यापस्तम्बसूत्रात्पूर्वं ग्रहणधारणयोरेवाध्ययनयोः प्रतिपदादयोऽनध्यायाः, न तु कर्मणीति नियमं श्रोत्रिया न प्रज्ञातवन्त, न वा कर्माण्यन्वतिष्ठन् न चापि वेदाध्ययनमकुर्वन् इति साधनं दुस्साहसम्, किन्तु याज्ञिकानामेवाचारं जानन्नापस्तम्बाचार्य एवं सूत्रयति। श्रौतकर्मणामनुष्ठाने सोमपूर्वत्वमिष्टिपूर्वत्वञ्चासीद् याज्ञिकानाम्, तदेव सूत्रयन्ति सूत्रकाराः। 'मन्त्रान्तैः कर्मादीन् सन्निपातयेत्' 'आघारे धारायाश्चादिसंयोगः' 'विकल्पो याज्यानुवाक्यासु' इत्यादयो नियमास्सम्प्रदायतः प्राप्ता एव महर्षिभिर्लिखिताः। ञित् नित् प्रत्ययान्तानां पदानामाद्युदात्तत्वं 'ञ्नित्यादिर्नित्यम्' इति सूत्रप्रवृत्तेः पूर्वमेव छात्रानध्यापका ग्राहयन्ति स्म। स्थलविशेषेष्वनुस्वारागमः तस्य च गकारसंयुक्तत्वम् यथा—

अग्निॅं रफ्सुषदः' 'प्रत्युष्टॅं रक्षः' 'सॅं समिद्युवसे' इत्यादौ,

'रोष्मभावात्तु नात्पूर्वं लुप्तान्माच्च तदुत्तरात्।
नकाराद्याकृतेर्लुप्तादनुस्वारागमो भवेत्॥
अनुस्वारो यजुष्येवमध्यायेऽपि यदा भवेत्।
तदा गकारसंयुक्तो न शान्तिश्शासरूपतः'॥

इति व्यासशिक्षातः पूर्वमेवाध्ययनाध्यापनसम्प्रदाय आसीदित्येव स्वीकर्तव्यम्।

स्वरप्रक्रिया वा वैदिकीप्रक्रिया वा लक्षणग्रन्था वा सम्प्रदायात्प्राप्तानि लक्ष्याण्यवलम्ब्यैव महर्षिभिःप्रवर्तिताः। अन्यथा 'दक्षिणाचारेण कर्तव्यम्' 'यज्ञोपवीतिना कर्तव्यम्' इत्यादिस्मृत्युदयात्पूर्वं याज्ञिकाः श्रौतानि स्मार्तानि च कर्माणि वामहस्तैः निवीतिनः

प्राचीनावीतिनो वा समाचरन्तोऽभवन्निति स्यात्। अतएवमादीनां ग्रन्थानामाविर्भावात्पूर्वमपि सुदृढः कश्चन सम्प्रदाय आसीदित्यनुमानं नासङ्गतम्। न च विनिगमनाविरहः, बीजाङ्कुरन्यायेन सम्प्रदायस्य साधयितुं शक्यत्वात्।

किञ्च वेदाध्ययनकर्तॄणां भारतीयानां वेदग्रन्थपठितॄणामाधुनिकानाञ्च भूयानस्ति प्रभेदः। अध्ययनं पठनञ्च नैकरूपे भवतः। गुरुमुखोच्चारणानूच्चारणव्यापारेऽध्ययनपदप्रयोगं न्यायविदो मन्यन्ते, पठनपदन्तु वर्णवाचनरूपे साधारणव्यापारे। असाधारणाध्ययनव्यापारविद्भिरेव चिरन्तनी सा परम्परा ज्ञायेत, न तु केवल पठितृभिः। नियतस्वरवर्णक्रमविशिष्टाया अनुपूर्व्या अधिगमनेऽध्ययनव्यापारः, तद्रहिताया आनुपूर्व्याः शब्दतोऽर्थतो वाधिगमने पठनव्यापारः स्वरवैदिकप्रकरणप्रातिशाख्यलक्षणग्रन्था असाधारणऽध्ययनव्यापार एवोपयुज्यन्ते। अथवा ते ग्रन्था एवाध्ययनस्यासाधारण्यं प्रतिपादयितुं प्रवृत्ताः। 'ञ्नित्यादिर्नित्यम्' इति सूत्रोक्तो नियमोऽध्ययनव्यापार एव समन्वितो भवति, न केवलं पठनव्यापारे। नियमानां ज्ञानमन्यत्, तेषां परिपालनञ्चान्यत्। परिपालयितृभिरेव सा परम्परा संरक्ष्यते न केवलं ज्ञानवद्भिः। भूयाननयोर्दृष्ट्योर्भेदः।

एवं सिद्धेऽध्ययनव्यापारस्यासाधारण्ये वेदवाक्यार्थनिर्णयेऽप्यसाधारणी सामग्री पूर्वजैः प्रवर्तिता विलसति। 'अज एकपाद् देवः' इति मन्त्रस्य–'एकपादयुक्तोऽजो मृगः' ( one foot-d goat ) इत्यर्थं पाश्चात्यपण्डितो 'ग्रिफिथ' महोदयो निश्शङ्कं ब्रूयात्। कामं वेदानां सन्निकृष्टकालत्वं कृत्रिमत्वञ्च प्रतिपादयेदजं दृष्ट्वा केनचन मन्त्रोऽयं विरचित इति।

'रंमयत मरुतः श्येनमायिनं मनोजवसं वृषणँ सुवृक्तिम्।
येन शर्ध उग्रमवसृष्टमेति तदश्विना परिधत्तँ स्वस्ति'॥

इति कश्चन मन्त्रः ( तै॰ सं॰ २-३-७ )

हे मरुतः यूयमतिवेगेन समायान्तं पुरोवातं तथा क्रीडयत यथा पाश्चाद्वातस्य निरोधस्स्यात्, येन मेघेभ्यस्तीव्रधारारूपेण पतज्जलं

ग्रीष्मेणातिसन्तप्तामिमां पृथिवीं प्राप्नुयात्। तदिदं जलं हे अश्विनौ पृथिव्याः क्षेमकरं यथा स्यात्तथा परितो धारयतम् इति तस्यार्थः।

इममर्थमवगत्य पाश्चात्यः पण्डितः तदन्तेवासिनश्च भारतीयाः कतिपय एव ब्रूयुः—यत् पश्चाद्वातो ग्रीष्मवर्धको वृष्टिप्रतिबन्धकश्च, पुरोवातश्च ग्रीष्मशामको वृष्टिप्रदश्चेति प्रकृतिसिद्धां स्थितिमनुभूय कश्चन कृषको मन्त्रमिमं व्यरचयदिति।

'नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रे।

भागं देवेभ्यो विदधात्यायन् प्रचन्द्रमास्तिरति दीर्घमायुः'॥

इति मन्त्रश्चन्द्राभेदेनादित्यं वर्णयन् चन्द्रादित्ययोरुद्भवानन्तरं केनचन वरचित इति। भारतीया याज्ञिका मीमांसकाश्च 'रमयत मरुतः श्येनमायिनमिति पश्चाद्वातं प्रतिमीर्वति पुरोवातमेव जनयति' इति ब्राह्मणवाक्यं कारीरेष्टिप्रकरणस्थमालोच्य तस्यामिष्टौ मन्त्रस्य विनियोगं पश्यन्तोऽलौकिकार्थावबोधकत्वं प्रसाधयन्ति। एवं 'यः पापयक्ष्मगृहीतस्स्यात्तस्मा एतमादित्यं चरुं निर्वपेत्' इति ब्राह्मणानुसारेण राजयक्ष्मरोगेण पीडितं मानवं तस्मादुन्मोचयितुं विहितायामिष्टौ मन्त्रस्योपयोगं पश्यन्ति।

अत्रायं विवेकः—ऋग्यजुस्सामाथर्वभेदेन विभक्तेषु चतुर्षु वेदेषु संहिताभागानां विवरणपराणि ब्राह्मणानि सन्ति नियतानीति प्रसिद्धमिदम्। मन्त्रेष्वधीयमानेषु व्याकरणादिपरिष्कृतमतीनां नूनमर्थावबोधो भवेत्। किं तेन जातेनार्थावबोधेन प्रयोजनमिति जिज्ञासायां न किमति साधूत्तरं भवति। न खलु पदपदार्थावबोधमात्रेण मन्त्राणां प्रयोजनं सिद्धयति। न हि मन्त्रभागः कथाया आख्यायिकाया वा बोधनाय प्रवृत्तः, येन कथामाख्यायिकां वावगत्य मनः प्रसीदेत्। निरतिशयेन मननव्यापारेण खलु महर्षिभिः प्राप्ता इमे मन्त्राः। एतेषां दर्शनेनैव किल ते ऋषयस्सम्भवन्। अतस्तदनुकूलं किमपि विशिष्टं कार्यं मन्त्राणां वक्तव्यम्। तदपि तैरेवावधृतम्। तद्बोधकमेव भवति ब्राह्मणम्। मन्त्राणां यः क्रमः तमनुधावन्ति ब्राह्मणानि, अथवा ब्राह्मणेन यः क्रमोऽवलम्बितस्तद-

-नुसारेण मन्त्रा एकीकृता इति सन्देहे-मन्त्रा एव प्रथमं रचिताः अनन्तरं ब्राह्मणानीति द्राक्प्रब्रूयाद्वैदेशिको विमर्शकः। यस्य च मते सृष्टेरादौ लब्धजन्मानो मानवाः पशुतुल्या आसन्। तृणानि पर्णानि च खादन्तस्तान्येव च वसानाः संस्कृत्या सभ्यतया वा विहीनाः अभवन्, क्रमेण विकसिताश्चाभूवन्निति हि सिद्धान्तः। सृष्टिशब्दः प्रलयशब्दो वा सापेक्ष इति न तस्य बुद्धौ समारोहति। प्रलयं गतस्यैव सृष्टिः, सृष्टस्यैव प्रलय इति न स समालोचयति। यदि समालोचयेन्न तर्हि संहिताब्राह्मणयोः पौर्वापर्यम्। प्रलयकाले येषां प्रलयस्तेषामेव सृष्टिरिति कुतः पौर्वापर्यम्। सृष्टिश्च प्रलयश्चेति द्वावपि नेष्येते यदि, न तर्हि साधयितुम् शक्यमनयोरादिमत्त्वम्। मन्त्र-ब्राह्मणपाठयोः प्राबल्यदौर्बल्यविचारावसरे मीमांसकाः मन्त्रपाठस्यान्त-रङ्गत्वं ब्राह्मणपाठस्य च बहिरङ्गत्वं व्यवस्थापयन्ति। इमे चान्तरङ्गत्व-बहिरङ्गत्वे पाठयोरेव न मन्त्रब्राह्मणयोः। मन्त्रैर्विना ब्राह्मणानां ब्राह्मणैश्च विना मन्त्राणां स्वरूपलाभो दुष्करः। भागद्वयमपि बध्नन्त्येकेन सूत्रेण श्रौतस्मार्तकर्माणि। तेषाञ्चानुष्ठानाय मानवाः। मानवानां कर्मणाञ्च यथाधिकारं नियतस्सम्बन्धः। तानि कर्माणि भवन्तु शारीरिकाणि मानसिकानि वाचिकानि वा। सर्वविधैरपि तै-र्मानवानां नियतस्सम्बन्धः। आत्मचिन्तनं क्रियताम् देवा वा यागादिभिराराध्यन्ताम् जप्यन्तां वा मन्त्राः, सर्वत्र तेषां प्रयोगा-वगमो ब्राह्मणाधीनः। प्रयोगश्च मानवाधीनो मन्त्रसाध्यश्चेत्ययं याज्ञिकानां मीमांसकानाञ्च राजमार्गः। अनादी यथा सृष्टिप्रलयौ तथैव मन्त्रब्राह्मणकर्ममानवानां मिथस्सम्बन्धोऽप्यनादिः। क्व-चित्कदाचिन्मानवाः कर्मरहिता अभवन्। कर्माणि मन्त्रविहीनान्यासन् मन्त्राश्च ब्राह्मणसम्बद्धा नाभूवन्निति साधनं दुश्शकम्। विदेशीयास्तु विमर्शका नेमां परम्परामङ्गीकुर्वन्ति, नाप्यत्र विश्वसन्ति, न चाप्ये-तादृशेषु अलौकिकफलजनकेषु कर्मसु श्रद्दधते। तेषां मन्त्रेषु ब्राह्मणेषु च पदपदार्थसम्बन्ध एव मनः प्रसरति। तद्बलेन ते वेदस्यापौरुषेयत्ववचनं वैदिकानां श्रद्धाजाड्येन वा प्रामाण्याभिनिवेशेन

वा सर्वविस्रम्भस्वाभाव्येन वेति निरर्गलं ब्रूयुः, किन्तु तेषां तस्य पौरुषेयत्वकथनं विपरीतश्रद्धाजाड्येन वा अप्रमाण्याभिनिवेशेन वा सर्वाविस्रम्भस्वभावेन वेति पर्यनुयोगे किं समाधानं स्यात्। तत्र नान्यतरपक्षपातो विना प्रमाणं विमर्शकानां युज्यते।

तत्रापौरुषेयत्वे वेदानां किं प्रमाणम् ? पौरुषेयत्वे प्रमाणाभाव एव। न हि तत्र प्रत्यक्षं न वा शब्दः। अनुमानन्त्वप्रयोजकमिति स्वयं सूत्रकारः प्रतिपादयति। यथेदानीं वयं तथैव प्रागपि सर्वे न जानन्ति स्म कदा कुत्र को वेदभाग आत्मानमाविश्चकारेति। अद्यत्वे च पश्याम आचार्यमुखादधीत्य वेदमधिगच्छन्तीति। तथैव सर्वदाऽयं क्रमो बभूव। अनित्यत्वं तस्य साधयितुमैदम्पर्यं वहन्तोऽपि अन्ततो गत्वा ईश्वरकर्तृकत्वमेव प्रतिपद्यन्ते। अयमेव ह्यंशः प्रमाणीभवति सुबहोः कालात्पूर्वमपि वेदस्य न कश्चित्कर्तृकत्वेन मनसापि ध्यात इत्यस्मिन् विषये। कथं नाम शब्दसन्दर्भेण सता केनचिदकर्तृकेण भवितु शक्यमिति वैदिकसम्प्रदायबाह्यानामाक्षेपः। शब्दश्च नित्यश्चेति विषयोऽयं न तेषां बुद्धिमारोहति। तत्रालोच्यमाने कारणमेतत्स्यादिति मन्तुमस्त्यवसरः। इह लोके परं यदावश्यकं मनुष्योचितं साधारणधर्मजातं तत्रैव चिराद्विरचितश्रमाणां तेषां मनुष्यजन्मनः पूर्वम्भूतं पश्चाद्वा भाविनं विषयं प्रति मनो व्यापार-यितु नासीत्कश्चनावसरः, नासीत्कोऽपि प्रामाणिक सम्प्रदायः। मतविशेषमवलम्ब्यापि तत्प्रबन्धप्रतिपाद्येषु न तावन्तं विस्रम्भं गौरवविशेषं वा ते बिभराम्बभूवुः, यदन्वहं ते प्रत्यक्षमैक्षन्त एकैकं वस्तूद्भवति क्रमेण वर्धतेऽन्ततो नश्यतीति, तदेकवासनारूषितधियां नैव तेषां प्रसक्तिः, कदाचिदाविरासीन्नित्यमपि किमपि स्यादिति मनसि कलयितुम्। वेदापौरुषेयत्वतत्प्रामाण्यविषये पूज्यपादैः स्वामिचरणैः तत्तपरिच्छेदे न केवलं शास्त्रसम्बन्धीनि प्रमाणानि प्रदर्शितानि; किन्तु परेषां युक्तीराशयश्च विज्ञाय ताश्चानूद्य तन्निरासाय परस्सहस्रं युक्तयस्सम्प्रदर्शिताः सुनिश्चितमिदमङ्गीकर्तव्यम्—यदविदितेदम्प्रथम-ताकात्कस्मादपि कालादारभ्य अथवा आ च भगवतः प्रथमायास्सृष्टेरा

चैतन्निमेषात् गुरुमुखाद्वेदाध्ययनसम्प्रदायो विच्छेदरहितस्सम्प्रवर्तत इति ।

पठनाध्ययनव्यापारयोर्मिथो विद्यमानं भेदं पूर्वमवोचम् । एकैकोऽपि गुरुरध्यायनात्प्राक् आवश्यकान् गुणान् प्रति शिष्यान् परीक्षते स्म । यदि साधुरेष निर्णीतस्तत आचार्यस्तमध्याप्यान्ते स्वगुरूपदिष्टं तस्मा उपदिदेश । तदुपदेशेऽयमप्येको विषयः यत्परम-प्रमाणभूतो वेदोऽध्येयो ज्ञेय इति । स्वभावोऽयं मनुष्यस्य यदिदं कर्तव्यमित्युक्ते वचनमिदं किं प्रमाणम् कथम्प्रमाणम् करणे किम् अकरणे किमिति जिज्ञासत इति । प्रतिशिष्यमेवं जिज्ञासोदेति स्म । स स आचार्यस्सोपपत्तिभिर्युक्तिभिस्तां शमयित्वा शिष्यस्य यथातृप्ति वेदप्रामाण्यं ग्राहयामास । एवं यथा शिष्याचार्यपरम्परया कृत्स्नो वेदोऽद्यास्मत्पर्यन्तं समागतः, एवमेतत्प्रामाण्यविचारः तदभ्यु-पगमः तदनुसारेणानुष्ठानमित्येतदपि अनादिकालप्रभृति तादृश-परम्परयैवास्मदवधि सम्प्राप्तमिति ।

अस्मदवधि सम्प्राप्तमिदं पारम्पर्यं प्रत्यक्षत्वानुग्राहकम् । कथमन्यथा स्वगतब्राह्मण्यं प्रत्यक्षगम्यं साधयितुं शक्यते । न हि कोऽपि स्वगतं ब्राह्मण्यं क्षत्रियत्वादिकं वानुमातुं प्रवर्तते । मातु-श्शब्दाज्ज्ञायमानमिदं ब्राह्मण्यादिकं न शाब्दबोधात्मकमिष्यते । यथा हि केनचिन्निमित्तेन स्त्रीपुंस्कोकिलादिविभागज्ञानं तथैव दर्शनस्मरणपारम्पर्यानुगृहीतप्रत्यक्षगम्यान्येव ब्राह्मणत्वादीनि । यथा हि आलोकेन्द्रियानेकपिण्डानुस्यूतिशब्दस्मरणव्यक्तिमहत्त्व-सन्निकर्षाकारविशेषादयोऽन्यजातिग्रहणे निमित्ततां भजन्ते, तथैव पारम्पर्यस्मरणमपि । निपुणतरमुपपादितमेतद्भट्टपादैस्तन्त्रवार्तिके 'न चैतद्विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वा' इति वाक्यस्य प्रत्यक्षविरुद्धत्वमुपपादयद्भिः ।

किञ्च पाश्चात्यविमर्शका वेदं पुस्तकं मन्यन्ते न श्रुतिरूपम् । ते च लिखन्ति प्रथमं पुस्तकं द्वितीयं पुस्तकमिति तत्तद्वेदगतमण्ड-लानि काण्डानि च । मण्डलम्, अष्टकम्, काण्डम्, अध्यायः, वर्गः,

सूक्तम्, प्रपाठक इत्यादयश्शब्दा अध्ययनाध्यापनसौकर्याय पूर्वजैः कल्पितानां वेदभागानां वाचकाः। मण्डलमष्टकं काण्डश्चेति न पुस्तकं भवति। प्रथमं श्रुत्यकेगोचरा ये शब्दराशयोऽभवन् श्रुतिशब्दवाच्याः कालान्तरे ग्रथितास्सन्तो ग्रन्थरूपा अजायन्त। ग्रन्थ इत्यपि न पुस्तकस्य नाम किन्तु द्वात्रिंशदक्षराणां समूह एको ग्रन्थः, पञ्चाशत्पदपरिमितो भागः पञ्चाशत् इत्येवं वैदिकानां व्यवहारः। त एव कालान्तरे लिपिनिबद्धाः क्रियन्ते स्म। सम्प्रति च ते मुद्रिताः पुस्तकशब्दवाच्या अभवन्। अस्माकं चिरन्तनीयं परम्परा यच्छ्रुत्यैव बहुकालं गृहीताः श्रुतीः कालान्तरे विभज्य यथायथं प्रवर्तितवान् महर्षिर्व्यासः। अत एव स लोकैर्वेदव्यास इति प्रख्यातिमलभत। अनन्तरम् केचन काण्डादिविभागं कृत्वाऽध्यापयाम्बभूवुः। अत एव च ते काण्डर्षय इत्युच्यन्ते। ते च भवन्ति चत्वारः। चतुरस्तान् उपाकर्माख्ये कर्मणि प्रत्यब्दं नियमेन वयं स्मरामः। न केवलं स्मरामः किन्तु तर्पणेन होमेन च तानाराधयामः। प्रजापतिः अग्निः सोमः विश्वेदेवाश्च भवन्ति ते। अत एव प्राजापत्यमाग्नेयं सौम्यं वैश्वदेवमिति तेषां काण्डानां नामानि प्रख्यातानि। यथा सूक्तानां मन्त्राणाञ्च द्रष्टारो नियमेन स्मर्यन्ते, तथैव काण्डर्षयोऽपि। इयमस्मत्परम्परा। कथमिमां विदेशीया जानन्तु तदन्तेवासिनो भारतीया वा। मीमांसासूत्रकारस्य जैमिनेः काले कल्पसूत्राणां षडङ्गानां मन्वादिस्मृतीनामपि मन्त्रब्राह्मणयोरिव वदेरूपत्वं लोकैराशङ्कितमासीत्। तथाविधाया आशङ्काया इदमेव मूलं भवितुमर्हति–यदिमे सन्दर्भा अपि तदानीन्तने समये श्रुतिग्राह्या वाचोविधेया अभवन्निति। यथा वेदसन्दर्भो नियमेन श्रोत्रेन्द्रियग्राह्यस्सन् श्रुतिशब्दवाच्यस्तथैवैतेषामपि सन्दर्भाणां तद्ग्राह्यत्वेन कथं तच्छब्दव्यवहारो न भवत्विति। आशङ्कापि न खलु निर्मूला भवितुमर्हति। आधुनिकविमर्शका इव न ते पर्याप्तधैर्या अभवन् यन्निर्मूलं निर्मर्यादं निष्फलञ्चाशङ्कितुम्। तत्र परीक्षको महर्षिजैमिनिः कल्पसूत्राधिकरणे सयुक्तिनिर्देशं व्यवस्थापयामास–यत्तेषां वेदमूलत्वेनैव प्रामाण्यं न वेदत्वेनेति। इत्थमस्यां परम्प-

रायां सत्यां पुस्तकयुगान्तर्गता अवज्ञाता यथाजाता विमर्शका: मण्डलेषु काण्डेषु च पुस्तकत्वभ्रान्त्या वदन्ति-यदृग्वेदस्य प्रथमं दशमञ्च पुस्तकमर्वाचीनम् इतराणि च पुस्तकानि प्राचीनानीति। एतेषां कथनानुसारेण दशमं मण्डलमर्वाचीनमिति स्वीकारे एकत्रैव क्रतौ द्वितीयतृतीयादिमण्डलगतसूक्तानां विनियोगो यथा ब्राह्मणेन क्रियते, तथैव दशममण्डलगतसूक्तानामपि तस्मिन्नेव क्रतौ ब्राह्मणेन विनियोगः कृतो दृश्यते। तत्र वक्तव्यं भवेत्—यद्दशम-मण्डलविरचनानन्तरमेव ब्राह्मणाविर्भाव इति। तदत्र संहिता-ब्राह्मणयोः पौर्वापर्यं न भवितुमर्हतीति पूर्वमवोचम्।

किञ्च ब्राह्मणग्रन्थेषु मतान्तरखण्डनपराणि वाक्यानि बहुलमुपलभ्य तत्र पौर्वापर्यं केचन कल्पयन्ति। शास्त्रग्रन्थेष्विव ब्राह्मणग्रन्थेष्वपि 'तद्धैके' 'तदुचैके' 'तदु तथा न कुर्यात्' 'तन्नादर्तव्यम्' इत्येवमाद-यस्सर्वेषु ब्राह्मणग्रन्थेषूपलभामहे। तानिमान् सन्दर्भान् पश्यतस्सर्व-स्यापि बुद्धिरियमुदियादेव-यदत्र पौर्वापर्यं सुनिश्चितमेवेति। कानि चन स्थलान्यत्रोदाहृत्य विमृशामः। शतपथब्राह्मणे 'तद्धैके स्रुक्सम्मार्ज-नान्यग्नावभ्यादधति ······ तदु तथा न कुर्यात् ······ तस्मादु परास्येदेवैतानि' (श. ब्रा. १।२।४।११) इति। दर्शपूर्णमासयोः स्रुचां जुहूपभृद्ध्रुवाणां वेदाग्रैस्सम्मार्जनं विहितम्—'स्रुचस्सम्मार्ष्टि' इति। वेदस्य दर्भमुष्टिविशेषस्याग्रभागाः सम्मार्जनानि। तैस्स्रु-चस्सम्मृज्य तानि केचन शाखिनोऽग्नौ प्रक्षिपन्ति, तत्तथा न कर्तव्यम्, किन्तु तानि निरस्येदेवेति ब्राह्मणस्यार्थः। एवम् 'अश्वशफमात्रं कुर्या-दित्यु हैक आहुः। कस्तद्वेद यावानश्वशफः, यावन्तमेव स्वयं मनसा न सत्रापृथुं मन्येतैवं कुर्यात्' (श. ब्रा. १।१।६।१०) दर्शपूर्णमासयोः पुरोडाशपरिमाणं कियद्भवेदिति विचारे केचनाश्वशफमात्रं भवेदिति वदन्ति, तदिदं दुर्ज्ञेयमश्वशफः कियान् भवेदिति। अतः प्रधानयाग-साधनाय यत्परिमाणं पर्याप्तं भवेदिति मन्येत तावत्सम्पादनीयमिति ब्राह्मणार्थः। एवमादीनि खण्डनानि संख्यातीतान्युपलभ्यन्ते शतपथ-तैत्तिरीयैतरेयादिब्राह्मणग्रन्थेषु। सत्यमेवञ्जातीयकानि स्थलानि

भ्रमसमुत्पादकानि। भ्रमनिवृत्तये धीरैरत्र विमर्शः कर्तव्यः। अविच्छिन्नपरम्परावगन्तार एवात्र समर्था भवितुमर्हन्ति, न तु पाश्चात्यास्तदनुयायिनो वा। तत्र शतपथब्राह्मणानि प्रायः तैत्तिरीयशाखां विषयीकुर्वन्ति इति प्रतीयते। नैतावता शतपथब्राह्मणस्य तैत्तिरीयशाखापरिवर्तित्वं निर्णेतुं शक्यम्। तैत्तिरीयशाखायामपि शतपथब्राह्मणविषयाणां खण्डनमुपलभ्यते। अत्र कथमस्माभिर्निर्णेतुं शक्यम्-यच्छतपथब्राह्मणं परिवर्ति तैत्तिरीयब्राह्मणं वेति।

तैत्तिरीयशाखायां:-'स्रुक्समार्जनान्यग्नौ प्रहरति······तान्येके वृथैवापास्यन्ति, तत्तथा न कार्यम्······तस्मादेतान्यग्नावेव प्रहरेत्' (तै. ब्रा. ३।३।२)इति वाक्यं स्पष्टमेव शतपथविषयं खण्डयत् स्वमतं सम्मार्जनीनामग्नौ प्रहरणमुपसंहरति।

एवं पुरोडाशपरिमाणमश्वशफमात्रं स्वीकुर्वाणास्तैत्तिरीयशाखिनः 'यावन्तं वा मन्यते त न सत्रापृथुं करोतीत्येके' (आप. श्रौ २।२५।५।६) इति कल्पान्तरमपि निर्दिशन्ति। यद्यपीदं श्रौतसूत्रं शतपथब्राह्मणपरवर्त्येव, तथापि कृष्णयजुर्वेदीयशाखान्तरगतपरम्परामवलम्ब्यैव मतान्तरमापस्तम्बाचार्य उल्लिखतीत्यभ्युपगन्तव्यम्। प्रायः शुक्लयजुर्वेदशाखागतान् विषयान् 'इति वाजसनेयकम्' इति 'माध्यन्दिनम्' इत्येवापस्तम्बो निर्दिशति। अत एवमादयो विषया नूनं विमर्शयोग्याः।

तदत्रैवमभ्यूहितुं शक्यते—यदासीत्कश्चन समयः, यत्र ब्रह्मवादिनो महर्षयः मिथस्सम्भूय गोष्ठीं कुर्वन्त एवमादीन् विषयान् विचारयाम्बभूवुः। विचार्य निर्णीतानां विषयाणामनुष्ठानेनाध्यापनेन च तान् यथावत्परिपालयाम्बभूवुः। सततं तेषामिदमेवैकं मुख्यं कार्यमभवत्। विचारगोष्ठीषु सादरं सगौरवञ्च पूर्वजानां नामानि वसिष्ठभरद्वाजविश्वामित्रादीनि निर्दिदिशुः। अनन्तासु वेदशाखासु अध्ययनाध्यापनपरम्परायां सम्मिलितासु तदनुसारेण श्रौतस्मार्तकर्मस्वनुष्ठानपथमवतीर्णेषु विचारसरणिरियं तेषां नासङ्गता भवितुमर्हति। परम्परागत विचाराणामेवेदं रूपान्तरं यद्ब्राह्मणं नाम। यथा ऋषीणां निरतिशयमननव्यापारफलं मन्त्राः तथैव

तेषामनितरसाधारणगोष्ठीस्मरणपरिणामो ब्राह्मणम् । लिपिनिबद्धत्वं तु मन्त्राणां ब्राह्मणानाञ्च नासीदिति कञ्चन काल एष्टव्य एव । सर्वेऽपि विषयाः श्रवणेनैवावधार्यन्ते स्म । ब्रह्मचर्यं चिरकालस्थितानां तेषां महीयसी खलु स्मरणशक्तिः अतएव श्रुतिरिति नामान्तरं संहिताब्राह्मणयोस्सङ्गच्छते । एतेन कल्पसूत्राधिकरणे पूर्वपक्षस्सहेतुकस्सिद्धो भवति । अनेन यथा विमृश्यमाने नून प्राचीनपरम्परासिद्धं वस्तु नर्गलितं स्यात् ।

किञ्च पूर्वोत्तरमीमांसे वेदवाक्यार्थनिर्णयायैव सम्प्रवृत्ते इति जगत्प्रसिद्धमिदम् । महर्षिणा जैमिनिना व्यासाचार्येण वा यानि सूत्राणि सन्दब्धानि तानि वेदवाक्यगर्भितानि इति तच्छास्त्रविदो जानन्ति । तत्र पूर्वमीमांसायां प्रायोऽधिकरणेषु विधिवाक्यान्यर्थवादवाक्यान्येवोदाहृत्य विचारः प्रवर्तितः, उत्तरमीमांसायाञ्चोपनिषद्वाक्यानि । उपनिषदश्च ब्राह्मणेष्वन्तर्भवन्ति । यदि नाम ब्राह्मणग्रन्थानां वेदत्वं नाभविष्यत् तर्हि जैमिनेर्व्यासाचार्यस्य वा कथमिति विचारेऽस्मिन् प्रवृत्तिरभविष्यत् । शास्त्रयोरनयोर्निर्विषयत्वमापद्येत । काकदन्तपरीक्षायामिवोभावपि वेदार्थविचारे प्रवृत्तौ स्याताम् । विषयोऽय पूज्यपादैः सयुक्ति सप्रमाणञ्च स्पष्टं विवेचितः ।

किञ्च मन्त्रार्थनिर्णये प्रशस्ता बाधरहिता च सामग्री समपेक्ष्यते । निगमो निरुक्तं व्याकरणं मीमांसान्यायः, पूर्वापरपर्यवेक्षणं, तात्पर्यग्राहकाणां षण्णां लिङ्गानामवधारणमित्येवमादिः सामग्री भवति । तत्र निगमो वद एव, अन्या च सामग्री वेदमूलिका । सति चैवं सर्वामिमां सामग्रीं परित्यज्य अर्थानुसारिण एव शब्दा इति प्रतिपद्यमानाः केचन यथेच्छं मन्त्रार्थान् विवृण्वन्ति ।

तत्र कश्चिद्विमर्शकः वेदेषु निरर्थकाश्शब्दास्सन्तीति परिगणयति । 'नायं स्थाणोरपराधो यदेनमन्धो न पश्यति' इति न्यायेन न वेदगतस्य शब्दस्यायं दोषः । एतादृशेषु स्थलेष्वर्थनिर्णयाय तत्सिद्धिपेटिका प्रवर्तिता जैमिनिना । क्वचिन्मुख्योऽर्थो भवति शब्दानां क्वचिच्च गौणः । अयं शब्दानां धर्मः । स च यथा

लोके तथैव वेदेऽपि। केचन शब्दास्तथा वर्तन्ते यांश्चार्था एवानुधावन्ति। लौकिकोऽर्थो न प्रसिध्यतीति न वैदिकाश्शब्दा निरर्थका स्साधयितुं शक्यन्ते। तत्र शब्दानुपूर्व्येव शब्दार्थः। पङ्कजाक्षीति शब्दो लोके तिन्त्रिणीदलाक्षीमपि नारीमाचष्टे। यज्ञाधर इति तस्यापि नाम भवति यश्च पिपासवे जनाय जलस्य बिन्दुमपि न ददाति। अत्र सर्वत्रानुपूर्व्येव खलु शब्दार्थः परिगण्यते। अत एव 'हुं फट्' 'अस्त्राय फट्' इत्यादिषु मन्त्रेष्वानुपूर्व्येवार्थः। प्रसिद्धार्थकेष्वपि स्थलेषु क्वचिदानुपूर्व्येवार्थस्स्वीकर्तव्यो भवति वेदेषु। यस्मिन् कर्मणि शास्त्रेणाग्निर्देवताऽवगतः तत्र त्यागावसरे 'अग्नये' इत्येवानुपूर्वी वक्तव्या भवति, न तु 'जातवेदसे वन्हये' इत्यादि। अग्निवन्हि जातवेदश्शब्दाः पर्यायवाचिनः, तथाप्यानुपूर्वीनियमस्समाद्रियते।

क्वचिदश्लीलार्थबोधकत्वं वर्णयन्तो वेदेऽनादरतामाविष्कुर्वन्ति। अश्लीलत्वं हि न शब्दस्य नियतो धर्मः। वक्तृबोद्धव्यभेदेनैव शब्दस्याश्लीलार्थकत्वं परिगण्यते। 'इयं कन्या पुष्पिता शोभते' इति परिणतवयोभिरुच्चारिते वाक्ये नाश्लीलता। स्त्रीलम्पटेन विटेन समुच्चारिते तस्मिन् अश्लीलता। वाल्मीकिरामायणेऽसकृद् 'वरारोहे' इति पदं भगवान् वाल्मीकिः प्रयुङ्क्ते तदपि भगवतीं सीतां सम्बोध्य। पदमिदमश्लीलार्थकम्। तावता किं रामायणस्य वाल्मीकेर्वा हेयत्वमनादरता वा सिध्यति? रामायणं वाचयन्तो वयं सीतां सम्बोध्य रावणमुखेन निस्सृतमिमं शब्दं शृणुमः, हनुमन्मुखेनापि। उभयत्र भावभेदः स्फुट एव। वामदेव्यशब्दनिर्वचनावसरे 'आपो वा ऋत्वियमार्च्छन्, तासां वायुः पृष्ठे व्यवर्तत ततो वामं वसु समभवत्, तन्मित्रावरुणावपश्यताम्, तावब्रूतां वामं वा देवेभ्योऽजनि' इति वेदवाक्यं प्रयुक्तम्। रजोधर्मं प्राप्ताभिरद्भिः वायोस्सङ्गमे सति उत्तमं वसु जातम्। तच्च देवसम्बन्धि, तेनेदं वामदेव्यं साम इति तदर्थः। अत्र रजोधर्माद्यर्थप्रतिपादनेनाश्लीलत्वं वर्णनीयम्। अश्लीलस्य दोषत्वं व्रीडाजुगुप्सामङ्गलव्यञ्जकत्वेनेत्यालङ्कारिका आस्थिषत। तदत्र ब्राह्म-

णवाक्ये पूर्वोक्तान्यतमव्यञ्जकत्वं दुरुपपादम्। अपां रजोधर्मप्राप्तिः वायोश्च तत्सङ्गमः वामस्य घनस्य समुत्पत्तिः, तस्य च देवसम्बन्धित्वमित्यस्मिन्नर्थे न तात्पर्यम्, किंतु 'वामदेव्यम्' इति शब्दनिर्वचनार्थैवायं निगमः प्रवृत्तः। निर्वचनेन सिद्धस्य शब्दस्य सामविशेषोऽर्थः। अत्राश्लीलस्य क्वावसरः।

एवं संवादरूपेण प्रवृत्तेषु मन्त्रेषु वैषयिकानर्थानुपलभ्य तत्रानादरतां प्रकटयन्तः केचन ऋक्संहितायाः प्रथममण्डलस्यैकोनाशीत्युत्तरशततमं सूक्तं षडृचमुदाहरन्ति। अनुक्रमणिकाकारः कात्यायनः ऋक्संहितागतानां समेषां मन्त्राणां सूक्तानाञ्च ऋषिं छन्दः देवतां विनियोगञ्च यथायथं प्रदर्शयतीति प्रसिद्धमिदम्। इमान्येव सूत्राण्यवलम्ब्य मन्त्राणामर्थविवरणं कर्तव्यं भवति। मन्त्रार्थे प्रतीते तस्य तात्पर्यनिर्णयाय मीमांसान्याया आश्रयणीयाः। निगमनिरुक्तव्याकरणादीनि पदपदार्थनिर्णये साहाय्यमाचरन्ति। इमास्सामग्रीरादायैव मन्त्रार्थविवरणे यतितव्यम्। तत्र प्रधानसामग्री अनुक्रमणिका। निगमनिरुक्तव्याकरणैः पदपदार्थे ज्ञातेऽपि प्रकृतसङ्गतिर्विनियोगश्चानुक्रमणिकयैव बोद्धव्यौ भवतः। विनियोगश्च मन्त्राणां तृचानां सूक्तानां वा श्रौतकर्मसु क्रियते। येषाञ्च मन्त्राणां तृचानां सूक्तानां वा श्रौतकर्मसु न विनियोगस्तेषां लैङ्गिको विनियोग इति सम्प्रदायः। तत्तन्मन्त्रगतसामर्थ्यमवबुध्य तस्मिन्नर्थे तद्विनियोगो लैङ्गिकः कथ्यते। यत्र च मन्त्रगतसामर्थ्यमन्यत् विनियोगश्चान्यः तत्र विनियोगानुसारेणैव ऐन्द्रीन्यायेन मन्त्रार्थः प्रत्येतव्यः। अत एव मीमांसकमूर्धन्यैः श्रीमदप्पय्यदीक्षितैः शिवतत्त्वविवेके पुरुषसूक्तस्य विष्णुदेवताप्रकाशकस्यापि विनियोगानुसारेण कस्मिंश्चन क्रतावन्यत्रापि देवतान्तरपरकतया मन्त्रार्थः प्रतिपादितः। एवञ्च येषां मन्त्राणां यस्मिन् कर्मणि विनियोगो ब्राह्मणेन सूत्रकारोक्त्या वा क्लृप्तः तेषां तत्रैव विनियोगः; तदनुसारेण चार्थः प्रत्येतव्यः। येषाञ्च मन्त्राणां तादृशं विनियोजकं प्रमाणं नास्ति तेषां मन्त्रगतसामर्थ्यमवबुध्य तस्मिन्नर्थे विनियोगो लैङ्गिकविनियोगः कथ्यत इति

सिद्धम्। प्रकृतप्रथममण्डलगतसूक्तस्य कात्यायनस्सूत्रयति—'पूर्वीः षट् जायापत्योः लोपामुद्रायाः अगस्त्यस्य च द्वचृचाभ्यां रत्यर्थं संवादं श्रुत्वाऽन्तेवासी ब्रह्मचार्यन्त्ये बृहत्यादावपश्यत्' इति। अस्यार्थः— 'पूर्वीः' इति सूक्ते षड्ऋचस्सन्ति। तत्र प्रथमद्वचृचस्य लोपामुद्रा ऋषिः, द्वितीयद्वचृचस्य अगस्त्य ऋषिः, तृतीयद्वचृचस्य अगस्त्यशिष्य ऋषिः। तृतीयद्वचृचस्य प्रथमा बृहतीच्छन्दस्का, त्रिष्टुबन्तपरिभाषया च शिष्टा ऋचः त्रिष्टुप्छन्दस्काः, दम्पत्योस्संवादश्रवणजनितमागः क्षपयितुं शिष्योऽपश्यदन्तिकं द्वचृचम् इति। अत्र प्रथममन्त्रचतुष्टयेन योऽर्थो बोध्यते तत्राश्लीलं दोषमुद्भावयन्ति विमर्शकाः।

अत्रायं विवेकः-अस्य सूक्तस्य श्रौते कर्मणि विनियोगोऽनुक्रमणिकायां न दृश्यते। तेन लैङ्गिकविनियोग आश्रयणीयः। यदि कदाचिल्लोके दम्पत्योः रहस्यसम्भाषणं श्रुतिपथमागच्छेत् तर्हि तद्दोषनिर्हरणाय मन्त्रोऽयं जप्तव्य इति तात्पर्यम् कल्पनीयम्। अगस्त्यलोपामुद्रे एवम्प्रकारेण सम्भाषणमकुरुतामित्यत्र न तात्पर्यम् किन्तु शिष्यश्रुतसंवादानुपूर्वीद्रष्टृत्वमेवानयोः। नात्र लोपामुद्रा मन्त्रोक्तप्रकारेणाकामयत, न चापि भगवानगस्त्यस्तस्याः प्रार्थनां समर्थयामास। गणिताध्यापकशब्दन्यायेनात्रत्याश्शब्दाः नार्थाननुसृत्य गच्छन्ति, किन्तु गणितस्योत्तरसम्पादनाय शिष्यस्तेषां शब्दानामर्थं कल्पयति। तत्र यथा शब्दानेवार्था अनुधावन्ति, तादृगेवेदम्।

वेदसन्दर्भाणामर्थनिर्णयाय पूर्वजैः स्वीकृतां सामग्रीमनादृत्य स्वप्रतिभाप्रकर्षाविष्काराय केचन वैदिका एव पण्डिता इतस्ततो मन्त्राणामर्थान् विवृण्वते। तानि स्थलानि परिगणय्य स्वामिचरणैः सुविशदं विमर्शः कृतः। अनितरसाधरणी विमर्शशैली स्वामिचरणानाम्, विमर्शस्तु स एव श्लाघ्यः परिगण्यते यश्च प्रमाणान्तराणि पूर्वजैःस्वीकृतां मर्यादाञ्च न विरुन्धे। यथायथं साधकबाधक युक्तीः परिशील्य परम्परागतं सिद्धान्तं ग्रन्थेऽस्मिन् स्वामिपादाः प्राकाशयन्। प्राचीनः पन्था इति नात्र हेयदृष्टिः कार्या। प्राचीनानां हृदयं किमिति ज्ञातव्यम्। तदस्य ज्ञानाय ग्रन्थोऽयमत्युत्तमः।

तदयमत्र निष्कर्षः—भ्रमप्रमादविप्रलिप्सादिपुरुषदोषासंस्पृष्टा अपौरुषेया वेदाः, प्रामाण्यञ्च तेषां स्वत एव, मन्त्रब्राह्मणात्मकत्वं वेदानाम्, ययाऽऽनुपूर्व्या प्रथममेव 'सिद्धा मंन्त्रास्तेषामेव निरतिशयमननव्यापारेण दर्शनमृषीणामभवत्, ब्राह्मणभागा अपि अनादितः कालात्परम्पराप्राप्तविचाराणामवद्योतकाः, संहिताया ब्राह्मणस्य च नष्टाश्वदग्धरथन्यायेन मिथस्सम्बन्धः, ऋषयश्च लक्ष्यैकचक्षुषः, क्वचिदर्था अपि शब्दाननुधावन्ति, वेदवाक्यार्थवधारणाय निगमनिरुक्तव्याकरणानुक्रमणिकामीमांसान्यायादिसव्यपेक्षता, एतदविरोधेन निर्णीत एव वाक्यार्थ उपादेय इति। तदिदं सर्वं समवेक्ष्य स्वामिवरणैर्ग्रन्थोऽयं प्रणीतः। तमिमं सर्वमधीत्य प्राचीनं सिद्धान्तमवधारयन्त्विति सर्वानभ्यर्थयते।

विदुषामाश्रवः
पट्टाभिरामशास्त्री

भाद्रपद शुक्ल. १५
सं० २०२६
वाराणसी।

# विषय-सूची

१— वेदस्वरूपविमर्शः १-२९४

वेदानामनादित्वम्, वेदशब्दार्थनिरुक्तिः, वेदानामानन्त्यम्, इन्द्रियाणां प्राप्यकारित्वम्, वेदविज्ञानवादः मन्त्रार्थविचारः, वाचकत्वित्वम्, शरीरे क्रियाद्वैविध्यम्, वैज्ञानिकार्थपरीक्षणम्, शब्दब्रह्मवादः, वेदे ऐतिहासिक- –८४ से १०५
घटनाक्रमः, जातिवादः, प्राकृतयज्ञवादः ।

२—वेदप्रामाण्यविमर्शः २६५–३७३

वेदस्येश्वरत्वसमर्थनम्, प्रमाणानां स्वतस्त्वपरतस्त्वे, बुद्धस्य सर्वज्ञत्वनिरासः, तर्काप्रतिष्ठानम्, वेदस्य नित्यत्वसमर्थनम्, वेदाध्ययनाधिकारिनिरूपणम् ।

३ -वेदापौरुषेयत्वविमर्शः ३७४-४२०

अपौरुषेयत्वसमर्थनम्, ईश्वरस्य स्मर्तृत्वकथनम्, चाचक.वकथनम्, वैयाकरणमतकथनम् ।

४ - ब्राह्मणानां वेदत्वविमर्शः ४२१—४४७

ब्राह्मणानां वेदत्वसमर्थनम्, कात्यायनपरिशिष्टस्य तत्कर्तृकत्वसमर्थनम्, व्याकरणमतम्, महाभाष्ये विरुद्धवाक्यानां समन्वयकरणम् ।

॥ श्रीहरिः ॥

# वेदस्वरूप-विमर्शः

'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये॥'

(श्वेताश्वतरोपनिषद् ६।१८)

इत्यादिवैदिकैरेव वचनैरिदं विज्ञायते यद् ब्रह्मणोऽपि विधात्रा परमेश्वरेण ब्रह्मा विधीयते, न वेदा विधीयन्ते। किन्तु नित्यसिद्धा एव ते ब्रह्मणो हृदि प्रहीयन्ते, प्रेष्यन्ते। विद्यमानानामेव प्रेषणं संभवति। तन्निर्माणसम्भवे ब्रह्मनिर्माणप्रसङ्गे तन्निर्माणमपि वक्तव्यं स्यादेव।

अत्र कैश्चिदुच्यते—'वेदा ह्यार्यजातेः सर्वस्वम्। भारतीया संस्कृतिः भारतीये ज्ञानविज्ञाने चेति सर्वं वेदानेवाधारीकृत्य प्रवर्तते।' 'अस्त्यस्माकं वेदराशिः' इत्येवाद्यत्वे स्वीयं गौरवं जगति भारतीयाः समुद्घोषयितुं प्रभवन्ति। तेषां वेदानां स्वरूपमेवेह प्रथमं तावद् विचार्यते।

यद्यपि च 'मन्त्रब्राह्मणयोर्वेदनामधेयम्', 'अपौरुषेयं वाक्यं वेदः' इत्यादिना पूर्वाचार्यैरुपदिष्टमेव वेदस्वरूपम्, परं मन्त्रब्राह्मणात्मकस्य वेदस्य पर्यालोचनया वेदस्वरूपमतिगहनं प्रसिद्ध्यति। तस्यैकैकदेशमादायैव आचार्यैः स्व-स्वग्रन्थे लक्षणानि विहितानि। पूर्णो वेदस्वरूपविचारस्तु तत्र न कृतो दृश्यते। तस्मात् मन्त्रब्राह्मणात्मकान् वेदानाश्रित्य मुख्यवेदस्वरूपं विवरीतुमेष प्रयत्नः।

**वेदशब्दार्थनिरुक्तिः**

विद्-धातोर्घञा वेदशब्दो निष्पद्यते। 'विद् ज्ञाने, विद् विचारणे, विद्लृ लाभे, विद् सत्तायाम्' इत्यादिधातुभ्यो ज्ञानं सत्ता लाभश्चेति त्रयोऽप्यर्थाः सिद्ध्यन्ति। लाभशब्देन जीवनरूपा स्थितिरपि ग्रहीतुं शक्यते, सत्तापदेन चोत्पत्तिः। तेन उत्पत्तिः स्थितिश्चेत्युभयमपि 'विद्'-धातोरर्थेऽन्तर्भवति। घञ्प्रत्ययश्चापि भावे अकर्तरि च कारके विधी-

यते इति ज्ञानम्, ज्ञानसाधनम्, ज्ञानकर्म, ज्ञानाधिकरणम्; सत्ता, सत्तासाधनम्, सत्ताकर्म, सत्ताधिकरणम्; स्थितिः, स्थितिसाधनम्, स्थितिकर्म, स्थित्यधिकरणञ्चेत्यादि सर्वं वेदशब्दार्थतया व्याख्यातुं शक्यते। तत्र ग्रन्थात्मकेषु वेदेषु शाब्दज्ञानसाधनत्वमेव समन्वाययन्ति प्रायेण विद्वांसः। अन्वेषणप्रक्रियया परिशील्यमाने तु सर्वविधज्ञान-साधनत्वम्, ज्ञानरूपत्वम्; सत्तासाधनत्वम्, सत्तारूपत्वम्; स्थितिसाधनत्वम्, स्थितिरूपत्वम् चेत्याद्यपि वेदशब्दार्थे समन्वितं भवति।

अत्रोच्यते—यद्यपि 'सर्वे सर्वार्थवाचकाः' इति कामदोग्धृत्वात् शब्दानां व्याकरणकोषादिबलाच्चानेके विलक्षणाश्च वेदशब्दार्थाः संभवन्ति; तथापि 'योगाद्रूढिर्बलीयसी' इति नयेन योगरूढार्थ एव स्वाभाविकः। विनोदाय तु यथायथं कामं गृह्यन्तामन्येऽप्यर्थाः। प्रसङ्गानुसारमन्यार्थकोऽपि। एकश्च वेदशब्द आद्युदात्तः शब्दराशेर्बोधकः, अपरश्च अन्त्योदात्तः कुशमुष्ट्यादेर्बोधकः 'वेदं कृत्वा वेदिं करोति' इत्यत्र। अत एव उञ्छादिगणे वृषादिगणे च वेदशब्द उभयत्र पाणिनिना पठितः। अत एव मन्त्रब्राह्मणात्मकशब्दराशावेव मुख्यो वेदशब्दः। स एवार्यजातेः सर्वस्वम्। तन्मूलिकैव भारतीया संस्कृतिः। तमेवाधारीकृत्य ज्ञानविज्ञानादिकर्माणि साधयितुं महतां प्रयत्नः। शब्दराश्यात्मकं वेदमनाश्रित्य तु पूर्वोक्तव्युत्पत्तिलभ्यमेकमप्यर्थं कश्चिन्न साधयितुं शक्नोतीति स एव मुख्यशब्दार्थोऽभ्युपेतव्यः।

अनन्ता वै वेदाः

यदपि—"भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास। तं ह जीर्णं स्थविरं शयानमिन्द्र उपव्रज्योवाच—भरद्वाज यत्ते चतुर्थमायुर्दद्यां किमेतेन कुर्या इति। ब्रह्मचर्यमेवैतेन चरेयमिति होवाच। तं ह त्रीन् गिरिरूपान विज्ञातानिव दर्शयाञ्चकार। तेषां हैकैकस्मान्मुष्टिमाददे। सहोवाच भरद्वाजेत्यामन्त्य-वेदा वा एते। अनन्ता वै वेदाः। एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः" इति।

(तै० ब्रा० ३।१०।११।३-४)

नहि इदानीमुपलभ्यमाना वेदा अनन्ताः सन्ति । तस्माद्विज्ञायते "यत्किमपि तत्त्वान्तरमेव वेदपदव्यपदेश्यं यदनन्तं भवतीति" उच्यते ।

तन्न; 'भरद्वाजो ह' इत्यादिसमुद्धृतवचनविरोधात्, शब्दराश्यात्मक-वेदाध्ययनार्थमेव ब्रह्मचर्यग्रहणविधिप्रसिद्धिभ्याम् । किञ्च 'अन्ववोचथा' इत्यनुवचनस्य शब्दराशिग्रहण एवाञ्जस्यम् । नहि तत्त्वान्तरस्य तत् सम्भवति । न चोपलभ्यमानस्य वेदस्यानन्त्यं नास्तीति वाच्यम्; देव-र्ष्यादिग्राह्यस्य वेदस्यानन्त्ये बाधाभावात् । अद्यत्वे तु मानवबुद्धिग्राह्याणा-अपि सहस्राधिकशाखानां विपरिलोपो दृश्यते, महाभाष्यकारादिभि-र्वेदस्य एकत्रिंशदुत्तरैकादशशतशाखानां चर्चितत्वात् । देवादिबुद्धि-ग्राह्यास्तु वेदा अनन्ता एव । अत एव—

'इन्द्रादयोऽपि यस्यान्तं न ययुः शब्दवारिधेः ।'

इति वचन श्रूयते ।

अपि च—अनन्तप्रपञ्चसृष्टेः ईश्वरज्ञानपूर्वकत्वेन तदनन्तज्ञानेष्वनु-विद्धानां शब्दानामप्यानन्त्यम्—

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।'

इति अभियुक्तोक्तेः । अत एव ईश्वरीयनित्यानन्तज्ञानेषु ऽनुविद्धाः शब्दरूपा वेदा अपि नित्या अनन्ताश्चेति सर्वमनवद्यम् । अत एव च 'वेदैरेव ब्रह्मा सृष्टिं करोति' इति श्रुतिस्मृतिषु, पुराणेषु, च प्रसिद्धिराञ्ज-स्येनोपपद्यते । नात्र वेदशब्दव्यपदेश्यं किमपि तत्त्वान्तरं निर्दिष्टम्, 'वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे', 'शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्' इति 'शब्द'पदनिर्देशात् । अत एव 'भूरिति व्याहरत्, तस्माद्भुवमसृजत्' इत्यादिभिः शब्दव्याहरणपूर्विका सृष्टिः श्रूयते । यथा लोके कुलालो घटशब्देन घटं स्मृत्वा दण्डचक्रादि-व्यापारेण तं सृजति तथैव परमेश्वरोऽपि तैस्तैः शब्दैस्तांस्तानर्थान् स्मृत्वा सृजति ।

**त्रयोमयः सूर्यः**

एवमेव "वेदैरशून्यैस्त्रिभिरेति सूर्यः" इत्यपि नानुपपन्नम् । त्रयीप्रोक्त-कर्मफलात्मकत्वात् सूर्यस्त्रिभिरशून्यः स्यादिति युक्तमेव । सवनप्राधा-

न्यात् कर्मणां प्रातरादिभेदेन ऋगादिमत्त्वम्, तत्त्वान्तरैरपि कथमशून्यत्वव्यवस्था सूर्यस्य सेत्स्यति। अत एव च सूर्यस्य त्रयीमयत्वम्।

यदुक्तम्—

"ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्येऽह्नः।
सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः॥"

(तै० १।२।१२।६।१)

इति श्रुतिः आरम्भमध्यान्तिमानां भागानामृग्यजुःसामत्वमाम्नावी"ति। तदपि न युक्तम्; दिवसस्य पूर्वाह्णादिभागेषु सूर्यस्य ऋगादियुक्तत्वोक्त्या भागत्रयस्य ऋगादित्वासिद्धेः। नहि 'मध्याह्ने छत्रधर' इत्युक्त्या मध्याह्नस्य छत्ररूपत्वं वक्तुं शक्यम्।

सायणोक्तो मन्त्रार्थस्तु—'दिवि वर्तमान आदित्यो देवः पूर्वाह्णे काल ऋग्देवताभिः सह गच्छति। अह्नो मध्यमे भागे यजुर्देवतायाः समीपेऽवतिष्ठते। अस्तमयकाले सामवेददेवतया पूज्यते। तदेवं त्रिभिर्देवैरभियुक्तः सूर्यः सर्वदा गच्छति' इति।

प्रातर्मध्यन्दिने चैव तथा चैवापराह्णिके।
त्रयी तपति सा काले ऋग्यजुःसामसंज्ञिता।
ऋचस्तपन्ति पूर्वाह्णे मध्याह्ने च यजूंषि वै।
सामानि चापराह्णे वै तपन्ति मुनिसत्तम॥
शान्तिकं ऋक्षु पूर्वाह्णे यजुःष्वन्तरपौष्टिकम्।
विन्यस्तं साम्नि सायाह्ने आभिचारिकमन्ततः॥
मध्यन्दिनेऽपराह्णे च समे चैवाभिचारिकम्।
अपराह्णे पितॄणान्तु साम्नां कार्याणि तानि वै॥
विसृष्टौ ऋङ्मयो ब्रह्मा स्थितौ विष्णुर्यजुर्मयः।
रुद्रः साममयोऽन्ते च तस्मात्तस्याशुचिर्ध्वनिः॥
तदेवं भगवान् भास्वान् वेदात्मा वेदसंस्थितः।
वेदविद्यात्मकश्चैव परः पुरुष उच्यते॥

(मार्कण्डेयपुराणे, १०२। १५-२०)

'हेमाद्रौ' ऋग्वेदादीनां विग्रहादिकमपि वर्णितम्—

'अजास्यः पीतवर्णः स्याद्यजुर्वेदोऽक्षसूत्रधृक् ।
वामे कुलिशपाणिस्तु भूतिदो मङ्गलप्रदः ॥
ऋग्वेदः श्वेतवर्णः स्याद् द्विभुजो रासभाननः ।
अक्षमालाधरः सौम्यः प्रीतो व्याख्यापनोद्यतः ॥
अथर्वणाभिधो वेदो धवलो मर्कटाननः ।
अक्षमालान्वितो वामे दक्षे कुम्भधरः स्मृतः ॥
नीलोत्पलदलाभासः सामवेदो हयाननः ।
अक्षमालान्वितो दक्षे वामे कुम्भधरः स्मृतः ॥' इति ।

एवं 'तमृचो मनुष्यलोकमुन्नयन्ते, सोऽन्तरिक्षं यजुर्भिरुन्नीयते, सोमलोकं स सामभिरुन्नीयते ब्रह्मलोकम् ।' ( प्र० ५ )

इत्यादिभिर्विज्ञायते यदृगादिमन्त्राणामधिष्ठातारो देवाः सन्ति, पूर्वाह्णादिदिवसभागेषु सवितुस्तैर्युक्तत्वमुपपद्यते । त एवादित्यात्मभूताः सन्तः पूर्वाह्णादिषु तपन्ति । प्रातरादिसवनेषु क्रमेण ऋग्-यजुः-साम्नां प्रयोगा अपि भवन्ति ।

## प्राप्यकारीणि इन्द्रियाणि

यदुक्तम्—"ज्ञानेषु प्रत्यक्षं तावज्ज्येष्ठम्, प्रत्यक्षेष्वपि चाक्षुषं ज्ञानं सर्वव्यवहारहेतुतया सर्वतः प्रधानम् ।" तदेतत् कथमुपपद्यते ; अन्यानि सर्वाणीन्द्रियाणि स्वसंयुक्तानेवार्थान् प्रकाशयन्ति । चक्षुस्तु दूरस्थमसंयुक्तमपि विषयं प्रत्याययति । तत्र यदि ह्यसंयुक्तस्याप्यर्थस्य बोधने चक्षुषः शक्तिस्तर्हि व्यवहितानप्यर्थान् विप्रकृष्टानपि चार्थान् कुतो न बोधयेत् ?

तत्र नैयायिकास्तु 'तैजसस्य चक्षुषो बहिर्निर्गतस्य तैस्तैः पदार्थैः सम्बन्धं कल्पयन्ति । तैजसत्वात्तु क्रियाशीलं चक्षुर्बहिर्निर्गत्य तैस्तैः पदार्थैः सम्बद्धं तांस्तानर्थान् गृह्णाति । सति व्यवधाने तु व्यवदधता पदार्थेन निरुद्धं नाग्रे गन्तुं प्रभवतीति व्यवहितान् पदार्थान् न गृह्णाति । यावती च क्षुद्रे चक्षुषि शक्तिस्तावदेव दूरं गन्तुं तत् शक्नोति, नातिदूरस्थानपि बोधयितुमस्य शक्तिरि'ति ।

शरीरस्योपभोगसाधनतया शरीराद्बहिर्गतमपि चक्षुर्ज्ञानाख्यं भोगं जनयतीति न बुद्धावागच्छति। निर्गत्य दूरं गतश्च चक्षुस्तत्प्रदेशस्थान् लघूनन्यानपि पदार्थान् कुतो न गृह्णाति ? शक्तिस्त्वस्य तादृशी यत्सूर्यमण्डलपर्यन्तमपि गत्वा सूर्यमण्डलमपि दर्शयति, परं तत्रस्थानन्यानर्थान्न दर्शयति। यथा दूरस्थं पर्वतं पश्यामस्तथा तत्रैव स्थितानि लघूनि तृष्णान्यपि कुतो न पश्यामः ? चाक्षुषो रश्मिरेव कश्चित् प्रयाति, न सर्वं चक्षुरिति चेत्; समीपेऽपि वस्तुनि चाक्षुषो रश्मिरेव गच्छति, तत्र कुतः सूच्यादीन्यपि पश्यति ? दूरस्थञ्च वस्तु बृहदतिलघु कुतः पश्यामः ? चक्षुषोऽङ्गुल्यादिना पीडने यः पदार्थो यत्र स्थितस्तस्मात् किञ्चिद् दूरे अथ उच्चैस्तिर्यग्वा दृश्यते, तत् कुतः ? चाक्षुषो रश्मिरेव तत्र तिर्यग्भूत इति चेदास्तां तत्, परं यत्र रश्मिर्गतस्तत्र पदार्थ एव यदा न विद्यते तदा कथं दृश्यते" इति। तन्न; शरीरावच्छिन्नस्यैव भोक्तृत्वेनादोषात्। तथा हि—चक्षुषो विषयसमर्पकतया बहिर्गमनेऽपि 'सूर्यमण्डलज्ञानवानहमि'ति ज्ञानवत्त्वं ज्ञानाधिकरणस्य शरीरावच्छिन्नस्य आत्मन एव सम्भवति।

यदुक्तम्—"सूक्ष्मस्य मनसो हृदयस्थत्वेन तत्सहयोगाभावान्न बहिर्गतेन चक्षुषा रूपग्रहणं संभवती"ति। तदप्यसङ्गतम्; चक्षुषो मनोयोगाभ्युपगमेन दोषाभावात्; दीर्घस्य नेत्ररश्मेर्विषयदेशगमनेऽपि शरीरसम्बन्धाविच्छेदात्।

अत एव यदुक्तम्—"मनसो बहिर्गमनमुपहासास्पदम्, मनसो बहिर्गमने शरीरधारणसंभवादि"ति। तदपि न; 'तन्मनोऽसृजदि'ति श्रुत्या मनसः कार्यत्वेन नाणुत्वम्, किन्तु मध्यमपरिमाणत्वमेवेति तस्य तडागोदकस्येव इन्द्रियप्रणालिकया विषयदेशगमनेऽपि शरीरसम्बन्धाविच्छेदेन तस्य धारणसंभवात्।

वेदान्तमतरीत्या चक्षुःप्रणालिकया सूर्यमण्डलपर्यन्तं निर्गतस्यान्तःकरणस्य विषयस्य चैकदेशस्थत्वेन अन्तःकरणावच्छिन्नविषयावच्छिन्नचैतन्ययोरैक्येन प्रमातृचैतन्यसत्तातिरिक्तसत्ताकत्वाभावेन विषयज्ञानं

प्रमातृनिष्ठं भवति, तस्य च देहे प्राकट्यं भवतीति कृत्वैव देहस्य भोगायतनत्वमुच्यते।

सांख्ययोग-मतरीत्या तु यथा ग्रामाध्यक्षो ग्रामीणेभ्यः करमादाय विषयाधिपतये समर्पयति, विषयाध्यक्षो मन्त्रिणे, मन्त्री च सर्वाधिपतये तथैवेन्द्रियैर्विषयाश्चित्ताय समर्प्यन्ते, तेन बुद्धयै, सर्वार्थकारिण्या बुद्धया च स्वप्रतिबिम्बिते पुरुषे, प्रतिबिम्बतादात्म्याभिमानेन पुरुषोऽपि तद्द्वारैव स्वात्मनि विषयसम्बन्धं मनुते। जवाकुसुमसम्बन्धेन स्फटिकलौहित्यमिवेन्द्रियोपस्थापितैर्विषयैः बुद्धेर्विषयाकारता संपद्यते, चिच्छायापन्नायां बुद्धौ विषयोपरागेण चिच्छायाऽप्युपरज्यते। छायायामुपरक्तायां बिम्बरूपः पुरुषः स्वात्मनि विषयोपरागं मनुते, यथा मलिने दर्पणे मलिनं प्रतिमुखं दृष्ट्वा मलिनं मे मुखमिति मत्वा शोचति, तद्वत्।

अत एव यदुक्तम्—"चक्षुषा रूपं प्रकाश्यते, न रूपमानीयते, तस्मिंस्तच्छक्तेरभावादि"ति। तदपि न; चितेनिर्धेयप्राणेन वस्तुरूपच्छेदानेतुं शक्यते तदा पदार्थत्वादिन्द्रियैर्भोक्तुरर्थे रूपादिसमर्पणेबाधाभावात्।

इदमिह ज्ञातव्यम्—कैश्चित्तु गोलकमेव चक्षुरित्युच्यते। तथा हि—"गोलके चिकित्साप्रयोगाद्विषयोपलब्धेर्गोलकगुणदोषानुवर्तितया कृष्णसारगोलकमेव चक्षुः, न तु तेजस्तस्यानुपलभ्यमानत्वात्। वेगवताऽपि तेजसा योजनशतसहस्रव्यवहितचन्द्रसूर्यतारकादि कथमतिशीघ्रं ग्रहीतुं शक्येत, कथञ्चाल्पकं नायनं तेजः मिहिरमहसा प्रतिहतं न भवेत्, कथञ्च स्फटिकाभ्रान्तरितपदार्थोपलब्धिस्तेन स्यात्।" परमेतन्न सङ्गतम्; कुठारादिकारकवदिन्द्रियाणामपि प्राप्यकारित्वेन कृष्णसारगोलके तदसंभवेन तदनुपपत्तेः। अपि च—न गोलकानामिन्द्रियत्वं संभवति, कर्णशष्कुलीरहितस्यापि सर्पस्य शब्दोपलम्भात्। एवमेव गोलकादिहीनानां वृक्षाणामपि दर्शनश्रवणाद्युपलम्भाच्च तदनुपपत्तिः। 'तस्मात् पश्यन्ति पादपाः" इत्यादिशास्त्राणि विज्ञानञ्चाधुनिकमेतत्प्रमाणयन्ति। अशुष्कस्य वृक्षस्य छेदनप्रतिषेधेन प्राणित्वावगमाच्च।

यदुक्तम्—"चिकित्सादिप्रयोगात् कृष्णसारगोलकस्य चक्षुष्ट्वम्" इति। तदप्यकिञ्चित्करम्; तस्याधेयमात्रोपकारकत्वात्।

"चिकित्सादिप्रयोगस्तु गोलके यः प्रवर्तते।
सोऽयमाधारसंस्कारः आधेयस्योपकारकः॥" इति।

कृष्णसारगोलकस्य चक्षुष्ट्वे तस्य विषयैः संसर्गाभावान्न विषयप्रत्यक्षं स्यात्। तस्मात्तैजसस्य चक्षुषोऽधिष्ठानमेव कृष्णसारगोलकः स्वोपघातानुपघाताभ्यां चक्षुषोऽप्युपघातानुपघातौ जनयति।

इन्द्रियाणां स्वविषयग्रहणं भूतप्रकृतित्वे सति निर्वहति नान्यथा। भौतिकानीन्द्रियाणि स्वस्वविषयमधिगन्तुमुत्सहन्ते। गोलकशक्तिरिन्द्रियाणीति पक्षो मीमांसकानाम। ननु न प्राप्यकारित्वं सर्वेन्द्रियाणाम्, रसनस्पर्शनयोरेव तद्दर्शनात्। चक्षुःश्रोत्रे तु दूरदेशस्थरूपशब्दग्राहके कथं प्राप्यकारिणी स्याताम? घ्राणं तु त्रिपुटिकानिकटनिहितपदार्थगन्धमपि गृह्णाति, दूरतोऽपि प्रवहदनिलसमानीतमालतीमल्लिकायूथिकादिसौरभमुपलभते, निकटनिहितद्रव्येऽपि न सन्निकर्ष इत्यप्राप्यकारित्वमेव तस्य। तस्माच्छक्तिविशेषणमधिष्ठानमेवेन्द्रियम्, चन्द्रार्कग्राहिणि चक्षुषि नतरां प्राप्यकारित्वमिति चेन्न। कारकत्वेन प्राप्यकारित्वस्यैवौचित्यात् कारकञ्चाप्राप्यकारि चेति चित्रम्। अप्राप्यकारित्वे च शक्तेरविशेषात् कुड्यादिव्यवहितमपि वस्तु चक्षुर्गृह्णातु।

यदुक्तम्—"तत्र कार्यानुपलम्भान्न शक्तिः कल्प्यते" इति। तदपि न क्षोदक्षमम्; तेजसो द्रव्यत्वादव्यवधानाद्यनुगुणमेव कार्यकरत्वम् अमूर्तायास्तु शक्तेर्व्यवधानमबाधकं भवेदिति तेज एवेन्द्रियं कल्पनीयम्, न शक्तिः शक्तिमदधिष्ठानं वा। श्रोत्रस्यापि प्राप्यकारिता वक्ष्यते। घ्राणस्यापि समीरणान्दोलितमल्लिकामालत्यादिपुष्पप्रसूतत्रसरेणुनिकराधिकरणगन्धग्रहणात् प्राप्यकारितैव। न च त्रसरेण्वपसर्पणाद् द्रव्यक्षयः, पृथिव्यापूरत्वेन त्रसरेणुभूयस्त्वेन च तददोषात्। अत एवाशुचिद्रव्याघ्राणेऽपि प्रायश्चित्ताम्नानम्। चक्षुषस्तेजःप्रसरणात् प्राप्यकारितैव, श्रोत्रस्यापि शब्दाभिव्यञ्जकध्वनेरुत्पत्तिदेशे गमनान् तादृशस्य ध्वनेः श्रोत्रदेशे

आगमनाद्वा सन्निकर्षस्य सत्त्वान्न प्राप्यकारित्वभङ्गः। त्वग्-रसनयोस्तु प्राप्यकारित्वे न विवादः। तस्मात् प्राप्यकारीणि इन्द्रियाणीति।

यदुक्तम्—"अयस्कान्ताञ्जनतिलकमन्त्रादिवदप्राप्तस्यैव ग्राहकं चक्षुः। तथात्वेऽपि न सकलार्थभासकत्वप्रसङ्गः, योग्यदेशापेक्षणात्। यथा अयस्कान्तोऽयसोऽप्राप्तस्याकर्षणे प्रवर्तमानोऽपि न सर्वस्यायसः तथाविधस्याकर्षणे समर्थः, अपि तु योग्यदेशस्थस्यैव, अञ्जनतिलकमन्त्रादिर्वा अप्राप्तस्य स्त्र्यादेराकर्षकः सन् न सर्वस्याकर्षको दृष्टः, नियतस्यैव स्त्र्यादेस्तेनाकर्षणोपलम्भात्, तथैव चक्षूरश्मयो लोकान्तरं गत्वा किमिति रूपं न प्रकाशयन्ति, चक्षुर्वा संयुक्तसमवायात् रूपमिव गन्धादिकमपि किमिति न प्रकाशयति, तत्रापि तस्याविशेषात् इति चोद्ये योग्यतैव शरणम्" इति।

तन्न; तथात्वे योग्यताविशेषादेव एकेन्द्रियेणैव सर्वप्रकाशसिद्धौ चक्षुराद्यभ्युपगमस्य वैयर्थ्यापातात्। त्वच एव योग्यतावैशेष्यात् तत एव तत्तदर्थोपलम्भसंभवात्। यदि तु योग्यताया अपि निर्धारणाय कार्यकारणभावनिर्धारणमावश्यकम्, तदा प्रकृतेऽपि स निर्धारणीयः। यथाऽयसो नियतदेशप्राप्तिर्वक्तव्या। यदि चक्षुःप्रदेशे पर्वतादेर्विषयस्य गमनमनुपहतचेतसा नाभ्युपेयते, तदा चक्षुष एव विषयप्रदेशगमनमभ्युपेयताम्, अयस्कान्ततिलकादीनां संयोगसम्बन्धानपेक्षणेऽपि देशविशेषप्राप्त्यपेक्षाया अनिवार्यत्वात्। अन्यथा दूरस्थवस्तुदर्शनाय पुरुषस्य गमन भवन्मतेऽपि नोपपद्यते। बिडालादिचक्षूरश्मिगमनस्य प्रत्यक्षसिद्धत्वाच्च प्राप्यकारित्वम्।

किञ्च—इन्द्रियत्वाविशेषेऽपि त्वगादिरपि कुतो नायस्कान्तवत् प्राप्यकारी, योग्यतायाः सर्वत्राप्यनपायात्। तथाऽदर्शनान्न तत्र तथेति चेत्, प्रकृतेऽपि तथाऽदर्शनस्य तुल्यत्वात्, गोलकस्य विषयदेशाप्राप्तिदर्शनेऽपि रश्मीनां तदप्राप्तिदर्शनस्य वर्णयितुमशक्यत्वात्। बिडालनेत्ररश्मीनां प्राप्तिदर्शनाच्च।

किञ्च—नियतदेशप्राप्त्यपेक्षणे प्रभावशक्त्याद्यात्मना अयस्कान्तादीनामपि लौहसंसर्गो भवत्येव। सर्वथाऽसंसर्गेऽसंसृष्टत्वावैशेष्यात् दूरस्थाना-

मप्ययसां कर्षणं स्यात्। तस्मात् नेत्ररश्मिसंसर्गोऽत्रापि अभ्युपेय एव।

किञ्च—'प्रहिणु नयने' इत्यादौ नयनप्रेषणं ज्ञायते। न गोलकमात्रस्य तस्य प्रेषणमुपपद्यते, तेन रश्म्यात्मकस्यैव तस्य प्रेषणमुपपद्यते। सन्निहितदूरदूरतरवस्तुदर्शने प्रेरितं नेत्रमेव प्रवर्तते।

ननु अनुपलभ्यमानत्वेन चक्षुरात्मकं तेजः कथं सिद्ध्यतीति चेन्न। चन्द्रसूर्यादिपरभागस्य पृथिव्या अपरभागस्य चापि प्रत्यक्षेणानुपलम्भात्। न च प्रत्यक्षैकशरणाः पदार्थाः; अनुमानादिभिरपि तेषां स्वरूपनिर्णयात्। रूपोपलब्धिकार्येण तैजसस्येन्द्रियस्य संभवत्येव सिद्धिः। तेजोद्रव्यं दीपादिरूपस्य प्रकाशकं दृष्टमिति रूपप्रकाशकस्य चक्षुषोऽपि तैजसत्वमुचितमेव। विचित्रा हि द्रव्यगुणानामुद्भवाभिभववशेन गतयो भवन्ति। तद्यथा—सर्वतः प्रसरता धवलवहलेन शीतस्पर्शाश्रयेण द्रव्येण व्याप्तौ हेमन्तशिशिरौ भवतः, निराधारस्य शीतस्पर्शगुणस्यानुपपत्तेः। परं तत्र सलिलद्रव्ये शीतस्पर्शस्योपलब्धिर्भवति, न शुक्लरूपस्य। निरर्गलं विजृम्भमाणेन तेजोद्रव्येण ग्रीष्मो भवति। तत्र तद्गुणस्योष्णस्पर्शस्यैव उपलब्धिर्भवति, न भास्वररूपस्य। कार्तस्वरादौ तैजसद्रव्ये भास्वरं रूपमुपलभ्यते नोष्णस्पर्शः। उदकान्तर्गते ज्वलनतप्ते जले ज्वलनगुण उष्णस्पर्श उपलभ्यते, न भास्वरं रूपम्। एवमेवेह नयनरश्मौ तैजसे द्रव्ये रूपस्पर्शौ द्वावपि नोपलभ्येते इति कः पर्यनुयुज्येत। न ह्याकाशमदहन् दहनः पर्यनुयुज्यते।

न च सर्वत्र नयनरश्मेरनुपलम्भ एव। मार्जारादीनां नक्तञ्चराणां निशि निविडतमतमःपटलावृते वेश्मनि सञ्चरतां चाक्षुषं तेजः भास्वररूपं दूरमपि प्रसदुपलभ्यते। अस्मदादिनयनरश्मेरनुद्भूतत्वात् दिवोल्कादिवन्न प्रकाशः। एवं चक्षुषस्तैजसत्वे प्राप्यकारित्वे च सिद्धे कुड्यादिव्यवधाने तस्य गतिरोधेन प्राप्त्यभावादग्रहणम्। अव्यवधाने गतिरोधाभावाद् ग्रहणकौशलम्।

ननु काचादिव्यवहितस्य ग्रहणं न स्यात्। भूतं हि तृणादिकं न काचादिमध्यमनुप्रविश्य बहिर्गन्तुं शक्नोति, एवंभूतं चक्षुरपि प्रतिहतं

सन्न बहिर्गन्तुं प्रभवेदिति चेन्न। पार्थिवद्रव्यस्य व्यवधायकत्वेऽपि काचादेरतिस्वच्छत्वात् केषाञ्चित् सशुषिरत्वात् चाक्षुषतेजःप्रसरनिरोध-कौशलाभावात्। अ एव काचादिव्यवहितप्रदीपादेरौष्ण्यप्रकाशौ बहिरुपलभ्येते। तथासति अपञ्चीकृतस्यातिसूक्ष्मस्य नायनरश्मेः काचादिमनादृत्य बहिर्गन्तुमुद्यतस्य प्रतिघातपराहतिः स्वाभाविक्येव।

यदुक्तम्—"अणीयसा चक्षुषा कथं महीयसो महीधरादेर्ग्रहण-मि"ति। तत्तुच्छम्; लघीयसा दीपेन गृहोदरप्रकाशवत् तदुपपत्तेः। तद्यथा—लघीयसोऽपि प्रदीपान्निर्गता प्रभा गृहोदरं व्याप्नोति, तथैव सूक्ष्मादपि गोलकान्निर्गत्य क्रमेण प्रसृतश्चाक्षुषो रश्मिर्बहूनपि पर्वतावयवान् व्याप्नोति, ग्राहयति च पर्वतम्।

ननु कुतो नयनरश्मेरियती गतिर्यद् गगनमण्डलमाक्रम्य गभस्तिमालिनं स्पृशति, न हन्यते च सावित्रेण उग्रेणातिवेगवता तेजसेति चेन्न। स्वभावस्यापर्यनुयोज्यत्वात्। उक्तमेव—

'दृष्टानुमितानां हि नियोगप्रतिषेधानुपपत्तिः
प्रमाणस्य तत्त्वविषयत्वात्।' (गौ० सू० ३।१।५३)

कार्यसत्तया फलबलकल्प्यं तथाविधं कारणम्, येन चाक्षुषो रश्मिर्दूरमपि प्रसरति, न च परेण निरुध्यते। दृष्टश्चाविरोधः स्थाल्यादौ अग्नेः काचादौ दीपादेश्चाक्षुषस्य च तेजसः।

न च तथापि नेदीयसः शाखादर्दवीयसश्चन्द्रमसस्तुल्यकालं ग्रहणं कथमिति वाच्यम्; अणीयसस्तेजसो वेगातिशयेन द्रुततमगमने तदुभयोरतिझटिति प्राप्त्या शतपत्रभेदनवत्तदुपपत्तेः। यौगपद्यप्रतीतिस्तु भ्रान्तिरेव।

किञ्च—इदानीन्तने विज्ञाने 'एक्स-रे'-यन्त्रेण नानाविधवस्त्राणां त्वङ्मांसादीनामपि रोधकत्वं नास्ति तद्व्यवहितानामप्यस्थ्नां प्रतिच्छायाग्रहणदर्शनात्।

ननु तथापि यदि विषयं प्राप्यैव चक्षुर्गृह्णीयात् तदा घ्राणादिगृहीतार्थ इव चक्षुर्गृहीतेऽप्यर्थे चक्षुषा विषयस्य व्यवधानाभावात् 'अयं दूरस्थोऽयं

समीपस्थः' इति सान्तरप्रत्ययो न स्यात्। भवति च तथा प्रत्यक्ष इति चेन्न; यत उक्तप्रतीतिः शरीरापेक्षया सान्तरत्वं विषयीकरोति, न त्विन्द्रियापेक्षया इन्द्रियस्यातीन्द्रियतया तदपेक्षया सान्तरत्वस्य चक्षुषो वीक्षणाक्षमत्वात्।

ननु यदि विषयदेशगतेन चक्षुषा विषयो वीक्ष्यते, तदा नेत्रापिधानेऽपि प्रत्यक्षं स्यात्, नेत्ररश्मेर्विद्यमानतया तत्सन्निकर्षस्य तदानीमपि सत्त्वात्। अतः कृष्णसारगोलकमेव कुतो न चक्षुः? तत्पक्षे निमीलनेन व्यवधानादग्रहणमुपपद्यते इति चेन्न। नयनगोलकादारभ्य विषयपर्यन्तं बद्धरेखस्यैव मनःसंयुक्तस्य च चक्षुषो विषयग्राहकत्वाभ्युपगमात्। निमीलने तु विषयसंयुक्तोऽपि नेत्ररश्मिर्मनसा वियुक्तोऽबद्धरेखश्च कथं विषयं गृह्णीयात्? वेदान्तपक्षेऽपि उन्मीलिताक्षस्य हृदयादारभ्य विषयदेशं यावद्दण्डायमानस्यैव अन्तःकरणस्य तत्तद्विषयाकारवृत्त्युत्पादकत्वान्न दोषः।

न च "दूरं गतेन चक्षुषा तत्प्रदेशस्थानि लघूनि वस्तूनि कुतो न गृह्यन्ते? सूर्यमण्डलस्य ग्रहणेऽपि तत्स्थान्यन्यानि वस्तूनि कुतो न गृह्यन्ते? अतिबृहच्च वस्तु दूरादतिलघुतया च कथं गृह्यते" इति वाच्यम्; दूरत्वदोषादेव तथात्वोपपत्तेः। यद्यपीन्द्रियापेक्षया दूरत्वसान्तरत्वादिकं न भवति; तथापि देहापेक्षया तत्सत्त्वात्। फलबलकल्प्यकारणत्वस्य सर्वैरभ्युपगन्तव्यत्वात्। दूरत्वाभावादेव समीपे सूच्यादीनपि पश्यति चक्षुः।

यदपि—"चक्षुषोऽङ्गुल्यादिना पीडने अधः उच्चैस्तिर्यग् वस्तु कुतो दृश्यते" इति। तदपि न सङ्गतम्; द्विचन्द्रादिप्रतीतिवत् तथाप्रतीतेर्भ्रान्तिरूपत्वात्। न च रज्जुसर्पवद् बाधाभावात् कुतो भ्रान्तिरिति वाच्यम्; सोपाधिकभ्रान्तेर्यावदुपाधिमनुवर्तमानत्वोपगमात्। यथा जवाकुसुमादिसन्निधानेन स्फटिके लौहित्यमुपाधिं यावदनुवर्तते, उपाध्यपगमात्तु बाध्यते, तथैव प्रकृतेऽपि बोद्धव्यम्।

केचित्तु—"बाह्यविषयाश्छायाद्वारा नयनदेशमागत्य भवन्ति गृह्यमाणाः" इति। तदप्यसङ्गतम्; छाया हि नैकदा चतुर्दिक्ष्वापतति, किन्तु

तेजःपराङ्मुखे देशे इत्यस्यैव अनुभवसिद्धत्वात्। प्रकृते चैकं वस्तु मध्ये स्थितं चतुर्दिक्षु स्थिताः पुमांसो गृह्णन्ति।

कैश्चित्तु—"प्रतिबिम्बरूपेण चक्षुर्देशं प्रति विषया आपतन्तीति कल्प्यते।" तदपि तुच्छम्; नीरूपस्य गगनस्य प्रतिबिम्बाभावेन गगनात्मकस्य वृक्षयोर्व्यवधानस्य ग्रहणानुपपत्तेः। सिद्धान्ते तु बहिर्निर्गतेन चक्षुषा गृहीतस्याऽऽलोकस्य आकाशेऽपि 'आकाशो धवल' इति प्रतीत्या आकाशस्य भ्रमात्मकग्रहणोपगमात् नानुपपत्तिः। यदि तु 'पीतः शङ्खः' इतिवत् अन्यदीयरूपेण अन्यधर्मिणो ग्रहणाभ्युपगमे आलोकोपधानेन गगनस्यापि चाक्षुषत्वमुपेयते, तदेव च प्रतिबिम्बत्वप्रयोजकम्, अतो गगनस्यापि प्रतिबिम्बसम्भव इत्युच्येत; तदाऽप्येकस्य वस्तुनः पश्चाद्भागेऽसन्निहितः पदार्थः सान्तरत्वेन गृह्यते। तथाविधस्य प्रतिबिम्बस्तु दर्पणादौ न सान्तरत्वेनोपलभ्यते, अपि तु नैरन्तर्येणैवोपलभ्यते। तत्र यदि बाह्याः पदार्थाश्चाक्षुषि प्रतिबिम्बेरन् तदा न सान्तरत्वेन गृह्येरन्। सान्तरत्वेन ग्रहणे तु प्रतिबिम्बरूपानिवृत्तिरेव स्यात्। मार्जारनेत्ररश्मिगमनस्य प्रत्यक्षदर्शनाच्च चक्षुषो गमनं युक्तमिति उक्तमेव।

किञ्च—एकेन प्रतिबिम्बेन आवृतकृष्णसारेऽणीयसि वस्त्वन्तरप्रतिबिम्बासंभवेन युगपदनेकपदार्थग्रहणानुपपत्त्याऽपि न नयने प्रतिबिम्बापत्त्या बाह्यार्थग्रहणं संभवति।

अपि च—उपनेत्रेणावृते चक्षुषि उपनेत्रे यः प्रतिबिम्बः स एव ग्रहीतुं शक्यते। उपनेत्रे चावस्थितानां प्रतिबिम्बानां न क्रोशादिव्यवहितत्वमवधारयितुं शक्यते, उपनेत्रस्य अल्पशरीरत्वात्। परमुपनेत्रेण आवृतेनापि नेत्रेण दृश्यन्त एव दूरसमीपभावमाश्रिताः पदार्थाः। तस्मात् चक्षुषो बहिर्निर्गमनमेव युक्तम्।

किञ्च—नेत्रे प्रतिबिम्बग्रहणोपपत्त्यर्थमतिसामीप्यस्य प्रतिबन्धकता न कल्पयितुं शक्यते। तथा च नेत्रस्थकज्जलादिग्रहणप्रसक्तिः स्यात्। सिद्धान्ते तु अतिसामीप्यस्य प्रतिबन्धकताकल्पने तदग्रहणमुपपद्यते।

अपि च - पित्तरोगवतां सर्वं बाह्यं पीतं भातीति प्रसिद्धम्। तदेतद् बहिर्निर्गच्छदत्यच्छनायनरश्मिसंपृक्तपित्तद्रव्यगमनमन्तरेण नोपपद्यते। तेन चक्षुषो बहिर्देशगमनेन प्राप्यकारिता अभ्युपेतव्या। तथा च 'चक्षुः प्राप्यकारि, इन्द्रियत्वात्, घ्राणवत्' इत्याद्यनुमानं प्रमाणम्।

केचिदन्ये वैज्ञानिकास्तु—"चक्षुषो निर्गमनं पदार्थागमनञ्च नाभ्युपगच्छन्ति। किन्तु सूर्यकिरणाः प्रदीपादिकिरणा वा तत्तदर्थजातं प्रतिबिन्दुं स्पृष्ट्वाऽस्मच्चक्षुषि प्राप्ता भवन्तीति तादृशघटनेन चक्षुस्तथाभूतमर्थं बुद्ध्यते। सूर्यादिप्रकाशकिरणेषु सप्तापि रूपाणि निहितानि। भास्यमानाः पदार्थास्तानि रूपाणि भक्षयित्वा आत्मसात्कुर्वन्ति। ततः कश्चित् रक्तं कश्चित् च पीतं रूपमुद्वमति। यदुद्वमति तेनैव रूपेण स पदार्थो रूपवान् दृश्यते" इति प्राहुः। तदेतदपि न समीचीनम्; तत्तत्पदार्थस्पृष्टकिरणमात्रसम्बन्धे चक्षुषः पदार्थभासकत्वानुपपत्तेः। उद्वान्तानि च रूपाणि पदार्थे तिष्ठन्तु चक्षुषि च, कथं तेषामागमनम्? किरणेषु पदार्थाकाराः समर्पिता भवन्तीत्यपि न वक्तुं शक्यते; प्रतिकिरणं प्रतिबिम्बग्राहकत्वे मानाभावात्। प्रतिबिम्बादन्यादृशाकारग्रहणे तु सर्वदैव तत्तिष्ठेत्। न च किरणेषु कश्चन पदार्थाकार उपलभ्यते।

किञ्च—सूर्यकिरणसंस्पृष्टा अतिदूरस्था देवगजादयोऽपि कुतो नोपलभ्यन्ते? अत्र पक्षेऽपि पर्वतादिवत् तत्रत्यानि तृणान्यपि कुतो नोपलभ्यन्ते? किञ्च—वस्तूनां सन्निकर्षविप्रकर्षादिकमप्यस्मिन् पक्षे न ग्रहीतुं शक्यते। प्रतिबिम्बपक्ष इव इहापि चक्षुषा नैरन्तर्येण ग्रहणं प्राप्नोति, न सान्तरत्वेन। यद्यप्यतीन्द्रियत्वाइन्द्रियापेक्षया सन्निकर्षविप्रकर्षौ न प्रत्यक्षगम्यौ; तथापि देहाद्यपेक्षया तु तौ प्रत्यक्षगम्यावेव।

## वैदिकविज्ञानाडम्बरम्

केचित्तु—'वैदिकविज्ञान'नाम्ना काञ्चिदभिनवां प्रत्यक्षपद्धतिं प्राहुः। तन्मतेऽपि चक्षुषो बहिर्गमनमनपेक्षितम्, किन्तु पदार्थानामेव स्वस्थानमारभ्य चक्षुःपर्यन्तमुत्तरोत्तरं लघून्यपरिगणितानि मण्डलानि निष्पद्यन्ते। तावतैव च पदार्थाश्चक्षुःप्रदेशमागच्छन्ति, उत्तरोत्तरलघुमण्डलनिर्मित्या च दूरस्थं वृहदपि लघु प्रतीयते। तत एव तृणान्यपि अतिलघूनि भवन्ति, तेन न गृह्यन्ते।

कथं केन वा प्रकारेण मण्डलानि निर्मीयन्ते? इति चेदित्थम्; प्रत्येकं वस्तूनां त्रीणि मण्डलानि भवन्ति। पिण्डरूपमेकं मण्डलम्, तदृगुच्यते। तस्मात्पिण्डाच्च तदीयाः प्राणा निष्क्रम्य बहिश्चरन्ति। यस्मिन् स्वल्पे महति वा प्राणे यावती शक्तिः तावद्दूरमेव स प्रचरति। पार्थिवेषु पदार्थेष्वग्निरेव प्राणः 'यत्किञ्चिद्दार्ष्टिविषयमाग्नेयकमेव तत्' इति (७।८।३) निरुक्तवचनात्।

स चायमग्निप्राणो द्विविधः—चित्यः चितेनिधेयश्च। चित्याः प्राणा मर्त्याः, चितेनिधेयास्त्वमृताः। चित्या प्राणाः स्वचयनेनैव वस्तुस्वरूपं निष्पादयन्ति, तद्रक्षण एव व्यापृतास्तत्रैव तिष्ठन्ति। चितेनिधेयास्तु बहिरपि प्रचरन्ति। एषां प्राणानां यदन्तिमं मण्डलं तत् साममण्डलमि'त्युच्यते, 'षोऽन्तः कर्मणी' ति धातोर्निष्पन्नस्य सामशब्दस्य तथैवार्थावगतेः। 'ऋचा समं मेन' इति नैदानाः' ( ७।१२।४ ) इतिरीत्या तु यावती यस्य ऋग्भवति तदनुकूलमेव तस्य सामेति समत्वात् सामशब्दः प्रयुज्यते। ऋचामारभ्य सामपर्यन्तं प्रत्येकस्मिन् बिन्दौ शतशो मण्डलानि सन्ति। तेषु यत्प्राणरूपमग्नितत्त्वं व्यापृतं तदेव 'यजुरि'त्युच्यते। तदेतत् सूर्यमण्डलमधिकृत्य व्याचष्टे श्रुतिः—

'यदेतन्मण्डलं तपति तन्महदुक्थं ता ऋचः। स ऋचां लोकः। अथ यदेतदर्चिर्दीप्यते तन्महाव्रतम्। तानि सामानि। स साम्नां लोकः। अथ य एष एतस्मिन्मण्डले पुरुषः सोऽग्निः। तानि यजूंषि। स यजुषां लोकः। सैषा त्रय्येव विद्या तपति।'

( शत० १०।५।२।१।३ ) इति।

किरणा यत उत्तिष्ठन्ते तद् उत्थम्, उत्थमेव उक्थं परोक्षपरिभाषया उच्यते। यत्र समाप्यन्ते तद्व्रतमित्याम्नायते। प्राणाश्च वैदिक्यां परिभाषायाम् अग्निपदेनोच्यन्ते—'अग्नीषोमात्मकं जगत्'। ( बृ० जा० २।४ ) इति। तत्राग्निः प्राणः, सोमस्तु रयिरिति। तदुक्तं प्रश्नोपनिषदि—

'स एव वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते।' ( प्र० १७ )। तत्र हि भूयान् प्रपञ्चः प्राणस्याख्यातः। अग्नीषोमयोरपि सूक्ष्मावस्थे प्राण-रयिनाम्ना अन्यत्र विवृते। तत्र 'मूर्तिरेव रयिः' इत्यादिना सोमस्योत्पादकता रयिनाम्नि तत्त्वे, अग्न्युत्पादकता तु प्राण इति।

इदं च स्मर्तव्यम्—यद्वैदिके विज्ञाने प्राण एव मुख्यं तत्त्वमुक्तम्। यथा अद्यतनं विज्ञानं विद्युति आयतते तथा वैदिकं विज्ञानं प्राण इति। तस्य चाग्नीन्द्रादिपदैस्तत्र तत्र निर्देशः। यथा—

'अग्निगर्भा पृथ्वी यथा द्यौरिन्द्रेण गर्भिणी।' इति ( बृ० ६।४।२२ ) पृथ्वीपिण्डप्राणस्य अग्निनाम्ना सूर्यपिण्डप्राणस्य च इन्द्रनाम्ना निर्देशः। प्रश्नोपनिषद्यपि वेदानां प्राणे प्रतिष्ठितत्वमुक्तम्—

'अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम् ।
ऋचो यजूंषि सामानि यज्ञः क्षत्रं ब्रह्म च ॥' (प्र० २ । ६)

इति मन्त्रेऽपि चाग्निनाम्नि प्राणे ऋक्सामयोः प्रतिष्ठा प्रोक्ता—
"अग्निर्जागार तमृचः कामयन्ते। अग्निर्जागार तमु सामानि यन्ति। अग्निर्जागार तमयं सोम आह। तवाहमस्मि सख्ये न्योकाः।"
(ऋ० सं० ५।४४।१५)

अत्रा अग्निनाम्ना यजुरेवोक्तम्, पूर्वोक्तब्राह्मणेन सहैकवाक्यतासिद्धेः। सोमस्य तत्सहचरत्वम्। ततो न्यूनत्वं 'न्योकाः' इति पदेनोक्तम्। भगवान् मनुरपि आह—

'एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्।
इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥'
(१२। १२३)।

लोके सूर्याद्याः स्वज्योतिषः चन्द्राद्यास्तु अन्यस्यज्योतिरादाय तदात्मसात्कृत्य परत्र तज्ज्योतिः प्रथयन्तीति परज्योतिषः कथ्यन्ते। येषु ज्योतिर्नास्ति केवलं रूपमेव येषां दृश्यते, ते रूपज्योतिषः, पृथिव्याद्याः। येषां वाय्वादीनां रूपमपि न दृश्यते तेऽज्योतिषः। तत्र स्वज्योतिषि सूर्ये वेदत्रयम् उक्तेन ब्राह्मणेनाम्नातम्। यावत्तेषां ज्योतिर्गच्छति तत्तेषां मण्डलमिति परज्योतिषोऽपि पदार्था एवमेव निर्वक्तव्याः।

रूपज्योतिषि पृथिव्यामपि वेदत्रयमाह श्रुतिः—
'त्रयी वै विद्या ऋचो यजूंषि सामानि इयमेवर्चः। अस्यां त्वर्चति योऽर्चति स वागेवर्चः। वाचा ह्यर्चति योऽर्चति। सोऽन्तरिक्षमेव यजूंषि द्यौः सामानि। सैषा त्रयी विद्या सौम्येऽध्वरे प्रयुज्यते।' (शत० ४।६।७।१)।

अत्र पृथिव्या ऋक्त्वं तस्या व्युत्पत्तिश्चापि व्याख्याता। अन्तरिक्षस्य यजुष्ट्वम्, दिवः सामत्वञ्चाम्नातम्। प्राणरूपोऽग्निः पृथिव्या उत्थाय द्युलोकपर्यन्तं गच्छति। तत्र दिव्यस्याः साममण्डलम्, मध्येऽन्तरिक्षे तु यजुर्मण्डलमिति श्रुत्या पृथिव्या ऋक्त्वम्, अन्तरिक्षस्य यजुष्ट्वम्, दिवश्च सामत्वमाख्यातम्। तत्तल्लोकस्थितानि ऋग्यजुःसाममण्डलानीति तात्स्थ्यात् ताच्छब्द्यं श्रुतौ द्रष्टव्यम्। स्थानत्रयस्थिता अग्निवाय्वादित्यास्त्रयोऽप्यमरेव रूपाणीत्यपि श्रुतिषु असकृदुपदिष्टम्—

'एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ।'
( ऋ० १ । १६४ । ४६ ) इति ।

तत एव 'ऋग्वेद एवाग्नेरजायत, यजुर्वेदो वायोः, सामवेद आदित्यात्' ( ऐ० ब्रा० ५।३२ ) इत्यग्निवाय्वादित्येभ्यस्त्रयाणां वेदानामुत्पत्तिराख्याता ।

'इतरेतरजन्मानो भवन्ति इतरेतरप्रकृतयः ।'

इति ( निरु० ७ । ४ । १२ ) निरुक्तकृदुक्तदिशा वेदेभ्यो देवा जायन्ते, देवेभ्यश्च वेदाः, इति वैज्ञानिकप्रक्रियायां नात्र विशेषः । तन्तुभ्योऽपि पटो जायते पटाच्च तन्तव इति लोकेऽपि दृश्यते । तस्मादेकरूपतैव अभिमता कार्यकारणयोः । मनुरप्याह—

'अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् ।
दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ॥' ( १ । २३ )

वेदेष्वप्ययं सङ्केतः—'ऋग्वेदश्च 'अग्निमीले पुरोहितम्' इति पुरो दृश्यमानं पार्थिवमग्निमेवारम्भे प्रस्तौति । यजुर्वेदश्च 'इषे त्वोर्ज्जे त्वा वायवः स्थः' इति वायुमेव प्रस्तुवन्नारभ्यते । सामवेदश्चारम्भे 'अग्न आयाहि वीतये' इति सूर्यमण्डलात् आयान्तमग्निं सूर्यमेवादौ प्रस्तौति । पृथिव्याः प्राणरूपोऽग्निः पृथिव्या उत्थाय सूर्यमण्डलपर्यन्तं गच्छति । यावत्पर्यन्तं रूपज्योतिषः प्राणाः प्रसर्पन्ति, तावत्पर्यन्तमेव तद्वस्तु दृश्यते । यस्य पदार्थस्य साममण्डलेऽन्तर्गतमस्माकं चक्षुः, तदेवास्माभिरालोक्यते । यस्य तु साममण्डलं नास्माकं चक्षुरिन्द्रियपर्यन्तं व्याप्नोति, तन्न दृश्यते । अत एव येषां वस्तूनां साम ऋगनुसारेण विस्तृतं तदेव दूरादालोक्यते । तत्रैव स्थिता लघवः पदार्थाश्च न दृश्यन्ते, तेषां लघुनः साम्नोऽस्मच्चक्षुःपर्यन्तमव्याप्तत्वात् ।

पृथिव्याः साम रथन्तरमुच्यते—'सूर्यरथं तरती'ति सूर्यमण्डलमभितो विराजमानं देवमण्डलमेव सूर्यरथ उच्यते । यथा सूर्योपस्थानकाले वदामः—'चित्रं देवानामुदगादनीकम्' ( ऋ० १ । ११५ । १ ) । एतेन सूर्यमण्डलमभितो देवानां प्राणभूतानामनीकं सेना तिष्ठति ।

'आत्मैवैषां रथ' ( निरुक्त ७।४।१५ ) इति। विष्णुपुराणेऽपि ( २।१०।१-२ ) च—

'अशीतिमण्डलशतं काष्ठयोरन्तरं द्वयोः।
आरोहणावरोहाभ्यां भानोरब्देन या गतिः॥
स रथोऽधिष्ठितो देवैरादित्य ऋषिभिस्तथा।
गन्धर्वैरप्सरोभिश्च ग्रामणी सर्पराक्षसैः॥'

तादृशरथपर्यन्तं पृथिव्याः सामेति रथं तरतीति व्युत्पत्तिस्तत्रानुगुणा। तेन सूर्यमण्डलपार्श्वे स्थित्वा कश्चित् पृथ्वीमालोकेत यदि, अतिसूक्ष्मा ताराकारा तेनेयं भूमिर्दृश्यते। ततः परं तु सर्वथा न दृश्यते। सूर्यस्य तु साममण्डलं 'बृहत्-साम'पदेनोच्यते, तत्प्रकाशमण्डलान्तर्गतं भूम्यादि सर्वमिति।

अत्र च ऋक्सामे केवलमायतनमात्रे। तेषु मण्डलेषु परिव्याप्तं यजुस्तु रसरूपम्। तेनैव सर्वं जन्यते। सूर्य-चन्द्र-किरणेषु व्याप्तेन रसेन सर्वमस्मदुपभोगयोग्यमुत्पाद्यते इति तु सर्व एव जानन्ति। परं पार्थिवाः पदार्था अपि तादृशा भवन्ति यैर्दूरस्थैरपि तत्तत्कार्यं निष्पाद्यते। यथा—वृक्षा रात्रौ 'कार्बनडाई आक्साईड' इति नामकं तत्त्वमुद्वमन्ति। तेन रात्रौ वृक्षाणामधोभागे न शयितव्यमित्याधुनिका वैज्ञानिका अपि मन्वते। तिन्तिडीवृक्षस्य अधस्ताच्छयनेन वायुः प्रकुप्यति, निम्बस्य अधस्ताच्छयनेन तु सर्वे धातवः प्रसीदन्ति इति प्राचीना आयुर्वेदविदो वदन्ति। अतितीक्ष्णं मलिनं द्रव्यं क्षीरज आदि दूरस्थान्येव कोमलानि पुष्पाणि म्लापयतीत्यद्यापि वैज्ञानिकैः स्पष्टीकृतम्।

तदेतत्सर्वं यजुर्मण्डले स्थितेन तत्तत्पदार्थप्राणभूतेन रसेनैव क्रियते।

'तदेतदेतस्यामृच्यध्यूढं' साम।' ( छा० १।६।१ )

इतिरीत्या साम ऋच्यध्यूढमेव भवति, ऋचं विना साम न तिष्ठतीति यावत्। तथा च ऋङ्नाम्नी मूर्तिरपि साममण्डलपर्यन्तं व्याप्नोति, प्रसर्पन्त्या मूर्तेः केन्द्रबिन्दुर्न प्रसर्पति, केन्द्रस्य प्रसर्पणे वस्तुनोऽन्यथा-

भावप्रसङ्गात्, केन्द्रस्थपार्श्वबिन्दू च द्वौ तिर्यग्गत्या द्वितीयबिन्दौ एकीभवतः इति द्वितीयबिन्दौ बिन्दुद्वयेन मूर्तिर्ह्रसति। इदानीं बिन्दुद्वयैकीभावजन्यो बिन्दुरेव केन्द्रभूतः। सोऽप्यग्रे न प्रसर्पतीत्यादिप्रक्रिया क्रमेण प्रवर्तते। एवं यावद्दूरं ऋगाख्या मूर्तिः प्रसर्पति तावदेव प्रतिबिन्दु बिन्दुद्वयक्रमेण सा ह्रसतीति दूरस्थेन मनुष्येण लघुभूतं वस्तु दृश्यते। ऋगपेक्षया साममण्डलमतिबृहदिति सर्वं मण्डलमभिव्याप्नुवती ऋक् सूक्ष्मा भवतीति युक्तिसिद्धमेव। ततश्च अस्मद्दृष्टिपर्यन्तमागतं साममण्डले यावानृच आकारस्तावत्येव मूर्तिरस्माभिर्गृह्यते। दूरस्थस्य वस्तुनो लघुत्वदर्शनमद्याप्याधुनिका वैज्ञानिकाः नाशक्नुवन् सम्यक् समाधातुम्। वैदिके विज्ञाने तु सुस्पष्टमिदं समाधीयते।

'ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्येऽह्नः।
सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः॥'

(तै० ब्रा० ३।१२।६।१) इति श्रुतिरप्यारम्भमध्यान्तिमभागानाम् ऋग्यजुःसामत्वमाम्नाति" इति।

अत्रोच्यते; नानाविधानि श्रुतिस्मृतिपुराणवचनान्याश्रित्य महता समारम्भेण साधितेष्वपि प्रत्येकं वस्तूनाम् ऋक्सामयजुषां शतशः सहस्रशो मण्डलेषु समाधानपर्यवसानन्तु दूरत्वादेव बृहद् वस्तु लघुतया दृश्यते। दूरस्थानि लघूनि वस्तूनि तु दूरत्वादेव न दृश्यन्ते। बृहत् वा लघु वा वस्तु स्वरूपानुसारमेव तावत्तावद् दूरादुपलभ्यते। इदमेव—"यस्मिन् स्वल्पे महति वा प्राणे यावती शक्तिः तावद् दूरमेव स प्रचरति। यावती यस्य ऋग्भवति तदनुकूलमेव तस्य साम" इत्यादिभिरुक्तम्।

न केवलं वस्तुशक्तिमनुरुद्ध्यैव वस्तुदर्शने तारतम्यम्, किन्तु तत्तदिन्द्रियशक्तिमनुरुद्ध्यापि दृष्टौ तारतम्यं सिद्धमेव। अस्मादेव भूमण्डलात् सुदृष्टीनामरुन्धत्यादिकं दृश्यते, मन्ददृष्टीनां तु न दृश्यते। अरुन्धत्याः साममण्डलस्य तदनुसारिण ऋङ्मण्डलस्य च अस्मद्दृष्टि-

पर्यन्तमभिव्याप्तावपि सुदृष्टीनां तदुपलम्भः, अनुपलम्भश्च मन्ददृष्टीनाम्। समीपगतमपि सूचीच्छिद्रं कस्यचिद् दृष्टिपथमागच्छति, नागच्छति च कस्यचिद् दृष्टिपथम्। संपातिना समुद्रान्तरिता लङ्का तत्स्थाश्च अशोकवनिकास्थिताः सीताद्या दृश्यन्ते, वानरभटैश्च न दृश्यन्ते। तदत्र वस्तुमण्डलव्याप्त्यपेक्षया दृष्टिशक्तितारतम्यस्यैव दूर-दूरतर-वस्तुदर्शन-कारणत्वाभ्युपगमः श्लिष्यते।

अत्रापि कैश्चित्तु दूराविदूरदेशव्यवस्थितस्थाण्वादिपदार्थप्रतीतिवत् संस्कृतासंस्कृताक्षकरणविषयबोधवद्वा उपायभेदात् प्रतीतिभेद आस्थीयते। अन्यैस्तु उपायभेदेऽपि तद्भेदसिद्धिरुच्यते। उपायो बुद्धावतिशयमादधाति न, विषये। विषयावगतिसमये न बुद्धिरवभातीति नैयायिकाः। तदयमतिशयो यदधिकरणः, सा न प्रतिभासते बुद्धिः। यश्च तदानीमवभासते विषयः, तत्रातिशयो नास्ति। दृश्यते चातिशयसंवेदनमिति संकटः पन्थाः। न च दूराविदूरदेशवर्तिनि पदार्थे प्रतीतिरुपायभेदाद्भिद्यते; सापि विषयभेदादेव विद्यते। दूराद्धि वस्तुसामान्यं धर्ममात्रोपलक्षितम्। अदूरतस्तु विस्पष्टविशेषमवसीयते। यथा माघेनोक्तम्—

'चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम्।
विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः॥'

'क्रियान्तराणां वैचित्र्ये यद्वा तद्वाऽस्तु कारणम्।
भेदो ज्ञानक्रियायास्तु कर्मभेदनिबन्धनः।
ज्ञानस्य वस्तुतन्त्रत्वात् ..............॥'

दृष्टिशक्तिदूराविदूरतातारतम्येन दर्शनादर्शन-स्पष्टतास्पष्टतातारतम्ये सत्यपि विषयभेदनिबन्धन एव ज्ञानक्रियाभेदः, विषयस्यैकरूप्यात्।

किञ्च—दूरत्वादिकं तूभयमतसिद्धं दर्शनादर्शनादिकारणमनुगतञ्च। मण्डल-तदनन्तभेद-तन्निर्माणकल्पनन्तु न तथा; तन्निर्माणादिकल्पने गौरवं च।

अपि च—वेदादिशास्त्रप्रमाणैस्तु तत्कथञ्चित् यदि कल्प्यते। प्रत्यक्षमात्रप्रमाणमभ्युपगन्तॄणां लौकिकानां चार्वाकादीनाञ्च तत्र प्रवृत्तिरेव नास्ति। किञ्च—प्रत्यक्षस्य ज्यैष्ठ्यमन्यप्रमाणानपेक्षत्वमनु-

म्नानागमोपजीव्यत्वञ्च सर्वैरभ्युपगम्यते। परमुक्तवैदिकविज्ञानमते तु वेदाद्यागमस्यैव प्रत्यक्षोपजीव्यता सिद्ध्यति, उक्तवचनान्यनाश्रित्य शब्दराश्यतिरिक्तऋगादिस्वरूपतदुपादानकमण्डलाद्यसिद्धेः। अपि चैवं प्रत्यक्षादिस्वरूपतत्प्रामाण्यसिद्धये यद्यागमापेक्षा तर्ह्यागमस्वरूपतत्-प्रामाण्यसिद्धये प्रत्यक्षाद्यपेक्षा तु सर्वैरप्यभ्युपगम्यते। तथा चान्योन्या-श्रयत्वञ्च स्यात्।

किञ्च—तानि मण्डलानि वस्तुनिर्माणसमकालमेव निर्मीयन्ते तदनन्तरं वा? नाद्यः; ईश्वरेण कुलालेन वा वस्त्वतिरिक्तवत्तदनन्तानि मण्डलान्यपि निर्मीयन्ते इत्यस्य प्रमाणानुभवविरोधेनासिद्धेः, वस्तुजन्म-स्थितिनिरोधवत् तदनन्तमण्डलजन्मस्थितिविनाशकल्पने गौरवाच्च।

न च दर्शनादर्शनबृहत्त्व-लघुत्वप्रतीतिनिर्वाहाय तदावश्यकमिति वाच्यम्; दृष्टिशक्तिदूरत्वादितारतम्येन तदुपपत्तेः।

अनन्तरं चेत्; तदापि तत्तद्वस्तुमण्डलानि किमुपादानानि, किं कर्तृ-काणि च? यदि च तत्तद्वस्तुस्वरूपमिव जीवेश्वरकर्तृकाणि प्रकृतिमह-दादिभूताद्युपादानकानि तदा तद्वदेव स्थानावरोधकान्यपि कुतो न स्युः? स्थानावरोधकत्वे सूर्यमारभ्य अस्मच्चक्षुःपर्यन्तमेकजातीयैरेव मण्डलैः स्थानान्यवरुद्धानीति अन्यवस्तुतन्मण्डलानवकाश एव स्यात्। अन्य-कर्तृकत्वं त्वसिद्धमेव। तथैव अन्यानुपादानकत्वमप्यसिद्धम्। भूतानुपा-दानकत्वे रूपवत्त्वमपि न स्यात्। तथात्वेऽचाक्षुषत्वोपपत्त्या तत्कल्पनं व्यर्थमेव स्यात्।

किञ्च—चितेनिधेयः प्राणः स्ववेगेन तत्तद्वस्तुनो रूपमादाय अस्मच्चक्षुःप्रदेशमानयतीत्यपि विचारणीयम्। किं रूपादयो गुणाः स्वाश्रयं विहाय केनचित् क्वचिन्नेतुं शक्यन्ते? न चैवं दृश्यते उपपद्यते वा। नहि पटस्य शुक्लो गुणः पटव्यतिरेकेणान्यत्र वर्तमानो नीयमानो वा दृष्टः। दीपप्रभावद् भवेदिति चेन्न। तस्यापि द्रव्यत्वाभ्युपगमात्। निबिडावयवं हि तेजोद्रव्यं प्रदीपः, प्रविरलावयवं हि प्रभा। न च गुणस्यैव गन्धस्यावयविविश्लेषो भवत्येवेति वाच्यम्; सूक्ष्माश्रयद्रव्यस्य तत्रापि सत्त्वेन गुण-गुणिविश्लेषासिद्धेः।

न चैवं मूलद्रव्यक्षयः स्यात्, न च क्षयो ज्ञायते, तथात्वे गुरुत्वादिर्हीयेतेति वाच्यम्; गन्धाश्रयाणां सूक्ष्मावयवानामल्पत्वात् पृथिव्यापूराच्च मूलद्रव्याक्षयोपपत्तेः। वृन्तच्युतानां पुष्पाणान्तु पृथिव्यापूराभावादवयवविश्लेषाच्च क्षयो भवत्येव। गुरुत्वादिरपि हीयत एव। गुणिनमनाश्रितस्य गुणस्य गुणत्वमेव नोपपद्यते।

यदुक्तम्—"वस्तुधर्माणां सूक्ष्मांशा वस्तुस्वरूपाद्वहिरपि प्रसरन्ति। तत एव वृक्षाः 'कारबनडाई आक्साइड' नामकं तत्त्वमुद्वमन्ति। स्त्रीरजःसूक्ष्मांशैश्च सुकोमलानि पुष्पाणि परिम्लायन्ते। तिन्तिडी-निम्बादिवृक्षाणामधस्ताच्छयने हानिलाभादिकमायुर्वेदविदोऽपि वदन्ति।" तदपि न प्रकृतपोषकम्; सूक्ष्मांशानां प्रसरणतस्तज्जजनितप्रभावविशेषाभ्युपगमेऽपि न तावता दूरस्थवस्तूनां रूपाणि रूपवन्ति वा वस्तूनि चक्षुःप्रदेशमागच्छन्तीति सिद्ध्यति। तेषामागमनेऽपि मूलवस्तूनां ह्रासाभावः स्थानानवरोधश्चेत्याद्यपि निष्प्रमाणकमेव।

यदुक्तम्—"प्राणतत्त्वं तु शक्तिविशेषरूपमेव। वाक्तत्त्वमपि तत्सहचरं तद्रूपमेवे"ति। तदपि न क्षोदक्षमम्; सूक्ष्मशक्तिरूपस्य चक्षुराद्यगोचरत्वात्। मानाधीना मेयसिद्धिरिति रीत्या यदि स्थानानवरोधकशक्तिरूपमेव प्रमाणगोचरम्, तर्हि तदेव प्रमेयमपि भवतु; तद्भिन्नमपि किमपि स्थूलरूपं पर्वतादिकं वस्त्विति तु न सिद्ध्यत्येव, तस्य प्रमाणागोचरत्वात्।

यदुक्तम्—"यद्यपि दूरस्थानां समीपस्थानाञ्च वस्तूनां चक्षुषः समानविन्दुमागतानामेव भानम्; तथापि दूरत्वादितारतम्यं प्रतीयते। तेनैव तारतम्येन दूरत्वादिकमनुमीयते। यथा चित्रकारैः समानधरातलात् चित्रितेष्वपि रूपेषु निम्नोन्नतत्व-सान्तरत्वादिकं प्रतीयते, तदाधारेणैव चलचित्रपटेषु दूरान्तिकत्वादिकं प्रतीयते, तथैव चक्षुषो धरातलमागत्यैव सर्वेषां रूपवतां प्रतीतौ, सत्यामपि दूरत्वादिकमपि भासते" इति। तदपि कुशकाशावलम्बनम्; चित्रेषु निम्नोन्नतत्वसावकाशत्वादिप्रतीतेर्भ्रमत्वात्, संस्पर्शेन तद्बाधदर्शनाच्च।

यदुक्तम्—"आकाशे नानाविधानि तत्त्वानि सन्ति, तेषां बहुलता अल्पता एव दूरत्वमन्तिकत्वम् च" इति । तदप्यसङ्गतम्; शक्त्यात्मकानां तत्त्वानां बाहुल्येऽपि स्थानानवरोधकत्वेन दूरत्वादिसाधकत्वायोगात् । यदि स्वाश्रयसहितं रूपं नयति चितेनिर्धेयः प्राणस्तदा कुतो न स्थानरोधः स्यात् ?

मण्डलानामपि यदि स्थानावरोधकता नास्ति तदा तेषां बाहुल्येऽपि कथं दूरत्वादिकं निर्णीयते ? दूरत्वसाधकत्वे कुतः स्थानानवरोधकता ? एवमेव वस्तूनां दैर्घ्य-परिणाह-स्थौल्य-सौक्ष्म्यादिकमप्यनुभूयते ।

"वस्तूनि संस्पृश्य किरणास्तथैव चक्षुषि चित्रग्राहके यन्त्रे वा व्यवतिष्ठन्ते" इत्येतदपि न समञ्जसम्; तथात्वे किरणानां वस्तुस्वरूपग्राहकत्वाभ्युपगमापातात्, किरणेषु सन्निवेशनिर्मोक्त्वासंभवाच्च ।

प्रत्येकं वस्तूनां ऋगात्मकपिण्डानुसारीण्येव सामानि नियतानि भवन्ति. तदैकत्र स्थितानां सर्वेषामविशेषेण तद्ग्रहणं भवेत् । न चैवं भवति, अशोकवनिकादीनां साममण्डलानि यदि समुद्रपारपर्यन्तमुपयातानि तदा सम्पातिवदेवान्येषामपि वानरभटानां तद्ग्रहणं स्यात् । न चेत्, सम्पातेरपि ग्रहणं न स्यात् । तथैव पृथ्वीपिण्डस्य रथन्तरसामत्वात् सूर्यरथपर्यन्तमेव तद्गमनमिष्टञ्चेद् ब्रह्मविष्ण्वादीनां सूर्यमण्डलस्य परस्तात् स्थितानां तद्ग्रहणं न स्यात् । स्मर्यते च काशीखण्डे—

'काश्यां वसन्ति ये नित्यं देवाः पश्यन्ति तान् क्षितौ ।
चतुर्भुजान् पञ्चवक्त्रान् चन्द्रोद्भासितमूर्धजान् ॥'

तदेतत् कथमुपपद्येत ? योगजसामर्थ्याद्यतिशयेन तत्प्रत्यक्षोपपादनं तु दृष्टिवैशिष्ट्यसापेक्षम्, प्रत्यक्षायोग्यानां विभूनां कालादीनां मण्डलानुपपत्तेश्च ।

अस्तु, प्रत्येकं वस्तूनां त्रीणि मण्डलानि भवन्तीत्येव परीक्ष्यताम् । घटात्मकं वस्तु गृह्यताम् । तद्धि कथम् ऋक्शब्दव्यपदेश्यम् ? तस्माच्च पिण्डात् प्राणा निःसरन्तो न वीक्ष्यन्ते । नापि युक्त्या सिद्ध्यन्ति वचनमपि तादृङ् नोपलभ्यते ।

यदुक्तम्—"पार्थिवोऽग्निरेव प्राणः, तस्य द्वे रूपे चित्यश्चिते-निधेयश्चेति । चित्याः प्राणाः स्वचयनेनैव वस्तुस्वरूपं निष्पादयन्ति । तद्रक्षण एव व्यापृतास्तत्रैव तिष्ठन्ति" इति । तदेतदपि कल्पनामात्रम्; पार्थिवघटस्य पृथिव्या उपादानत्वम्, कुलालस्य कर्तृत्वम, जलाग्न्या-दीनां सहकारित्वम्, दण्डादीनां निमित्तत्वम् । पञ्चीकृतायाः पृथिव्याः मूलभूतानि अपञ्चीकृतपञ्चमहाभूतानि । तेषामपि मूलमहङ्कारः, तस्यापि महत्तत्त्वम्, तस्यापि अव्यक्तम्, तस्यापि सत्तत्त्वं मूलम् । नैतेभ्यः पृथक् किञ्चित्तत्त्वं घटस्वरूपनिर्माणे तद्रक्षणे च व्यापृतं दृश्यते । नैतेषु प्रत्यक्षमस्ति. 'अनृषेरतपस्तेर्वाऽरी'ति रीत्या वेदार्थज्ञाने ऋषय एव प्रभ-वन्ति । व्यासेन महर्षिणा वैदिकानि औपनिषदानि तत्त्वानि विवेचि-तानि । 'जन्माद्यस्य यतः, प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इत्यादिभिः सूत्रैः प्रपञ्चस्य ब्रह्मोपादानकत्वेन ब्रह्मनिमित्तकत्वेन च ब्रह्मात्मकत्व-मुक्तम् । ब्रह्मातिरिक्तं वस्तु ब्रह्मकार्यत्वेन ब्रह्माभिन्नमेव । आकाशवायु-प्राणवागादीनामपि ब्रह्मकार्यत्वेन ब्रह्माभिन्नत्वमेव । जीवानान्तु ब्रह्मस्वरूपत्वेन ब्रह्माभिन्नता । प्रकृतेश्च ब्रह्मशक्तित्वेन तदतिरिक्त-सत्ताकत्वाभावेन तदभिन्नता ।

यदप्युच्यते—"चतुष्पाद्ब्रह्मस्वरूप-निरूपणे निर्विशेषः, परात्परः, पुरुषः, सत्यः ( प्रजापतिः ) चेति चत्वारः पादाः । तत्र सर्वदा प्रसुप्तबलं रसमात्रं वाङ्मनसातीतं निर्विशेषः । उद्बुद्धबलमपि निःसीमं परात्परः । इमे एव वेदान्तशास्त्रे शुद्धब्रह्म-विशिष्टब्रह्मपदाभ्यामुच्येते । उद्बुद्धबलेन मायाभिधानेन मितौ कृतायां ससीमाः परिच्छिन्नाः पुरुषास्तृतीयः पादः । जगन्मूलं जगद्रूपेण विवर्तमानन्तु उपादानं प्रकृतिरिति सत्यमिति चतुर्थः पादः ।

मनः ज्ञानशक्तिमत्, प्राणः क्रियाशक्तिमान्, वाक् तु अर्थशक्ति-मती । एतावदेव जगत्-ज्ञानं क्रिया अर्थश्च । तन्मूलमियं त्रितयी—मनः प्राणा वागिति । जडकारणवादे एतान्येव सत्त्वरजस्तमांसीत्युच्यन्ते । तानि ज्ञानादिशक्तिरूपाणि । वैदिके दर्शने तु ज्ञानादिशक्तिमान् पुरुषः

तत्र तृतीये पादे अव्ययः, अक्षरः, क्षर इति त्रयः पुरुषाः। तत्राव्ययः कार्यकारणातीतः केवलमालम्बनं साक्षीत्युच्यते। अक्षरो निमित्त-कारणम्। क्षरस्तु उपादानं जगतः। त्रयाणामेषामव्यतिरिक्तत्वात् अभिन्ननिमित्तोपादानवादः। त्रयाणामप्येषां प्रत्येकं पञ्च कलाः, एका च परात्परस्येति षोडशकलात्मकः पुरुषः श्रूयते। तासु आनन्दो विज्ञानं मनः प्राणः वाक् चेत्यव्ययस्य पञ्च कलाः। तत्रादिमास्तिस्रो मुक्ति-साक्षिण्यः। अन्तिमास्तिस्रो मनःप्राणवाचः सृष्टिसाक्षिण्यः। मनस उभयान्वयित्वम्।

आसु चतुर्थीकलां प्राणमालम्ब्य तु क्षरपुरुषस्य विकासः। पञ्चमीं वाचमारभ्य तु क्षरपुरुषस्य। क्षरः पुरुषो द्विविधः— अमृतक्षरः मर्त्यक्षरश्च। मर्त्यक्षर एव प्रकृतिरूपेण विकसितः। तदनु प्राकृते प्रपञ्चे त्रिवृत्कृतानि तेजोऽबन्नानीव संमिश्रिता इमे वैशेष्यात् स्वनामभाजो मनःप्राणवाचोऽध्यात्ममधिभूतञ्च सृष्टिक्रियानिर्वाहकं स्वरूपं दधते। सोऽयं प्राण एवात्र ऋषि-पितृ-देवा-ऽसुर-मनुष्यरूपेण पञ्चधा व्याख्यायते। वाक् तु भूतभौतिकरूपेण परिणमति। इयं भूत-भौतिकमूलभूता वाक् सर्वथा प्राणायत्तात्मलाभा प्राणायत्तजीवना च— 'प्राणे सर्वं प्रतिष्ठितम्।' अस्यैव प्राणस्य मुख्यमधिष्ठानं सूर्यः—'प्राणः प्रजानामुदयत्येष सूर्यः।' अत एव देवानामृषिप्रभृतीनामपि च सूर्य-मण्डलमेव मुख्यमधिष्ठानम्। 'चित्रं देवानामुदगादनीकम्' इत्यादि श्रूयते। इमं प्राणमाध्यात्मिकं वायुरिति वैशेषिकाः। अन्तःकरणत्रितयस्य साम्यावस्थापत्तिः क्रियारूपेति च सांख्याः। 'न वायुक्रिये पृथगुपदेशात्' (ब्रह्मसूत्र २।४।९) इति सूत्रे ते उभे अपि निराकृते। 'वाचमग्रमेव विधरति। निष्प्राणाः काष्ठप्रस्तरादयः शीर्यन्ते। बलं च सर्वत्र वाचि प्राणसम्बन्धादेव प्रतीयते।

इत्थं रूपरसादिगुणरहितः स्थानानवरोधकः शक्तिरूपोऽयं प्राणः। शक्तिरेव च क्रमेण भूतभौतिकादिरूपेण परिणतेति वैदिकः पन्थाः। श्रीशङ्करभगवत्पादा अपि बृहदारण्यकोपनिषद्भाष्ये द्वितीयाध्यायस्यावत-रणिकायाम् इदं व्याचख्युः—

'स च व्याख्यास्यतेऽविद्यावद्विषयः सर्व एव द्विप्रकारः अन्तः प्राण उपष्टम्भको गृहस्येव स्तम्भादिरन्तणः प्रकाशकोऽमृतः बाह्यश्च। कार्यलक्षणोऽप्रकाशकः उपजनापायधर्मकस्तृणकुशमृत्तिकासमो गृहस्येव सत्यशब्दवाच्यो मर्त्यः। तेनामृतशब्दवाच्यः प्राणश्छन्नः इति चोपसंहृतम्। स एव च प्राणो बाह्याधारभेदेष्वनेकधा विस्तृतः प्राण एको देव इत्युच्यते' इति। तत एव प्राणविशेषाणां देवादीनां जगज्जनकत्वं जगन्नियामकत्वञ्च श्रूयते स्मर्यते च।

आधुनिका वैज्ञानिकास्तु "भूतभौतिके 'मैटर'पदं तन्नियामिकायाञ्च शक्तौ 'फोर्स'-पदं 'एनर्जी' पदं वा प्रयुञ्जाना दृश्यन्ते। शक्तेरेव विकारा भूतभौतिकानि भवन्तीति श्रौतमेव मतमनुसरन्तो दृश्यन्ते। तत्राऽव्ययपुरुषकलारूपा भूततत्त्वभूता मनःप्राणवाचः कर्मभूतसृष्ट्युन्मुखानि ब्रह्मरूपाणि कर्मब्रह्माणि, अवरा मनःप्राणवाचस्तु कार्यब्रह्माणीति शक्यमभिगन्तुमि"ति।

तदत्रोच्यते—यद्यपि विवक्षाभेदात् समासव्यासाभ्यां तत्त्वनिरूपणशैलो स्वीकृता तत्र तत्र। माण्डूक्योपनिषदा मूल एव चतुष्पादं ब्रह्मोक्तम्। समष्टिव्यष्टिस्थूलप्रपञ्चात्मको विराट् अकाररूपः। तथाभूत एव सूक्ष्मप्रपञ्चो हिरण्यगर्भ उकारः। समष्टिव्यष्टिकारणात्मकस्तु ईश्वरोऽव्याकृताख्यो मकारः। एतत्त्रयं विशिष्टं ब्रह्म। सर्ववाच्यवाचकातीतस्तु निर्विशेषोऽमात्रस्तुरीयः। मायासंख्यानपेक्षया तु तस्यैव तुर्यातीतत्वञ्च उच्यते। प्रसुप्तबलस्य रसस्य प्रसुप्तबलमेव विशेषणम्। तथा च तस्य कुतो निर्विशेषत्वम्? अशेषविशेषातीतस्यैव निर्विशेषत्वात्। निर्विशेषस्यैव परात्परत्वम्। प्रसुप्तबलस्य उद्भूतबलस्य वा निर्विशेषत्वं परात्परत्वञ्च नोपपद्यते, अपास्तसमस्तविशेषस्यैव निर्विशेषत्वात्। बलस्योद्भूतौ ससीमत्वमप्यपरिहार्यमेव। बलस्यानिर्वाच्यत्वेन तु रससमानसत्ताकत्वाभावेन सर्वदैव नित्यनिरस्ताशेषविशेषत्वेन सर्वावस्थासु निर्विशेषत्वमेव। तृतीये तु साक्षिणोऽव्ययत्वम्, विशुद्धसत्त्वप्रधानमायोपाधित्वेन च तस्यैव निमित्तत्वम्। तमःप्रधानप्रकृ-

त्युपाधित्वेन चोपादानत्वम् । त्तरकार्याकारेण विवर्तमानत्वाच्च त्तरत्वम् । अन्यथा प्रकृतिविभागमात्रत्वेन उभयोः प्रवाहरूपेण अत्तरत्वं परिणामित्वेन क्षरत्वेञ्चेत्युभयोरवैशेष्यमेव । त्रयाणामप्येकत्वेन अभिन्न-निमित्तोपादानवादोऽपि सङ्गच्छते ।

विशिष्टाद्वैतादिदृष्ट्या तु नैतेऽपि भेदाः सम्भवन्ति । तान्त्रिकाणां रीत्या बिन्द्वर्धचन्द्र-रोधिनी-नाद-नादान्त-शक्ति-व्यापिका-समनोन्मना-महाबिन्द्वादिभेदेन अनेके प्रभेदाः सम्भवन्ति ।

किञ्च—साक्षिमात्रस्य अव्ययस्य आनन्दविज्ञाने स्वरूपभूते एव । मनःप्राणवागादीनां तत् कलात्वे निमित्तभूतात्तरविशेषत्वञ्च स्यात् ।

किञ्च—तृतीये पादे क्षरस्योपादानत्वमुक्तमेव । तदा सत्याख्यस्य चतुर्थपादस्य कल्पनं निस्सारमेव भाति । प्राणसम्बन्धे तु वेदान्तसूत्र-भाष्यादौ इत्थं विचार्यते—'तथा प्राणाः' ( वे० सू० २ । ४ । १ ) इत्यत्र उत्पत्तिप्रकरणे प्राणानामुत्पत्तेरनाम्नानात् 'असद्वा इदमग्र आसीत्' (तै० उ० २।२७ ) 'तदाहुः—किं तदसदासीदिति । ऋषयो तेऽग्रेऽसदासीत् । तदाहुः-के ते ऋषय इति । प्राणा वाव ऋषयः इत्यत्र प्रागुत्पत्तेः प्राणानां सद्भावश्रवणात् अनुत्पत्तिर्ज्ञायते ।'

अन्यत्र तु—'यथाग्नेर्ज्वलतः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेव-एतस्मादात्मनः सर्वे प्राणाः, इति. 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' ( मु० २ । १ । ३ ), 'सप्त प्राणाः प्रभवन्ति तस्मात्' ( मु० २ । १ । ८ ) 'स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योति-रापः पृथिवीन्द्रियं मनोऽन्नम्' ( प्र० ६ । ४ ) इत्यादिषु प्राणोत्पत्तिरपि श्रूयते । एवं परस्परविरोधात् प्रागुत्पत्तेः सद्भावश्रवणाच्च प्राणानामुत्पत्तिर्गौणी प्राप्ता । तत्परिहाराय 'तथा प्राणाः' इति सूत्रम् । यथा लोकादयः परमात्मन उत्पद्यन्ते, तथा प्राणा अप्युत्पद्यन्ते इति सूत्रार्थः । अथवा यथा अतीतानन्तरपादादौ वियदादयः परस्य ब्रह्मणो विकारास्तथा प्राणा अपि । प्राणानामुत्पत्तेः क्वचिदश्रवणेऽप्यन्यत्र श्रव-णात् श्रुतत्वाविशेषात् प्राणा अप्युत्पद्यन्त एव । 'गौण्यसम्भवात्' (२।४।२) इति सूत्रेण च गौणी प्राणानामुत्पत्तिर्वारिता । प्रतिज्ञोपरोधादेव 'एक-

स्मिन्नु विज्ञाते सर्वमिदं विज्ञातं भवति' इति एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय 'एतस्माज्जायते प्राणः' इति तत्साधनाय आम्नातम्। सा च प्रतिज्ञा प्राणादेः समस्तस्य जगतो ब्रह्मविकारत्वे सति प्रकृतिव्यतिरेकेण विकाराभावात् सिद्ध्यति। गौण्यामुत्पत्तिश्रुतौ सा हीयेत। उपसंहारे च 'पुरुष एवेदं विश्वकर्म तपो ब्रह्म परामृतम् (मु० १।१०), ब्रह्मैवेदं विश्वमिदं वरिष्ठम्, आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्' इति ब्रह्माव्यतिरेक एव सर्वस्योक्तः।

ननु कथं तर्हि प्राणानां सृष्टेः प्राक् सद्भावश्रवणमिति चेन्न। तच्छ्रवणस्य मूलप्रकृत्यविषयत्वात्। 'अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः' इति मूलप्रकृतेः प्राणादिसमस्तविशेषरहितत्वावधारणात् स्वविकारापेक्षं तु तत्सद्भावश्रवणं द्रष्टव्यम्। श्रुतिस्मृत्योः व्याकृतविषयाणां भूयसीनामप्यवस्थानां प्रकृतिविकारभावप्रसिद्धेः। 'तत्पूर्वकत्वाद्वाचः' (२।४।४) इति सूत्रे तु 'तत्तेजोऽसृजत' इत्येतस्मिन् प्रकरणे प्राणानामुत्पत्तिर्यद्यपि न श्रूयते, तथापि ब्रह्मप्रकृतिकतेजोबन्नपूर्वकत्वाभिधानात् वाक्प्राणमनसां तत्सामान्याच्च सर्वेषां प्राणानां ब्रह्मप्रभवत्वं सिद्धं भवतीत्युक्तमेव। 'श्रेष्ठश्च' (२।४।८) इति सूत्रेण इतरप्राणवन्मुख्यप्राणस्यापि ब्रह्मविकारत्वमुक्तम्। अत्र नासदीये सूक्ते 'न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः। आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास॥' (ऋ०.८।७।१७) इत्यत्र आनीदिति प्रागकर्मोपादानात्प्रागुत्पत्तेः सन्तमिव प्राणं सूचयति। तस्मात् 'अजः प्राणः' इति भवति कस्यचिन्मतिः, तदपनोदाय 'श्रेष्ठश्चे'त्यतिदेशः। आनीच्छब्दोऽपि न प्रागुत्पत्तेः प्राणसद्भावं, सूचयति अवातमिति विशेषणात्। 'अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः' इति मूलप्रकृतिब्रह्मणः प्राणादिसर्वविकाररहितत्वावधारणात् श्रेष्ठशब्देन मुख्य एव प्राण उक्तः। 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च (छा० ५।१।१) इति श्रुतिनिर्देशात् शुक्रनिषेककालादारभ्य तस्य वृत्तिलाभात् ज्येष्ठत्वम्। अन्यथा योनौ निषिक्तशुक्रं पूयेत, न सम्भवेद्वा। श्रोत्रादीनां तु कर्णशष्कुल्यादिविभागनिष्पत्तौ वृत्तिलाभान्न ज्येष्ठत्वं

श्रेष्ठत्वञ्च। 'न वै शक्ष्यामस्त्वदृते जीवितुम्' (बृ० ६।१।१३) इति स्पष्टम्।

मुख्यः प्राणः किंरूपः? इति जिज्ञासायां 'यः प्राणः स वायुः' इत्यादिश्रुत्या वायुरूपः प्रतीयते। अथवा सांख्यमतरीत्या समस्त-करणवृत्तिः प्राणः प्रतीयते, 'सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च' इति तदुक्तेः। 'न वायुक्रिये पृथगुपदेशात्' (ब्र० सू० २।४।९) इति। तदुभयमपि वार्यते—न वायुः प्राणो नापि करणव्यापारः। कुतः? पृथगुपदेशात्। वायोस्तावत् प्राणस्य पृथगुपदेशो भवति, 'प्राण एव ब्रह्मणश्चतुर्थः पादः। स वायुना ज्योतिषा भाति च तपति च' (छा० ३।१८।४) इति। नहि वायुरेव सन् वायोः पृथगुपदिश्येत। तथा करणवृत्तेरपि? न पृथगुपदेशो भवति, वागादीनि करणान्यनुक्रम्य तत्र तत्र पृथक् प्राणस्यानुक्रमणात् वृत्तिवृत्तिमतोरभेदात्। न हि करणव्यापार एव सन् करणेभ्यः पृथ-गुपदिश्येत। तथा 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुः' (मु० २।१।३) अत्र सर्वेन्द्रियेभ्यः प्राणस्य पृथगुपदेशश्रवणात् प्राणस्य श्रेष्ठत्वाद्युद्घोषणं गुणभावोपगमश्च तं प्रति वागादीनां न करणवृत्तिमात्रेऽवकल्पते। तस्मादन्यः प्राणो वायुक्रियाभ्यामिति।

कथं तर्हि यः प्राणः स वायुरित्युच्यते? वायुरेवायमध्यात्ममापन्नः पञ्चव्यूहो विशेषात्मनाऽवतिष्ठमानः प्राणो नाम भण्यते, न तत्त्वान्तरम्। नापि वायुमात्रम्। अतश्चेमे अपि भेदाभेदश्रुती न विरुद्ध्येते। एतावता 'वाय्वादिभूतेभ्योऽत्यन्तं सूक्ष्म उत्पत्तेः प्राक् सिद्धः सः प्राणः' इत्यपास्तमेव।

यद्यपि 'सुप्तेषु वागादिषु प्राण एवैको जागर्ति, प्राण एवैको मृत्युना ऽनाप्तः, प्राणः संवर्गो वागादीन् संवृङ्क्ते, प्राण इतरान् प्राणान् रक्षति मातेव पुत्रान्' इति प्राणस्य माहात्म्यातिशयः श्रूयते, तथापि जीववन्न स्वातन्त्र्यं तस्येति। चक्षुरादिवत्तु 'तत्सहशिष्ट्यादिभ्यः' (ब्रह्म० २।४।१०) इति सूत्रेणोक्तम्। यथा चक्षुरादीनि राजप्रकृतिवज्जीवस्य कर्तृत्वं भोक्तृत्वं प्रत्युपकरणानि, न स्वतन्त्राणि, तथा मुख्योऽपि प्राणो

राजमन्त्रिवज्जीवस्य सर्वार्थकरणत्वेनोपकरणभूतो न स्वतन्त्रः। कुतः ? तत्सहशिष्टयादिभ्यः। प्राणसंवादादिषु चक्षुरादिभिः सहैव प्राणः शिष्यते, संहतत्वाचेतनत्वादयोऽपि स्वातन्त्र्यनिराकरणहेतवः आदिशब्देन बोध्यन्ते। प्राणोऽपानो व्यान उदानः समान इति पञ्चवृत्ति मनोवद् व्यपदिश्यते। वृत्तिभेदश्चायं कार्यभेदापेक्षः। प्राणः प्राग्वृत्तिरुच्छ्वासादिकर्मा। अपानोऽर्वाग्वृत्तिः निःश्वासकर्मा। व्यानस्तयोः सन्धौ वर्तमानो वीर्यकर्महेतुः। उदान ऊर्ध्ववृत्तिरुत्क्रान्त्यादिहेतुः। समानः समं सर्वेष्वङ्गेषु योऽन्नरसान्नयति। एवं पञ्चवृत्तिः प्राणो मनोवत्। प्रमाणादयो मनसोऽपि पञ्चवृत्तयः प्रसिद्धाः। 'अणुश्च' इति सूत्रेण सौक्ष्म्यपरिच्छेदाभिप्रायेण प्रायेण प्राणस्याऽणुत्वमप्युक्तम्। यद्यपि 'समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण' (बृ० १।३।२२) इत्येवमादिप्रदेशेषु विभुत्वमपि प्राणस्योक्तम्। तदपि आधिदैविकेन, समष्टिरूपेण हैरण्यगर्भेण प्राणात्मनैतद्विभुत्वमपि युज्यते, नाध्यात्मिकेन। ते प्राणा अपि न स्वमहिम्नैव कार्यं कुर्वन्ति, किन्तु अग्न्याद्यधिष्ठिता एव स्वस्वकार्यं कुर्वन्ति—'वायुः प्राणो भूत्वा नासिके प्राविशत्।' इति श्रुतेः,

'वागध्यात्ममिति प्राहुर्ब्राह्मणास्तत्त्वदर्शिनः।
वक्तव्यमधिभूतन्तु वह्निस्तत्राधिदैवतम्॥

—इति पञ्चीकरण-वार्तिकञ्च।

शक्तानामपि शकटादीनामनडुहाद्यधिष्ठितानामेव प्रवृत्तिदर्शनात्, न स्वमहिम्नैव प्रवृत्तिः। भोक्तृत्वं तु शारीरस्यैव। वागग्न्यादीनां तु तदुपकरणत्वमेव। एकादशेन्द्रियाणि प्राणाद्भिन्नानि तत्त्वान्तराण्येवेत्यपि स्पष्टम्। वागादिकरणरूपाणां प्राणानां नियतानि कार्याणि। मुख्यप्राणस्याकरणत्वात् विषयपरिच्छेदकत्वं नास्ति, तथापि न कार्याभावः। श्रुतिः प्राणान्तरेष्वसंभाव्यमानं मुख्यप्राणस्य वैशेषिकं कार्यं दर्शयति —"अथ ह प्राणा अहं श्रेयसि व्यूदिरे' इत्युपक्रम्य 'यस्मिन्व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठः' इत्युपन्यस्य प्रत्येकं वागा-

व्युत्क्रमणेन तद्वृत्तिमात्रहीनं यथापूर्वजीवनं दर्शयित्वा प्राणोच्चिचक्रमिषायां वागादिशैथिल्यापत्तिं शरीरपातप्रसङ्गञ्च दर्शयन्ती श्रुतिः प्राणनिमित्तां शरीरेन्द्रियस्थितिं दर्शयति—

'तान् वरिष्ठः प्राण उवाच मा मोहमापद्यथाः । अहमेवैतत् पञ्चधा आत्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि' इति चैतमेवार्थमाह श्रुतिः । 'प्राणेन रक्षन्नवरं कुलायम्' इति च सुप्तेषु चक्षुरादिषु प्राणनिमित्तां शरीररक्षां दर्शयति । यस्मात् कस्माच्चाङ्गात् प्राण उत्क्रामति, तदेव तत् शुष्यति ( बृ० १ । ३ । १६ ) । तेन यदश्नाति यत्पिबति तेनेतरान् प्राणानवति इति प्राणनिमित्तां शरीरेन्द्रियपुष्टिं दर्शयति— 'कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि ? कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि' इति । 'स प्राणमसृजत' इति प्राणनिमित्ते जीवस्योत्क्रान्तिप्रतिष्ठे दर्शयति । वागाद्यपेक्षया प्राणस्य वैलक्षण्यं श्रैष्ठ्यञ्चाप्युक्तमेव । वागादिषु परिस्पन्दलाभस्य तदायत्तत्वमेव । तद्रूपभवनं वागादीनाम्—

'त एतस्यैव सर्वे रूपमभवन् तस्मादेत एतेनाख्यायन्ते प्राणाः' ( बृ० १ । ५ । २१ ) इति एकादश प्राणाः शब्दतः कार्यतश्च प्रतीयन्ते । तेष्वेव वाचो मनसश्चान्तर्भावः । 'तत्पूर्वकत्वाद्वाचः' इति ब्रह्मसूत्रे वाक्प्राणमनसां तेजोबन्नपूर्वकत्वमुक्तम्—'अन्नमयं हि सोम्य मनः, आपोमयः प्राणस्तेजोमयी वाक् ।' तेन वाक्प्राणमनसामभौतिकत्वं भूतभौतिककारणत्वञ्चेत्यादिकल्पनमपि निष्प्रमाणमेव । एवं विशिष्टविभूतेरपि प्राणस्य जीवस्य वा मूर्त्यादिकर्तृत्वं नास्ति । तदपि 'संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्' ( ब्र० सू० २ । ४ । २० ) इति सूत्रे स्पष्टम् । संज्ञामूर्तिक्लृप्तिर्नामरूपव्याकरणं त्रिवृत्कुर्वतः परमेश्वरस्यैव कर्म । यद्यपि डित्थडवित्थादिनामसु घटशरावादिषु रूपेषु जीवस्यैव व्याकर्तृत्वं दृष्टम् ; तथापि अग्निरादित्यश्चन्द्रमाविद्युदिति तथा कुशकाशपलाशादिषु पशुमृगमनुष्यादिषु च प्रत्याकृति प्रतिव्यक्ति अनेकप्रकारा संज्ञामूर्तिक्लृप्तिः परमेश्वरस्यैव कृतिः । एतेन 'चित्याः

प्राणा मूर्तिं स्वचयनेन निर्माय तद्रक्षणे व्यापृतास्तत्रैव तिष्ठन्ती'ति निर्मूलमेवेति मन्तव्यम्।

'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मना अनुप्रविश्य नामरूपे व्याकरवाणि' (छा० ६।३।२)। इत्याकारेण परसैन्यं प्रविश्य संकलयानीतिवत् जीवसम्बन्धप्रतीतावपि तद्व्याकर्तृत्वं निराकृतमेव।

किञ्च—स्वचयनेन चित्यः प्राणो मूर्तिं रचयति चेत्तदा तस्यैवोपादानत्वं कर्तृत्वञ्च तस्यैव स्यात्। न चैतद्वेदान्तसम्मतम्; तत्र तु परमेश्वरस्यैवसर्वकर्तृत्वप्रसिद्धेः। जीवस्य च परमेश्वराभेदात्तत्कार्यमपि पारमेश्वरं कार्यम्, नैवं प्राणस्य परमेश्वराभेदः; तस्य संहतत्वात् परार्थत्वाच्च। "चिते निधेयाः प्राणा बहिर्निःसरन्ति, एषामन्तिमं मण्डलं सामे"त्यपि प्रमाणापेक्षमेव। ऋचमारभ्य साममण्डलं यावत् प्रत्येकस्मिन् बिन्दौ शतशो मण्डलानि भवन्ति। तेषु यत्प्राणरूपमग्नितत्त्वं तदेव यजुःशब्देनोच्यते, इत्यपि निर्मूलमेव। 'यदेतन्मण्डलं तपति' इति श्रुतिस्तु सूर्यमण्डलमधिकृत्यैव वक्ति। नहि घटादावपि तद्भवति। उक्तश्रुत्यापि न परमेश्वरविरचितदृश्यमानैकमण्डलव्यतिरेकेण अस्मच्चक्षुःपर्यन्तमागतानां मण्डलसहस्राणां सद्भावः समर्थ्यते, न वात्र ऋचां मण्डलनिर्मातृत्वं श्रूयते।

प्रश्नोपनिषदि प्रजापतेः सकाशात् प्राणस्य रयेश्च उत्पत्तिर्वर्णिता। अन्यत्र 'स प्राणमसृजत्', प्रजापतिश्चायं हिरण्यगर्भरूपः। 'प्रजाकामो वै प्रजापतिः। स तपोऽतप्यत। स तपस्तप्त्वा मिथुनमुत्पादयत्त प्राणञ्च रयिञ्च। प्रजा आत्मनः सिसृक्षुर्वै प्रजापतिः सर्वात्मा सञ्जगत् स्रक्ष्यामि' इत्येवं विज्ञानवान् यथोक्तकारी तद्भावभावितः कल्पादौ निर्वृत्तो हिरण्यगर्भः सृज्यमानानां प्रजानां स्थावर-जङ्गमानां प्रतिजन्मान्तरभावितं ज्ञानं श्रुतिप्रकाशितार्थविषयं तपोऽन्वालोचयदतप्यत" इति शाङ्करभाष्यम्। आकाशाद्यपञ्चीकृतपञ्चमहाभूतसृष्टिस्तु साक्षादीश्वराद्भवति। पञ्चीकृतभूतभौतिकसृष्टिस्तु हिरण्यगर्भादिभावापन्नात् परमेश्वरादिति न विरोधः। 'आकाशाद्वायुरि'त्यत्रापि आकाशभावापन्नात् परमेश्वरादेव वायुसृष्टिरित्येवार्थः। स प्रजापती रयिं सोममन्नं प्राणमग्निमत्तारमेता-

वग्नीषोमौ अत्रान्नभूतौ अण्डोत्पत्तिक्रमेण सूर्यचन्द्ररूपौ उत्पादयति। अत्र प्राणस्य आदित्यरूपता सोमस्य च चन्द्ररूपता प्रोक्ता। अन्नञ्चैकरूपमेव। गुणप्रधानकृतो भेदः। सर्वं मूर्तं स्थूलममूर्तं सूक्ष्मं मूर्तामूर्ते अत्रान्नरूपे। अत्रान्नरूपो रयिरेव, अमूर्तेन भोक्त्राऽद्यमानत्वात्। मूर्तं रयिः। यथा प्रकृति-पुरुषौ शक्तिशक्तिमद्रूपौ गुणप्रधानभेदेन भिन्नावप्यभिन्नौ, तथैवाग्नी-षोमौ ज्ञातव्यौ। यथा साधिष्ठानैव शक्तिरुपास्या, तथैव शक्तिमदधिष्ठान-मुपास्यम्, केवलायाः शक्तेः केवलस्य चाधिष्ठानस्य उपासनानुपपत्तेः। यथा साधिष्ठानशक्तिरूपा पार्वती, तथैव शक्तिमदधिष्ठानरूपः शिवः। क्वचिच्छक्तिप्राधान्यम्, क्वचिच्च अधिष्ठानप्राधान्यम्। लोकेऽपि स्त्री-पुंसयोः प्रकृतिपुरुषरूपत्वेऽपि स्त्रियां प्रकृतिरूपत्वं पुंसि पुरुषरूपत्वं व्यवह्रियते। चित्प्राधान्येन भोक्तृत्वमचित्प्राधान्येन भोग्यत्वञ्च। सूर्यस्य चन्द्रस्य चाग्नीषोमात्मकत्वाविशेष्येऽपि सूर्येऽग्निप्राधान्यं चन्द्रे सोमप्राधान्यम्। एवं प्रकृतिपुरुषरूपाभ्यां रयि-प्राणाभ्यामग्नीषोमाभ्यां सोमसूर्याभ्यामेव जगदुत्पद्यते। सर्वत्र च शक्तिशिवाभ्यां तत्तद्रूपान्तर-भावापन्नाभ्यामेव जगज्जायते।

"सर्वभूतेषु कौन्तेय मूर्तयः सम्भवन्ति याः।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता॥"

इति गीतोक्तेः। महद्ब्रह्मेति पदाभ्यां प्रकृतिः सूचिता। अत एव तत्रैव संज्ञामूर्तिक्लृप्तिरुक्ता। प्रकृतिवायुप्राणरय्यादीनां ब्रह्मकार्यत्वेन ब्रह्मातिरिक्तसत्ताकत्वाभावेऽपि साधिष्ठानानां तेषां माहात्म्यातिशयः श्रुतिस्मृत्यादिषु प्रसिद्ध एव। 'नमस्ते वायो, त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि' इत्यादौ वायोर्माहात्म्यं सुस्पष्टम्। वायुविकारस्य प्राणस्या-ग्नेश्च रुद्रेन्द्रादिरूपत्वमप्युक्तमेव। वायुपुत्रस्य हनूमतोऽपि लोकोत्तर-कार्यकर्तृत्वं सुख्यातम्। अग्निवाय्वादित्यादीनां माहात्म्यानि वेदत्रय्यां प्रख्यातान्येव।

अपञ्चीकृतपञ्चमहाभूतैरेव पञ्च कर्मेन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि पञ्च प्राणाः मनो बुद्ध्यादयश्च जायन्ते। तेषां समूह एव सप्तदशतत्त्व-मयं लिङ्गशरीरम्। समष्टिलिङ्गशरीरमेव तदभिमानितदन्तर्यामिसहितं

हिरण्यगर्भशब्दितं भवति । लिङ्गशरीरे प्राणस्य बुद्धेश्च प्राधान्यं भवति । प्राणप्राधान्येन हिरण्यगर्भः प्राणशब्दव्यपदेश्यः । सर्वविधारकत्वाच्च सूत्रशब्दव्यपदेश्यो भवति । बुद्धिप्राधान्येन महत्तत्त्व-शब्द-व्यपदेश्यो भवति । बुद्धिप्राधान्येनैव हिरण्यापरपर्यायज्योतिर्मयत्वात् हिरण्यगर्भशब्दभागपि भवति । स एव च प्रजापतिः । एवं तस्याऽपञ्चीकृतपञ्चमहाभूतकार्यत्वेऽपि तद्विशिष्टस्य अन्तर्यामिणो हिरण्यगर्भस्य माहात्म्यातिशयो न हीयते । तस्यैव च मुख्यम् एकदेवत्वं सूर्येन्द्रत्वादिकञ्चोपपद्यते । तस्यैव च वैश्वानरादिरूपेण सर्वधारकत्वं सर्वरूपत्वञ्च । तस्यैव समष्टिप्रजाप्राणधारकत्वात् 'प्राणः प्रजानामुदयत्येष सूर्यः' इत्याद्युक्तयः सङ्गच्छन्ते ।

तन्निर्वर्त्यत्वात् संवत्सरात्मा कालोऽपि स एव । तत्रापि दक्षिणोत्तरायणयोः रयि-प्राणात्मकत्वोक्तिः । तस्यैव कर्मिणामुपासकानाञ्च प्राप्यत्वम् । किं बहुना, दक्षिणायनोत्तरायण-शुक्लकृष्ण पक्षा-ऽहोरात्रादि-रूपेण परिणम्य तस्यैव प्रजोत्पादकत्वम् । प्राणसंवादेषु प्राणस्यैव वरिष्ठत्वं वागादिप्राणविधारकत्वम् । तस्यैव अग्निसूर्यपर्जन्येन्द्रवायु-रूपत्वम् । तत्रैव सर्वस्य जगतो ऋचां यजुषां साम्नां यज्ञब्रह्मादीनाञ्च रथनाभौ अराणामिव प्रतिष्ठितत्वम् । तस्यैव सर्वबलिभोक्तृत्वमत्तृत्वञ्च । तस्यैव प्रथमजत्वात् संस्कर्तुरभावाद् व्रात्यत्वम् । प्राणस्यैव वाक्श्रोत्र-चक्षुर्मनःस्वपि तत्तदुपोद्बलकत्वात् तत्प्रतिष्ठितत्वम् ।

'प्राणस्यैव वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम् ।<br>
मातेव पुत्रान् रक्षस्व श्रीश्च प्रज्ञाञ्च धेहि नः ॥' इति ।

प्राणस्यापि परमात्मन उत्पत्तिः, कर्मभिरेव शरीरे वृत्तिलाभः । तस्यैव च वागादिनियोक्तृत्वम् , प्राणापानादिरूपेण व्यवस्थितत्वं च । आदित्यरूपेण चाक्षुषं प्राणमयमेवानुगृह्णाति, रूपोपलब्धौ चक्षुषा आलोकं कुर्वन् एवंविधस्य अपरब्रह्मरूपस्य हिरण्यगर्भात्मकस्योपासनात् तत्सायुज्यप्राप्तिक्रमेण कैवल्यप्राप्तिश्च भवति ।

प्राणस्य सर्वात्मत्वेन यथाऽग्नीन्द्ररुद्रादिमयत्वम् , तथैव ऋगादि-मयत्वमपि, विशेषतः सूर्यमण्डलस्य ऋगादिमयत्वमुपपद्यते ।

केचित्तु "प्राणानां देवानां भूतानां भौतिकानाञ्चार्थानां नियतः कार्य-कारणभावो विद्या। नियतं सत्यं याथातथ्यं सा विद्या, तद्ब्रह्म। स वेदः। कार्यकारणभावादिधर्माणां प्रत्यक्षीकरणं ब्रह्म। पूर्वगृहीतानां धर्माणां संस्कारजन्यं स्मृतिज्ञानं विद्याशब्दजन्यम्। तज्ज्ञानं तु वेदः। इत्थं ज्ञानस्य सर्वत्र वाच्यत्वेऽपि जनकोपाधिकृतो भेदः। क्वचिदुपाधिमनपेक्ष्य ज्ञानमात्रेऽपि इमे शब्दाः प्रवृत्ताः—त्रयो वेदाः, त्रयी विद्या, त्रयं ब्रह्मेति। विद्या वेदशब्दौ भावसाधनौ, करणसाधनौ तु तादृशज्ञानजनके संस्कारे शब्दे चापि व्यवह्रियेते। शब्दोपपादितं देवताविज्ञानं वेदः, देवताविज्ञा-नोपपादकशब्दो मन्त्रः, इत्येवं वेदमन्त्रशब्दयोर्व्यवस्थितविषयत्वेऽपि संज्ञा-संज्ञिनोस्तादात्म्योपचारात् तयोः संकीर्णो व्यवहारः" इति।

तदत्रोच्यते—यद्यपि ज्ञानं विद्येत्यनर्थान्तरम्; तथापि न सामान्य-ज्ञाने तत्प्रयोगः कर्तुं शक्यः; वैदिक-तान्त्रिक-विशिष्टज्ञान-मन्त्रादिष्वेव विद्याशब्दप्रयोगदर्शनात्। कार्यकारणभावादिप्रत्यक्षीकरणं ब्रह्मेत्यत्रापि मतं चिन्त्यम्।

वस्तुतस्तु बृहतेर्धातोरर्थानुगमात् निरतिशये बृहति स्वप्रकाशेऽनन्ते परमात्मन्येव ब्रह्मशब्दप्रयोगः। तत्प्रतिपादकत्वाच्च वेदेऽपि ब्रह्मशब्द-प्रयोगः। एवं ब्रह्मसाक्षात्कारेऽपि ब्रह्मविद्याशब्दप्रयोगात् 'स्मृतिज्ञानं विद्ये'त्यपि चिन्त्यम्। 'त्रयो वेदाः त्रयं ब्रह्मे'त्यत्र अपौरुषेयशब्दराशा-वेव ब्रह्म-(वेद)-शब्दप्रयोगः। 'त्रयी विद्ये'त्यत्र तु वेदतज्जन्यज्ञानयोः अभेदाभिप्रायेण शब्दराशावेव विद्याशब्दप्रयोगोऽपि।

'पुराणन्यायमीमांसा - धर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥
आयुर्वेदो धनुर्वेदो वेदो गान्धर्वसंज्ञकः।
अर्थशास्त्रमिति प्रोक्तं विद्या ह्यष्टादशैव ताः॥'

(याज्ञवल्क्यस्मृतौ)

'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश॥'

(मनुस्मृतौ)

'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती ।
विद्या ह्येताश्चतस्रस्तु लोकसंस्थितिहेतवः ॥'
( कामन्दकीये )

'द्वे विद्ये वेदितव्ये परा चैवापरा च ।
तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः ।' ( मुण्डके )

इत्यादौ सर्वत्र विद्याशब्दस्य ग्रन्थपरत्वं विज्ञायते ।

वेद-मन्त्रशब्दयोस्तथोक्तार्थाभ्युपगमो न युक्तः ; तान्त्रिकेष्वपि देवताविज्ञानेषु तदुपपादकेषु शब्देष्वपि वेदमन्त्रादिशब्दप्रयोगापत्तेः । न चेष्टापत्तिः ; व्यवहारविरोधात् ।

'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुद्ध्यते ।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥' इति ।

वेदशब्दस्यायमेव तु मुख्यार्थः ।

"अत एव यज्ञविद्या, देवविज्ञानम् , प्रजापतिविज्ञानम् , सूर्यविज्ञानम् , सर्वविज्ञानं वा वेदः" इत्यादिकमपि न सङ्गतम् ; व्यभिचारादेव ।

'शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥'

इत्येवमादिशक्तिग्राहकेषु व्यवहार एव मूर्धन्यः । तदभावे तु यथायथमन्येऽप्युपायाः । श्रुतिस्मृतिपुराणेतिहासेषु शिष्टानां व्यवहारेषु विशिष्टशब्दराशौ वेदशब्दः प्रसिद्धः । तत्रैव च गद्य-पद्य-गीतिक्रमेण ऋक्‌यजुःसामादिशब्दाः प्रसिद्धा इति तदपहाय अन्यत्र गौणीलक्षणादिवृत्तिभेदेनैव वेदादिशब्दप्रयोग इति मन्तव्यम् ।

वेदार्थावधारणसमयेऽपि व्यवहारानुरोधेनैव वेदार्थोऽधिगन्तव्यः । अत एव मीमांसकानां मर्यादा—"य एव लौकिकाः शब्दास्त एव वैदिका अपि ।" वैदिकानां शब्दानां क्वचित् संस्कारभेदेऽपि प्रत्यभिज्ञानेनैक्यं निश्चीयते । अत एव "य एव लौकिकाः शब्दार्थास्त एव वैदिका अपि शब्दार्थाः" इत्युक्तिः सङ्गच्छते ।

यदुक्तम्—"ऋषीणां शब्दरचनाकर्तृत्वाभिप्रायेण मन्त्रकर्तृत्वम् । देवताविज्ञानसाक्षात्कर्तृत्वाभिप्रायेण तु मन्त्रद्रष्टृत्वमि"ति । तन्न ; 'वाचा

विरूपनित्यया, अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा' इत्यादिवचनविरोधात्। अत एव "स्वर्गापूर्वदेवतादीन् प्रत्यक्षीकृत्य तद्वाचकाः शब्दाः स्वयमृषिभिरुच्चारिताः। अत एव मन्त्राः" इत्यप्यपास्तम्। न च धर्मसाक्षात्कर्तृत्वमृषीणां संभवति; धर्मस्य चोदनैकसमधिगम्यत्वात। यथा रूपस्य नेत्रैकसमधिगम्यत्वम्, शब्दस्य च श्रोत्रैकसमधिगम्यत्वम्, तथैव धर्मब्रह्मणोर्वेदैकसमधिगम्यत्वावगमात् "नावेदविन्मनुते तं बृहन्तम्, 'तं त्वौपनिषदं पुरुषं पृच्छामि', 'चोदनालक्षणोऽर्थो धर्मः', 'शास्त्रयोनित्वात्' इत्यादि-श्रुति-सूत्रेभ्यः।

यदुक्तम्—"स्वर्गापूर्वदेवतानाम् ईश्वरप्रत्यक्षविषयत्वात् तत्प्रेरणयैव ऋषिप्रत्यक्षविषयत्वेऽपि न हानिरि"ति। तन्न; परमेश्वरस्य सर्वोपादानत्वेन सर्वस्य स्वाध्यस्तत्वेन ईश्वरचैतन्य-सत्तातिरिक्तसत्ताकत्वाभावेन सर्वस्य परमेश्वरप्रत्यक्षविषयत्वे सत्यपि जीवस्य तथात्वाभावेन तदनुपपत्तेः। योग-न्यायशास्त्रादिरीत्या योगजशक्त्या सूक्ष्मव्यवहितविप्रकृष्टज्ञानमपि स्वार्थानतिवर्त्यैव ज्ञातव्यम्।

'यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात्।
दूरसूक्ष्मादिदृष्टौ तु न रूपे श्रोत्रवृत्तिता॥'

इति शास्त्रतात्पर्यविदां वचनात्। 'प्रातिभाद्वा सर्वमि'त्यपि तथाभिप्रायकमेव द्रष्टव्यम्। योगादिमतरीत्याऽपि निरतिशयं सार्वज्ञ्यमीश्वरस्यैव, जीवानां तु सापेक्षमेव तत्।

अपि च—यथा अनन्तस्य अनन्तत्वेन ज्ञानमेव अनन्तज्ञता, तथैव परोक्षस्वभावस्य धर्मस्य परोक्षत्वेन ज्ञानमेव धर्मज्ञता।

यदप्युक्तम्—"धर्माधिगमनिपुणयोगिप्रत्यक्षसिद्धौ दर्शनातिशय एव प्रमाणम्। अस्मदादिरपेक्षितालोक आलोकयति निकटस्थमर्थजातम्। बिडालस्तु सान्द्रतमःपङ्कपटललिप्तदेशपतितमपि पश्यति। सम्पातिनामा गृध्रराजो योजनशतव्यवहितामपि रामपत्नीं सीतां ददर्श। सोऽयं दर्शनातिशय एव शुक्लादिगुणातिशय इव तारतम्यसमन्वित इति गमयति। परमपि निरतिशयमतिशयम्। यत्रास्य परः प्रकर्षस्ते योगिनो गीयन्ते। दर्शनस्य परोऽतिशयः सूक्ष्म-व्यवहित-विप्रकृष्ट-भूत-

भविष्यदादिविषयत्वम्'' इति । तन्न ; स्वार्थानतिलङ्घनेन दूरसूक्ष्मादि-दृष्टावेव तात्पर्यावसानात् ।

ननु 'तत्र रसादिग्राहिणामिन्द्रियाणां सत्त्वान्न रसादिषु चक्षुरादि-व्यापारः कल्प्यते ?' तर्हि धर्मेऽपि तत्कल्पनस्यायुक्तत्वात् । तत्रापि शब्द-प्रमाणसद्भावः ।

'येऽपि चातिशया दृष्टाः प्रज्ञामेधाबलैर्नृणाम् ।
स्तोकस्तोकान्तरत्वेन न त्वतीन्द्रियदर्शनात् ॥' इति ।

यदि च परोक्षस्वभावो धर्मोऽपि योगीन्द्रियगम्यः स्यात्, तदा रूपादावपि श्रोत्रवृत्तिता स्यात् । तदुक्तम् —

'एकेन तु प्रमाणेन सर्वज्ञो येन कल्प्यते ।
नूनं स चक्षुषा सर्वान् रसादीन् प्रतिपद्यते ॥' इति ।

यदुक्तम्—''धर्मस्य रसादिवच्छब्दाविषयतया तत् परिकल्प्यते'' इति । तन्न ; तत्कल्पनस्य निष्प्रमाणकत्वात्, 'नावेदविन्मनुते तं बृहन्तमि'ति श्रुतिविरोधाच्च ।

यदुक्तम्—''योगीन्द्रियाविषयत्वं धर्मस्य कथमवगम्यते ? अविष-यत्वं तद्भावेऽपि तदनवगमादवगम्यते । यथा नयनसद्भावेऽपि शब्दाश्रव-णात् तदविषयता शब्दस्यावसीयते । न चैवं योगिचक्षुषि सत्यपि धर्मस्याग्रहणमवगन्तुं शक्यते, तदुभयस्यापि भवत्परोक्षत्वादिति धर्मो न तद्विषय इति न वक्तुं युक्तमि''ति । तत्तुच्छम् ; स्वार्थानतिलङ्घिदृष्टान्ते तथाभूतस्यैवातिशयस्य साधयितुं शक्यत्वात् । मार्जार-सम्पात्यादिदृष्टि-वैशेष्यदर्शनेनैव योगिदृष्टिवैशेष्यं साध्यते । श्रोत्रस्य रूपवृत्तितायां न दृष्टान्त इति तत्कल्पनं यथा दुश्शकं तथैव परोक्षस्वभावधर्मग्रहणोपयोगि-दृष्टान्ताभावात् तत्कल्पनमपि दुःशकमेव ।

अपि च—नहि दृष्टान्तमात्रेण वस्तुसिद्धिः, आलोकानपेक्षो मार्जारो-ऽतिसान्द्रतमःपङ्कपटलपतितमर्थजातं पश्यतीति तेनैव योगी धर्म-मवलोकयिष्यतीति निर्युक्तिकमेवेदम् । यथा गमनादिक्रियाणां देशान्तरप्राप्त्यादिप्रयोजनताज्ञानं प्रत्यक्षादिसिद्धम्, न तथा अग्नि-होत्रादिकर्मणां स्वर्गादिफलताज्ञानं वेदमन्तरा सम्भवति ।

यदुक्तम्—"मनो हि सर्वविषयम्, न तस्याविषयः कश्चिदस्ति। अभ्यासवशाच्चातीन्द्रियेष्वर्थेषु परिस्फुटाः प्रतिभासाः प्रादुर्भवन्तो दृश्यन्ते। कामशोकभयोन्मादचौरस्वप्नाद्युपद्रवान् अभूतानपि पश्यन्ति पुरतोऽवस्थितानिव" इति। तदपि तुच्छम्; मनसो बहिरस्वातन्त्र्यात्। मिथ्याज्ञानदृष्टान्तेन विधुरपरिभावितकामिनीसाक्षात्कारवत् भावना-प्रचयसहकृत-योगिमनःकरणक-धर्मसाक्षात्कारस्यापि तथात्वापातात्। न च मिथ्याज्ञानेषु बाधकसद्भावादप्रामाण्येऽपि प्रकृते बाधकवैधुर्यात् प्रामाण्यमेवेति वाच्यम्; प्रत्यक्षप्रवृत्तिनिमित्ताभावज्ञानस्यैव बाध-कत्वात्। श्रुति सूत्रसिद्ध-चोदनैकगम्यत्वस्यादि बाधकत्वाच्च। किञ्च-लङ्घनाद्यभ्यासस्यापि नापूर्वातिशयाधायकत्वम्, निरन्तराभ्यासिनोऽपि पर्वतसमुद्रादिलङ्घनसामर्थ्यादर्शनात्।

यदुक्तम्—"लङ्घनस्य देहधर्मत्वेन कफजाड्यादिसम्भवात् तथा प्रकर्षाभावेऽपि ज्ञाने तदभावात् प्रकर्षसिद्धिः। लङ्घनाभ्यासे देहे नातिशयो भवति, किन्तु कफमेदसोः क्षयात् किञ्चिदेव शरीरलाघवं भवति। 'विज्ञानजन्यस्तु संस्कार आत्मनि व्यवतिष्ठते। क्रमेण उपचीय-मानश्च परातिशयकारणं भवति।

'यथाऽनुवाकग्रहणे संस्थाभ्यसनकल्पितः।
स्थिरः करोति संस्कारः पाठस्मृत्यादिपाटवम्॥
यथा वा पुटपाकेन शोध्यमानं शनैः शनैः।
हेम निष्प्रतिकाशं तद् याति कल्याणतां पराम्॥
तथैव भावनाभ्यासाद् योगिनामपि मानसम्।
ज्ञाने सकलविज्ञेयसाक्षात्कारे क्षयं भवेत्॥
अस्मादादेश्च रागादिमलावरणधूसरम्।
मनो न लभते ज्ञानप्रकर्षपदवीं पराम्॥
प्रत्यूहभावनाभ्यास - क्षपिताशेष - कल्मषम्।
योगिनां तु मनः शुद्धं कमिवार्थं न पश्यति॥
तदेवं क्षीणदोषाणां ध्यानावहितचेतसाम्।
निर्मलं सर्वविषयं ज्ञानं भवति योगिनाम्॥"

इति। तदपि न चोदक्षमम्; कफादिदोषवत् रागादिदोषप्रतिबन्धस्यापि सत्त्वात्। न च रागादिदोषस्य प्रतिपक्षभानेऽपि सर्वात्मना अपचयो निम्बाद्युपयोगेऽपि कफधातोरिव।

ननु निम्बोपयोगवत् तत्र तदनुकूलस्य आतपादेरुपयोगदर्शनात् तत्र कफावशेषः। किञ्च—

'धर्मिलोपभयात्तत्र नेष्टः सर्वात्मना क्षयः।
कफाधिकन्तु हन्तव्यं धातुसाम्यस्य सिद्धये॥
इह सर्वात्मना च्छेद्याः क्लेशाः संसारकारिणः।
छेदश्चैकान्ततस्तेषां प्रतिपक्षोपसेवनात्॥'

इति चेन्न। प्रकृतेऽपि प्रपञ्चबाधमन्तरा रागादिमलानामात्यन्तिकनाशासम्भवात् मनस आत्मनः संसारस्य च सत्त्वे कुतस्तदात्यन्तिकनाशकल्पनाऽपि। अभ्यासे देहाद्यपेक्षा, देहादिरक्षणे च रागाद्यपेक्षा, तेनापि न समूलरागनाशसम्भवः। न च क्लेशशून्यत्वमात्मनो दृष्टम्।

यदुक्तम्—"सुषुप्तौ प्रत्यहं दोषैरस्पृष्टस्यात्मन उपलम्भ" इति। तदपि न; स्थूलदोषाणामभावेऽपि सूक्ष्माणां तेषां तदानीमपि सत्त्वात्। अन्यथा पुनः संसारानापत्तिः स्यात्। प्रतिपक्षभावनया तपसा वा न दोषाणां निःशेषनिवृत्तिः, पुनरपि तेषामुद्भवदर्शनात्।

'ऋषयोऽप्युग्रतपसो दैवेनाभिप्रचोदिताः।
उत्सृज्य नियमांस्तीव्रान् भ्रश्यन्ते काममन्युभिः॥'

इति रामायणवचनात्।

किञ्च—भावनाजन्यस्य ज्ञानस्य विधुरपरिभावितकामिनीसाक्षात्कारस्येव भ्रमत्वमेव ज्ञातव्यम्। रागादिसत्त्वेऽपि ज्ञानं भवति रागाद्यभावेऽपि सुषुप्तौ मोक्षे च ज्ञानं न भवतीति कुतो रागाद्यभावो ज्ञानहेतुत्वं भजते? 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इतिरीत्या मिथ्याज्ञाननिवृत्त्या दोषनिवृत्तिः, दोषनिवृत्त्या च मनसः शुद्धिः, ततस्तत्त्वज्ञानमितिरीत्या मिथ्याज्ञाननिवृत्तौ रागादिदोषनिवृत्तिः, तन्निवृत्तौ च तत्त्वज्ञानम्, तेन च मिथ्याज्ञाननिवृत्तिरिति चक्रकश्च स्यात्।

एतेन "चेतनस्य प्रकृत्या निर्मलत्वात् मलानामागन्तुकत्वात् मलनिवर्हणहेतोश्च यथोक्तस्य संभवात् तदावरणापाये सति स्वतः सकलपदार्थदर्शनसामर्थ्यस्वभावचित्तत्त्वावस्थानात् सर्वज्ञत्वसिद्धिः" इत्यपि निःसारम् ; नैयायिकमतरीत्या आत्मनो मनसश्च जडत्वात् सांख्ययोगमतरीत्या आत्मनश्चित्त्वेऽपि असङ्गत्वात् स्वतो विषयासम्बन्धेन ज्ञातृत्वासंभवात् चित्तवृत्तिसम्बन्धेन ज्ञातृत्वे चित्तशुद्धितारतम्येन ज्ञानतारतम्यानपायात् । यद्यपि सांख्यादिरीत्या चित्ततत्त्वं सर्वार्थावभासनशालि, तथापि रजस्तमोऽनुविद्धत्वेन सीमितमेव ज्ञानं भवति। मीमांसकमतरीत्या रजस्तमोलेशानुविद्धत्वेन अविशुद्धसत्त्वप्रधानप्रकृतिरूपया अविद्यया सर्वथा मलराहित्याभावेन सार्वज्ञ्यासंभवात् ।

किञ्च—'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥'

इति श्रुत्या परावरब्रह्मदर्शनेनैव ग्रन्थिशब्दितानां कामानां कर्मणां संशयस्य च च्छेद उक्तः । ततः प्राक् कामकर्मादीनां मलानां सत्त्वात् क्व चित्तनिर्मलत्वं क्व च सार्वज्ञ्यम् ? जीवचैतन्यस्य मनआदिद्वारैव विषयावच्छिन्नचैतन्यसंसर्गिमनसश्च नैर्मल्यापेक्ष एव विषयसंसर्गः। मनोनैर्मल्यमपि सापेक्षमेव, मनसो भौतिकत्वात्, भूतानाञ्च तमःप्रधानप्रकृतिकार्यत्वात् , तमसः सार्वज्ञ्यप्रतिबन्धकत्वाच्च न नैरपेक्ष्येण जीवे सार्वज्ञ्यम् ।

किञ्च—मन्त्रादिकर्तृत्वमपि प्रवृत्तिः । प्रवृत्तिश्च काममूलिका ।
'यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य विचेष्टितम् ।
अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित् ॥' इति ।

तेन कामरागादिसत्त्वे प्रावरणाभावोऽसिद्धः, तेन च सार्वज्ञ्यासिद्धिः ।

यदप्युक्तम्—"श्वो मे भ्राता आगन्ते"ति प्रातिभस्य ज्ञानस्य प्रामाण्यदर्शनात् सार्वज्ञ्यं कल्पनीयम् । इदञ्च ज्ञानं नानर्थकम्, न संदिग्धम्, न वा विधुरीकृतम्, न दुष्टकारणजन्यम्, बाधकसत्त्वेऽप्रामाण्येऽपि तदयोगात्तु प्रामाण्यमेव । नन्वनर्थजमिदं ज्ञानम् , तज्जनकस्य भ्रातु-

स्तदानीमसत्त्वादिति चेन्न। भावित्वेन तद्ग्रहणे तदयोगादि"ति। तन्न; भावित्वेन ग्रहणासंभवात्। नहि भाविनां प्रत्यक्षेण ग्रहणं संभवति।

ननु तद्देशसम्बन्धस्य तत्र प्रागभावो न धर्मिणः। स हि विद्यते एव, कुतश्चिद्भोजनोत्कण्ठादेः कारणात् स्मरणपदवीमुपारूढः श्वस्तनागमन-विशिष्टतया प्रतिभातीति प्रातिभज्ञानस्य स एव जनकः। शब्दलिङ्गसारूप्य-निमित्ताभावात् प्रत्यक्षमेव तदिति चेन्न। क्वचित्सत्त्वेऽपि व्यवहितत्वेन इन्द्रियसन्निकर्षाभावात् प्रत्यक्षत्वानुपपत्तेः। न च मनसोऽपीन्द्रियत्वेन तत्सन्निकृष्टस्य संभवत्येव प्रत्यक्षत्वमिति वाच्यम्; मनसो बहिरस्वा-तन्त्र्यात्। मनसा तथाभूतव्यवहितग्रहणे अन्धाबाधिर्याद्यभावापत्तेः। न च पूर्वोत्पन्नचाक्षुषविज्ञानविशेषणस्य बाह्यस्य वस्तुनो मनो ग्राहकमिति नान्ध्याद्यभावः, शब्दाद्युपायान्तरविरतौ जायमानमनवद्यं ज्ञानलक्षणा-प्रत्यासत्ति-ज्ञानं मानसं प्रत्यक्षं 'सुरभि केतकीकुसुमम्, मधुरा शर्करे'ति ज्ञानवदित्युक्तमिति वाच्यम्; तथाभूतलौकिकज्ञानस्य तु शर्करा-कुसुमाद्यंशे अपरोक्षता, सौरभामाधुर्यांशे तु परोक्षतैव, सौरभ्य-माधुर्यादेः चक्षु-रिन्द्रियायोग्यत्वेन योग्यत्वघटितस्य प्रत्यक्षलक्षणस्य तत्राभावात्।

हृदयप्रसादोद्वेगादिलक्षण-लिङ्गाद्याभासप्रभवत्वेन न तत् निश्चया-त्मकम्, अनिश्चयफलत्वात्. प्रमाणान्तराधीननिश्चयत्वाच्च प्रत्यक्षं वर्तमानैकविषयम, इतोऽपि नेदं ज्ञानं प्रत्यक्षम्, विषयस्येह अवर्त-मानत्वात्।

यदुक्तम—"रजतं गृह्यमाणं चिरस्थायीति गृह्यते' इति प्रत्यक्षस्य अनागतग्राहिता सिद्धैवे"ति। तन्न; चिरस्थायिना प्रत्यक्षेण अचिरकालो-पलम्भेन अनागताग्राहित्वेऽपि तदुपपत्तेः। अत एव वर्तमानशुक्तिशक-लादेरविषयत्वे तदसन्निधौ रजतादिवेदनाप्राप्तिः।

किञ्च—बहुभिर्ज्ञानैः सर्वज्ञसाधने ज्ञानानां यौगपद्याभावात् क्रमेण तद्वाच्यम्। क्रमभाविभिस्तु त्रिभुवनकुहरनिहित-निखिलपदार्थसार्थसाक्षा-त्करणं मन्वन्तरकोटिभिरपि दुर्घटम्।

यदि च एकेनैव ज्ञानेन युगपदेव सर्वदर्शनमुपेयते, तदा न प्रत्यक्षत्वो-पपत्तिः, प्रत्यक्षस्य वर्तमानमात्रविषयत्वात्। अतीतानागतान् वर्तमाना-

त्मना पश्यतो भ्रान्तत्वमेव। यथार्थन्तु पश्यतो न प्रत्यक्षम्, तस्यातीता-नागतविषयत्वात्। मनोजन्यत्वस्यैव प्रत्यक्षत्वे अनुमानादावतिप्रसङ्गः। तस्मादिन्द्रियसन्निकृष्टार्थजत्वमेव प्रत्यक्षलक्षणं वाच्यम्। मनसश्चेन्द्रियत्वेन तत्सन्निकृष्ट वर्तमानसुखादेः प्रत्यक्षत्वेऽपि नानुमानादावतिप्रसङ्गः। सूक्ष्मविप्रकृष्टव्यवहितानां ज्ञानोत्पत्तौ सामर्थ्याभावात्। नैकस्मिन्नेव ज्ञाने वस्तुना सह तत्प्रागभावप्रध्वंसावपि प्रतिभास्येते, तथात्वे विरोधमात्रस्य दत्तजलाञ्जलितापसङ्गात्। वर्तमानावर्तमानविषयभेदेन तद्भाने तु तस्मिन्नेव प्रत्यक्षत्वाप्रत्यक्षत्वापत्तिप्रसङ्गात्।

वेदान्तमतरीत्या तु यद्यपि तत्तदिन्द्रिययोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तदाकारवृत्त्यवच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वमित्येव लक्षणम्। विषयांशे तु विषयस्य प्रमात्रभिन्नत्वमेव लक्षणम्; तथापि घटादिग्रहणे तत्रापि इन्द्रियसन्निकर्षोऽनिवार्य एव।

नील-पीतादीनां चित्रप्रत्यये भासनं शीतोष्णयोश्च समकालोपलम्भनं वा न तत्समाधानम्, तयोर्वर्तमानविरुद्धविषयत्वात्।

किञ्च- धर्मस्य सर्वथाऽज्ञाने तद्भावनाऽपि नोपपद्यते. आगमेनैव ज्ञाने तु कृतं भावनया। न चानुमानेन आगमेन वहिं व्यवस्थाप्य भावयतस्तत्साक्षात्कारो यथार्थज्ञानं भवति; बाहुल्येन विसंवादोपलम्भात्। न च तत्र रागादिमत्त्वेन तत्साक्षात्करणं भ्रम इति वाच्यम्; रागाद्यावरणविरहस्य विशेषानुपपत्तेः। नापि रागादयः कम्बलादिवदावरणं विज्ञानस्य, किन्तु तदाक्षिप्तमना विविधविषयतृष्णापरिप्लुतो न शक्नोति भावयितुमिति भावनादरमात्र एव रागादिविरहोपयोगः। भावनीयविषयरागस्तु भावनाप्रकर्षहेतुरेव भवति।

यदप्युक्तम्—

'प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्' (योगसूत्र ३।२५) इतिरीत्या मनसो ज्योतिष्मत्या प्रवृत्त्या जायमानस्य आलोकस्य सूक्ष्मे व्यवहिते विप्रकृष्टे वा विषये विन्यासेन योगिनस्तत्तज्ज्ञानं भवति" इति।

यदपि च—"प्रातिभाद्वा सर्वम्' (यो० सू० ३।३३) इतिरीत्या प्रतिभा=ऊहस्तज्जन्यं प्रातिभम्। प्रसङ्ख्यानहेतुसंयमवतो हि तत्प्रकर्षः,

तेन ऊहजेन प्रातिभेन ज्ञानेन योगी सर्वं जानाती"ति। तदपि न जीवानां सार्वज्ञ्यं साधयति। योगिमतरीत्याऽपि निरतिशयसार्वज्ञ्यस्य परमेश्वर एव संभवात्।"

यद्यपि च—

"तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम्।"

(यो० सू० ४।३१) इतिरीत्या सर्वक्लेशकर्मावरणैर्विमुक्तस्य ज्ञानानन्त्यं भवति। स्वभावतः प्रख्याशीलं चित्तसत्त्वमावरकेण तमसाऽभिभूतं क्वचिदेव प्रवर्तितमुद्घाटितं ग्रहणसमर्थं भवति। तदावरणापगमे तु भवत्यानन्त्यं ज्ञानस्य, ज्ञेयञ्चाल्पमेव भवति"; तथापि पुरुषविशेषे परमेश्वर एव सर्वथा तदावरणक्षयो भवति, नान्यत्र। तत एव—'तत्र निरतिशयं सार्वज्ञबीजम्' (यो० सू० १।२५) इत्यत्र पुरुषविशेष एव सार्वज्ञ्यबीजस्य काष्ठाप्राप्तिरुक्ता। कैवल्यं प्राप्तानां पूर्वा बन्धकोटिः, प्रकृतिलीनानान्तु उत्तरा बन्धकोटिर्भवति। पुरुषविशेष ईश्वरस्तु सदैव मुक्त इति प्रकृष्टसत्त्वोपादानादीश्वरस्य सोऽयमुत्कर्षः शास्त्रनिमित्त उक्तः। शास्त्रमपि प्रकृष्टसत्त्वनिमित्तमुक्तम्। एतयोश्च शास्त्रोत्कर्षयोः ईश्वरसत्त्वे वर्तमानयोरनादिः सम्बन्ध उक्तः। तच्च तस्यैश्वर्यं साम्यातिशयविनिर्मुक्तमुक्तम्। द्वयोः साम्ये विरुद्धसङ्कल्पे यस्य प्राकाम्यविघातस्तस्य अनीश्वरत्वम्, यस्य च तत्सिद्धिस्तस्यैवेश्वरत्वम्। शास्त्रनिबन्धन ईश्वरस्य सत्त्वप्रकर्ष उक्तः। शास्त्ररीत्या तु अविशुद्धसत्त्वप्रधानाविद्योपाधिकत्वेन जीवस्याल्पज्ञत्वम्। विशुद्धसत्त्वप्रधानमायोपाधिकत्वे न त्वीश्वरस्य सर्वज्ञत्वादिकम्। तेनैव परमेश्वरस्य विश्वोपादानत्वेन सर्वसम्बन्धात् मुख्यं सार्वज्ञ्यम्। जीवानान्तु यावतांशेन आवरणक्षयस्तावतांशेन बहुज्ञत्वम्। अविद्यायां सर्वांशेन मलापनयनासम्भवात् तदपगमेऽविद्यात्वस्यैवाभावापातात्। अधिकन्तु सर्वज्ञतानिराकरणप्रसङ्गे द्रष्टव्यम।

किञ्च—सूक्ष्मभूतधर्मप्रत्यक्षे सति तपयोगादौ प्रवृत्तिः, अन्यथा तपोयोगादिक्रियायास्तादृशसामर्थ्यकारणताग्रहणासम्भवात्, सत्याञ्च तस्यां तपोयोगादिसिद्धौ सूक्ष्मभूतधर्मप्रत्यक्षसंभव इत्यन्योऽन्याश्रयश्च।

यदुक्तम्–"पूर्वकल्पानुभूतकार्यकारणभावस्मरणेन कल्पादौ उद्भूतानामृषीणां प्रवृत्तिसम्भवः" इति । तन्न ; पूर्वकल्पीयकार्यकारणभावानुभवासिद्धया कल्पादौ तत्स्मरणस्याप्यसिद्धेः । धर्मज्ञाने धर्मानुष्ठानेन धर्मज्ञत्वसिद्धिः, धर्मज्ञत्वसिद्धया धर्मानुष्ठानसिद्धिरिति ध्रुवोऽन्योन्याश्रयप्रसङ्गः । यदि च अन्योन्याश्रयादिदोषशून्यं धर्मज्ञत्वं सिद्धयेत, तदैव तत्स्मृत्यादिकल्पनं सम्भवति । न च पूर्वपूर्वधर्मज्ञानादुत्तरोत्तरं तपोयोगादिप्रवृत्तिः, पूर्वपूर्वयोगादिप्रवृत्तेश्च उत्तरोत्तरं धर्मज्ञानम्, बीजाङ्कुरवद् अनादित्वाच्च नान्योन्याश्रयादिकमिति वाच्यम् ; बीजाङ्कुरेषु कार्यकारणभावस्य दृष्टत्वेन तत्र तथात्वेऽपि प्रकृते तादृशानादिकल्पनाया अन्धपरम्परामात्रत्वात् ।

अपि च—धर्मानुष्ठानेन सार्वज्ञ्यं धर्मज्ञत्वं वा ? सर्वज्ञत्वेन धर्मज्ञत्वेन वा धर्मानुष्ठानमिति जैनबौद्धादिषु शास्त्रप्रामाण्यवादिभिरयमेव दोष उद्भाव्यते । सोऽयमेव दोषः प्रकृतिकल्पकेष्वपि समापतितः । किञ्च—एवं जैनबौद्धादिवत् शास्त्रप्रामाण्यानभ्युपगन्तृत्वमप्यापतिष्यति । जैनबौद्धाद्यागमापेक्षया वेदेषु शपथमन्तरा किमधिकम् ?

किञ्च—नैयायिकमतरीत्या त्वीश्वरस्य सार्वज्ञ्यं सिद्धमेव । तादृगीश्वरनिमित्तत्वेनापि वेदस्य 'बाइबिलादि-कुराना'दिना साधारणता न वारयितुं शक्या । वेदप्रामाण्यसिद्धया परमेश्वरसिद्धिः, तत्सिद्धौ च तन्निर्मितत्वेन तत्प्रामाण्यसिद्धिरित्यन्योन्याश्रयता । यदि त्वनुमानेन ईश्वरसिद्धिरिष्यते, तदाऽपि तेनेश्वरसामान्यस्य सिद्धयापि वेदकारस्य ईश्वरत्वासिद्धेः । यया यया युक्त्या वेदकारस्य परमेश्वरत्वं साधयितुमिष्यते, तया तयाऽन्यैरपि स्वस्वग्रन्थकारस्य तत्साधयितुं शक्यत्वात् ।

किञ्च—तन्त्रापेक्षया वेदेषु किं वैशिष्ट्यम् ? मन्त्रकर्तॄणामृषीणां धर्मज्ञत्वमस्ति, जिन-बुद्ध-यीशु-मुहम्मदादीनां तन्नास्तीत्यत्र का वाचो युक्तिः ? न च ज्ञानविज्ञानादिबोधकत्वेन वेदस्य महत्त्वम् ; तथाकथितज्ञानविज्ञानादीनामाधुनिकेष्वपि ग्रन्थेषु बाहुल्येन दर्शनात् । प्रत्यक्षायितकार्यकारणक्षमतायां फलपर्यवसायितायाञ्च वर्तमानविज्ञानस्य नान्यः प्रतिवादीति निर्विवादमेव सिद्धम् ।

यदि तु श्रुतिस्मृतिपुराणाद्युपाश्रयेण तपोयोगादिभिर्धर्मज्ञत्वादिकं सिषाधयिषितम्, तदा तदर्थं कृततपोयोगादिभिर्धर्मप्रत्यक्षतासाधनेन, श्रुत्यादिभिरेव धर्मज्ञानसम्भवात्। अत एव प्रत्यक्षानधिगतार्थस्य अवगमाय अनुमानं यथाऽपेक्षितं तथैव प्रत्यक्षानुमानाभ्यामनधिगतस्य अर्थस्यावगमाय स्वातन्त्र्येणापौरुषेयस्य वेदलक्षणस्यागमस्य प्रामाण्यमास्थीयते वैदिकैः।

'यथर्तुलिङ्गान्यृतवः स्वयमेवर्तुपर्यये।
स्वानि स्वान्यभिपद्यन्ते तथा कर्माणि देहिनः॥'

इति मनुस्मृत्या तु देहिनः स्वानि कर्माणि अभिपद्यन्ते इत्येव प्रतिपाद्यते। कानि कर्माणि पुण्यानि, कान्यपुण्यानि, किं प्रमाणकानि च तानि? इत्यत्र तु मनुरपि श्रुतिमेव प्रमाणयति—

'धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः।'
'वेदाद्धर्मो हि निर्बभौ', 'सर्वं वेदात् प्रसिद्ध्यति।'

इति तद्वचनेभ्यः। सनत्कुमाराणां जन्मसिद्धज्ञानं पुराणेषु उच्यमानन्तु उपपद्यते, सनत्कुमारैर्वेदप्रमाण्यमाश्रित्य तपोयोगादीनां विशिष्टज्ञानजनकत्वं ज्ञात्वा तदनुष्ठानं कृतम्, तेन च विशिष्टज्ञानमवाप्तम्, कात्र अन्योन्याश्रयादिकम्?

पूर्वकल्पकृताभ्यासेन सिद्धिर्भवतीत्यत्र न विप्रतिपत्तिः शास्त्रप्रामाण्यवादिनाम्। वामदेवादीनां गर्भे ब्रह्मसाक्षात्कारस्य धर्मपरोक्षत्वादिभिरप्यभ्युपगमात्। सनत्कुमारस्य धर्मप्रत्यक्षीकरणमिह कल्पे कल्पान्तरे वा सञ्जातमिति त्वयापि साध्यमेव। वेदेन धर्मं ज्ञात्वा पूर्वकल्पे धर्मोऽनुष्ठितः, तेन चास्मिन् कल्पे धर्मब्रह्मादिज्ञानं यथायथं सम्पन्नमित्यर्थस्यैव पुराणसिद्धत्वात्। तत्तद्विषयैः प्रमाणैस्तत्तद्विषयज्ञातृत्वेनापि सर्वज्ञत्वसम्भवात्। यथा जन्मान्तराभ्यस्तमहावाक्यसंस्कारेण वामदेवस्य ब्रह्मात्मैक्यसाक्षात्कारस्तथैव जन्मान्तराभ्यस्तवेदवाक्यसंस्कारेण धर्मज्ञानम्, ब्रह्मणः प्रमातृचैतन्याभिन्नसत्ताकत्वेन आपरोक्ष्येऽपि धर्मस्यायोग्यत्वात् प्रमातृचैतन्याभेदाभावेन तदतिरिक्तसत्ताकत्वेन परोक्षतैव।

यदुक्तम्—"अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यनार्षत् तदृषीणामृषित्वम्" (तै० आ० २।६) इत्याद्या श्रुतिरेव वेदाधिगमात् पूर्वमेव ऋषीणां तपःप्रवृत्तिं श्रावयतीति नात्र विवदितव्यं श्रुतिश्रद्धालुभिरि"ति। तदपि न किञ्चित्; विकल्पानुपपत्तेः। तथा हि—ब्रह्मस्वयम्भूपदाभ्यां किं शब्दात्मको वेदो गृह्यते, धर्मादिप्रत्यक्षात्मकं ज्ञानं वा? नाद्यः; भवन्मते तस्य ऋषिनिर्मितत्वे स्वयम्भूत्वासम्भवात्। नान्त्यः; धर्मादिप्रत्यक्षात्मकज्ञानस्य तपस्साध्यत्वेऽपि वेदेन तपोयोगादिपरोक्षज्ञानसम्भवात्, तदनुष्ठाने तदपरोक्षताया अनपेक्षणात्। जातायामपरोक्षतायां च कृतं तदनुष्ठानेन?

वस्तुतस्तु—'वाचा विरूपनित्यया', 'तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे', 'अस्य महतो भूतस्य निःश्वसितमि'त्यादिश्रुतिभ्यो नित्यसिद्धं स्वयम्भू ब्रह्म (वेदः) परमेश्वरान्निश्वासन्यायेन बुद्धिप्रयत्नानपेक्षतयाऽभिव्यज्यते, तदेव चांशैः प्रजापत्याग्निवाय्वादित्येभ्यो लोके सम्प्रदायपारम्पर्येण प्रवर्तते। तस्यैवांशांशानां केषाञ्चित् मन्त्रद्रष्टृणामृषीणां साक्षात्कारः, तेनैव तेषां मन्त्रद्रष्टृत्वम्। तदेव च मन्त्रकृत्त्वम्। न च तावता ततः पूर्वं तेषामध्ययनपारम्पर्येणापि वेदाधिगमो नासीत्, तेन वा तपोयोगादिज्ञानं नासीत्।

अत एव वेदानां नित्यत्वात् तत्सम्प्रदायाविच्छेदेन तदध्येतॄणां वेदोक्तवर्णाश्रमधर्मानुष्ठातॄणामेव तद्विशेषानुष्ठानात् केषाञ्चिन्मन्त्राणां तद्दैवतानां वा साक्षात्कारो भवति, नात्यन्तमभिनवानां मन्त्राणां साक्षात्कारः, सम्प्रदायान्तरे तेषां विद्यमानत्वेन संवादात्। अन्यथा संवादाभावे तु साक्षात्कृत्य निर्माय वा मन्त्रा उक्ता इति संशीत्यविरहात्। अन्यथा अभिनवमन्त्रनिर्मातृत्वे मन्त्राणामनादित्वं च भज्येत, द्रष्टृत्वोक्तिश्च कुप्येत। तथैव वाइबिलकाराणामपि ऋषित्वापत्तेश्च।

यद्यपि नित्यमन्त्राणामपि वर्णव्यक्तीनामनित्यत्वेन तत्पौर्वापर्यलक्षणानुपूर्वी सर्वैरपि अध्यापयितृभिरध्येतृभिश्च विरच्यत एव; तथापि पूर्वानुपूर्वीनैरपेक्ष्येण स्वातन्त्र्येण वा प्रमाणान्तरेण वाऽर्थमुपलभ्य विरचितत्वा-

भावादेव नाध्यापकादीनां तत्कर्तृत्वम्। अन्यथा रघुवंशादिश्लोकोच्चार-यितृणामन्येषामपि तत्कर्तृत्वापातात्। तपोयोगात् परमेश्वरानुग्रहविशेषाद्वा केषाञ्चिदध्ययनाध्यापनादिना मन्त्रतदर्थसाक्षात्कारेण तद्द्रष्टृत्वकर्तृत्वादि-व्यवहारो भवति। सम्प्रदायप्रवर्तकत्वेन च क्वचित् कर्तृत्वव्यवहारः। निर्माणस्वातन्त्र्याभावेन च वस्तुतो न निर्मातृत्वम्। विद्यमानानामेव च साक्षात्काराद् द्रष्टृत्वमेव पर्यवस्यति।

अत एवोक्तम्—'यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति' इति। यद्यपि शब्दसामर्थ्यवशेनाऽपि दैवतनिर्णयः कर्तुं शक्यते; तथापि क्वचिल्लिङ्गबलात् परिकल्पितामपि श्रुतिमतिक्रम्य निरपेक्षस्वरूपश्रुतिबलात् विनियोगान्तरं कल्प्यते। यथा—'कदाचनस्तरीरसि नेन्द्र सश्चसि दाशुषे' इतीयमैन्द्री ऋक् प्रसिद्धा। यद्यपि 'सामर्थ्यं सर्वशब्दानां लिङ्गमित्यभिधीयते' इतिरीत्या शब्द-सामर्थ्यरूपेण लिङ्गेन 'ऐन्द्र्या इन्द्रं समुपतिष्ठेत्' इति विनियोगश्रुतिः कल्पयितुं शक्या; तथापि "श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति मीमांसासूत्रानुसारेण कल्प्यमानश्रुत्यपेक्षया "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इति क्लृप्तश्रुतेः प्राबल्येन गार्हपत्योपस्थान एव तद्विनियोगः। तेन ऋषिरेव वस्तुभूतं मन्त्रार्थं जानाति। तदेवोक्तम्—'यत्कामे'ति।

अस्यार्थस्य इयं देवता दातुं समर्थेति जानानः स्तुतिं प्रयुङ्क्ते येन मन्त्रेण, सा प्राधान्यस्तुतिभाग्देवता। तच्च ज्ञानं लिङ्गेन विनियोग-श्रुतिभिर्वा तपस्यया वा। अत एकस्य मन्त्रस्य अनेका देवताः सम्भ-वन्ति—सामर्थ्यबलादन्या, श्रुतिबलाद् अन्या, ऋषिदर्शनबलाच्च अन्या। ऋषयश्चापि अनेके भवन्ति एकस्य मन्त्रस्य। तत एव गायत्र्याः वशिष्ठ-विश्वामित्रादय ऋषयः।

अथवा—यद्वस्तु कामयमानः यस्यां देवतायामभिष्टुतायामार्थपत्य-मर्थपतिभावम् अयन् इच्छन् 'अमुष्या देवतायाः प्रसादेन 'अमुष्यार्थस्य पतिर्भविष्यामी'त्येतां बुद्धिं पुरोधाय स्तुतिं प्रयुङ्क्ते तद्दैवतः

स मन्त्रो भवति। एतेन मन्त्रार्थदर्शनमेव ऋषित्वम्। तदुक्तम्—'तदेतत् सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यन् तानि त्रेतायां बहुधा सन्ततानि' इति (मुण्डक० २।१)। इह मन्त्रेषु कर्मदर्शनं कवीनामेव कर्मोक्तम्।

"मन्त्रार्थचिन्ताऽभ्यूहः, अभ्यूहोऽपि श्रुतितोऽपि तर्कतो न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः, प्रकरणश एव तु निर्वक्तव्याः। न ह्येषु प्रत्यक्षमस्त्यनृषेरतपसो वा। पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति" (निरुक्त १३।१२) इति।

एतदभिप्रायस्तु—श्रुतितस्तर्कतो वा ब्राह्मणेभ्य उन्नीताभिधानसामर्थ्येभ्यो वाक्यार्थसामर्थ्येभ्यो वा मन्त्रार्थः ऊहितुं शक्यः; तथापि न पृथक्त्वेन मन्त्रा निर्वक्तव्याः, किन्तु प्रकरणश एव। तान्येतानि प्रकरणानि मन्त्राणां दैवतमध्यात्ममितिहासानुप्रवेश इति। यतो नहि एषु प्रत्यक्षमर्थदर्शनमस्ति, अनृषेरतपसो वा। य ऋषिस्तपस्वी स्यात्, तस्य तु भवत्येव प्रत्यक्षम्। निर्दग्धकल्मषयोस्तयोः प्रतिबन्धकाभावात्। तौ यथावदर्थं मन्त्राणां पश्यतः। तद्भिन्नेषु तु श्रुतिनिर्वचनाय श्रुतिज्ञानरूपं बहुविद्यत्वमावश्यकम्। उपदेशतः पारोवर्यवित्सु तु आचार्यपरम्परया मन्त्रार्थज्ञेषु य एव भूयोविद्यो बहुश्रुतः स्यात्, स एव प्रशस्यो भवति। स एव मन्त्रार्थविज्ञाने प्रशस्यः, न मन्दबुद्धिरशिक्षितः। स हि बहुश्रुतो बहुदृष्टत्वादनेकविषये मन्त्रार्थे न प्रतिबद्ध्यते।

'मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन्—को न ऋषिर्भविष्यति। एवं मन्त्रार्थचिन्ताऽभ्यूहम् अभ्यूढं प्रायच्छन्। तस्मान्निरुक्तशास्त्रे अनूचानो यदेव किञ्चिन्मन्त्रार्थमभ्यूहति, आर्षं तद्भवति। श्रुतिमति या बुद्धिः सोऽभ्यूहः, तस्यास्तपसा पारमीप्सितव्यम्। तदिदमायुरिच्छता न निर्वक्तव्यम्" (निरुक्त १३।१३) इति।

यस्माद्वेदो विधिप्रतिषेधप्रसव-नियमपरिसंख्यापुनर्वचनपरार्थत्वादतिगहनः, अर्थवादाश्च यथाश्रुतप्रमाग्राहिणो विदुषोऽपि भ्रान्तिहेतवः,

तस्मात् परमदुर्विज्ञानवेदनीयत्वाद् वेदवाक्यानां निरुक्तविद्यामन्तरा सम्यगर्थोऽवगन्तुं न शक्यः। तेन तपोऽन्तरेण पारगमनमशक्यम्। अतपस्विना सर्वथाऽप्यायुरिच्छता निरुक्तशास्त्रमनिर्वक्तव्यम्। अतपस्वी आगमवानपि मलिनान्तःकरणत्वान् न शक्नोति यथावदवबोद्धुम्। ततोऽस्यायुश्छिद्येत।

एतदभिप्रायेणैव—

'यामृषयो मन्त्रकृतो मनीषिण अन्वैच्छन् देवास्तपसा श्रमेण। तां दैवीं वाचं हविषा यजामहे, सा नो दधातु सुकृतस्य लोके' (तैत्ति० २।७।७), 'नमः ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मा मामृषयो मन्त्रकृतो मन्त्रपतयः परादुर्माहमृषीन् मन्त्रकृतो मन्त्रपतीन् परादाम (तै० आ० ४।१।१)। इत्यादीनि ब्राह्मणवाक्यानि सङ्गच्छन्ते।

एतेन —

'इमे सर्वे वेदा निर्मिताः सकल्पाः सरहस्याः सब्राह्मणाः सोपनिषत्काः सेतिहासाः सान्वाख्यानाः सपुराणाः ससंस्काराः सनिरुक्ताः सानुशंसनाः सानुमार्जनाः सवाकोवाक्याः।"

इति (गोपथ २।१) श्रुतिरपि व्याख्याता।

यत्तु—"देवा इह पारोवर्यविदः शुश्रुवांसोऽनूचाना वेदनैव देवानामपि पारोवर्यवित्त्वम्" इत्युक्तम्। तदप्यकिञ्चित्करम्; अविच्छिन्नाचार्यपारम्पर्येण मन्त्रार्थवित्त्वस्यैव पारोवर्यवित्त्वोक्तेः।

यदुक्तम्—"न ह्येषा वाक्यरचना स्वतः सम्भवति, शरीरबुद्धीन्द्रियोपपाद्यत्वात्" इति। तदपि निःसारम्; शरीरबुद्धीन्द्रियोपपाद्यत्वेऽपि स्वातन्त्र्याभावेन पुरुषरचितत्वासिद्धेः। तावन्मात्रेण तत्त्वे तु रघुवंशवाक्यानामस्मदादिकर्तृत्वापत्तेश्च।

परा-पश्यन्तीरूपाणां पौरुषेयापौरुषेयत्वचिन्ता तु निर्विवादत्वात् दूरोत्सारितैव।

किञ्च—'जानाति, इच्छति, अथ करोती'तिरीत्या रचनाया ज्ञानेच्छापूर्वकत्वम्।

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमाद् ऋते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥'

इति वाक्यपदीयरीत्या ज्ञानस्य शब्दानुविद्धत्वं तु प्रसिद्धमेव । अत एव सृष्टेर्ज्ञानपूर्वकत्वेन ज्ञानस्य च शब्दानुविद्धत्वात् परमेश्वरेणापि शब्द-पूर्वकं जगत् रच्यते—'स भूरिति व्याहरत्, तस्माद्भुवमसृजत्', 'वेद-शब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे' इत्यादि-श्रुतिस्मृतिभ्यः । ईश्वरीय-ज्ञानस्य नित्यत्वेन तदनुविद्धानां शब्दानामपि नित्यत्वादपौरुषेयत्वमेव । अनन्तता च 'अनन्ता वै वेदाः' इतिश्रुतेः परादिविभागस्तु वाक्यपदीये—

'वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥
स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा ।
वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना ॥
केवलं बुद्ध्युपादाना क्रमरूपानुपातिनी ।
प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते ॥
अविभागात्तु पश्यन्ती सर्वतः संहृतक्रमा ।
स्वरूपज्योतिरेवान्तःसूक्ष्मा वागनपायिनी ॥"

ननु 'न सोऽस्ति प्रत्ययो लोके ···' इत्ययं सिद्धान्तोऽपि पश्यन्तीमेव अभिलक्ष्य बोद्धव्यः, तत्र शब्दार्थयोरविभक्तत्वात् । विभक्तयोस्तु न्यायसूत्रभाष्यादिदृष्ट्या अन्यथापि निर्वाहसंभवात् । तथा हि तत्रत्यं न्यायभाष्यम्—

'इन्द्रियार्थसन्निकर्षोदुत्पन्नं ज्ञानं रूपमिति वा रस इत्येवं भवति । रूपरसशब्दाश्च विषयनामधेयम् । तेन व्यपदिश्यते ज्ञानं रूपमिति जानीते । तेन शाब्दं प्रसज्यते । अत आह—अव्यपदेश्यमिति । यदिदमनुपयुक्ते शब्दार्थसम्बन्धेऽर्थज्ञानम्, न तन्नामधेयशब्देन व्यपदिश्यते । गृहीतेऽपि च शब्दार्थ-सम्बन्धे 'अस्यायं शब्दो नामधेयमि'ति यदा सोऽर्थो गृह्यते, तदा तत्पूर्वस्मादादर्शात् विशिष्यते । तदर्थविज्ञानं तादृगेव

भवति। तस्य त्वार्थज्ञानस्यान्यः समाख्याशब्दो नास्ति, येन प्रतीयमानो व्यवहाराय कल्पेत। न चाप्रतीयमानेन व्यवहारः, तस्याज्ञेयार्थस्य संज्ञाशब्देनेति करणयुक्तेन निर्दिश्यते—रूपमिति ज्ञानम्, रस इति ज्ञानम्। तदेवमर्थज्ञानकाले स न समाख्याशब्दो व्याप्रियते। व्यवहारकाले तु व्याप्रियते। तस्मादशाब्दमर्थज्ञानमिन्द्रियार्थसन्निकर्षोत्पन्नम्' इति।

सन्निकर्षोत्पन्नज्ञानेऽपि शब्दानुवेधो भवति, परन्तु न तावता तज्ज्ञानस्य शाब्दत्वप्रसङ्गः, शब्दजन्यस्यैव तथात्वादिति। निर्विकल्पे ज्ञाने नैयायिकमतरीत्या शब्दाद्युल्लेखो न भवत्येव। तथापि भवताऽत्रोक्तम्—तत्रापि वा सामान्यशब्दाः केचन व्याप्रियन्त एवेति शिष्टसम्मतः पन्थाः। तेन सूत्र-भाष्यादिविरोधोद्भावनं व्यर्थमेव।

तत्रैव अन्यमतम्—नामधेयव्यपदेश्यत्वस्य नाप्रामाण्यकारणत्वमिति यदि तद्रूपज्ञानं रसज्ञानं च विषयाव्यभिचारि निःसंशयं च स्यात्, तत्कथमप्रमाणफलं स्यात्? व्यभिचारादियोगे वा पदान्तरेण प्रतिक्षेपात् किमव्यपदेश्यपदेन? किन्तु शब्दार्थेषु वृद्धव्यवहारतो व्युत्पाद्यमानो माणवकः संशयावगमसमये संज्ञोपदेशात् 'अयं पनस उच्यते' इति वृद्धोदीरितवाक्यात् पुरोवस्थित-शाखादिमत्त्वमर्थं पनसशब्दवाच्यमवगच्छति। तदस्य ज्ञानमिन्द्रियजमपि न केवलेन्द्रियकारणकम्, असति संज्ञोपदेशिनि शब्दे तदनुत्पादात्। तेन शब्देन्द्रियाभ्यां संभूय जनितत्वात् उभयजमिदं ज्ञानं व्यपदेशाज्जातमिति व्यपदेश्यम्। तत् 'अव्यपदेश्य'पदेन व्यावर्त्यते। न चेदं पञ्चमं प्रमाणमापतति, किन्तु शब्दमेवैतदनुमन्यते लोकः। तथा च कथं 'पनसोऽयमिति विज्ञायते?' इति पृष्टः प्रतिवक्ति—'मम देवदत्तेनाख्यातं पनसोऽयमिति।' नैवं ब्रवीति यत् 'चक्षुषा मया प्रतिपन्नं पनसोऽयमि'ति। तेन शब्द एवात्र कारणम्। अत एव शब्दलक्षणं वर्णयता इन्द्रियानुप्रवेशप्रतिषेधाय न किमपि विशेषणमुपात्तम्। अस्मिन्मतेऽपि शब्दाकारणके शब्दानुविद्धे ज्ञाने न शाब्दत्वं प्रसक्तम्।

अन्ये तु—न लोकव्यपदेशैकशरणा वस्तुस्थितयो भवन्तीति। ततश्च वस्तुस्थित्या नेदमपि ज्ञानं प्रत्यक्षफलमतिवर्तते इति न तद्-व्युदासोऽव्यपदेश्य-पदफलम्। किन्तु वाच्यार्थप्रत्यये वाचकशब्दस्य विषयतया प्रसक्तासंभवदोषवारणाय अव्यपदेश्यपदमाहुः।

'गौरि'त्यादिज्ञानानां शब्दावच्छिन्नवाच्यविषयत्वेन शाब्दत्वात् नेन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं किञ्चिदस्ति, विषयव्यतिरेकेण ज्ञाना-तिशयस्य दुरुपपादत्वात्। नहि 'गौरि'त्यादिकं ज्ञानं शब्दातिरिक्तकारण-जन्यम्। तद्धि नेन्द्रियकरणकम्; चक्षुषो विशेषणाविषयत्वात्, विशेष्ये च श्रोत्रस्यासामर्थ्यात्। न च युगपदिन्द्रियद्वयद्वारकमेकं ज्ञानमुत्पद्यमानं दृष्टं क्वचित्। न च मानसमपि, शब्दलिङ्गादिकरणान्तरव्यापारविरता-वेव तस्य जायमानत्वात्। अन्यथा सर्वमपि ज्ञानं मानसमेव स्यात्। अस्ति चात्र शब्द एव कारणम्। स हि सूर्यवदात्मानं विषयं च प्रकाशयति। तस्मादिन्द्रियजस्यापि ज्ञानस्य शाब्दत्वमेवेति।

न च शब्दस्य तदानीमसत्त्वात् कथं तज्जन्यत्वमिति वाच्यम्; स्मृत्युपारूढस्यैव तत्प्रत्ययहेतुत्वात्। तच्छ्रुतावपि किं सर्वे वर्णाः प्रत्यक्ष-गोचराः, विशेषः कोऽन्त्यवर्णेन गृहीतेन स्मृतेन वा। संज्ञित्वमिति मत्वर्थीयप्रत्ययादुत्पन्नो भावप्रत्ययः सम्बन्धमाचष्टे। तेन संज्ञासंज्ञि-सम्बन्धः संज्ञित्वम्। तथा च शब्दार्थविशिष्टप्रतिभास उक्तो भवति। न च शब्दानुसन्धानरहितः कश्चन प्रत्ययो भवति, 'न सोऽस्ती'ति भर्तृ-हरिवचनात्। अनुल्लिखितशब्दकेष्वपि प्रत्ययेषु सामान्यशब्दसमुन्मेष-संभवात् तदुल्लेखव्यतिरेके प्रकाशात्मिकायाः प्रतीतेरनुत्पादात्। तदेवं प्रत्यक्षस्य लक्ष्यस्यासंभवात् कस्येदं लक्षणमित्यसंभवदोषवारणाय अव्यपदेश्यपदम्। तेन न ज्ञानमात्रस्य शब्दानुविद्धत्वम्।

यदिदम् अविदितपदपदार्थसम्बन्धस्य ज्ञानमुत्पद्यते, विदितसम्बन्ध-स्यापि यत्प्रथमाक्षिसन्निपातसमये ज्ञानं जायते, तदनुल्लिखितशब्दकं शब्दानुस्मरणे हेतुभूतमुपजायते तदशाब्दम्, शब्दावच्छिन्नाविषयकम् अव्यपदेश्यमिन्द्रियार्थसन्निकर्षकरणकमविकल्पं प्रत्यक्षम्। न च शब्द-कृता बुद्धीनां प्रकाशस्वभावता, स्वत एव तासामेवंरूपत्वात्। तदुक्तम्—

'न शब्दाभेदमात्रेण बुद्धिरर्थेषु जायते।
प्राक् शब्दाद्यादृशी बुद्धिः शब्दादपि हि तादृशी ॥'
( श्लोकवार्तिके, १७२ )

न च निर्विकल्पकसमये 'यत्किञ्चिदिदमि'त्यादिसामान्यशब्दोल्लेखः कोऽपि कैश्चिदनुभूयते। तस्माद् गौरित्यादिज्ञानानां शाब्दत्वेऽपि अतथाविधस्य ज्ञानस्य लक्ष्यस्य सद्भावान्न व्यर्थं लक्षणमित्येवमसंभव-दोषनिवारणाय अव्यपदेश्यपदम्।

यद्यपि शब्दाकारणत्व-तदनित्यत्ववादिनां मतरीत्या कथञ्चिदेत-दुपपद्यते, परन्तु—

'अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥'

इतिरीत्या येषां शब्दब्रह्मकारणकत्वं जगतस्तेषां तु प्रत्ययस्य शब्दा-नुवेधः संभवत्येव। यद्यपि घटादेर्मृदनुवेधस्येव न प्रत्ययस्य शब्दानुवेधः संभवति। नहि सर्वत्र प्रत्यये स्पष्टतया शब्दोल्लेखः, तथापि स्थूलस्य शब्दस्यानुपलम्भेऽपि सूक्ष्मस्य तत्रापि सत्त्वात्। अत एव अनवाप्त-शब्दार्थसम्बन्धविशेषव्युत्पत्तयो बाल-मूकादयोऽपि प्रमातारो 'यत् तत् सत् किमि'त्यादिशब्दज्ञानमनुल्लिखन्तो न किमपि प्रतियन्ति। तेन शब्दोन्मेषप्रभावप्राप्तप्रकाशस्य भावत्वमेव सर्वप्रत्ययानाम्, 'न सो-ऽस्ती'ति अभियुक्तोक्तेः।

एवमनभ्युपगमे तु संविदः प्रकाशशून्यतया अनधिगतसर्वविषयः सर्व एव लोकः अन्धमूकप्रायः स्यात्। तदुक्तम्—'वाग्रूपता चेदुत्क्रामे-दि'ति ( वाक्यप० १२५ )। 'न शब्दाभेदरूपेण' इत्यादिवार्तिकं तु शब्दबुद्ध्योर्व्यावहारिकभेदमाश्रित्य बुद्धेः स्वभावभेद उक्तः। योगसूत्र-तद्भाष्यकृताऽपि तदभिप्रायेणैव शब्दप्रत्यययोर्भेद उक्त।

अन्यैस्तु—"गौरि'त्यादिज्ञानस्य इन्द्रियजन्यस्य न शाब्दत्वमिति नासम्भवदोषः। न च शब्दावच्छिन्नोऽर्थः प्रकाशते; करणाभावात्। विशेष्यार्थप्रमितौ शब्दः करणं भवति। विशेषणभूतस्य शब्दस्य ग्रहणे

तु करणाभावः स्पष्ट एव । न च शब्दावच्छिन्नार्थप्रकाशे न श्रोत्रं करणम्; चिरस्य व्यापारासंवेदनात् । नापि मनः करणम ; बाह्ये स्वातन्त्र्येण तदप्रवृत्ते"रिति ।

वस्तुतस्तु—शब्दस्य करणत्वमुक्तमेव ; तस्यैव सहस्रकिरणवत आत्मनो विषयस्य च प्रकाशकत्वसम्भवात् ।

यदप्युक्तम्—"सवितृग्रहणकाले सविता कर्मैव, न करणम्, करण-निरपेक्षस्यैव च चक्षुषो ग्राहकत्वाभ्युपगमात्" इति । तन्न ; घटादिद्रव्य-ग्रहणे चक्षुष आलोकादिसापेक्षत्वेन तत्रापि तदपेक्षाया अनिवार्यत्वात् । अत एव "सूर्यप्रकाशः प्रकाशान्तरनिरपेक्षचक्षुरिन्द्रियेण प्रथमगृहीत-श्चिरमवतिष्ठमानस्तदिन्द्रियग्राह्ये एव विषये करणतामुपयाति । शब्दस्तु क्षणिकः श्रोत्रेन्द्रियग्राह्यः, तदितरपरिच्छेद्ये विषये तदवगमक्रियायां करणीभूय तस्यामेव क्रियायां कथमिव कर्मभावमनुभवेत्" इत्यपि न; ध्वनीनां क्षणिकत्वेऽपि शब्दस्य नित्यत्वाभ्युपगमेन तददोषात् । ध्वनीना-मपि प्रत्यभिज्ञायमानत्वेन न क्षणिकत्वमित्यन्यत्र प्रतिपादितम् ।

यदप्युक्तम्—"उपायत्वाद् धूमादिवत् नोपेयग्रहणकाले पुनर्ग्रहण-मर्हति । स्मर्यमाणोऽपि शब्दो यत्रार्थप्रतीतिकारणं तत्रापि प्रथमं शब्द-स्मरणम् । ततः शब्दार्थसम्प्रयय: । नतरां तत्रार्थप्रतीतिवेलायां शब्दग्रहणं सम्भाव्यते । तस्मान्न वाचकविशेषितवाच्यप्रतिभासः" इति । तदपि न; शब्दानुविद्धज्ञानस्य भासमानत्वेन अनुभवविरुद्धत्वात् ।

यद्यपि गौरिति ज्ञानस्य इन्द्रियार्थसन्निकर्षान्वयव्यतिरेकानुविधा-यित्वेन चाक्षुषत्वमेवोक्तम् ; तथापि शब्दावच्छिन्नार्थप्रकाशस्य उपपा-दनाय मरीच्युदकप्रतीतौ स्मृत्युपारूढोदकस्येव स्मृत्युपारूढस्य शब्दस्य तत्र भानमुक्तम् ।

'यथा चाविषये तस्मिन्नीरे नयनजा मतिः ।
तथा वाचकसंसृष्टे वाच्ये किमिति नेष्यते ॥
यथा च तव कालादि नीरूपमपि चाक्षुषम ।
तथा शब्दानुरक्तोऽपि किमित्यर्थो न चाक्षुषः ॥'

अस्मिन् पक्षेऽपि वाचकावच्छिन्नवाच्यप्रतिभासः स्वीकृत एव ।

'यदि च स्वानुरागेण वाचकाद्वाच्यवेदनम् ।
लिङ्गादपि भवेद् बुद्धिः स्वावच्छेदेन लिङ्गिनि ॥
अत्र धूमान्वितत्वेन न वह्निरवगम्यते ।
इहापि शब्दयोगेन गवादिर्नैव गम्यते ॥
न चास्ति वस्तुनो धर्मो वाच्यता नाम कश्चन ।
यदि स्यान्निर्विकल्पेऽपि प्रतिभासेत रूपवत् ॥
अर्थासंस्पर्शिनः शब्दान् कथयन् दुष्टसौगतः ।
प्रत्यक्षास्त्रेण भेत्तव्यः स कथं हन्यते त्वया ॥
प्रत्यक्षविषये वृत्तिः शब्दानां भवतः कुतः ।
तेषां यद्विषये वृत्तिस्तद्धि शब्दीकृतं त्वया ॥'

इत्यादिविकल्पजालमपि स्वानुभूतिर्ग्रसति । लोके तथाशब्दानुविद्धस्य अर्थस्य सर्वानुभवसिद्धत्वात् ।

यदुक्तम्—"न लोकस्य व्यपदेशैकशरणा वस्तुस्थितयो भवन्ति, यथारुचि लोको व्यपदिशति । नानामुनिजनसाधारणमपि तीर्थं नन्दि-कुण्डमिति व्यपदिशति लोकः" इति । तदपि न; तत्रापि नन्दिनो विशिष्टसम्बन्धमपेक्ष्यैव तथाप्रयोगात् ।

अन्यैस्तु—गौरित्येवमादिबोधेषु वाचकावच्छिन्नवाच्यप्रतिभासे प्रत्याख्याते प्रथमाक्षिसन्निपातसमयोत्पन्ननिर्विकल्पवैलक्षण्यं कथमेषाम् ? न हि विषयातिशयमन्तरेण प्रतिभासातिशयो भवति । दण्डीति दण्ड-विशिष्टः पुरुषः प्रतिभासते । अन्यथा केवलपुरुषप्रतीतेरेषा विशिष्यते । उभयप्रतिभासेऽपि न 'दण्डपुरुषावि'ति प्रतीतिः, विशेषणविशेष्यभावस्य नियामकत्वात् ।

एवम्—'पूर्वापर - चिरक्षिप्र - क्रमाद्यवगमेष्वपि ।
दिक्कालादिविशिष्टोऽर्थः स्फुरत्यतिशयग्रहात् ॥'

इति प्रतीत्यनुरोधेन कालादिविशिष्टोऽप्यर्थो गृह्यते । 'अयं पटः इति प्रत्ययात । 'इह तन्तुषु पटः' इति प्रत्यये वैशेष्यादेव समवायविशिष्टप्रतीते-रपि सभवात् ।

यदुक्तम्—"उपायभेदात् प्रतीतिभेदो भवति, दूराविदूरदेश-व्यवस्थितस्थाएवादिपदार्थप्रतीतिवत् संस्कृतासंस्कृत-करणविषयकबोध-वद्वा" इति। तदपि न ; उपायभेदेऽपि प्रतीतिभेदासिद्धेः। उपायेन बुद्धौ अतिशयो भवति, न विषये। तदवगमसमये च न बुद्धिर्भाति। यत्रातिशयः, सा न भासते। यश्च विषयो भाति, न तत्रातिशयः। दृश्यते चातिशयसंवेदनम्।

न च दूराविदूरविषये प्रतीतिरुपायभेदेन भिद्यते ; तत्रापि विषय-भेदस्यैव सत्त्वात्।

'दूराद्धि वस्तु सामान्यं धर्ममात्रोपलक्षितम्।
अदूरतस्तु विस्पष्टविशेषमवसीयते॥'

'चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम्।
विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः॥'

'क्रियान्तराणां वैचित्र्ये यद्वा तद्वाऽस्तु कारणम्।
भेदो ज्ञानक्रियायास्तु कर्मभेदनिबन्धनः॥' इति।

अन्यैस्तु भवत्येव उपायभेदात्प्रतिभासभेदः। ज्ञानोत्पाद एव विषयस्य प्रत्यक्षता, नादर्शनं न ज्ञानग्रहणम्। तत्र यथा पुरुष इति निरतिशयज्ञान-मात्रोत्पादे तावन्मात्रविषयप्रत्यक्षता, न तत्र ज्ञानं प्रकाशते। अगृह्य-माणेऽपि ज्ञाने विषय एवं प्रतिभासते। एवं दण्डीति शुक्लवासा इति विशेषणज्ञानाभ्युपायवशात् सातिशयप्रत्ययजनने तदग्रहणे स एव विषयो-ऽवभासते। तथा च दण्डीति पुरुषप्रवणैव मतिः, को दण्डी, क पुरुषो दण्डीति सामानाधिकरण्येन निःसन्धिबन्धस्य पुंस एव प्रतिभासात्। 'दण्डिनं भोजय, दण्डिने देही'ति भोजनादिकार्ययोगित्वं न दण्डे दृश्यते, अपि तु पुंस्येव।

न च 'दण्डी पर्वतमारोहती'ति दण्डेऽपि कार्यान्वयो भवति। वेदेऽपि 'दण्डी प्रैषानन्वाहे'त्यत्र विवक्षितमेव विशेषणमिति वाच्यम् ; तथात्वेऽपि प्रतीतेर्विशेष्यप्रावण्यविशेषात्। अन्यथा दण्डपुरुषाविति स्यात्, न दण्डीति, विशेषत्वेनैव तदुपसर्जनत्वनिश्चयात्।

पूर्वापरक्षिप्रादिप्रत्ययाः, 'इह तन्तुषु पट' इत्यादिप्रत्ययाश्च दिक्कालसमवायग्राहिणः। परमेते दिक्कालाद्याः सामग्र्यन्तर्गताः सन्तः प्रत्ययातिशयमादधति, न तद्विषया भवन्ति पटादिद्रव्यवत्। एवं पतनाद्यनुमेयगुरुत्वादिकारणभेदजनिता 'गुरुः पाषाणः' इत्यादिप्रत्ययाः परोक्षविशेषणं विशेष्यमवलम्बन्ते।

तस्माद् गौरित्यादिज्ञानं न वाचकावच्छिन्नवाच्यविषयम्। तेन न शाब्दं तत्। तेनैव च न लक्षणवैयर्थ्यम्। तस्मात् उभयजज्ञानव्यवच्छेदार्थमेव अव्यपदेश्यपदम्।

ननु तदपि प्रत्यक्षमेवेति अनपोह्यमुक्तमिति चेत्? सत्यम्; तथापि यत्र संज्ञिनं निर्दिश्य संज्ञा उपदिश्यते, तत्र शब्द एव कारणमिति लोकप्रसिद्धेरनुभवाच्च।

अन्ये तु—"यदि संज्ञोपदेशवचनजनितस्य उभयजज्ञानस्य व्यवच्छेदकमिदं तदा तद्व्यवहारकालेऽपि संज्ञोपदेशकवचनस्मरणपूर्वकं ज्ञानमुत्पद्यते, तदप्युभयजमेवे"ति। तदप्यनेन व्युदस्तं भवतु। ननु तत्र शब्दस्मरणं कारणं न शब्द इति चेत्; संकेतकालेऽपि तत्स्मरणमेव कारणम्। अन्त्यवर्णे स्मर्यमाणे वा शब्दव्यापारे विशेषाभावात्। तस्मान्न तद्व्यवच्छेदार्थमव्यपदेश्यपदम्, किन्तु शब्दकर्मतापन्नज्ञानव्यवच्छेद एव तत्प्रयोजनमस्तु।

ननु न तदपि नाप्रमाणम, नापि पञ्चममिति चेत्सत्यम्। रूपादिविषयग्रहणाभिमुखं तदक्षजं ज्ञानं प्रमाणं वा फलं वोच्यते। यदा नु तदेव शब्देन उच्यते 'रूपज्ञानं' 'रसज्ञान'मिति, तदा रूपादिज्ञानविषयग्रहणव्यापारलभ्यां प्रमाणतामपहाय शब्दकर्मतापत्तिकृतां प्रमेयतामेवावलम्बते इति न तस्यां दशायां तत्प्रमाणमिति कुतः पञ्चमप्रमाणप्रसङ्गः?

सविकल्पकस्य शब्दसङ्कल्पकस्य शब्दसंसर्गसापेक्षजन्मनः प्रत्यक्षज्ञानस्य शाब्दतां पूर्ववदाशङ्क्य तस्यैवाशाब्दतां दर्शयन् व्यपदेश्यपदेन सूत्रकारः प्रत्यक्षमेव तज्ज्ञानमिन्द्रियान्वयव्यतिरेकानुविधायित्वाद् अव्यपदेश्यमशाब्दमिति प्राह।

अत्र सर्वत्र पक्षेषु प्रत्यक्षादिज्ञाने शब्दाजन्यत्वेन शाब्दत्वाभावेऽपि विषयत्वेन उपायत्वेन वा शब्दस्फुरणमुपेतमेव। निर्विकल्पप्रत्यक्षज्ञाने यद्यपि नैयायिकैः शब्दोल्लेखो नोपेयते; तथापि यत्-तत्-सत्-किमादि-शब्दोल्लेखस्य शिष्टसम्मतत्वमिति वैदिकविज्ञानवादिनाऽभ्युपेतमेव। शब्दस्य कारणत्वादपि तदनुवेधः सर्वत्र उपपन्नः।

शब्दार्थयोः पूर्वं विशुद्धार्थज्ञानम्, तदनु शब्दस्मरणमिति न्याय-दर्शनस्य प्रत्यक्षलक्षणसूत्रे वात्स्यायनेन शब्दार्थप्रविभागसंयम-सूत्रभाष्ये च योगभाष्यकृता स्पष्टमुद्घुष्टमिति चेत्। सत्यम्; अत्र न्यायमञ्जरी—

'शब्दानुप्रवेशवशेन व्यपदेश्यं ज्ञानं जायते इति तद्व्यवच्छे-दार्थं प्रत्यक्षलक्षणे अव्यपदेश्यपदं निवेशितम्। यज्ज्ञानमि-न्द्रियार्थसन्निकर्षादुत्पन्नं सद्विषयनामधेयेन व्यपदिश्यते 'रूपज्ञानं रसज्ञानमि'ति, तद्व्यपदेश्यं ज्ञानं प्रत्यक्षफलं मा भूदित्यव्यपदेश्यपदग्रहणम्" इति।

न च ऋषीणां ज्ञानं बालमूकादिसदृशम्, किन्तु सविकल्पमेव तत्, निर्विकल्पस्य व्यवहारायोग्यत्वात्। ततश्च मध्यमायामपि वाचि ऋषीणां दैवतादिविज्ञानेन ईश्वरप्रत्तेन सह ईश्वरप्रत्ता एव शब्दा आविर्भूताः। त एव शब्दा वैखर्यां तैः प्रकटिताः। तावताऽपि न पौरुषेयत्वं सिद्ध्यति।

यदुक्तम्—"समाहितैर्ऋषिभिर्वेदा दृष्टा इति श्रूयते स्मर्यते च। समाधौ च निर्विकल्पकमेव ज्ञानं भवति, न तत्र शब्दानुवेधप्रत्याशा" इति। तन्न; सविकल्पे समाधावेव तत्साक्षात्कारसंभवः, शब्द-विशेषरूपाणां वेदानां निर्विशेषत्वाभावात्।

ननु तथात्वेऽपि तद्विज्ञानं परिशील्य स्वाभिप्रायेण स्वीयाः शब्दा मन्त्रादिरूपेण तैरुपनिबद्धाः, विज्ञानसहभुवस्त एव वा शब्दा इति विवाद-स्थानमस्त्येव। न च वर्णनित्यत्वेन पदस्फोट-वाक्यस्फोटसाधनेन वाऽयं विवादः शमयितुं शक्यः; वर्णानां नित्यत्वेऽपि तदानुपूर्वीघटनायां पुरुषप्रयत्नापेक्षणात्। पदवाक्यादिस्फोटेऽपि तदभिव्यञ्जकप्रथमध्वनि-

कर्तुरेव तत्तन्निबन्धग्रन्थादिकर्तृताया अभ्युपगन्तुं शक्यत्वात्। अन्यथा रघुवंशादिकाव्यादीनामपि अपौरुषेयत्वापत्तिः स्यादिति चेन्न। रघुवंशकाव्यादीनां प्रथमोच्चरितत्वेन पूर्वानुपूर्वीसापेक्षोच्चरितत्वाभावेन पौरुषेयत्वेऽपि वेदे तदभावेनापौरुषेयत्वात्। वेदानुपूर्व्याः सङ्घटने अद्यापि पुरुषप्रयत्नो भवत्येव। तावतापि न तदुच्चारयितॄणां कर्तृत्वम्, पूर्वानुपूर्वीसापेक्षोच्चारयितृत्वात्। अत एव ज्ञानसहभुवामेव शब्दानामुपदेशो युक्तः, न स्वीयानां शब्दानां तत्र सन्निवेशः, मानाभावात्।

यदुक्तम्—'निरुक्तदैवतकाण्डोक्तरीत्या शपथाभिशापपरिदेवनादिश्रवणात् विपत्प्रतीकाराशंसाश्रवणात् ब्राह्मणे परवृत्तिपुराकल्पश्रवणात् अग्रे दर्शयिष्यमाणशब्दविवरणपरामर्शाच्च स्वीया एव शब्दा ऋषिभिर्निबद्धाः" इति। तदपि न; निरुक्तरीत्याऽपि वेदानां स्वयम्भूत्वनिर्धारणेन मन्त्रद्रष्टृत्वस्यैव ऋषित्वप्रयोजकत्वनिर्धारणेन च मन्त्रनिर्मातृत्वासंभवेन अपौरुषेयत्वस्य अव्याहतत्वात्।

वस्तुतस्तु निरुक्तादिरीत्याऽपि मन्त्रदर्शनमेव संभवति, न धर्मदर्शनं तस्यात्यन्तमपूर्वत्वात्। मन्त्राणां दर्शनमपि सम्प्रदायान्तरे विद्यमानानामेवाभ्युपेयते। अन्यथा दृष्ट्वा कृत्वा वा मन्त्रा उपदिष्टा ऋषिभिरिति शङ्कासंभवात्।

यदुक्तम्—'बुद्धिपूर्वा वाक्यकृतिर्वेदे', 'ब्राह्मणे संज्ञाकर्मसिद्धिर्लिङ्गम्' इति वैशेषिकसूत्रैरपि वेदस्येश्वरकृतत्वं सिद्ध्यति।" एवं "ब्राह्मणेषु देवादिसंज्ञा उपलभ्यन्ते, तदपि बुद्धिमन्तरेण न सिद्ध्यति। तदपि ईश्वरकृतत्वे लिङ्गम्।"

यदप्युक्तम्—'ईश्वरसाधनस्य प्रसक्त्यभावादपौरुषेयत्वखण्डन एव महर्षेस्तात्पर्यम्। तेन पुरुषबुद्धिकृतत्वमेव सिद्ध्यति। ब्राह्मणानाम् ऐतरेयम्, शाङ्खायनम्, तैत्तिरीयम्, काठकम्, इत्यादीनि नामान्यपि पुरुषसम्बन्धं साधयन्ति" इति।

तन्न; वेदवाक्यानां परमेश्वरबुद्धिपूर्वकत्वेऽपि पूर्वानुपूर्वीसापेक्षत्वेन पौरुषेयत्वासिद्धेः। ईश्वरवत् अनादिसिद्धस्य वेदस्य प्रतिकल्पमीश्वरेण

पूर्वानुपूर्वीसव्यपेक्षानुपूर्वीनिर्माणेन उपदेशसंभवात्। न च पुरुषबुद्धिपूर्वकत्वं संभवति ; 'वेदे' इति विशेषणस्य परमेश्वरसिद्ध्यर्थमेवोपादानात्। गुणवद्वक्तृकत्वेन वैशेषिकैः शब्दप्रामाण्याभ्युपगमेन ईश्वरसिद्धेः प्रसङ्गोपात्तत्वात्।

किञ्च—'तद्वचनादाम्नायस्य प्रामाण्यमि'ति सूत्रे स्पष्टमीश्वरवचनादेव आम्नायस्य प्रामाण्यमुक्तम्। न च तत्रापि तत्पदेनान्यो ग्रहीतुं शक्यः ; अन्यस्याप्रकृतत्वात्। न चेश्वरोऽपि अप्रकृतः ; 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इत्यादौ परमेशस्य तत्पदार्थत्वोक्तेः, तत्त्वमस्यादौ च तत्पदार्थः परमेश्वरः प्रसिद्ध एव।

न च अलौकिकसाध्यसाधनबोधकवाक्यात्मकेषु वेदेषु ब्राह्मणगतदेवादिसंज्ञासु च पुरुषबुद्धिपूर्वकत्वं सम्भवति, अतीन्द्रियज्ञानस्य निराकरणात्, सम्भवे वा बौद्धादिवाक्यानामपि प्रामाण्यापत्तेः।

किञ्च—यदि ऐतरेय-काठकादि-संज्ञादर्शनेन पुरुषसम्बन्धः साध्यते, तर्हि शाकल-संहितादीनामपि तत्संभवत्येव। यदि तत्र संग्रहकर्तृत्वेन तत्संज्ञा, तर्हि 'समाख्या प्रवचनादि'ति जैमिनिसूत्ररीत्या प्रवचनेन ऐतरेयादिसंज्ञाया अपि उपपत्तिः संभवत्येव।

यदप्युक्तम्—"पाणिनिनाऽपि 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' (४।२।१०५) इति सूत्रे ब्राह्मणेषु विशिष्य पुराणप्रोक्तत्वं नवीनप्रोक्तत्वञ्च उक्तमि"ति। तन्न ; मन्त्रेष्वपि—

'अग्निः पूर्वेभिर्ऋषिभि' स ईड्यो नूतनैरुत।'

इति पुराणत्व-नवीनत्वादिश्रवणाविशेषात् द्रष्टॄणां पुराणत्वादिना मन्त्रब्राह्मणेष्वपि पुराणत्वाद्युपचारसंभवात् ऋषीणामेव अन्योन्यापेक्षया प्राचीनत्व-नवीनत्वादिकं सङ्गच्छते। वेदवाक्यानां प्रथमोच्चारणासिद्ध्या तल्लक्षणनिर्माणापेक्षया प्राचीनत्व-नवीनत्वासिद्धेः। अस्मदाद्युच्चारणापेक्षया तु अल्पकालव्यवहितानां नवीनत्वम्, अधिककालव्यवहितानां च प्राचीनत्वम्।

किञ्च—वेबरप्रभृतिभिर्बाह्यैः 'हिरण्यगर्भः समवर्तताग्रे' इत्यादौ अग्रेपदस्य समवर्ततेति लङ्-लकारस्य च प्रयोगं दृष्ट्वा वेदानां सादित्वं तर्कितम्। तदसत्; वेदे लङादिनां कालसामान्ये विधानात्।

वस्तुतस्तु—लोकेऽपि वक्तुरभिप्रायेणैव लङादयो भवन्ति। अत एव भूताद्यतनपरोक्षार्थेष्वपि लुङ्प्रयोगः। 'अभून्नृपो विबुधसखः', 'व्यातेने किरणावलीमुदयनः' इत्यादौ परोक्षत्वाभावेऽपि लिट्-प्रयोगः। 'वारिदस्तृप्तिमाप्नोति' इत्यत्र न लटो वर्तमानकालोऽर्थः। तृप्तिजलदानयोः कार्यकारणभावबोधने वाक्यस्य तात्पर्यात्। माघमासेऽपि 'शरदि पुष्पन्ति सप्तच्छदाः' इति लट्प्रयोगो भवति। अत एव 'छन्दसि लुङ्लङ्लिटः' इति येष्वर्थविशेषेष्विमे विहितास्तेभ्यो भिन्ने कालसामान्ये छन्दसि भवन्ति। 'देवो देवेभिरागमत्' 'शङ्कलाङ्कोऽकरत्' 'इदं तेभ्योऽकरन्नमः' 'अग्निमद्य होतारम् वृणीतायं यजमानः' 'अद्याममार' इत्याद्युदाहरणानि।

एतेन स्पष्टमिदं यत्पाणिनिरपि वेदापौरुषेयत्वाभिप्रायेणैव भूतकालबोधकानां लुङादीनां विषये विशेषतो निर्दिशति। यतो ह्येषां भूतकालार्थत्वे वेदरहितकालोऽपि संदिह्येत, यदपेक्ष्य वेदात्पूर्वकालो भूतकालत्वेन व्यपदिश्येत। निष्ठाप्रत्ययस्य अग्रे-पुरा-पूर्वादिशब्दानां चापि वेदे कालसामान्यमेवार्थः। वेदोक्तवृत्तेष्वेव अन्योऽन्यापेक्षया पूर्वकालो वाऽर्थस्तेषाम्।

प्रातिशाख्ये 'लौकिकानामर्थपूर्वकत्वादि'ति कात्यायनेनापि लौकिकवाक्यानामर्थपूर्वकं निर्माणमुक्तम्, न वेदे। तत्र त्वर्थस्यैव शब्दपूर्वकत्वमुक्तम्, 'शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्' इति ब्रह्मसूत्रादिभिस्तत्सिद्धान्तस्य सिद्धत्वात्। काठकम्, कालापकमित्यादिसमाख्यायास्तु 'आख्या प्रवचनात्' इति सूत्रेण महर्षिणा जैमिनिनैव प्रवचनेन उपपत्तिः कृता।

यदप्युक्तम्—"तेन प्रोक्तम्' (४।३।१०१) इति सूत्रभाष्ये महाभाष्यकृता पतञ्जलिना 'ग्रामे ग्रामे काठकं कालापकं प्रोच्यते, न तत्र प्रत्ययो

दृश्यते' इत्यादिना प्रवचनमूलकं समाधानं निराकृतम्। तदग्रे च 'कृते ग्रन्थे' इति सूत्रेणैव काठकादिशब्दानां सिद्धिं प्रदर्शयता तेनैव 'ननु चोक्तं नहि छन्दांसि क्रियन्ते' इति शङ्कित्वा 'यद्यप्यर्थो नित्यः, या त्वसौ वर्णानुपूर्वी सा अनित्या, तद्भेदाच्चैतद्भवति काठकम्, कालापकम्, मौदकम्, पैप्पलादम्' इति समादधता नित्यमर्थमुपलभ्य शब्दसमूहरूपा मन्त्रा ऋषिभिर्निर्मिता इति सिद्धान्त एवाङ्गीकृतः। 'महाप्रलयादिषु वर्णानुपूर्वीविनाशे पुनरुत्पद्य ऋषयः संस्कारातिशयात् वेदार्थं स्मृत्वा शब्दरचनां विदधति' इति कैयटः। अंशेन वेदस्य नित्यत्वमङ्गीकृत्य अंशेनानित्यत्वमिति नागेशोऽपि इममेव सिद्धान्तं समर्थयती"ति।

तदपि निःसारम्; वर्णनित्यत्ववादिभिरपि आनुपूर्व्या अनित्यत्वाभ्युपगमेन महाभाष्यादिविरोधाभावात्। न च तावताऽपि पौरुषेयत्वम्, अनित्यत्वेऽप्यानुपूर्व्या नियतत्वाभ्युपगमात्। 'वर्णानुपूर्वी खल्वाम्नाये नियता अस्य वामदेवशब्दस्ये'ति महाभाष्यात्। तथा हि—यथा नर्तकेन शिक्ष्यमाणा नर्तकी नर्तकस्य गात्रविक्षेपादिकमनुकरोति, तथैव अध्येतारोऽध्यापयितॄणां पदवाक्याद्यानुपूर्वीनिर्माणमनुकुर्वन्ति। दृष्टान्ते यथा अनुकरणेऽपि नर्तकगात्रविक्षेपाद्भिन्न एव नर्तकीगात्रविक्षेपः, तथैवाध्यापयितृनिर्मितया आनुपूर्व्या भिन्नैव शिष्यनिर्मिताऽऽनुपूर्वी। एवमानुपूर्व्या अनित्यत्वं वर्णानित्यत्वतन्नित्यत्ववादिनां मते समानम्। केवलं पुरुषस्वातन्त्र्य-तदस्वातन्त्र्ययोरेव विप्रतिपत्तेः।

वैदिकैस्तु वेदे आनुपूर्व्या निर्माणेऽपि पुरुषस्य अस्वातन्त्र्यमेवेष्यते। तदुक्तं भट्टपादैः—

'यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता।' इति।

सृष्टिप्रलयाभ्युपगन्तृभिर्वेदान्तिभिरपि पुरुषपारतन्त्र्यमुपेयत एव। ईश्वरेणापि पूर्वकल्पीयानुपूर्वीमनुसृत्यैव उत्तरकल्पीयानुपूर्वी निर्मीयते। तत एवानित्याऽपि सा नियतैव। इदमेव च नित्यत्वं वेदानाम्। एवञ्च सति 'या त्वसौ वर्णानुपूर्वी साऽनित्या' इति महाभाष्यं क्व विरुद्ध्यते? वर्णानां नित्यानां विभूनां देशतः कालतो वा पौर्वापर्यासंभवेन वर्णव्यक्तीनामनित्यानामेव तत्सम्भवेन तस्या अनित्यत्वे विरोधाभावात्,

नृत्तानुकरणवद् गुरुशिष्याद्युच्चारयितॄणां भेदेनानुपूर्वीणां भेदाभ्युपगमेऽपि साजात्यमस्त्येव। एकानुपूर्वीकवर्णसमुदायव्यञ्जकत्वमेव उच्चारणानामन्योन्यसाजात्यम्। तथा सति काठकादिषु कठादिकृतत्वेऽपि फलतः प्रवचनकर्तृत्वमेव, प्रथमोच्चारणस्यासिद्धत्वात्। वेदे सर्वेषामेवोच्चारणानां पूर्वपूर्वोच्चारणसापेक्षत्वेन स्वातन्त्र्याभावेन अपौरुषेयत्वसिद्धेः स्फुटत्वात्। विस्तरस्तु उपरिष्टाद् भविष्यति।

न चैवंविधस्य कर्तृत्वस्य सर्वेषामेवोच्चारयितॄणां संभवात् सर्वत्र प्रत्ययो भवेत्। तथा च काठकं कालापकमिति समाख्या कथं प्रसिद्ध्यतीति वाच्यम्; वैशेष्यात् तद्वदन्यायेन विशिष्टप्रवक्तृत्वेन काठकादिसमाख्याया उपपत्तेः। यथा वा देवदत्त-यज्ञदत्ताद्यनेकपुरुषाणां मातृत्वे समानेऽपि 'देवदत्तमाते'ति समाख्या प्रसिद्ध्यति, तथैव काठकादिनाम्ना समाख्या प्रसिद्धा। प्रतिकल्पं वा सुप्तप्रतिबुद्धन्यायेन तपस्यया वा कठादिभिः शाखां दृष्ट्वा प्रवचनं कृतमिति तन्नाम्ना समाख्योपपत्तिः। अश्वकर्णादिवद् वा शब्दार्थानपेक्ष्यैव तत्समाख्योपपत्तेः। 'मन्त्रकृद्भ्यः मन्त्रकृतः' इत्यादिमन्त्राश्च लौकिकाध्ययनमन्तरा तपस्यया मन्त्रान् दृष्ट्वा ऋषयः तेषामानुपूर्वीं निर्मितवन्त इत्यस्यैवार्थस्य बोधकाः। तथात्वेऽपि न तेषां प्रथमोच्चारयितृत्वरूपं कर्तृत्वं पूर्वसिद्धानुपूर्वीसापेक्षत्वेन तत्र स्वातन्त्र्याभावात्। पूर्वोक्तरीत्या वर्णानुपूर्वीणां तत्तद्गुरुशिष्याद्युच्चारयितृभेदेन कृतत्वेऽपि नियतत्वादनादिकालात् प्रवाहाविच्छेदेनैकरूपतैव। पुरुषस्वातन्त्र्याभावान्न तत्र व्युत्क्रमः। पुरुषस्वातन्त्र्ये तु 'वर्णानुपूर्वी खल्वाम्नाये नियता' इति भाष्यमसङ्गतमेव स्यात्। 'अस्य वाम'- इति मन्त्रे एव आनुपूर्वी नियतेति न भ्रमितव्यम्; उक्तमन्त्रस्य निदर्शनमात्रत्वात्, न्यायस्य तुल्यत्वात्। कैयटादिवचनान्यपि आनुपूर्वीनैयत्यानुकूल्येन नेयानि।

यदुक्तम्—'कदाचिदनीदृशं जगदिति मन्यमानाः श्रुतं स्मृतञ्च प्ररोचनार्थत्वेनाप्रमाणं कथयन्तो मीमांसकाः साधयन्तु नाम वर्णानुपूर्वीनित्यताम्। श्रुतिपुराणाद्युक्त-सृष्टिप्रलयादिक्रमे विश्वसतां शिष्टानां

न इतोऽन्या युक्त्यभ्युपेता प्रक्रिया संभवति यत् 'कल्पादावाविर्भूता ऋषय एव ईश्वरप्रसादेन तत्तज्ज्ञानमुपलभ्य मन्त्रादीन् विरचयन्ती''ति। तदपि चित्रम्; पूर्वोत्तरमीमांसकानामेव वेदविचारे शिष्टैः प्रामाणिकत्वाभ्युपगमात्। अपौरुषेयवेदानभ्युपगमेन ईश्वर-तत्प्रसाद-तज्ज-मन्त्रार्थसाक्षात्कारासिद्धेश्च।

'पद-वाक्यप्रमाणपारावारीणे'त्यादि-शब्दावलिराचार्येषु पण्डितप्रकाण्डेषु च प्रयुज्यते। तत्र पदशब्देन व्याकरणशास्त्रं गृह्यते। वाक्यशब्देन वेदविचारात्मिके पूर्वोत्तर-मीमांसे गृह्येते। प्रमाणशब्देन च न्यायवैशेषिकशास्त्रे गृह्येते। तत्र वैदिकविज्ञानवादिभिः वाक्यशास्त्रे पूर्वोत्तरमीमांसे उपेक्ष्य वेदविचारे न्यायवैशेषिकमते गृह्येते। अन्ते ते अप्युपेक्ष्येते। नैयायिकैर्वैशेषिकैः पौरुषेयत्ववादिभिरपि—

'तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे।'

इत्यादिमन्त्ररीत्या वेदानां परमेश्वरकर्तृकत्वमास्थीयते। विज्ञानवादिभिस्तु जीवकर्तृकत्वमङ्गीक्रियते। तावताऽपि आस्तिकत्वं शिष्टत्वञ्च स्वात्मन्यपि स्वात्मन्येव च मन्यते। नहि प्ररोचनापरत्वं वेदवाक्यानां न संभवति। 'प्रजापतिरात्मनो वपामुदखिददि'त्यादिवाक्यानां नैयायिकादिभिरपि तथात्वाभ्युपगमात्।

वस्तुतस्तु—विज्ञानवादिभिरेव श्रुतं स्मृतञ्च वेदानां नित्यत्वं परमेश्वरादाविर्भूतत्वञ्च अप्रमाणीकृत्य तेषां जीवकर्तृकत्वमास्थीयते। तस्मात् वेदविचारे वाक्यशास्त्राश्रयणमेव युक्तम्। न्याय-योगादिमतस्यापि वेदविरुद्धांशस्त्याज्य एव। तत एव उत्तरमीमांसायां 'ईक्षतेर्नाशब्दम्', 'एतेन योगः प्रत्युक्तः', 'महद्दीर्घवद्वा' 'ह्रस्वपरिमण्डलाभ्यामि'त्यादिभिः सांख्य-योग-न्यायादिमतानां वेदविरुद्धांशाः खण्डिताः।

यदप्युक्तम्--"अस्मर्यमाणकर्तृकत्वाद् अपौरुषेयत्वं शब्दरचनात्मकानां वेदानां साधयन्ति मीमांसकाः। तत्र आख्यायाः प्रवचनजन्यत्वे अङ्गीकृते अस्मर्यमाणकर्तृकत्वम्, ततश्च अपौरुषेयत्वसिद्धिः, सिद्धे चापौरुषेयत्वे आख्यायाः प्रवचनजन्यत्वनिश्चय इति चक्रकमपि दुरुद्धर-

मापतती"ति। तत्तुच्छम्; स्मरणाभावादेव अस्मर्यमाणकर्तृकत्वस्य सिद्धेः निष्प्रत्यूहत्वात्।

न च समाख्यया कर्तृस्मरणम्; तस्या अन्यथासिद्धत्वात्। शाकलादि-समाख्यायाः संग्राहकत्वेन भवताऽप्यभ्युपगमात्। न च समाख्यया कर्तृसिद्धिः; तस्याः सम्बन्धमात्रसाधकत्वात्। सम्बन्धश्च अध्ययन-प्रवचनरूपोऽपि सम्भवत्येव। न स कर्तृस्मरणमपेक्षते, 'तेन प्रोक्तमि'ति प्रवचनार्थेऽपि प्रत्ययविधानात्।

किञ्च—अनन्यथासिद्धस्यैव स्मरणस्य अस्मर्यमाणकर्तृकत्वे बाध-कत्वम्। समाख्याया अन्यथासिद्धत्वात् कुतोऽनन्यथासिद्धत्वं स्मरणस्य ?

किञ्च—'वाचा विरूपनित्यया', 'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा', 'अत एव च नित्यत्वम्' इति श्रुति-स्मृत्यादिभिर्वेदस्य नित्यत्वमपौरुषेयत्वं च सिद्धमेवेति क चक्रकादिकम् ?

न च 'तस्माद् यज्ञात् सर्वहुत ऋचः' इति परमेश्वरादुत्पत्तिरपि श्रुता वेदस्य; सम्प्रदायप्रवर्तनपरत्वेन तदुपपत्तेः। श्रुतिस्मृत्यादिप्रामाण्या-भ्युपगन्तृणां कृते स्पष्टमपौरुषेयत्वं सिद्धमेव। तथा चाह पराशरः—

'न कश्चिद्वेदकर्ता स्याद् वेदं स्मृत्वा चतुर्मुखः।
तथैव धर्मान् स्मरति मनुः कल्पान्तरान्तरे॥' इति।

मत्स्यपुराणेपि—

'अस्य वेदस्य सर्वज्ञः कल्पादौ परमेश्वरः।
व्यञ्जकः केवलं विप्रा नैव कर्ता न संशयः॥' इति।

तथा चानुपूर्व्याः कृतत्वेऽपि तत्परिवर्तने न कस्यचिदधिकार इति दर्श-यितुमेव महाभाष्यकारस्तस्या नियतत्वमाचष्टे। बादरायणोऽपि तदभि-प्रायेणैव परमेश्वरस्य शास्त्रयोनित्वमभ्युपगम्यापि 'अत एव च नित्यत्वमि'ति वेदस्य नित्यत्वमाह।

किञ्च—विज्ञानवादिभिर्यत्र तत्र वेदस्य स्वतःप्रामाण्यमभ्युपेतम्, तदपि न सङ्गतम्; पौरुषेयवाक्यस्य गुणवद्वक्तृकत्वेनैव प्रामाण्य-स्वीकारात्। पौरुषेयवाक्येषु पुरुषाश्रितभ्रमादिसंभवेन अप्रामाण्यशङ्का-स्कन्दितत्वात्।

क्वचित् क्वचिन्मीमांसकानामाशयमज्ञात्वैव अशुद्धस्तत्सिद्धान्तानुवादः कृतः। मीमांसकानां त्वत्र सर्वथा अन्य एवाभिप्रायः। अवश्यस्मरणीयत्वे सति कर्तुरस्मर्यमाणत्वेन वेदानामपौरुषेयत्वं सिद्ध्यति। न च जीर्णकूपादीनामवश्यस्मर्तव्यता विद्यते; स्मरणमन्तराऽपि तत्कार्यसिद्धेः। न च तथा 'वृद्धिरादैजि'ति वृद्ध्यादिव्यवहारस्य पाणिन्यादिस्मरणमन्तरा उपपत्तिर्भवतीति। तस्मात्तत्रावश्यस्मर्तव्यता विद्यते। वेदार्थानुष्ठानप्रवृत्त्यादौ तदाप्तकर्ता तद्वदेवावश्यं स्मर्तव्यो भवति। तत्स्मरणमन्तरा तदर्थानुष्ठाने प्रवृत्त्यसंभवात्।

यदुक्तम्—"अथ यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति' (नि० ७।१), 'एवमुच्चावचैरभिप्रायैर्मन्त्रदृष्टयो भवन्ति' (नि० ७।३), तयोर्भासोः संसङ्गं दृष्ट्वैवमवक्ष्यत्' (नि० ७।२३), 'त्रितं कूपे अवहितमेतत्सूक्तं प्रतिबभौ। तत्र ब्रह्मेतिहासमिश्रमृङ्मिश्रं गाथामिश्रञ्च भवति' (नि० ४।६), 'उपदेशाय ग्लायन्तो अवरे बिल्मग्रहणाय इमं ग्रन्थं समाम्नासिषुः' इत्यादिभिर्मन्त्राणामृषिकृतत्वं ज्ञायते" इति। तन्न; उपर्युक्तवचनैः ऋषीणां मन्त्रकर्तृत्वासिद्धेः।

'यत्काम ऋषिरि'त्यस्यायमर्थः—यद्वस्तु कामयमान ऋषिर्यस्यां देवतायामभिष्टुतायामार्थपत्यमात्मन इच्छन् 'अमुष्या देवतायाः प्रसादेन अहममुष्यार्थस्य अधिपतिर्भविष्यामि' इति बुद्धिं पुरोधाय स्तुतिं प्रयुङ्क्ते, तद्दैवत एव स मन्त्रो भवति। 'ऋषिर्दर्शनादि'त्युक्तत्वाद् विद्यमानानामेव मन्त्राणां द्रष्टारो भवन्ति। तेन ऋषिरेव जानाति केन मन्त्रेण कस्या देवताया सम्बन्ध इति। तेन मन्त्रेण तस्यां देवतायां स्तुतायाममुष्यार्थस्य सिद्धिर्भवतीति। अन्यथा पृथग्जनोऽपि विभिन्नकामनया नानादेवतानां स्तुतिं प्रयुक्ते, ताः स्तुतयोऽपि मन्त्रा भवेयुः। तस्मादनेन मन्त्रेण स्तुता सतीयं देवता इदं फलं दातुं समर्थेति ज्ञात्वा ऋषिर्येन मन्त्रेण यत्कामनया यस्या देवतायाः स्तुतिं प्रयुङ्क्ते, तस्य मन्त्रस्य सा देवता भवति। नैतेन मन्त्रकर्तृत्वमृषीणां सिद्ध्यति। यदि च देवतादि-

प्रसादाद्विशिष्टज्ञानेन स्तुतिं प्रयुङ्क्त इति विवक्षितम्, तदा देवताप्रसादात् प्राप्तेन मन्त्रेण स्तुतिं प्रयुङ्क्ते इत्येव ग्रहणमुचितम्।

यदुक्तम्—"न कामना पुरुषविशेषस्यैव भवति। तेन ईश्वरप्रोक्तता अपौरुषेयता च नोपपद्यत इति। तन्न; कामनायाः पुरुषविशेषाश्रयत्वेऽपि कामपूरकस्तुतिनिर्माणस्य तदनधीनत्वात्। दृश्यन्तेऽद्यापि तत्तत्कामनया स्वतःसिद्धैरन्यनिमित्तैर्वा वैदिकैस्तान्त्रिकैश्च मन्त्रैस्तास्ता देवताः स्तुवन्तः सकामा जनाः।

बौद्धार्हतादितन्त्रेष्वपि निष्कामबुद्धादिनिर्मिता मन्त्राः सकामैस्तत्तत्कामनया प्रयुज्यन्ते। नहि सकामानां स्तावकत्वे स्तुतिवचनान्यपि तन्निर्मितानीति निश्चेतुं शक्यते।

अत एव 'एवमुच्चावचैरभिप्रायैर्मन्त्रदृष्टयो भवन्ती'त्येवोक्तम्, न तु मन्त्रकृतय इति। ऋषीणामभिप्रायैर्मन्त्रदर्शनं भवति। व्याख्यतश्चैतद् दुर्गाचार्येण—

'एवमनेन प्रकारेण उच्चावचैरभिप्रायैः बहुभिः अथवा प्रकृष्टाप्रकृष्टमध्यमैर्मन्त्राभिव्यक्तिनिदानभूतैः ऋषीणां दृष्टयो भवन्ति, मन्त्रदर्शनानि भवन्ति। विद्यमानानामेव मन्त्रणामृषयो येन केनचिन्निमित्तेन निदानभूतेन हर्ष-शोक-निन्दा-प्रशंसादिना मन्त्राणां द्रष्टारो भवन्ति, न तु कर्तार इत्यभिप्रायः।'

तदेवम् अनादिमन्त्राणामृषयो द्रष्टारो न कर्तार इति।

तास्त्रिविधा ऋचः—परोक्षकृताः, प्रत्यक्षकृताः आध्यात्मिक्यश्च। ऋच एव आततरामपिहितार्थाः, न तथा यजूंषि। तासु विदितासु तानि विदितानि भवन्ति। परोक्षकृताः ऋचः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते, प्रथमपुरुषैश्च आख्यातस्य। यथा—

'इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रमिद्गाथिनो…' इत्यादिप्रत्यक्षकृताः मध्यमपुरुषयोगात्। त्वमिति चैतेन सर्वनाम्ना—'त्वमिन्द्र बलादधिविन इन्द्रमृधो जहि' इति। क्वचित् प्रत्यक्षकृताः स्तोतारः, परोक्षकृतानि च स्तोतव्यानि—'माचिदन्यद्विशंसत कण्वा अभि प्र गायतोषप्रेत। कुशिकाश्चेतयध्वम्' इति।

उत्तमपुरुषेण युक्ता आध्यात्मिक्यो यथा—

'अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि सञ्जयामि शश्वतः ।
मा हवन्ते पितरं न जन्तवो अहं दाशुषे विभजामि भोजनम् ॥' इति ।

वसुनः=धनस्य, पूर्व्यः=प्रथमः पतिः, साम्प्रतमप्यहमेव पतिः । अहमेव च शत्रुभ्यः सकाशात् समस्तानि धनानि जयामि, शश्वतो नित्यकालमेव । किञ्च—मामेव हवन्ते=आह्वयन्ति, पितरं न=पितरमिव तासु तासु आर्तिषु, जन्तवो मनुष्याः । किञ्च—अहमेव दाशुषे=दत्तवते हवींषि यजमानाय विभजामि, यथार्हं भोजनं धनमित्यर्थः ।

शपथाभिशापयोः उदाहरणम्—'अद्यामुरीय यदि यातुधानो अस्मि...' इति । वशिष्ठः किल राक्षसमित्यभियुक्तः । सोऽनया ऋचा शपथं प्रतिपेदे, परञ्चाभिशशाप—

'अद्यामुरीय यदि यातुधानोऽस्मि, यदि वायुस्ततप पुरुषस्य ।
अधा सवीरैर्दशभिर्वियूया यो मा मोघं यातुधानेत्याह ॥'

( ऋ० सं० ७ । १०४ । १५ )

अद्यैवाहं म्रिये यदि यातुधानः स्याम् । यदि वाम आयुः ततप तप्तवानहं कस्यचिदपि पुरुषस्य । अथ यदि पुनरयातुधानमेव मां सन्तं यो मोघमनृतं यातुधानस्त्वमित्याह, स वीरैः दशभिः वियूयाः वियुज्यतामित्यभिशापः ।

अथापि परिदेवना कस्मात् ? चिह्नावात् ।

'सुदेवो अद्य प्र पतेदनावृत् परावतं परमा गन्तवा उ ।
अथाशयीत निर्ऋतेरुपस्थेऽथैनं वृका अद्युः ॥'

( ऋ० सं० १० । ९५ । १४ । )

पुरुरवस आर्षं स शोभनो देवः स्यात् योऽद्य तथा प्रियया वियुक्त उर्वश्या भृगुप्रपातम् अनावर्तमानः प्रपतेत । पतितश्च दूराद्दूरतरं गच्छेत् । अथ गत्वा शयीत । मृतः सन् निर्ऋतेर्भूमेरुपस्थे उपरि । अथैनं तामवस्थामापन्नं वृका विकर्तितारश्च शृगालादय रभसा रभस्वन्तो वेगवन्तः

अद्युः = भक्षयेयुः । नाहं सुदेवः, किन्तु स सुदेवो यः प्रियया वियुक्तः एतामवस्थामाप्नुयादिति परिदेवना ।

निन्दा यथा--

मोघमन्नं विन्दते अप्रचेता सत्यं ब्रवीमि वध इत्स तस्य ।
नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥'

( ऋ० सं० १० । ११७ । ६ )

भिक्षोराङ्गिरसस्यार्षम् । मोघं वितन्यम् अन्नं विन्दते । कः ? यः अप्रचेताः = अप्रवृद्धज्ञानः । सत्यमहं ब्रवीमि वध इत्स तस्य वध एव सोऽन्नलाभस्तस्य, वरमलब्धं तेनान्नमित्यर्थः । किं पुनः कारणं मोघमसावन्नं विन्द इति ? यतो नासौ अर्यमणम् आदित्यं पुष्यति, नापि सखायं समानख्यानं मनुष्यम् । अतः केवलाघो भवति स केवलादी । तस्माद्वध एव तस्यान्नलाभः । अत्रान्नमदतो निन्दा । केचित्तु एनमनध्यात्मविदमप्रचेतसं मन्यन्ते तन्मते आध्यात्मिकीयमृक् ।

प्रशंसा यथा —

'भोजायाश्वं संमृजन्त्याशुं भोजायास्ते कन्या३ शुम्भमाना ।
भोजस्येदं पुष्करिणीव वेश्म परिष्कृतं देवयाने चित्रम् ॥'

( ऋ० सं० १० । ११७ । १० ).

दक्षिणा नाम प्रजापतेर्दुहिता, तया सूक्तमात्मनः स्तुतिसंबद्धं दृष्टम् । भोजाय राज्ञे अश्वम् आशुं शीघ्रं संमृजन्ति सम्मार्जयन्ति स्नपयन्ति भृत्याः । किञ्च--भोजाय उद्वहनार्थमन्यान् वरानपास्य स्वलङ्कृता कन्या आस्ते । स हि तामर्हतीत्यभिप्रायः । भोजस्येदं वेश्म गृहं परिष्कृतं संस्कृतं पुष्करणीव पुष्करैर्दैवतं विमानमिव चित्रम् । तदेतत्सर्वमप्यस्य जन्मान्तरप्रविविशिष्टदक्षिणासहितात् कर्मणोऽन्येभ्यः कर्मभ्यः सकाशात् फलातिरेक्यमित्येषा दक्षिणा प्रशंसा ।

एवं द्यूतनिन्दा कृषिप्रशंसा च —

'अक्षैर्मा दीव्यः कृषिमित् कृषस्व वित्ते रमस्व बहु मन्यमानः ।'

एवमुच्चावचैरभिप्रायैः मन्त्रदृष्टयो भवन्ति । विद्यमानानामेव मन्त्राणां दृष्टयो भवन्ति। साधारणानामप्येवं परिदेवनादयो भवन्ति। तज्जनिताश्चोक्तयोऽपि भवन्ति। न च ता मन्त्रात्मिका भवन्ति। यदि चैवंविधा अप्युक्तयः परमेश्वरप्रत्तज्ञानमूलिकास्तर्हि तदुक्तयोऽपि परमेश्वरप्रत्ता एव किं न स्युः ? यत्प्रयोजनानि परमेशप्रत्तानि ज्ञानानि तत्प्रयोजना एव मन्त्रा अपि भवन्ति। यदि परिदेवनादिकमीश्वरे न संभवति तर्हि परिदेवनात्मकं ज्ञानमपि परमेश्वरप्रत्तं कथं भविष्यति ? किञ्च—लोकेऽस्मदादिपरिदेवनमपि परमेश्वरप्रत्तज्ञानमूलकं न भवति" इति।

तत्सत्यम्; 'इत इममादधात्यमुतोऽमुष्यरश्मयः प्रादुर्भवन्तीतोऽस्यार्चिषस्तयोर्भासोः संसङ्गं दृष्ट्वैवमवद्यत्।' तदर्थश्चायम्-इतो लोकादोषधीभ्योः शरादिभ्य वनस्पतिभ्यो वा मथित्वा प्रत्यक्षत एवेममादधाति अभ्यादधातीध्मनैः। अमुतो मण्डलात् कर्मात्मन अमुष्य मण्डलाधिष्ठातु स्वभूता रश्मयः प्रादुर्भवन्ति। इस्ततेजःपिण्डात् अस्य तदधिष्ठातुः अर्चिषः प्रादुर्भवन्तीति वर्तते। तयोर्भासोः संसङ्गं दृष्ट्वैवमवद्यत्। मन्त्रदृक्। 'वैश्वानरो यतते सूर्येणे'ति। अत्रौषधीभ्यो वनस्पतिभ्यो वा प्रादुर्भूतस्य तेजःपिण्डस्यार्चिषा सौरे सौरकिरणसङ्गम उक्तः। तथा चोक्तम्—'इतो जात सर्वमिदमाभिपश्यति वैश्वानरः संयतते सूर्येण। राजा यः सर्वेषां भूतानामभिश्रयणीयस्तस्य वयं वैश्वानरस्य कल्याण्यां मतौ स्याम' इति ( नि० ७।२२ )।

यदुक्तम्—"त्रितं कूपेऽवहितमेतत्सूक्तं प्रतिबभौ। तत्र ब्रह्मेतिहासमिश्रमृङ्मिश्रं गाथामिश्रञ्च भवति।' ( निरुक्त ) इह कूपे पतितस्य त्रितस्य हृदये सूक्तमेतत् प्रतिबभौ। तत्सूक्तमन्त्रा ऋषेरितिहासमप्यावेदयन्ति दैवताभ्यर्थनम्। अभ्यर्थितैश्च तैर्यथा तद्रक्षणं कृतं तद्गाथामिश्रञ्च तत्सूक्तम्। यद्येवमपि ऋषिप्रोक्ततायां सन्देहो भवेत्तदा निवारणमशक्यमेवे"ति।

तदपि निःसारम्; 'एतत्सूक्तं प्रतिबभौ' इति सूक्तप्रतिभानस्यैव स्पष्टतया वर्णनात्। 'मन्त्रद्रष्टयः', 'सूक्तं प्रतिबभौ', 'ऋषिर्दर्शनात्' इत्यादीनि मन्त्र-सूक्त-दर्शन-प्रतिभानबोधकानि निरुक्तवचनानि दृष्ट्वाऽपि येषां हृदि मन्त्राणां कृतकत्वशङ्का भवेत्, तेषां समाधानमपि दुःशकमेव। अत्र सूक्तप्रतिभानं मन्त्रदर्शनञ्चोक्तम्, न तु सूक्तार्थप्रतिभानम् मन्त्रार्थदर्शनं वोक्तं न वा सूक्तमन्त्रादिनिर्माणम्।

न चेश्वरनिर्मिते अपौरुषेये वा सूक्ते तदितिहासगाथामिश्रणा संभवात् तन्निर्मितत्वकल्पनं युक्तम; ईश्वरप्रदत्ते सूत्रार्थभानेऽपि तदसम्भवस्य तुल्यत्वात्। यदि च सूत्रार्थप्रतिभाने तत्सम्भवस्तदा सूत्रेऽपि तत्सम्भवे बाधाभावः समान एव। सर्वत्र हि वेदे फलवन्निश्चितार्थबोधकत्वेन प्रामाण्यम्। गाथेतिहासाख्यायिकादीनामपि तत्रैव स्वारस्यात्, 'सर्वे वेदा यत्पदमामनन्ति', 'आम्नायस्य क्रियार्थत्वात्' इत्यादिश्रुति-सूत्रेभ्यः।

यदपि—"साक्षात्कृतधर्माण ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् संप्रादुः, उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं वेदाङ्गानि च। बिल्मं भिल्मं भासनमि'ति निरुक्तबलेन ऋषीणां धर्मसाक्षात्कारः, तत्कृताश्च वेदमन्त्राः" इति प्राहुः। तदपि न सम्यक्; निरुक्तवचनस्य अन्यथाऽर्थोपपत्तेः। तदुक्तं तट्टीकाकृता दुर्गाचार्येण—'ऋषन्त्यमुष्मात् कर्मण एवमर्थवता मन्त्रेण युक्तादमुना प्रकारेण एवंलक्षणः फलादिपरिणामो भवतीत्यृषयः', ऋषिर्दर्शनात् इति वक्ष्यति' (नि॰ २। १।)। तदेतत्कर्मणः साक्षात् फलविपरिणामदर्शनमौपचारिक्या वृत्त्योक्तं साक्षात्कृतधर्माण इति। नहि धर्मस्य दर्शनमस्ति। अत्यन्तापूर्वो हि धर्मः।

ननु कथमेवं धर्मशब्दस्य वेदोऽर्थो गृह्यत इति चेत्? यथा 'सूक्तं प्रतिबभौ, मन्त्रद्रष्टय' इत्यादिषु सूक्तमन्त्रादिशब्दानां सूक्तार्थ-मन्त्रार्थग्रहणं भवद्भिः क्रियते, तथैवेत्यवेहि। इह तु ब्राह्मणप्रामाण्यमपि वक्ष्यते इत्यधिकम्। ननु साक्षात्कृतधर्मणां श्रवणमन्तरेणैव मन्त्राणां तपोबलेन

साक्षात्कारः; तेऽवरेभ्यः शक्तिहीनेभ्यः श्रुतर्षिभ्य उपदेशेन शिष्योपाध्यायिकया वृत्त्या मन्त्रान् सम्प्रादुः सम्प्रत्तवन्तः।

ऋषीणां तपोमाहात्म्यात् उपदेशमन्तरैव वेदादेव संशयविपर्ययादिराहित्येन कर्मतत्फलयोः कार्यकारणभावावबोधः। निश्चयश्चायं साक्षात्कारवदेव संशयादिरहितत्वेन साक्षात्कार उच्यते ।

अन्यैस्तु यागादिमात्रफलं सुखादिकमेव धर्मपदेन लक्षणया उच्यते। तस्यैव साक्षात्कारः संभवति, न धर्मस्य।

अन्यैस्तु धर्मपदेन धर्मावबोधकस्य वेदस्यैव ग्रहणमिष्यते। अत्रार्थे ब्राह्मणमपि—'तद्यदेनांस्तपस्यमानान् स्वयम्भु ब्रह्माभ्यनार्षत्। तदृषीणामृषित्वम्' मन्त्रसाक्षात्कर्तृत्वेनैव ऋषित्वम्।

एवं साक्षात्कृतधर्मभिरसाक्षात्कृतधर्मभ्यो मन्त्रदानम्। अथ तेऽपि उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं वेदाङ्गानि च कथं नामोपदिश्यमानमेते शक्नुयुर्ग्रहीतुमित्येवमर्थमधिकृत्य ग्लायन्तः खिद्यमानास्तेष्वनुगृह्णन्तु तदनुकम्पया तेषामायुषः सङ्कोचमवेक्ष्य कालानुरूपाञ्च ग्रहणशक्तिं बिल्मग्रहणाय इम ग्रन्थं वेदं वेदाङ्गानि समाम्नातवन्तः।

कथं पुनः समाम्नासिषुरित्याह—वेदं तावदेकं सन्तमतिमहत्त्वाद् दुरध्येयमनेकशाखाभेदेन समाम्नासिषुः सुखग्रहणाय व्यासेन समाम्नातवन्तः। तद्यथा—एकविंशतिधा बाह्वृच्यमेकशतमाध्वर्यवं सहस्रधा साम नवधा आथर्वणम्। वेदाङ्गानि च व्याकरणमष्टधा निरुक्तं चतुर्दशधेत्येवमादि। एवं समाम्नासिषुर्भेदेन ग्रहणार्थम्।

कथं नाम भिन्नान्येतानि शाखान्तराणि लघूनि सुखं गृह्णीयुरेते शक्तिहीना अल्पायुषो मनुष्या इत्येवमर्थं समाम्नासिषुः—बिल्मं भिल्मं वेदानां भेदनम्। भेदो व्यासः भासनमिति। अथवा भासनमेव बिल्मशब्देनोच्यते। वेदाङ्गविज्ञानेन भासते प्रकाशते वेदार्थ इत्यत इदमुक्तं बिल्ममिति।

एवमेव 'ऋषिर्दर्शनात्' (२।११) इत्यत्राप्युक्तम्। पश्यति ह्यसौ सूक्ष्मानप्यर्थान् स्तोमान् ददर्शेत्यौपमन्यव आचार्यो मन्यते। ब्राह्मणश्चात्र

भवति—'तद्यदेनांस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यनार्षत् स्वयम्भु अकृतकमभ्यागच्छत्, अनधीतमेव तत्त्वतो ददृशुस्तपोविशेषेण। एवमुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ती'ति (७।३) निरुक्तांशव्याख्याने दुर्गाचार्येणोक्तम्। विद्यमानानामेव मन्त्राणामृषयो येन केनचिन्निमित्तेन निदानभूतेन हर्ष-शोक-निन्दा-प्रशंसादिना मन्त्राणां द्रष्टारो भवन्ति, न तु कर्तार इत्यभिप्रायः।

यदप्युक्तम् - "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्' इत्यत्र गोतमेनोक्तं यथाफलसिद्धिं दृष्ट्वा स्थालीपुलाकन्यायेन आयुर्वेदस्य प्रामाण्यं भवति, तथैव वेदानामपि वात्स्यायनेन तदेव विशदीकृतम्। आयुर्वेदस्य ये रचयितारस्त एव वेदस्य द्रष्टार इति सर्वस्यैव वेदस्य प्रामाण्यमि"ति। तदपि न भवत्समीहितसाधकम्; वात्स्यायनेन ऋषीणां वेदद्रष्टृत्वस्यैवोक्तत्वात्। यास्क-कणाद-गोतम-वात्स्यायनादीनां मध्ये केनापि ऋषीणां वेदकर्तृत्वं नोक्तम्। आप्तोक्तत्वेन शब्दप्रामाण्ये वेदवदेव जैन-बौद्ध-मौहम्मदाद्यागमानामपि कुतो न प्रामाण्यं स्यात्?

यदुक्तम्—"अलौकिकज्ञानमेवर्षीणां वैशेष्यम्" इति। तदपि तुच्छम्; शपथमन्तरेण तत्र प्रमाणाभावात्। ईश्वरानुग्रहतपआदिधर्मानुष्ठानमन्यत्र न विद्यत इति वक्तुमशक्यत्वात्। तैस्तैर्मतवादिभिरपि स्वस्वागमस्य अशेषार्थप्रतिपादकत्वाभ्युपगमात्।

'आविर्भूतप्रकाशानामनभिप्लुतचेतसाम्।
अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते॥'

इत्यादिरीत्या वैदिकानामेव ज्ञानं जायते, न बुद्धादीनामित्यत्र को हेतुः?

यदप्युक्तम्—"परमात्मनो निराकारत्वात् कण्ठताल्वाद्यभावात् कुतः शब्दराश्यात्मकस्य वेदस्य ततः प्रादुर्भावः? ब्रह्मणो वा सृष्टिनिर्माणव्यग्रस्य कुतो वेदाध्यापनावकाश" इति। तन्न; निराकारस्याऽपि लीलया विग्रहधारणोपपत्तेः। परमेश्वरस्यैव ब्रह्मणोऽपि अचिन्त्यशक्तित्वेन वेदाध्यापनानुपपत्तेरसिद्धेः। निराकारस्यापि सर्वप्रेरकत्वसर्वफलदातृत्ववत् हृदा तत्प्रदानस्योक्तत्वात्। 'तेने ब्रह्महृदाय आदिकवये' इत्यादिवचनात्।

यदप्याशङ्कितम्—त एव मन्त्रा विभिन्नेषु वेदेषु तथैकत्रापि वेदे पुनः पुनरायान्ति। तत्किमर्थम् ? शाखाभेदेन मन्त्राणां पाठभेदः किमर्थः ? एकस्याः शाखायाः पाठः शाखान्तरेण किमर्थं निन्द्यते ? यथा 'इषे त्वोर्जे त्वा वायवः स्थोपायवः स्थ' इति तैत्तिरीय-पाठस्य माध्यन्दिनीशाखायाः शतपथब्राह्मणे 'उपायवः स्थे'ति पाठस्य निन्दा। ईश्वरकृतत्वे वेदानां कथमेतदुपपत्तिरि"ति। तदपि न किञ्चित्; आविर्भूतप्रकाशैरनभिप्लुतचेतोभिरपि कृतेषु वेदेष्वपि तादृशपर्यनुयोगस्य तुल्यत्वात्। अन्यथा सुन्दोपसुन्दन्यायेन आविर्भूतप्रकाशत्वमेव कुतो न व्याहन्येत ? सिद्धान्ते तु स्थानभेदेन पुण्यातिशयाय मन्त्रावर्तनमुपयुज्यते। श्रुतार्थापत्तेरेव तत्र प्रमाणत्वात्। पाठान्तरनिन्दा तु स्वशाखीयपाठप्रशंसार्थमेव, 'नहि निन्दा निन्द्यं निन्दितुं प्रवर्तते' इति न्यायात् 'उदिते जुहोती'त्यादिनिन्दावत्।

यदप्युक्तम्—"अस्मच्छब्दप्रयोगस्तु वक्त्रा स्वात्मन्येव क्रियते। यदि कश्चिन्मन्त्राणां वक्ता न स्यात्तदा अस्मच्छब्देन कस्य ग्रहणम् ? 'योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः', 'युयोध्यस्मज्जुहुराणम्', 'अग्ने नय सुपथा रायेऽस्मान्' नात्र अस्मच्छब्दार्थ ईश्वरः, तस्य द्वेषाभावात्। न वा तस्य सुमार्गनयनप्रार्थना युज्यते। तेन अगत्याऽत्र ऋषय एव वक्तृत्वे नास्मच्छब्दार्था अभ्युपेतव्याः। तथा च तत्कर्तृका शब्द-रचना सिद्ध्यती"ति। तदपि कुशकाशावलम्बनम्; एवंविधेषु मन्त्रेषु उच्चारयितॄणामेव सिद्धान्ते अस्मच्छब्दार्थताभ्युपगमे बाधाभावात्। न च प्रथमोच्चारयितैव अस्मच्छब्दवाच्य इत्याग्रहो युक्तः, तत्प्राथम्यस्य अनादौ वेदेऽसिद्धत्वात्। परमेश्वरस्य तत्त्वनिष्ठानामृषीणाञ्च द्वेषाद्यभावेऽपि तदितरेषां तत्सत्त्वेन मन्त्रपाठ-सार्थक्यात्। अन्यथा ऋषिकृतत्वेऽपि तदापत्तेरपरिहार्यत्वात्, 'अविद्यावद्विषयाणि शास्त्राणी'ति शाङ्करभाष्योक्तेः। तेन 'स्वाध्यायोऽध्येतव्य' इति विधिना, ये स्वाध्यायाध्ययने प्रयुक्तास्त उच्चारयितारोऽस्मच्छब्दार्था इति सर्वमनवद्यम्।

यदप्युक्तम्—

'रमध्वं मे वचसे सोम्याय ऋतावरी रूपमुहूर्तमेवैः।
प्रसिन्धुमच्छा बृहती मनीषावस्युरह्वे कुशिकस्य सूनुः॥'
(ऋ० ३।३३।५)

अस्यार्थः—हे सुजला नद्यः मन्मधुरवचनैः शीघ्रगमनात् मुहूर्ताय विश्राम्यताम्। कुशिकस्य पुत्रोऽहं स्वात्मपरिरक्षिषया मनीषानुसारेण प्रार्थये इति। मन्त्रस्यास्य ऋषिर्नदीः स्तौति। निरुक्तकृता चाख्यानमिदमुक्तम्। विश्वामित्रो पैजवनः सुदासस्य राज्ञः पुरोहित आसीत्। स राज्ञः सकाशात् बहूनि धनान्यादाय शतद्रु-विपाशासङ्गममुपाययौ। तरणमार्गमनालक्ष्य नदीस्तुष्टाव। पूर्वं प्रत्याख्याय पश्चात् ताभिर्मार्गो दत्तः। अत्रापि अस्मच्छब्दार्थः कुशिकपुत्र एव, न सर्वे उच्चारयितारः।

एवम्—

'अकारि त इन्द्र गोतमेभिः ब्रह्माण्योक्ता नमसा हरिभ्याम्।
स पुशशं वाजमाभरा नः प्रातर्मक्षू धिया वसुर्जगम्यात्॥'
(ऋ० १।६।३)

अस्यार्थः—'हे इन्द्र गोतमेभिर्गन्तृतमैर्ऋषिभिः अकारि स्तोत्रं कृतमित्यर्थः। ब्रह्माणि मन्त्रजातानि नमसा हविर्लक्षणेनान्नेन सह हरिभ्याम् अश्वाभ्यां युक्ताय ओक्ता अभिमुख्येनोक्तानि' इति। एवञ्च अस्य मन्त्रस्य गोतम ऋषिः, गोतमगोत्रोत्पन्नैः ऋषिभिः स्तुतेन भवता मह्यं धनादिकं देयमिति। नैवात्र सर्वैरुच्चारयितृभिः स्वात्मनां गोतमगोत्रोत्पन्नं वक्तुं शक्यते। तेन यथा विभिन्नकाव्येषु स्वनामोल्लेखः क्रियते तथैवात्र मन्त्रकर्तृभिर्मन्त्रेष्वेव स्वनामनिर्देशः क्रियते। कथमिव मीमांसकैरत्र अस्मर्यमाणकर्तृकत्वं वक्तुं शक्यते।

एवमेव—

'कारुरहं ततो भिषगुपलप्रक्षिणी नना।
नानाधियो वसूयवोऽनु गा इव तस्थिम इन्द्रायेन्दो परिस्रव॥''
(ऋ० सं० ६।११२।२)

अस्यार्थः—अहं मन्त्रसमूहस्य रचयिता ममपुत्रो वैद्यः यज्ञस्य चिकित्सको ब्रह्मा वा ममकन्या तप्तवालुभिरन्नं भर्जति। एवं सहयोगेन विभिन्नकार्यपरायणा वयम्। हे सोम इन्दो इन्द्राय परिश्रव रसंश्चोतय' इति। अत्र कथं सर्व वक्तारस्तथाविधा भवेयुर्येषां पुत्रो वैद्यो भवेत्, कन्या च अन्नभर्जनी स्यात्। तस्मादत्रापि विशिष्ट ऋषिरेवास्य मन्त्रस्य वक्ता, स एव निर्माता।

अत्रत्यं सायणभाष्यम्—'ऋषिः प्रवृत्तसोमयागः सन् दशापवित्रात् सोमे क्षरति पुरश्चरितानुकीर्तनपुरःसरम् अध्येषणां चकार। तावत् अहं कारुः स्तोमानां कर्ताऽस्मि। तत इति सन्तान नाम, तन्यतेऽसाविति। भिषक् भेषजकृत्=यज्ञस्य ब्रह्मा, 'सर्वं त्रय्या विद्यया भिषज्यति' इति श्रुतेः। नना नयनशीला माता दुहिता वा। माता खल्वपत्यं प्रति स्तनपानादिना नयनशीला भवति। दुहिता शुश्रूषार्थम्। उपलप्रक्षिणी=उपलेषु वालुकासु प्रक्षिणोति यवान् हिनस्ति भृज्जतीति वा। यद्वा—दृषदादिषु उपलेषु भृष्टान् यवान् हिनस्ति चूर्णयतीति वा। अथवा-धानासक्तुकरम्भादीनां कारिका। एवं नानाधियो नानाकर्माणः। वसूयवो धनकामा वयम अनुतस्थिम लोकमन्वास्थिताः स्मः। गा इव गावो यथा गोष्ठमुपतिष्ठन्ति स्वपयःप्रदानेन परिचरन्ति वा, एवं वयमपि परिचरामः। एतज्ज्ञात्वा हे इन्दो हे सोम इन्द्रीय परिस्रव दशापवित्रात् क्षर' इति। निरुक्तमपि एतद्व्याख्यानुकूलम् (६।५।६)।

एवमेव—

'आभोगयं प्रयदिच्छन्त ऐतना पाकाः प्राञ्चो मम केचिदापयः।
सौधन्वनासश्चरितस्य भूमनागच्छत सवितुर्दाशुषो गृहम्॥'
(ऋ० सं० १।११०।२)

अस्यार्थः—हे ऋभवः अपाकाः अपरिपक्वज्ञानाः प्राञ्चः पूर्वकालीना मम आपयः प्रापयितारः मदीया ज्ञातयः केचित् एवंभूता ये ते यूयम्

आभोगयम् उपभोग्यं सोममिच्छन्तः यत् यदा प्र ऐतन तपश्चरितुमरण्यं गतवन्तः। ऋभवो हि सुधन्वन आङ्गिरसस्य पुत्राः। ऋभुर्विभ्वावाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः' (नि० ११।१६)। कुत्सोऽप्याङ्गिरसः, अतस्तेन 'मदीया ज्ञातय' इत्युक्तम्। हे सौधन्वनासः सुधन्वनः पुत्राः तदानीं चरितस्य तपसो भूम्ना बहुत्वेन दाशुषः हवींषि दत्तवत्तः सवितुः सोमाभिषवं कुर्वतः यजमानस्य गृहं तृतीयसवनाख्यमागच्छत। एतत्सर्वम् 'आर्भवं शंसति' (ऐ० ब्रा० ३।३०) इत्यादौ स्पष्टम्। आसमन्ताद्भोग आभोगः, तदर्हः आभोगयः, 'छन्दसि च' इति यः। 'यस्य' इति लोपाभावश्छान्दसः। ऐतन, लङि मध्यमबहुवचनस्य थस्यतादेशः। तस्य तनबादेशः, आडागमो वृद्धिश्च।

अत्र ऋभुदेवताः स्वपूर्वजा इति कुत्सेन ऋषिणोक्तम्। पुराणादिभ्यः प्रसिद्धा कुत्सकुलस्य ऋभोरुत्पत्तिः। कथञ्चैतत् सर्वेषु वक्तृषु संभवति? तेनात्रापि वक्तृविशेष एव ग्राह्यः।

क्वचिदेवमपि भवति—यत्र ऋषिभिर्देवतामुखेन स्ववक्तव्यविषयाः प्रकटिताः। यथा—इन्द्रागस्त्यसंवादे वागाम्भृणीये सूक्ते देवतैव ऋषिः। सैव तत्रास्मच्छब्दग्राह्या। ऋषेर्नाम तत्राव्यक्तमेव। एवमेव 'अग्निः पूर्वेभिः ऋषिभिरीड्य नूतनैरुत', 'इति शुश्रुमधीराणां येनस्तद्विचचक्षिरे' इत्यादिमन्त्रेषु ऋषीणां पौर्वापर्यं प्रतीयते। तदेतत् सर्वं कथमपौरुषेये ईश्वरकृते वा वेदे सङ्गच्छते?

अतः ईश्वरानुग्रहादलौकिकं ज्ञानमवाप्य शब्दरचना ऋषिभिरेव कृता। प्रतिपाद्यविषयस्य ईश्वरानुग्रहादवाप्तिरिति कृत्वा ईश्वरप्रणीतत्वं वक्तुं शक्यते। ज्ञानस्य नित्यत्वादपौरुषेयता च वक्तुं शक्यते। वैखरीरूपेण तु ऋषीणामेव कर्तृत्वमिति। ऋषयश्च रागादिदोषशून्या भवन्तीति तद्रचनायामेव स्पष्टमिति तत्प्रामाण्येऽपि न कश्चिच्छङ्का भवति। तैः प्रत्यक्षवदर्था दृष्टा इति द्रष्टार उच्यन्ते। तैः प्राप्ता एवार्थाः स्वशब्दैः प्रकटिता इति मीमांसकरीत्या ते प्रवक्तारोऽपि वक्तुं शक्यन्ते। अलौकिकेन ज्ञानेनार्थं ज्ञात्वा तैः शब्दरचना कृता। अत एव लौकिकशब्दवैलक्षण्यञ्च। अत एवेश्वरकृतत्वं नित्यत्वञ्च तेषां वक्तुं युक्तम्। यदा

सर्वानुक्रमणीषु ऋषीणां नामान्यनुक्रान्तानि तदा मन्त्राणां कर्ता न स्मर्यते इति कथनं निर्मूलमेव। यदि प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वाभावाद् अपौरुषेयत्वमुच्येत, तदा तदत्रापि पक्षे सङ्गतम्, यत ऋषिभिः प्रमाणैरर्थं ज्ञात्वा न मन्त्रा निर्मिताः, अपि तु परमेश्वरानुग्रहेणार्थं ज्ञात्वा मन्त्रा निर्मिता इत्यपौरुषेयत्वमप्यस्तु" इति।

तदेतत् सर्वमविचारितरमणीयम्; आख्यायिकारूपेषु मन्त्रेषु पुरुषविशेषाणां वक्तृत्वेऽस्मच्छब्दवाच्यत्वे सत्यपि पौरुषेयत्वासिद्धेः। लौकिकेतिहासोल्लेखस्य घटनापूर्वकत्वेऽपि न वैदिकाख्यायिकोल्लेखस्य घटनापूर्वकत्वम्, घटनानां वैदिकशब्दपूर्वकत्वात्। यथा लोके कुलालो घटशब्देन घटं स्मृत्वा दण्डचक्रादिव्यापारेण तं सृजति तथैव परमेश्वरोऽपि तैस्तैः शब्दैस्तांस्तान् अर्थान् स्मृत्वा सृजति। अत एव 'स भूरिति व्याहरत्तस्माद्भूमसृजदि'ति, 'शब्द इति चेन्नातः प्रभवादि'त्यादिश्रुतिस्मृतिसूत्रेभ्यः स्पष्टम्। अन्यथा वेदेषु पारिक्षित-जनमेजयादीनां श्रवणेन तदनन्तरमेव वेदरचना स्वीकर्तव्या भवेत्। तस्माद् यथा लोके दुर्गमस्यार्थस्य अवबोधाय आख्यायिका परिकल्प्यते, तथैव वेदेऽपि सुखावबोधाय आख्यायिकाः कल्पिताः। तथाचोक्तं शङ्करभगवत्पादैः केनोपनिषदादिषु—'शिष्याचार्य-प्रश्न-प्रतिवचनरूपेण कथनं तु सूक्ष्मवस्तुविषयत्वात् सुखप्रतिपत्तिकारणं भवति। केवलतर्कागम्यत्वञ्च दर्शितं भवति। शिष्याचार्यसंवादात् प्रतिनिवृत्त्य स्वेन रूपेण श्रुतिः समस्तसंवादनिर्वृत्तमर्थं बोधयति' इति।

परविद्यास्तुत्यर्था आख्यायिका तु 'नारदो देवर्षिः कृतकर्तव्यः सर्वविद्योऽपि अनात्मज्ञत्वाच्छुशोच, किमु वक्तव्यमल्पविज्जन्तुः अकृतपुण्यातिशयोऽकृतार्थ' इति श्रुतिरेव क्वचिदाख्यायिकारूपेण, क्वचिच्च स्वेनरूपेण बोधयति। तेन विशिष्टविश्वामित्र-वशिष्ठ-कुत्सादिरूपधारिणी श्रुतिरेव तत्तदर्थबुबोधयिषया वक्ति। तेन श्रुतिरूपाणां विश्वामित्रादीनाम् अस्मच्छब्दवाच्यत्वेऽपि न पौरुषेयत्वं मन्त्राणां न वा तन्निर्मितत्वं सिद्ध्यति। घटनानुसारिणो न वैदिकाः शब्दाः, किन्तु शब्दानुसारिण्यो घटना भवन्त्यो न निवार्यन्ते। तेन वैदिकमन्त्रशब्दा-

नुसारेण तस्मिंस्तस्मिन् कल्पे विश्वामित्र-वशिष्ठ-पुरूरवोर्वश्यादयो भवन्ति। तैश्च तैस्तैरुच्चावचैरभिप्रायैः मन्त्रदर्शननिदानभूतैस्ते ते मन्त्रा दृष्टा भवन्ति। प्रमाणान्तरैः संवादे प्रमाणान्तराविरोधे च भूतार्थवाद-रूपास्ता आख्यायिका भवन्ति। विरोधे गुणवादरूपा भवन्ति। शिष्यते हितमुपदिश्यतेऽनेनेति शास्त्रम्। शास्त्रशिरोमणिश्च वेदः। नहि तत्र-मात्रामात्रस्यापि आनर्थक्यं वक्तुं युक्तम्। तेन न सामान्यजनतत्-सम्बद्धेतिहासमात्रवर्णनपरत्वं तस्य वक्तुं शक्येत। तस्मात् तेन साक्षात् पारम्पर्येण वा स्वेनरूपेण महर्ष्यादिरूपेण वा श्रुतीनां धर्मब्रह्मप्रति-पादन एव तात्पर्यमिति मन्तव्यम्। आख्यायिका यथा ब्राह्मणेषु भवन्ति, तथैव मन्त्रेष्वपि। तेन यथा तत्र तासामर्थस्तथैव मन्त्रेष्वपीति मन्तव्यम्।

यथा वा वेदे पुरुषाभावात् लिङ्वाच्या भावना शाब्दी भावना प्रोच्यते, तथैव विश्वामित्रादिरूपधारिणी श्रुतिरेव अस्मच्छब्द-वाच्याऽपि। वागाम्भृणीये तु 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' ज्ञातव्यः। 'अग्निः पूर्वेभि'रित्यादिपौर्वापर्यस्य समाधानन्तु कृतमेव। 'इति शुश्रुमधीराणामि'त्यस्यापि तदेव समाधानम्। लुङादिलकाराणां पूर्वादिशब्दानां वेदे कालसामान्यार्थ एव। एवम् 'तस्माद्यज्ञात् सर्वहुत ऋच' इत्यादिरीत्या परमात्मन एव वेदप्रादुर्भावस्य प्रत्यक्षश्रवणेन प्रतिपाद्यार्थसाक्षात्कारस्य तदनुग्रहजत्वेन तन्निर्मितत्वमिति गौणार्थ-कल्पनमपि निष्प्रमाणकमेव।

'पूर्वे पूर्वेभ्यो वच एतदूचुः' ( तै० सं० ) 'इति शुश्रुम धीराणाम्' इत्येवमादिभिः वेदवाक्यैः पूर्वपूर्वैः वेदवाक्यानामुच्चारणश्रवणादिक-मेव ज्ञायते, न निर्माणम्।

'तस्मै नूनमभिद्यवे वाचा विरूपनित्यया।
वृष्णे चोदस्व सुष्टुतिम्।' (ऋ० सं० ८।७५।६ )

इति मन्त्रेण वेदलक्षणाया वाचो नित्यत्वश्रवणात्। न चात्र वाक्-शब्दस्य तत्त्वान्तरपरत्वम्; 'सुष्टुतिं चोदस्वे'ति सुष्टुतेः मन्त्रलक्षणाया शब्दात्मिकया वाचैवोपपत्तेः।

यदुक्तम्—"रागद्वेषरहितत्वेन ऋषयः परमाप्ता इति तद्वचनयैव ज्ञायते" इति। तदपि निःसारम्; भवदुक्तरीत्या 'योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' इति तद्वचनयैव रागद्वेषादिमत्त्वप्रतीतेः। भवदुक्तरीत्यैव ईश्वरस्य रागद्वेषरहितत्वेन 'योऽस्मान्द्वेष्टि यं च वयं द्विष्मः' इत्यादिकथनं न सङ्गच्छते। यदि ऋषयोऽपि द्वेषादिरहिताः तर्हि तत्कथनं कस्येति भवतैव वक्तव्यम्। नहि रागादिरहितस्य परिदेवनादिकमप्युपपद्यते। 'अस्मज्जुहुराणम्', 'अग्ने नय सुपथा राये' इत्यादिरूपे जुहुराणैनोनिवारण-सुमार्गयाचनादिकं न रागादिरहितस्य निष्पापस्य संभवति। अनाद्यपौरुषेयस्य वेदस्य प्रामाण्येनैव तद्द्वारा तपोयोगादिधर्मज्ञानतदनुष्ठानादिना मन्त्रदर्शनं संभवति, नान्यथा, दुष्परिहरस्य अन्योन्याश्रयस्य उक्तत्वात्। सर्वानुक्रमण्यां मन्त्रद्रष्टॄणां वर्णनं विद्यते, न मन्त्रकर्तॄणामिति न तेन कर्तृस्मरणं प्रत्येतव्यम्।

'आख्या प्रवचनादि'त्यत्र उत्थापितदोषाणाञ्च निवारणं कृतपूर्वमेव। प्रवचनमध्यापनमुच्यते। वेदाध्यापनन्तु यथाधीतमेव भवति, न शब्दान्तरैरिति न स्वतन्त्रनिर्माणपक्षे प्रवचनमुपपद्यते।

यदप्युक्तम्—"प्रमाणान्तरेणार्थमुपलभ्य निर्माणमस्मिन् पक्षेऽपि नास्ति, ईश्वरप्रसादजेन अलौकिकज्ञानेनैव निर्माणादिति भवत्यपौरुषेयत्वमिति। तन्न; अनधिगताबाधितार्थविषयत्वेन तज्ज्ञानस्यापि प्रमाणत्वाविशेषात्, अन्यथा भ्रमत्वापत्तेः।

मूलप्रमाणानभ्युपगमे नातीन्द्रियार्थज्ञानसंभव इत्यन्यत्र उक्तत्वात् नेह प्रतन्यते।

यदप्युक्तम्—"अतीन्द्रियार्थविज्ञानात्मका वेदाः, ते चातीन्द्रियत्वादेव अनीश्वरैरुत्पादयितुमशक्या इत्यपौरुषेया एवे"ति। तदपि न; जैनबौद्धादिसाधितस्य अतीन्द्रियार्थविज्ञानस्यापि वेदत्वापत्तेः। तैरीश्वरानभ्युपगमेन अतीन्द्रियार्थविज्ञानस्य अनीश्वरोत्पाद्यत्वाभ्युपगमाच्च। न च तेषां तन्न संभवतीति वाच्यम्; भवन्मते ऋषीणामतीन्द्रियार्थज्ञानोपलम्भवत् तेषामपि तत्संभवात्। न चेश्वरप्रसादेन तत्संभव इति वाच्यम्;

तत्प्रसादस्य निर्हेतुकत्वे सर्वत्र प्रसङ्गात्, तपोयोगादिहेतुकत्वे तु तेनैव तेषामतीन्द्रियार्थज्ञानलाभसंभवाच्च। किञ्च—भवतां वेदस्य प्रामाण्यमाप्तर्षिप्रोक्तत्वेन। ऋषीणामाप्तत्वम् ईश्वरप्रसादजज्ञानेन। परमेश्वरतत्प्रसादसिद्धिश्च वेदेन चेत् चक्रकप्रसङ्गः। न च स्वतन्त्रेणानुमानेन तत्सिद्धिः; तत्र बाधादिदोषस्य उक्तत्वात्। तत्सिद्धावपि तदनुग्रहजं ज्ञानं तन्त्रादिमूलभूतं कुरान-बाइबिलादिमूलभूतं वेदमन्त्रमूलभूतं वेत्यत्र विनिगमनाविरहात् तदसिद्धेः।

यदप्युक्तम्—"ज्ञानं नेन्द्रियग्राह्यम्, तस्य स्वतःप्रकाशत्वात्। न च पुरुषप्रयत्नसाध्यम्; तस्य श्रुतिषु नित्यत्वश्रवणात्, पञ्चदश्यादिग्रन्थेषु सयुक्ति स्पष्टमुपपादितत्वाच्च। तस्मात् तदपौरुषेयमेवे"ति। तदप्युपहासास्पदम्; नैयायिकैर्वैशेषिकैश्च ज्ञानस्यानित्यत्वाभ्युपगमात्। न च नैयायिकादिमतमग्राह्यमिति वाच्यम्; तथात्वे तन्मतरीत्या अलौकिकज्ञानस्यापि असिद्धत्वात्। किञ्च—वेदपौरुषेयत्वसिद्धये योगजसामर्थ्यातिशयसाधनाय गुणवद्वक्तृकत्वेन शब्दप्रामाण्यसिद्धये च नैयायिकादिमताश्रयणम्, ज्ञाननित्यत्वसिद्धये च वेदान्तिमताश्रयणमिति अर्धजरतीयमेव। किञ्च—"यथा शब्दनित्यत्वेऽपि न वेदस्य नित्यत्वम्, तथात्वे रघुवंशादिशब्दानामपि नित्यत्वापत्तिरि"त्यादिकमुक्तम्। तथैव ज्ञाननित्यत्वेऽपि वेदस्य न नित्यत्वम्, अन्यथा बौद्धाद्यागमानामपि तथात्वापत्तिः किं न तर्क्यते? वृत्त्यात्मकस्य ज्ञानस्य अनित्यत्वं तु स्पष्टमेव।

यदप्युक्तम्—"ईश्वरप्रसादजे ज्ञाने न पुरुषप्रयत्नापेक्षे"ति। तदप्यसङ्गतम्; पुरुषप्रयत्नानपेक्षणे सर्वस्यापि तदापत्तेः। ईश्वरप्रसादजमपि ज्ञानं प्रयत्नजन्यमेव। अन्यथा प्रसादजत्वानुपपत्तेः। अनादित्वसमर्थनमपि निष्प्रमाणकमेव। यदि प्रतिकल्पमेवंविधज्ञानस्य ऋषिभिः प्रणीयत्वात् प्रवाहरूपेण ज्ञाननित्यत्वमास्थीयते तदा प्रतिकल्पं स्पष्टमुक्तत्वात् ऋषिभिर्मन्त्रदर्शनमेव कुतो नास्थीयते? यद्यनादिशब्दे परिदेवनवक्तृविशेषोल्लेखादिकं न संभवति, तदा तज्ज्ञानेऽपि तत्समानमेव।

यदपि—"वागात्मकस्य वेदस्य अकृतकत्वबोधिकानाम 'वाचा विरूपनित्यया', 'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा', 'आदौ

वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः' इत्यादिश्रुतिस्मृतीनाम् अर्थान्तरपरत्वमुपवर्णितमि"ति। तदपि न सङ्गतम्; तदसंभवस्य उक्तत्वात्।

यदुक्तम्—"यदि वै प्रजापतेः परमस्ति वागेव तत् ( शतपथब्राह्मणे ५।१।३।११ ) इति वाजसनेयश्रुतौ श्रुतां वाचमुपलक्ष्यैव तत्र नित्यत्वप्रतिपादनम्। न च सा वागियमेवेति मुधा भ्रमितव्यम्; तस्याः सर्वलोकात्मकतया त्रैलोक्यात्मकतया सूर्यात्मकतया च अन्यत्र बहुधा श्रूयमाणत्वात्। तथा हि—'वागेवेदं सर्वम्' ( ऐतरेय ), 'त्रयं वै विद्या ऋचो यजूंषि सामानि। इयमेवर्चः अन्तरिक्षमेव यजूंषि द्यौः सामानि।' 'तद्वा एतत्सहस्रं वाचः प्रजातम्। हे इन्द्रस्तृतीये तृतीयं विष्णुः ऋचश्च सामानि च। तेजसो वै तत् तेजो जातम्। यदृचश्च साम्नश्चेन्द्रः। इन्द्र इति ह्येतं तमाचक्षते च एव तपति स हैष भर्ता' इति पुरश्चरणश्रुतिः त्रैलोक्यात्मकत्वमाचष्टे। 'संवत्सर एवाग्निः। तस्य वा एतस्य वागेवोपनिषत्। सा वा एषा वाक् त्रेधा विहिता ऋचो यजूंषि सामानि। तेनाग्निस्त्रेधा विहितः। सा या वाक् असौ स आदित्यः। मण्डलमेवर्चः अर्चिः सामानि पुरुषो यजूंषि। अथैतद् भूतम्। यदेतदर्चिर्दीप्यते। इदं तत्पुष्करपर्णम्। यदेतन्मण्डलं तपति तन्महदुक्थम्।' एतदभिप्रायेणैव 'तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे' ( ऋ० सं० १०।९०।९ ) इति ऋग्यजुःसाम्नां यज्ञप्रभवत्वमाख्यायते" इत्यादि।

तदपि न सङ्गतम्; उक्तश्रुतीनामन्यार्थत्वात्। तथा हि—यदि वै प्रजापतेः परमस्ति वागेव तदिति नानेनापि वचनेन शब्दात्मकवाग्व्यतिरिक्त-भूतभौतिकोपादानभूतं किमपि नित्यं तत्त्वान्तरं विवक्षितम्। न च प्रजापतेः परत्वादेव तत् कल्पयितुं शक्यम्; अव्यक्तशब्दब्रह्मरूपत्वेनापि परत्वोपपत्तेः, तत्रैव शतपथे सिद्धान्ते शाखान्तरीयतत्परत्वस्य खण्डितत्वाच्च। तथा हि—

'तद्धैके वाच उत्तममालभन्ते। यदि वै प्रजापतेः परमस्ति वागेव। तदेतद्वाचमुज्जयाम इति तद्वदन्तः। तदु तथा न कुर्यात्।

सर्वं वा इदं प्रजापतिः। यदिमे लोकाः यदिदं किञ्च सा।
यदैव लोको वाग्वदति तद्वाचमुज्जयति। तस्मात् तन्नाद्रियेत ।'
(शतपथ ५ । १ । ३ । ३)

अयमभिप्रायः केचित् सप्तदश-प्राजापत्यपशूनामन्ते वाग्दैवत्यं पशुमामनन्ति। तत्र चोपपत्तिं वदन्ति। तेषां पक्षं निरसितुमनुवदति—तद्धैके वाच इति। 'वाच उत्तममेके' इति कात्यायन-श्रौतसूत्रमप्यत्र अनुकूलम्। एके शाखान्तरीया वाचे वाग्देवतायै उत्तममन्ते कर्तव्यत्वात् चरमं तम् आलभन्ते। नहि प्रजापतेः परम् उत्कृष्टं पूर्व-भावि किञ्चिदप्यस्ति, यदर्थं पशुरालभ्यते। यद्यस्ति, वागेव अस्ति, तस्या अव्यक्तशब्दब्रह्मत्वेन पूर्वमवस्थानात्। ता उज्जयामः साधयामः इति बुद्ध्या वाग्दैवत्यः पशुरालम्भनीय इति। तन्मतमनूद्य दूषयति--तदु तथा न कुर्यादिति। अर्थात् प्रजापतेः सर्वात्मकत्वेन लोकात्मकत्वं तत्रत्य चराचरसर्वभूतात्मकत्वञ्चास्त्येव। अतो लोकेषु उत्पद्यमाना वागपि प्रजापतिरूपैवेति तदर्थं वाग्दैवत्यं पश्वालम्भनं नादरणीयम्।

तस्मात् अतत्परेणानेन वाक्येन न भूतभौतिकोपादानभूतं किञ्चिन्नित्यं तत्त्वान्तरं विवक्षितम्। न वा तत्संभवति, ब्रह्मण एवं सर्वोपादानत्वात्। न वा तथात्वे लोकेषु वाग्वदतीति लोके तदन्तर्भावः संभवति।

किञ्च- शब्दात्मिकायास्तदधिष्ठात्र्या वाग्देवतायाश्च ब्रह्मात्मकत्वेन स्वरूपेण चोपादानत्वं निमित्तत्वञ्च तत्र तत्र स्थलेषु अङ्गीक्रियत एव, न तत्त्वान्तरत्वेन ।

किञ्च—चत्वारि वाक्परिमितानीति परा-पश्यन्त्यादिरूपेण वाचः सूक्ष्म-सूक्ष्मतर-सूक्ष्मतमरूपाणीत्युक्तमेव ।

'अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥'

इत्येवं शब्दब्रह्मात्मिकाया अपि वाचो भूतभौतिकजगदुपादानत्वमपि वैयाकरणैरिष्यत एव । सच्चित्सुखात्मकस्य भगवतोऽनन्तानन्ताभिधानाभिधेयात्मनः प्रपञ्चोत्पादनानुकूलशक्त्यवच्छिन्नत्वेनैव विश्व-

कारणत्वम् । तत्र महदाद्यभिधेयात्मक-प्रपञ्चोत्पादक-शक्त्यवच्छिन्नसदानन्दस्यैव अकाराद्यभिधानात्मकप्रपञ्चोत्पादकशक्तिविशिष्टस्य चिदानन्दस्यापि विश्वकारणत्वं समानमेव, चित्सतोरभेदात् । अत एव 'ओमितीदं सर्वम्' 'ब्रह्मवेदं सर्वमिति' सङ्गच्छते । 'अकारो वै सर्वा वाक्, अकारेण सर्वा वाक् संतृष्णा' इत्यादिश्रुतिभिः सर्वस्यैव अभिधानात्मकप्रपञ्चस्य प्रणवमूलत्वात् तद्व्याख्यानभूतस्य वेदस्यापि तद्रूपत्वमेव। भगवज्ज्ञानानुविद्धशब्दराशिरूपत्वेन भगवन्निःश्वासरूपत्वेन च वेदानां भगवद्रूपत्वमपि तत्र तत्रोक्तमेव ।

'वेदो नारायणः साक्षात्स्वयम्भूरिति शुश्रुम ।'
'वेदस्य चेश्वरात्मत्वात्तत्र मुह्यन्ति सूरयः ।'

इत्यादिषु नारायणात्मकत्वमपि स्वीक्रियते ।

'त्रयी विद्या कामधेनुः सः स्त्री भाषा स्वराक्षरा ।' ( रहस्ये )
'शब्दात्मिका सुविमलर्ग्यजुषां निधान-
मुद्गीथरम्यपदपाठवतां च साम्नाम् ।
देवी त्रयी भगवती भवभावनाय ...'

इत्यादिषु त्रय्या अधिष्ठात्र्या वाग्देव्या भारत्या अपि प्रपञ्चसृष्टिहेतुत्वं स्फुटं विज्ञायते ।

'स्वरया सह सम्भूय विरञ्चोऽण्डमजीजनत् ।'

इति वचनात् सृष्टिलक्षणायां क्रियायां संविद्रूपायास्तदनुविद्धायास्त्रयीलक्षणाया वाग्देव्या हेतुत्वं स्पष्टमेव । तावतापि वेदलक्षणाया-वाचोऽनादिनिधनात्वं नापलपितुं शक्यम्। 'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा' इत्यादिवचनैरतस्या उत्सर्गप्रतिपादनात् । उत्सर्गश्चैवंविधाया वाचः सम्प्रदायप्रवर्तनमेवेति भगवत्पादाः । एवञ्च वेदशब्देभ्य एव विश्वसृष्टिः विश्वप्रवृत्तयश्चोच्यमानाः पूर्वोक्तरीत्या वेदलक्षणामेव वाचं ज्ञापयन्ति ।

किञ्च—'तस्मै नूनमभिद्यवे वाचा विरूपनित्यया, अग्ने चोदस्व सुष्टुतिम्' इत्यत्र सर्वथापि शब्दात्मिका वेदलक्षणैव वाग् बोद्ध्यते तदति-

रिक्तायाः कस्याश्चित्सुष्टुतौ अनुपयोगात् । 'वागेवेदं सर्वमि'त्यादिकमपि वाच्यवाचकभेदाभिप्रायेण द्रष्टव्यम् । 'ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एव । यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एवे'ति माण्डूक्यश्रुतेः, 'यदिदमर्थजातमभिधेयभूतं तस्याभिधानाव्यतिरेकात्, अभिधानञ्च ओङ्काराव्यतिरेकादोङ्कार एवेदं सर्वमिति शाङ्करभाष्याच्च ।

यदुक्तम्—"रूपिद्रव्यस्य चक्षुषा यावत् स्वरूपमुपलभ्यते सा ऋक् । यावद् दूरं तद् द्रष्टुं शक्यते, तदन्तिमं मण्डलं साम । अनयोर्मध्ये यावन्तस्तद्द्रव्यसंसक्ताः प्राणास्तद् यजुः । एवमेव इन्द्रियान्तरग्राह्येषु पदार्थेष्वप्यनुसन्धेयमिति वितानवेदा" इति । तन्न; अस्याः कल्पनाया निर्मूलत्वस्य उक्तत्वात्, रसस्पर्शादीनामिन्द्रियग्राह्याणां दूरत्वाभावेन तत्र साम-यजुषोरभावापत्तेश्च ।

'प्रजापतिर्लोकानभ्यतपत् । तेभ्योऽभितप्तेभ्यस्त्रयीविद्या संप्रास्रवत् । तामभ्यतपत् । तस्या अभितप्ताया एतान्यक्षराणि सम्प्रास्रवन्त भूर्भुवः स्वरिति । तान्यभ्यतपत् । तेभ्योऽभितप्तेभ्य ओङ्कारः सम्प्रास्रवत् । तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णानि एवमोङ्कारेण सर्वा वाक् सन्तृण्णा । ओङ्कार एवेदं सर्वम् ।'

( छान्दोग्य० २ । २३ । २ )

अत्र सर्वसारत्वेन ओङ्कारस्य सर्वरूपत्वमुक्तम् । तस्यापि वागभिव्यङ्ग्यत्वात् वाग्रूपत्वाच्च वागेवेदं सर्वं सूपपद्यते । प्रजापतिर्विराट कश्यपो वा लोकानुद्दिश्य तेषु सारजिघृक्षया अभ्यतपत् ध्यानं कृतवान् । ततः सारभूता त्रयीविद्या सम्प्रास्रवत् प्रजापतेर्मनसि प्रत्यभात् । तस्यास्तिस्रो व्याहृतयः, ताभ्यः प्रणव इति श्रुत्यर्थः ।

'एषां भूतानां पृथिवी रसः, पृथिव्या आपो रसः, अपामोषधयो रसः, ओषधीनां पुरुषो रसः, पुरुषस्य वाग् रसः, वाच ऋग् रसः, ऋचः साम रसः, साम्नो वाचः' इत्यादि सर्वरसरूपत्वमुक्तम्, सर्वभूतरसरूपत्वादपि सर्वरूपत्वं वाचः सङ्गच्छते ।

'प्रजापतिर्लोकानभ्यतपत् । तेषां तप्यमानानां रसान् प्रावृह-
दग्निं पृथिव्याः वायुमन्तरिक्षादादित्यं दिवः ।' छा० ४।१७।१ )

अत्रापि सारजिघृक्षया ध्यानलक्षणं तपश्चचार, तेषां रसान् सार-रूपान् प्रावृहत् उद्धृतवानित्यर्थः ।

'एतास्तिस्रो देवता अभ्यतपत् । तासां तप्यमानानां रसान्
प्रावृहदग्नेर्ऋचो वायोर्यजूंषि सामान्यादित्यात् ।'

ततोऽपि सारं रसं त्रयीं विद्यां जग्राह इत्यर्थः । अग्निवाय्वादित्यसार-रूपत्वादेव ऋगादीनामग्न्यादिभ्य उत्पत्तिर्वर्णिता ।

'अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् ।
दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ॥'

इत्यस्य मनुवचनस्याप्ययमेवार्थः । एतेन "ऋक्प्रतिपाद्यत्वेन अग्ने-र्ऋग्जनकत्वमित्युक्तिः परास्ता ; प्रत्यक्षातिरिक्तस्थले विषयस्य प्रमा-हेतुत्वानुपपत्तेः ।

'त्रयी वै विद्या-ऋचो यजूंषि सामानि । इयमेवर्चोऽस्याः ह्यर्चति
योऽर्चति स वागेवर्चो वाचा ह्यर्चति योऽर्चति सोऽन्तरिक्षमेव
यजूंषि द्यौः सामानि । सैषा त्रयी विद्या सौम्येऽध्वरे प्रयुज्यते ।'
( शतपथ ४।५।६।७ )

अत्रापि 'अस्या ह्यर्चति' इत्यर्चकारणत्वात् इमा ऋच उक्ताः । ऋक्शब्दे पृथिव्याश्च शब्दस्य व्युत्पत्तिं दर्शयति । पृथिव्यां करणत्वा-नुपपत्तेरधिकरणत्वं दर्शितम् । शब्दात्मिकायामस्यां ह्यर्चतीति पृथिवी-त्वेन स्तूयते । एवं वाचार्चति । अत्र सर्वत्र केनचिद्योगेन पृथिव्यां वाचि ऋग्दृष्टिः, अन्तरिक्षे यजुर्दृष्टिः, दिवि च सामदृष्टिः क्रियते ।

'तद्वा एतत्सहस्रं वाचः प्रजातं द्वे इन्द्रस्तृतीये तृतीयं विष्णु-
र्ऋचश्च सामानि चेन्द्रो यजूंषि विष्णुः । तस्मात् सदस्यृक्-
सामाभ्यां कुर्वन्ति । ऐन्द्रं हि सदः ।'

एतदर्थस्तु हरिस्वामिभिरुक्तः—तदेतत् त्रयीविद्यात्मकं सहस्रं बहु-तमं वाच आध्यात्मिकायाः प्रजातम् = वागिन्द्रियाणामग्न्यादीनामभि

व्यक्तिः। अधियज्ञियायाश्च शब्दमात्रात्मिकाया ऋगादेः प्रजातं विशेष-विकासाधिदैवत्यमुपचर्य वाचा गायत्र्याविति छन्दांसि प्रजातम्। तस्यास्य सहस्रस्य वाचः प्रजातम्। द्वे तृतीये द्वौ त्रिभागौ, इन्द्र एकम्, तृतीयं विष्णुरित्यधिदैवम्। इन्द्राविष्णवोर्हि तौ शब्दशेषावित्यर्थः। ऋचश्च सामानि चेन्द्र इति विभागात्तावद्वचनम्। तस्मात्सदसीति यस्माद् दृष्टो नैव इन्द्रस्तस्मात् ताभ्यां सदसि स्तोत्रादिकं कुर्वन्ति। ऐन्द्रं हि इन्द्रस्य स्वभूतं सदः, स्वायतने युक्तं स्तोत्रम्। वेदसिद्धस्यैव चायं सदसिकरणस्यानुवादो वक्ष्यमाणमिथुनोपोद्घातार्थम्।

अत्रापि वाक्शब्देन आध्यात्मिकी वाक् स्पष्टमुक्ता। नात्र भूत-भौतिकोपादानलक्षणा काचिद्वागुक्ता। तस्या ऋगादीनामभिव्यक्तिः, तेषु च इन्द्रविष्ण्वादिदृष्टिः।

'अथैनं विष्णुं यज्ञम् एतैर्यजुर्भिः पुर इवैव बिभ्रति। तस्मात् पुरश्चरणं नाम।'

अर्थात् होतोद्गातारः सदस्यृक्सामाभ्यां कुर्वन्ति। अध्वर्यवस्तु एतं प्रत्यक्षं सोमशरीरं यज्ञम् एतैर्वेदार्थवत् क्रियाप्रत्यासन्नैः यजुर्भिः पुरः सदसः पूर्वस्यां दिशि हविर्धाने वितन्वन्ति संस्कारैरिति।

यस्मादेवमृक्सामाभ्यां सदसः पुरस्ताद्यजुर्भिश्चरति तस्माद्यत्पुर-श्चरणमित्येवं प्रसिद्धानि यजूंषीत्याधियाज्ञिकदेशनिमित्तत्वं पुराणत्वम्। कालनिमित्तमपि वक्ष्यति। 'तद्वा एतन्मनोऽध्वर्युरि'त्याध्यात्मिकञ्च। नो ह्यनभिगतमिति विष्णुं यज्ञं यजुर्भिर्वर्धते विश्नातीति। एवमनुवाद एव वक्ष्यमाणस्य मिथुनक्रमस्योपन्यासार्थम्।

ऋक्सामाभ्यां स्तूयमानत्वात् तयोरिन्द्रत्वम्, यजुर्भिः संस्क्रियमाण-त्वात् सोमात्मकस्य विष्णोर्यजुष्ट्वम्।

'वागेवर्चश्च सामानि च, मन एव यजूंषि। सा यत्रेयं वागासीत् सर्वमेव तत् क्रियते, सर्वं प्राज्ञायत। अथ यत्र मन आसीन्नैव किञ्चनाक्रियत, न प्राज्ञायत, नो हि मनसा ध्यायतः कश्चन जानाति।'

अत्र आध्यात्मिकी वागिन्द्रियात्मिका, आधिदैविकी च सुपर्णात्मिका विवक्षिता। सैव ऋचश्च सामानि चेत्यर्थः।

तदभिव्यङ्ग्यत्वात् मनः करणम्। तदेव यजूंषि करणत्वादेव। यत्र वाग् आसीत्, सर्वमेव तत्राधिक्रियते यज्ञाय। तत्राधिदैविक्ये-न्द्रियात्मिकया अधिष्ठितशब्दात्मिकया वाचा ईरितमृग्वेदादिकम्।

अथ यत्र हविर्धाने न किञ्चिदप्याक्रियत, न प्राज्ञायत, तत्र किं कारणम्? नोहि मनसा ध्यायतः—कस्यचिदपि चिकीर्षितं जानाति, न चाज्ञातं क्रियते। ततः किम्? मनसस्तावद्बहिः प्रकाशकधर्मः, तदात्मनामपि यजुषां विष्णोश्च स एव धर्मः, तेन हविर्धाने न किञ्चित् प्रज्ञायते।

'ते देवा वाचमब्रुवन्—प्राचीं प्रेहि, इदं प्रज्ञपयेति। सा होवाच किं मे स्यादिति यत्किञ्चावषट्कृतं स्वाहाकारेण यज्ञे क्रियते तद् इति। तस्माद् यत्किञ्चावषट्कृतं स्वाहाकारेण यज्ञे हूयते तद्वाचः सा प्राची। यैत् सैतत् प्राज्ञायदितीदं कुरुतेतीदं कुरुतेति।'

अत्र आधिदैविकी विग्रहवती वाक् गृह्यते, तदनन्यत्वादिन्द्रियात्मिकाऽपि सा उक्तैव। तस्या एव संव्यवहारार्था अवस्थाभेदाः। न चात्रापि काचिदव्यवहार्या भूतभौतिकोपादानलक्षणा वाक् जिघृक्षिता। तस्या यज्ञगतैः स्वाहाकारादिभिः सम्बन्धविशेषासिद्धेः।

'तां वाचं देवा अब्रुवन्-प्राचीर्दिशः प्रेहि, इदं प्रज्ञपय। सा किं मे ततः स्यात्? देवा ऊचुः यत्किञ्चावषट्कृतं स्वाहाकारेण यज्ञे हूयते तत्र इति। तस्मात्तादृक् तद्वाचो भवति सा प्राची प्रैत्। प्राप्ता शस्त्रशास्त्रकारेभ्यो अध्वर्युं प्राची इन्द्रं गत्वा सा एतत् कर्म प्रज्ञापितवती। अभिषोतारोऽभिषुण्वते अग्नयेऽनुब्रूहि उपावर्तध्वमित्यादि। तस्माद् ब्रुवन्त्येवर्चा हविर्धाने प्रातरनुवाकमन्वाह; सामिधेनीरन्वाह, ग्राव्णोऽभिष्टौत्येवं हि सयुजावभवताम्। यां यां सह प्रयुज्येत इन्द्रः करणत्वेन विष्णुरधिकरणत्वेनेति सयुजौ चर्य्याते। तस्मादुक्ता।'

अत्रापि ऋक्सामाद्यात्मिकाया वाचो मनसश्च यज्ञस्वभावस्य मिथुनं भवति। तस्मात् कुर्वन्त्येव सदसि यजुषोदुम्बरीमुछ्रयन्ति सदः संमिन्वन्ति धिष्ण्यानुपकिरन्ति। एवं हि सयुजावभवताम्।

'यदेतद् गम्यते वाच ऋक् सामात्मिकाया सदसश्च यजुरात्मकस्य तिरोहितमिदं मिथुनं चर्य्यांते । एतत्प्रार्थयमानाः परिश्रयन्ति । तद्वा एतत्सदः परिश्रयन्ति एतस्मै मिथुनाय तिर इवेदं मिथुनं चर्य्यांता इति व्यृद्धं वा एतन्मिथुनं यदन्यः पश्यति । तस्मात् यद्यपि जायापती मिथुनं चरन्तौ पश्यन्ति व्येवद्रवत आग एव कुर्वाते । तस्माद्द्वारेण सदः प्रेक्षमाणं ब्रूयान्मा प्रेत्तथा इति । यथा ह मिथुनं चर्यमाणं पश्येदेवं तत् । कामं द्वारेण । देवकृतं हि द्वारम् ।'

एवमेव हविर्धानं परिश्रयन्ति'''तद्वा एतद्वृषा साम योषामृचं सदस्यध्येति । तस्मान्मिथुनादिन्द्रो जातस्तेजसो वै तत् तेजोजातम्, यदृचश्च साम्नश्चेन्द्र इन्द्रः । इति ह्येतमाचक्षते य एष तपति ।'

सत्येवं पूर्वस्मिन् वाङ्मनसयोर्मिथुने इमामपरामृक्सामयोः सम्पदं दर्शयति—सामरूपो वृषा ऋचं योषां सदस्यभ्येति । तस्मान्मिथुनादिन्द्रो जातः, प्रकाशस्वभावत्वादृक्सामे तेज एव । तस्मात्तेजस एव तेजोजातम । एतमिन्द्रमाचक्षते य एष तपति ।

एवं 'तद्वा एतत्सहस्रं वाचः प्रजातमि'त्यनेनापि न प्रत्येकं सामपर्यन्तं सहस्रं भागा जायन्ते इति विवक्षितम्, तेषामप्रसिद्धत्वेन एतत्पदनिर्देश्यत्वासम्भवात् । द्वे इन्द्रस्तृतीये तृतीयं विष्णुरित्यादीनामसङ्गतेश्च । तस्मात् प्राचीनभाष्यकाररीत्या वाचः आध्यात्मिक्याः त्रयीविद्यात्मकं सहस्रं प्रजातमभिव्यक्तमित्येवार्थो युक्तः । तदैव ऋग्भिः सामभिश्च स्तूयमानत्वात्तयोरिन्द्रत्वं यजुर्भिरिज्यमानत्वेन यजुषां विष्णुत्वमुक्तम् । बहुतमम् बहुतमत्वबोधनायैव ऋचश्च सामानि चेति बहुवचनम् । इन्द्रस्य ऋक्सामात्मकत्वात् द्वे इन्द्र इत्युक्तम् । एकैकस्य त्रिभागत्वात् द्वौ त्रिभागाविन्द्र उक्तः । एकस्य त्रिभागस्य यजुषो विष्णुत्वम् । तदेव स्पष्टमुक्तम्--'ऋचश्च सामानि चेन्द्रो यजूंषि विष्णुः' इति ।

'तेजसो वै तत्तेजोजातमि'त्यस्यापि अन्योऽप्यत्रत्यः प्रपञ्चो न भवत्पक्षे सङ्गतो भवति। तद्वा एतद्वृषा साम योषा मृचं सदस्यध्येति। तस्मान्मिथुनादित्याद्यपि प्राचीनभाष्यकाररीत्यैव सङ्गच्छते। प्रकाशात्मकत्वादृक्सामानामपि तेजस्त्वात् तज्जातस्य तेजोमयादित्यात्मकस्येन्द्रस्यापि तेजस्त्वं युज्यते।

'अथैतद्वृषा सोमो योषा अपः हविर्धानेऽध्येति। तस्मान्मिथुनाच्चन्द्रमा जातोऽन्नाद्वै तदन्नं जातम् यदद्भ्यश्च सोमाच्च चन्द्रमाः। चन्द्रमा ह्येतस्यान्नं भवति। य एष तपति स हैषा भर्ता' इत्यत्रापि य एव तपति स इन्द्र उक्तः। यदेव विद्यया करोति तदेव वीर्यवत्तरं भवतीति।

सर्वत्र कर्मसमृद्धयर्थं कर्माङ्गेषु तत्तत्सम्पदो विधीयन्ते। संस्कारार्थानीमानि विज्ञानानि। तदुक्तं भट्टपादैः—

'सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते।
परार्थञ्चात्मविज्ञानादन्यत्रेत्यवधारय ॥' इति।

यदुक्तम्—"इदमा निर्दिश्यमाना पृथिवी सैव ऋचः इति। तन्न; सामानाधिकरण्यव्यपदेशमात्रेणाभेदे 'योषा वाव अग्निः वृषा सोम' इत्यदावप्यभेदापत्तेः। एतेन 'पृथिव्याः किरणा यावत्पर्यन्तं गच्छन्ति, तदन्तिमं मण्डलं साम। तेन द्यौः साम मध्यमन्तरिक्षमेव यजुरि"त्यादि। तदेतत्कल्पनमपि निःसारम्; श्रुतौ प्रसिद्धायाः पृथिव्या इव प्रसिद्धयोरेवान्तरिक्षे दिवि च यजुष्ट्वं सामत्वञ्चाख्यातम्, नान्तरिक्षस्थेषु किरणेषु। द्युलोकस्थे साममण्डले च भवदुक्तरीत्या पृथिव्येव ऋग्यजुःसामात्मिका त्रिलोकी। तथा सति 'अन्तरिक्षमेवेति प्रत्यक्षवन्निर्देशो निरालम्बन एव स्यात्। किञ्चिदेकं वाक्यमादाय किञ्चित्कल्पनं नातीव दुष्करम्, सर्वस्यैव ग्रन्थस्य तदानुगुण्येन योजनं दुष्करमेव। नात्र पुरश्चरणश्रुतिषु वाचस्त्रैलोक्यात्मकत्वमुक्तम्; 'वागेवेदं सर्वमि'त्यस्याः श्रुतेस्त्रिलोक्यात्मकत्वबोधकत्वेऽपि प्रसिद्धाया वाच एव तदुपपादितत्वात्।

एवमेव—

'तस्य वा एतस्याग्नेर्वागेवोपनिषद् । वाचा चीयते ऋचा यजुषा साम्नेति नु दैव्या । अथ यत् मानुष्या वाचा हेतीदं कुरुते तीदं कुरुतेति तदुहतया चीयते ।'

इत्यादिकमपि न भवदिष्टसाधकम्; तासां श्रुतीनामप्यन्यार्थत्वात्, तत्र त्रयीमयादित्याग्न्युपासनायाः प्रतिपिपादयिषितत्वात् । 'तस्याग्नेर्वागेवोपनिषद् रहस्यस्वरूपं कुत एतदग्निः ऋक्सामयजूरूपया दैव्या वाचा चीयते मानुष्या च वाचा चीयते इदं कुरुतेदं कुरुते'ति अग्निचयनादौ वेदलक्षणाया वाच एवोपयोगदर्शनात् । देवस्य परमात्मन इयं वाक् दैवी वाक् । तदुक्तं संक्षेपशारीरके—

'औत्पत्तिकी शक्तिरशेषवस्तुप्रकाशने कार्यवशेन यस्याः ।
विज्ञायते विश्वविवर्तहेतोर्नमामि तां वाचमचिन्त्यशक्तिम् ॥'

'वक्तारमासाद्य यमेव नित्या सरस्वती स्वार्थसमन्विताासीत् ।
निरस्तदुस्तर्ककलङ्कपङ्का नमामि तं शङ्करमर्चिताङ्घ्रिम् ॥'

'सा वा एषा वाक् त्रेधा विहिता । ऋचो यजूंषि सामानी'त्यादिकमपि प्रकृतशब्दराश्यात्मकर्गादिग्रहण एवानुकूलम् । वाचस्त्रैविध्येन अग्नेरपि अग्निवायुसूर्यात्मना त्रैविध्यम् । एवं प्रकृतयागादिसम्बन्धोऽपि प्रसिद्धाया एव वाचः ।

अत्रैव प्रसङ्गे—

'वाक् त्रेधा विहिता, अग्निस्त्रेधा विहितः, ततस्त्रेधाविहिता इष्टका उपधीयन्ते । पुंनाम्न्यः स्तोत्राख्याः स्तोमानुपदधाति । स्त्रीनाम्न्यः आषाढाच्छन्दस्याविकर्ण्याद्याः नपुंसकनाम्न्यः पशुशीर्षाख्याः । यथा चित्याग्नेरवयवभूता इष्टका लिङ्गत्रयशब्दाभिहिता एवं पुरुषस्याङ्गानि लिङ्गत्रययुक्तशब्दाभिधेयानि – कर्णः, पाणिः पादः, नासिका, जङ्घा, लोचनम्, शिरः । तेनात्मापि त्रेधा विहितः । अनेन त्रेधाविहितेनात्मना त्रिविधेनेष्टकाचितेन त्रेधाविहितमग्निवायुसूर्यात्मना त्रिविधं दैवममृतमादित्यमाप्नोति । तथैव कथमिष्टकाशब्दस्य लिङ्गत्रयव्यवहारो नास्तीत्याशङ्क्य तासां वाग्रूपत्वेन

तत्परिहारः कृतः। ताः सर्वा इष्टका इष्टका इत्येवाचक्षते नेष्टक इष्टक मिति वा। किमर्थमेवमिति तदाह—वाचोरूपेण वाग्ध्येवै-तत्सर्वम्...वाचा ह्येवैतत्सर्वमाप्तम्, वाचः स्त्रीलिङ्गत्वं स्फुटम्।'

अत्र वाचाप्तत्वेन सर्वस्य वाग्रूपत्वमुक्तम्। "वाक्तन्त्यां नामभिर्दामभिः सर्वं सितम्" इत्यादि श्रुत्यन्तराच्च। वाचः स्फुटस्त्रीलिङ्गत्वेन तद्रूपाणामिष्टकानामपि स्त्रीलिङ्गत्वमुक्तम्। अत एव 'तस्मादेना अङ्गिरस्वद् ध्रुवासीदेत्येव सर्वा आसादयती'त्यप्युक्तम्। अत्र यथा इष्टकासु वाग्दृष्टिकरणादेव वाग्रूपत्वं सम्भवति तथैव तेषु तेषु यथायथं गौण एव वाग्भेदो ज्ञातव्यः। 'सा या एषा वागसौ स आदित्यः' अत्रापि पुष्करपर्णोपरि अग्निचयनविधानस्यार्थवादतया गौण एव वागादित्ययोरभेद उक्तः। आदित्यस्य अमृतमृत्युरूपत्वेन आदित्यादर्वाचीनस्य सर्वस्यैवादित्यप्रकाशाक्रान्तत्वात् मृत्युनाप्तत्वमेव। अतो यः सूर्यादर्वाचीनं चिनुते। मृत्युनाक्रान्तमेव चिन्वन् यजमानः स्वात्मानमपि मृत्यवे समर्पयति। सूर्यादूर्ध्वचयने तु मृत्युकर्तृकाक्रमणस्याभावात् मृत्युजयः फलं भवति।

'सा वा एषा वाक् त्रेधा विहिता—ऋचो यजूंषि सामानि। मण्डलमेवर्चोऽर्चिः सामानि पुरुषो यजूंषि। अथैतदमृतं यदेतदर्चिर्दीप्यते। इदं तत्पुष्करपर्णम्। तत्र यत्पुष्करपर्णमुपधायाग्निं चिनोत्येतस्मिन्नेवैतदमृते ऋङ्मयं यजुर्मयं साममयमात्मानं संस्कुरुते सोऽमृतो भवति।'

यथा आदित्ये मण्डलमर्चिः पुरुष इति वस्तुत्रितयं विद्यते तथैव वाच्यपि ऋक्सामयजुरिति वस्तुत्रयं विद्यते। तेन मण्डलादिषु ऋगादिभावनया वाचः सूर्यत्वं सम्पद्यते। एवं चयनगतायां वेदत्रयलक्षणायां वाचि आदित्यबुद्धिः कर्तव्या। यदर्चिर्दीप्यते तस्यामृतरूपत्वमुक्तम्। तस्यैव पुष्करपर्णरूपत्वमुक्तम्। यतः 'अपां पृष्ठमि'ति मन्त्रेण प्रथमं पुष्करपर्णमुपधाय तस्योपरि अग्नेश्चयनं कर्तव्यम्। तेन तदात्मकेऽमृते अर्चिर्मये आदित्ये अयमुपासिता स्वीयमात्मानं वेदत्रयरूपं चित्याग्निरूपं संस्कुर्वन्नमृतो मृत्युबाधारहितः सूर्यात्मको भवति। तस्मादत्र वागादित्याभेदोपदेश उपासनार्थ एवेति स्पष्टम्।

तेन "सूर्यमण्डलसम्बन्धेन सौरत्रिलोकीरूपाणि ब्राह्मणेऽत्र व्याख्यातानि। सूर्यमण्डलस्थोऽग्निः सौरप्राणरूपो यो ब्रह्माण्डमभिव्याप्नोति यश्च सर्वेषां लोकवेददेवभूतादीनां जनकः श्रुतिभिः प्रतिज्ञायते सोऽत्र पुरुषपदेन यजुःपदेन श्रुतः" इत्यादिकमपास्तम्। सर्वस्यैतस्य प्रकरणासम्बद्धत्वात्।

"गायत्री वा इदं सर्वंभूतं यदिदं किञ्च। वाग्वै गायत्री, वाग्वा इदं सर्वंभूतं गायति च त्रायते च।'

अत्र छन्दोमात्रायाः सर्वभूतत्वमनुपपन्नमिति गायत्रीकारणं वाचं शब्दरूपामापादयति—'वाग्वा इदं सर्वं भूतं गायति, अयं गौरयमश्वः त्रायति च मा भैषीः। अत्र सर्वस्य गानात् त्राणाच्च वाचः सर्वरूपत्वमुक्तम्। 'असौ वाव लोको गौतमाग्निः, योषा वाव गौतमाग्निः" (बृह०) इतिवच्च तेषु तेषु ऋगादिदृष्टिः कर्तव्या, न तत्रा भेदभ्रान्तिः कार्या।

"वाग्वाव नाम्नो भूयसी। वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेदम्। स यो वाचं ब्रह्मेत्युपासते' (बृहदा०) इत्यादौ—

'एष उ बृहस्पति र्वाग्वै बृहती। एष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म तस्या एष पतिः। त्रयो लोका एत एव। वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः। वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः। वागेव देवाः, मनः पितरः, प्राणो मनुष्याः। 'मन एव पिता वाङ् माता प्राणः प्रजा वाचं धेनुमुपासीत। तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारः। तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारञ्च वषट्कारञ्च। हन्तकारं मनुष्याः, स्वधाकारं पितरः। प्राणो ऋषभः, मनो वत्सः।'

सर्वथाप्येवंजातीयकैर्वाक्यैर्न कथमपि वागादीनां स्वरूपं निर्धारयितुं शक्यम्, तेषामुपासनादिपरत्वेन तत्त्वतो वागाद्यभेदप्रतिपादने तेषां तात्पर्याभावात्।

अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्न। 'विशेषात्' (२।३।१५) इति ब्रह्मसूत्रे सेन्द्रियस्य मनसो बुद्धेश्च उत्पत्तिप्रलयौ

विचारितौ । तत्र करणानां भौतिकत्वात् भूतोत्पत्तिप्रलयाभ्यामेव तदुत्पत्तिप्रलयावपि व्याख्यातौ । करणानां भौतिकत्वे लिङ्गमुक्तम्—'अन्नमयं हि सोम्य मनः, आपोमयः प्राणः, तेजोमयी वाक्' (छा० ६।५।४) इति। भूतानां करणानाञ्च पृथग् व्यपदेशो ब्राह्मण-परिव्राजकन्यायेन ज्ञातव्यः। यद्यपि क्वचित् 'स मनोऽसृजत तन्मन एवासीत्। तदात्मानमेवैक्षत स वाचमसृजत्' इति भूतक्रमात् पृथक् करणक्रमः श्रूयते, तथापि विभक्तत्वान्मनःप्रभृतीनां कारणापेक्षायाम् 'अन्नमयंमन' इति लिङ्गश्रवणादपेक्षितार्थकथनात् विकारार्थत्वमेव मयटो युक्तम्। इतरथा त्वनपेक्षितमेवोक्तं भवेत्। पाठक्रमादर्थक्रमो बलीयानिति न्यायेन भूतानन्तरमेव मनःप्रभृतीनां निवेशो युक्तः।

'तत्पूर्वकत्वाद्वाचः' (ब्र० सू० २।४।४) वाक् प्राण-मनसां ब्रह्मप्रकृतिक-तेजोबन्नपूर्वकत्वाभिधानात् सर्वेषामेव प्राणानां ब्रह्म-प्रभवत्वमुक्तम्।

यच्च—"वाक्प्राणमनसां गौणी जनिराख्यायते"इति। तन्न; विकल्पा-सहत्वात्। तथा हि--वागादीनां जीववत् अविकृतब्रह्मात्मतयाऽनुत्पत्ति-र्ब्रह्मणस्तत्त्वान्तरतया व ? नाद्यः; वागादीनां जडत्वेन तदनुपपत्तेः। नान्त्यः; तत्त्वान्तरत्वे ब्रह्मवेदनेन सर्ववेदनप्रतिज्ञाबाधात् सर्ववेदान्त-व्याकोपाच्च।

'भेदश्रुतेः', 'वैलक्षण्याच्च' (ब्र० सू० १८, १९) इति। मनो वाचं प्राणं तान्यात्मने अकुरुत' इत्यत्र प्राणाद्भेदेन व्यपदेशाद्वैलक्षण्यात् प्राणाद् भिन्नतोक्ता।

'यदेतन्मण्डलं तपति तन्महदुक्थं ता ऋचः स ऋचां लोकः। अथ यदेतदर्चिर्दीप्यते तन्महाव्रतं तानि सामानि स साम्नां लोकः। अथ य एष एतस्मिन् मण्डले पुरुषः सोऽग्निस्तानि यजूंषि स यजुषां लोकः। सैषा त्रय्येव विद्या तपति।......'

अस्यार्थस्तु सायणादिभिरुपासनापरत्वेन वर्णितः—यथा मनो ब्रह्म, आदित्यो ब्रह्मेत्युपासनेषु मनस्यादित्ये च ब्रह्मदृष्टिः क्रियते, तथैव मण्डले ऋगादिदृष्टिरत्र कर्तव्यत्वेन उपदिष्टा। सूर्यमण्डलार्चिः पुरुष-

त्रयस्य अधिदैवाधियज्ञाध्यात्मपरत्वेनार्थ उच्यते। तत्र चयनगतमहदुक्थं (महत् पूज्यम् उक्थम् बृहतीसहस्रत्वेन प्रसिद्धो हौत्रे शस्त्रविशेषः महाव्रतं क्रतुविशेषः)। 'अथ महाव्रतमिन्द्रो वृत्रं हत्वा महानभवत् यन्महानभवत् तन्महाव्रतस्य महाव्रतत्वम्' (ऐ० आ० १।१।१)। अग्निः = अग्न्युपलक्षितसर्वदेवात्मकोऽग्निः), त्रयं क्रमेण मण्डलार्चिःपुरुषत्वेन उपासनीयम्। अर्थात् महोक्थमहाव्रताग्निषु मण्डलार्चिःपुरुषदृष्टिः कर्तव्या। एवमेवाधियज्ञम्। चयनगत-रुक्म-पुष्करपर्ण-हिरण्यपुरुषाणां मण्डलादित्रयरूपेण उपासनम्। रुक्मादिवर्णनन्तुश्रुति सूत्रादिषु स्पष्टम्।

'हिरण्यगर्भ' इति मन्त्रेण पुरुषमुपदधाति। अपां पृष्ठमसि पुष्करपर्णमुपदधाति, स्तम्बे कुशस्तम्बोपरि कमलिनीपत्रे।

'ब्रह्मजज्ञानम्' इति रुक्ममुपदधाति पुष्करपर्णे कण्ठधृतं रुक्ममधःपिण्डम् उत्तानं प्राञ्चं हिरण्यपुरुषं तस्मिन् रुक्मे दधाति।

'दृशानो रुक्मे'ति मन्त्रेण रुक्मस्तुतिः, यजमानःकण्ठे रुक्मं फलकाकारम्, तत्र एकविंशतिबिन्दवः उन्नतबिन्दवः पिण्डाः प्रतिमुञ्चति आदित्याध्यासेन पुरुषस्योपरि जुहुयात्।

अध्यात्ममपि दक्षिणाक्षिगत-शुक्लकृष्णवर्ण-तदन्तर्वर्तिपुरुषाणां मण्डलादित्रयरूपेण उपासनम्। एतत्० प्रसङ्गेन सव्यलोचनगतपुरुषस्य मिथुनत्वसम्पादनम्। अस्य पुरुषस्य मृत्युत्वमुपजीव्य मृत्युगतैकत्व-बहुत्वान्तिकदूरत्वमीमांसा। तस्यैव पुरुषस्योपासनं तत्फलमिति मण्डलब्राह्मणस्य प्रतिपाद्योऽर्थः।

अक्षरार्थस्तु—यदेतन्मण्डलं तपति तन्महदुक्थं महदुक्थं मण्डलत्वेन ध्येयम्। एवं महाव्रतचित्याग्नी अर्चिः पुरुषात्मना ध्येयौ। वेदत्रयस्य अग्निवायुसूर्यात्मकत्वेन त्रयो वेदा दैवतानीति वक्तुं युज्यते। अतो मण्डलस्य बृहदुक्थद्वारा ऋग्वेदात्मकत्वोपासनम्। उत्तरत्र अधियज्ञ-पर्याये ऋक्सामादयो यज्ञावयवरूपविशेषा इति नाध्यात्माधियज्ञयोस्तेषामुपास्यार्थता। तन्महदुक्थं ता ऋचः स ऋचः लोकः, उक्थस्य ऋक्सङ्घातनकत्वात् तस्य च मण्डलात्मकत्वोपासनात् ऋचां लोकः ऋग्वेदरूपेण मण्डलमुपासनीयम्। मण्डलरूपेण वा ऋग्वेद उपासनीयः।

तदुभयात्मना महदुक्थमुपासनीयम्, उभयथा व्याख्यातत्वात्। एवमुत्तरत्र महाव्रतं सर्वसामात्मकमर्चीरूपम्। सामवेदात्मना वा ध्यानमर्चिषः। अग्निर्मण्डलपुरुषरूपः, अग्निश्च यजुर्मन्त्रसाध्य इति तस्य पुरुषत्वोक्त्या यजुर्वेदात्मकत्वम्।

एवम्—उक्थ-महाव्रत-चित्याग्नीनां मण्डलार्चिःपुरुषात्मकत्वेन तस्य मण्डलादित्रयस्य ऋग्यजुःसामरूपत्वम्। सैषा त्रयी वेदत्रयमेव तपति। उक्तार्थे लोकसम्मतिमाह—'तद्धैतदविद्वांसोऽप्याहुः' इति। उक्तमर्थस्वरूपं पश्यन्ती पर्यालोचयन्ती वेदलक्षणा वाग्वदति—'त्रय्येव विद्या तपतो'ति।

देवानां मोदनात् मध्विव मधुरूप आदित्य उक्तः। सर्वयज्ञानां कार्यनिर्वृत्तिरूपः सविता महत्या श्रिया दीप्यते। स एष सर्वप्राणिकर्मफलभूतः प्रत्यक्षं सर्वैरुपजीव्यते। तस्य मधुनो द्यौरेव भ्रामरस्येव मधुनस्तिरश्चीनवंशः। अन्तरिक्षञ्च मध्वपूपद्युवंशे लग्नः सन् लम्बत इव। अतस्तत्सामान्यात् अन्तरिक्षं मध्वपूपः। मधुनः सवितुराश्रयत्वाच्च मरीचयो भौमा आपो रश्मिस्थाः सवित्रा आकृष्टाः, एता वा आपः स्वराजो यन्मरीचयः भ्रमरबीजभूताः पुत्रा इव लक्ष्यन्ते, अन्तरिक्षमध्वपूपस्थ-रश्म्यान्तर्गतत्वात्।

'तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्यः। ऋच एव मधुकृतः। ऋग्वेद एव पुष्पम्। ता अमृता आपः। ता वा एता ऋचः।'

तत्र ऋच एव मधुकृतो लोहितं सवित्राश्रयं मधु कुर्वन्ति तत्पुष्पमृग्वेदः। ऋग्ब्राह्मणसमुदायस्य ऋग्वेदाख्यत्वात् शब्दमात्राच्च भोग्यरूपरसनिःस्रावासम्भवात् ऋग्वेदशब्देनात्र तद्विहितं कर्म, ततो हि कर्मफलमधुररसस्रावसम्भवात्। मधुकरैरिव पुष्पस्थानीयाद् ऋग्वेदविहितात् कर्मणोऽप आदाय ऋग्भिर्मधु निर्वर्त्यते। कास्ता आपः? ताः कर्मणि युक्ताः सोमाज्यपयोरूपाः अग्नौ प्रक्षिप्तास्तत्पाकाभिनिर्वृत्ता अमृता अमृतार्थत्वात् अत्यन्तरसवत्य आपो भवन्ति। तद्रसानादाय ता वा एता ऋचः पुष्पेभ्यो रसमाददाना इव भ्रमराः।

'एतमृग्वेदमभ्यतपन्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसो जायते ।'

कर्मणि प्रयुक्ता ऋचः पुष्पस्थानीयं कर्म अभ्यतपन् । ऋग्भिर्मन्त्रैः शस्त्राद्यङ्गभावमुपगतैः क्रियमाणं कर्म मधुनिर्वर्तकं भवति । पुष्पाणीव भ्रमरैराचूष्यमाणानि । कोऽसौ रसो यो मधुकराभितापनिःस्रुत इत्युच्यते ? यशो विश्रुतत्वं तेजो दीप्तिः इन्द्रियवीर्यं इन्द्रियैरवैकल्यं वीर्यं बलम् अन्नाद्यञ्च येनोपयुज्यमानेन अहन्यहनि देवानां स्थितिः स्यात् । एष रसोऽजायत यागादिलक्षणात् कर्मणः ।

'तद्व्यक्षरत् । तदादित्यमभितोऽश्रयत् । तद्वा एतद्यदादित्यस्य रोहितं रूपं तदेवादित्यमभितः पार्श्वतः पूर्वभागं सवितुराश्रितवत् अमुष्मिन्नादित्ये सञ्चितं कर्मफलाख्यं मधु भोक्ष्यामहे' इत्येवं हि फलप्राप्तये कर्माणि क्रियन्ते । तदेव श्रद्धाहेतोः प्रत्यक्षं प्रदर्श्यते—यदेतदादित्यस्योद्यतो दृश्यते रोहितं रूपम् । एवं दक्षिणासु नाडीषु यजूंषि मधुकृतः, प्रतीचीषु सामानि मधुकृतः, उदीचीषु अथर्वाङ्गिरसः मधुकृत उक्ताः । ऊर्ध्वासु गुह्या आदेशा मधुकृत उक्ताः ।

किञ्च—पृथिव्यादीनां प्रत्यक्षादिसिद्धं रूपम् ऋगाभिन्नमेव, तथैव आदित्यस्यापि 'द्वे वाव ब्रह्मणो रूपे' इति प्रकृत्य 'तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्चैतन्मर्त्यमेतत्स्थितम् । एतत् सत् । तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति । सतो ह्येष रसः' ( बृहदा० २ । ३ । २ ) इत्यत्र पृथिव्यादिभूतत्रयस्य सार आदित्यः । भूतत्रयस्य रसो मूर्तो ह्येष सविता तपति सारिष्ठश्चेति ( शां० भा० ) ।

एवमेव—

'अथामूर्तं वायुश्चान्तरिक्षं चैतदमृतमेतद्यदेतत् त्यम् । तस्यैतस्य अमूर्तस्यैतस्य अमृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन् मण्डले पुरुषस्त्यस्य ह्येष रस इत्यधिदैवतम् ।' ( बृह० २ । ३ । ३ ) अत्रामूर्तस्य त्यस्य अन्तरिक्षवाय्वात्मकस्य सारो मण्डलस्थः पुरुषः

त्यस्य ह्येष रस इति तत्रैवाध्यात्मं मूर्तस्य रसः चक्षुः अमृतस्य रसो दक्षिणाक्षिपुरुषः ।

एवमेव पञ्चमाध्यायस्य पञ्चमे ब्राह्मणे 'आप एवेदमग्र आसुः । ता आपः सत्यमसृजन्त सत्यं ब्रह्म प्रजापतिम् । प्रजापतिर्देवांस्ते देवाः सत्यमेवोपासते । तदेतत् त्र्यक्षरं सत्यमिति ·· ” इत्यत्र आप इति कर्मसमवायिन्योऽग्निहोत्रआहुतयः । द्रवत्वात् तासामप्त्वम् । ताश्चापोऽग्निहोत्रादिकमपवर्गोत्तरकालं केनचिददृष्टेन सूक्ष्मेणात्मना कर्मसमवायित्वमपरित्यजन्त्य इतरभूतसहिता एव, न केवलाः । कर्मसमवायित्वात्तु प्राधान्यमपामिति सर्वाण्येव भूतानि प्रागुत्पत्तेः अव्याकृतावस्थानि निर्दिश्यन्त आप इति । ता आपो बीजभूता जगतोऽव्याकृतात्मनाऽवस्थिताः । ता एवेदं सर्वं नामरूपविकृतजगदग्रे आसुः, नान्यद्विकारजातम् । ता आपः सत्यमसृजन्त तदेतद्धिरण्यगर्भस्य सूत्रात्मनो जन्म यदव्याकृतस्य जगतो व्याकरणम् तत्सत्यं ब्रह्म । कुतः ? महत्त्वात् । कथं महत्त्वम् ? यस्मात् सर्वस्य स्रष्टृ ।

तस्यैव सत्यस्य ब्रह्मणः संस्थानविशेष उपासनविवक्षया उक्तः—'तद्यत् तत्सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषः । तावेतौ अन्योन्यस्मिन् प्रतिष्ठितौ । रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः । प्राणैरयममुष्मिन् प्रतिष्ठितः । स यदोत्क्रमिष्यन् भवति, शुद्धमेवैतन्मण्डलं पश्यति । नैनमेते रश्मयः प्रत्यायन्ति ।' (बृह० ५ । ५ । २ ) । अत्र आदित्यमण्डलाभिमानी पुरुषः सत्यं ब्रह्मोक्तम् , अध्यात्मं च दक्षिणाक्षिपुरुषः ।

तस्यैव च 'य एष एतस्मिन् मण्डले पुरुषस्तस्य भूरिति शिर एकं शिर एकमेतदक्षरम् । भुव इति बाहू । द्वौ बाहू द्वे अक्षरे । स्वरिति प्रतिष्ठा । द्वे प्रतिष्ठे द्वे एते अक्षरे····· 'इत्यादिना तस्यैव व्याहृत्यवयवात्मकत्वेन उपासनमुक्तम् । अत्रैकस्मिन् पुरुषे वेदत्रयसारव्याहृतिरूपत्वमपि उपासनार्थमेवोक्तम् ।

तदेतन्मण्डलब्राह्मणेऽप्युक्तम्—'अन्ने भात्यपश्रितो रसानां संक्षरेऽमृत इति । यदेतन्मण्डलं तपति तदन्नम् । अथ य एतस्मिन् मण्डले पुरुषः

सोऽत्ता। स एतस्मिन्नन्नेपाश्रितो भातीत्यधिदैवतम्। अथाध्यात्मम्। इदमेव शरीरमन्नम्। अथ योऽयं दक्षिणेऽक्षन् पुरुषः सोऽत्ता। स एतस्मिन्नन्नेपाश्रितो भाति तमेतमग्निरित्यध्वर्यव उपासते, यजुरिति। एष हीदं सर्वं युनक्ति। सामेति छन्दोगाः। एतस्मिन् हीदं सर्वं समानमुक्थमिति बह्वृचाः। एष हीदं सर्वमुत्थापयति यातुरिति यातुविदः' इति।

एतेन—"हीदं सर्वं यतं विषमिति सर्पाः, सर्प इति सर्पविद ऊर्गिति देवा रयिरिति मनुष्या मायेत्यसुराः स्वधेति पितरो देवजन इति देवजनविदो रूपमिति गन्धर्वा गन्ध इत्यप्सरसः तं यथा यथोपासते तदेव भवति। तद्धैनान् भूत्वाऽवति। तस्मादेनमेवंवित् सर्वैरेव एतैरुपासीत। सर्वं हैतद्भवति। सर्वं हैनमेतद्भूत्वाऽवति' अत्र मण्डलस्थपुरुषस्यैव उक्थत्वं यजुष्ट्वं सामत्वञ्चोक्तम्। केनचित् सामान्येनारोपमन्तरेण एकस्य वस्तुनोऽनेकरूपत्वं न सम्भवति। अत एवात्र सर्वं युनक्तीत्यादिना योक्तृत्वसमानत्वोत्थापयितृत्वादिसामान्येन पुरुषस्य यजुष्ट्वादिकमुक्तम्।

ऐतरेयकरीत्या 'यं पुरुषः परमात्मैवेत्यपि ज्ञायते एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते। एतमग्नावध्वर्यव एतं महाव्रते छन्दोगा एतमस्यामेतं दिव्येतं वायवेतमाकाश' इत्युपक्रम्य सर्वेषु भूतेष्वेतं ब्रह्मेत्याचक्षते। एतं पुरुषमग्निरिष्टकाचयनेन निष्पादितोऽग्निरित्याचक्षते, यजुरिति च। सर्वं युनक्तीत्यादिवचनानि परमात्मपरतयाऽपि सङ्गच्छन्ते, सर्वव्यापकत्वात् सर्वाधारत्वात् सर्वोत्पादकत्वाच्च। मण्डलस्थस्य पुरुषस्य मृत्युरूपत्वेन परमात्मत्वम्।

'यस्य ब्रह्म च क्षत्रञ्च उभे भवत ओदनः। मृत्युर्यस्योपसेचनम्' इति मृत्यूपसेचनसहितस्य ब्रह्मक्षत्रोपलक्षितस्य समस्तस्य प्रपञ्चौदनस्य अत्ता परमात्मैव। स एव मृत्योरपि मृत्युरिति 'अत्ता चराचरग्रहणात्' इत्यत्र निर्णीतम्। 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः हिरण्यकेशः आप्रणखात् सर्व एव सुवर्णः। तथा वाध्यात्ममपि। अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते इत्ययं परमात्मैवे'त्यपि 'अन्तस्तद्धर्मोपदेशात्" (ब्र० सू०) इत्यत्र निर्णीतम्। तत्रापि 'सैवक् तत्साम

तदुक्थं तद्यजुस्तद्ब्रह्मे'ति निर्धारितम् , सर्वकारणत्वादेव ऋगाद्यात्मकता निर्धारिता। 'तस्यर्क् च साम च गेष्णावि'त्यप्युक्तम् ।

स एष त्रीष्टकोऽग्निः, ऋगेका यजुरेका सामैका यां कां चात्रर्चोपदधाति रुक्म एव तस्यायतनम्। यां यजुषा पुरुष एव तस्यायतनम्। यां साम्ना पुष्करपर्णमेव तस्यायतनम्। एवं त्रीष्टकः। एवमिष्टकानाम् ऋगाद्यात्मकत्वेन चित्याग्नेस्त्रयीमयत्वम्।

'सैषा त्रयी विद्या तपती'त्यत्र सायणः—श्रीगुरुभिश्छात्र-प्रच्छात्रोपच्छात्रद्वारा अध्याप्यमाना त्रयीविद्या तपति। अर्चिषाममृतत्वेन तन्मध्यवर्तिपुरुषस्य मृत्युत्वम, तेनैव च तस्याप्यमृतत्वमुक्तम्। 'सैषा त्रय्येव तपति यदेतन्मण्डलं तपति तन्महदुक्थं स ऋचां लोकः' इत्यादिसामानाधिकरण्यं किं रूपमिति विचारणीयम्। क्वचिदेकत्वविज्ञानं सम्पद्रूपं भवति। यथा—'अनन्तं वै मनोऽनन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति।' क्वचिदध्यासरूपं भवति। यथा-'मनो ब्रह्मेत्युपासीत, आदित्यो ब्रह्मेत्युपासीत।' क्वचिद्विशिष्टक्रियानिमित्तः। यथा-वायुर्वाव संवर्गः, प्राणो वाव संवर्गः।' क्वचित् 'तत्त्वमसि, अहं ब्रह्मास्मि' इत्यादौ मुख्याभेदरूपं भवति। न ह्यकारणं सामानाधिकरण्यमुपदिश्यते। नहि 'गौरश्व' इति सामानाधिकरण्यं भवति। 'मृद्घट' इत्यादावपि प्रकृतिविकारभावमाश्रित्य सामानाधिकरण्यं भवति। 'ब्रह्मदृष्टिरुत्कर्षादि'ति सूत्रे अपकृष्टे उत्कृष्टदृष्टिरुक्ता। ब्रह्मदृष्टिरादित्यादिषु। एवमुत्कर्षेण आदित्यादयो दृष्टा भवन्ति। लोकेऽपि राजदृष्टिः क्षत्तरि क्रियते। स हि क्षत्तृदृष्टिपरिगृहीतो राजा निकर्षं नीयमानः श्रेयसे सम्पद्येत।

न च प्राणस्यैव ऋगादित्वेन सर्वात्मतोपपद्यते इति वाच्यम्; प्रश्नोपनिषदादौ ऋगादीनां प्राणे प्रतिष्ठितत्वोक्त्या तदनुपपत्तेः। नहि प्राणादिरूप एव ऋगादिः प्राणे प्रतिष्ठित इति सम्भवदुक्तिः। किञ्च-'उक्थं प्राणो वा उक्थं प्राणो हीदं सर्वमुत्थापयति······यजुः प्राणो वै यजुः प्राणो हीमानि सर्वाणि भूतानि युज्यन्ते ·· साम प्राणो वै साम प्राणे हीमानि सर्वाणि भूतानि सम्यञ्चि······' ( बृह० ५। १३। ३ ) अत्र प्राणस्यापि ऋग्यजुःसामरूपेणोपासनमुक्तम्। तेन शब्दराश्यतिरिक्तस्य

ऋग्वेदादेः न किञ्चिदन्यत् स्वरूपं विज्ञायते । प्राणस्य अवान्तरकारणत्वे सत्यपि सर्वकारणत्वानुपपत्तेश्च । तेन शालग्रामे विष्णुबुद्धिवत् मनोऽन्नादित्यादिषु ऋगादिबुद्धिर्युक्ता ।

प्रकृतिविकारभावेन सामानाधिकरण्ये विकारोपमर्दबुद्धिरपि जायते । 'आदित्यं ब्रह्मेत्युपासते यो वाचं ब्रह्मेत्युपासते यः सङ्कल्पं ब्रह्मेत्युपासते' इत्यादौ तु शुक्तिकां रजतं प्रत्येतीतिवत् ब्रह्मणि आदित्याध्यासो भवति ।

न केवलमादित्यस्यैव ऋक्त्वादिकम्, किन्तु वागादीनामपि ऋक्त्वादिकमुक्तमेव । न ह्यत्र मुख्याभेदाभिप्रायेणायं सामानाधिकरण्यप्रयोगः । आदित्यादीनां ततो भिन्नत्वेन प्रसिद्धत्वात् । नहि ब्रह्मण इव ऋगादीनामपि सर्वात्मकता सम्भवति, येन आदित्यादीनां प्रकृतिविकारभावेन सामानाधिकरण्यं युज्येत । न च प्राणस्य सर्वकारणत्वात् सर्वरूपत्वं सम्भवति, ब्रह्मण एव सर्वकारणत्वावधारणात्—'तेन तं बृहस्पतिरुद्गीथमुपासाञ्चक्रे, एतमु एव बृहस्पतिं मन्यते वाग्घि बृहती तस्या एष पतिः' ( छा० १ । ३ । ११ ) ।

'इयमेव ऋग्, अग्निः साम । तदेतस्यामृच्यध्यूढं साम । तस्मादृच्यध्यूढं साम गीयते । इयमेव साग्निरमस्तत्साम ।' ऋचि पृथिवीदृष्टिः कार्या, साम्न्यग्निदृष्टिः । यथा च ऋक्सामनी नात्यन्तं भिन्ने अन्योन्यं तथैतौ पृथिव्यग्नी ।

भाष्यम्—'कथमियमेव पृथ्वी सा साम नामार्धशब्दवाच्या, इतरार्धशब्दवाच्योऽग्निः । तदेतत्पृथिव्यग्निद्वयं सामैकशब्दाभिधेयत्वमापन्नम् । तस्मान्नान्योन्यं भिन्नं पृथिव्यग्निद्वयं नित्यं संश्लिष्टमृक्सामनी इव । तस्माच्च पृथिव्यग्न्योर्ऋक्सामत्वमित्यर्थः ।

'अन्तरिक्षमेवर्क् वायुः साम… । द्यौरेवर्क् आदित्यः साम… ।' इत्यादौ एवमेव आदित्यस्य रूपेष्वपि ऋगादिबुद्धिर्विहिता । 'अथ यदेतदादित्यस्य शुक्लं भाः सैवर्क् । अथ यन्नीलं परः कृष्णं तत्साम । तदेतदेतस्यामृच्यध्यूढं साम… । नक्षत्राण्येवर्क्, चन्द्रमाः साम… ।' एवमेव 'वागेवर्क्…' इत्यादिषु सर्वत्र चैवमुपासनार्थमेव सामानाधिकरण्योपदेशो विज्ञेयः ।

'ऋक्सामयोः शिल्पेस्थः' ( शुक्लयजु० ४ । ६ ) 'ऋक्सामे वै देवेभ्यो यज्ञार्थं तिष्ठमाने कृष्णरूपं कृत्वाऽपक्रम्य तिष्ठतामेष वा ऋचो वर्णो यच्छुक्लं कृष्णाजिनमस्यै साम्नो यत् कृष्णम्' ( तै० ६ । १३ ) तत्साम्नो रूपमुक्तम् । अत्र ऋक्सामाभिमानिन्यौ देवते देवानां यज्ञार्थं स्थिते सत्यौ केनापि निमित्तेन कृष्णमृगरूपं कृत्वा देवेभ्यः पलाय्य दूरे कुत्राप्यतिष्ठताम् । नात्र वस्तुतः शुक्लरूपस्य ऋक्त्वं तद्भेदप्रसिद्धिविरोधात् । 'ऋचो नामास्मि यजूंषि नामास्मि सामानि नामास्मि ये अग्नयः पाञ्चजन्याः अस्यां पृथिव्यामधि...... ...' ( शुक्ल यजुः० १८ । ६७ ) अनेन मन्त्रेण यजमान आत्मनि वेदत्रयात्मकत्वं सम्पादयति । नात्रापि यजमानस्य ऋगादिनैक्यं वस्तुभूतम् । तथैव 'ऋचं वाचं प्रपद्ये मनो यजुः प्रपद्ये साम प्राणं प्रपद्ये' इत्यत्रापि ऋगाद्यभेदेन दृष्टेषु वागादिष्वेव प्रपत्तिर्ज्ञेया ।

'आयुर्यज्ञेन कल्पताम्.........स्तोमश्च यजुश्च ऋक् च साम च बृहच्च रथन्तरम्' ( शुक्लयजुः० १८ । २६ ) इत्यादिनापि स्तोम-यजुरादीनां यज्ञक्लृप्तिरपि भावनार्थैव ।

'यस्मिन्नृचःसामयजूंषि यस्मिन् प्रतिष्ठिता रथनाभाविवाराः ।
यस्मिंश्चित्तं सर्वमोतं प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥'

इत्यत्रापि मनसः स्वास्थ्ये त्रयीस्फूर्तेः संस्काररूपेण मनस्येव ऋगादयः सन्निहिता भवन्ति । अत एव 'अन्नमयं हि सोम्य मनः' इत्यत्र मनसः स्वास्थ्ये वेदोच्चारणशक्तिः प्रतिपादिता । 'प्रजानां सर्वं चित्तं ज्ञानं मन स्येव तन्तुषु पट इव ततम्' अत्रापि शब्दात्मका एव ऋगाद्या बोध्याः ।

सर्वथाऽपि 'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा' इत्यादौ उपदिष्टा वाक् शब्दराशिरूपा वेदत्रय्येव । 'शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्', 'अत एव च नित्यत्वम्' इत्यादिसूत्रैस्तस्या एव भगवत्पादादिभिर्नित्यत्वसाधनात् । सूत्रेण सर्वस्य शब्दप्रभवत्वं साध्यते, तेन शब्दस्यैव नित्यत्वं स्पष्टमुक्तम् । शब्दात्मिकाया एव वाचः सम्प्रदाय-प्रवर्तनरूप उत्सर्गः । तस्या एव वाचो 'वाचा विरूपनित्यया' इति मन्त्रेणापि नित्यत्वमुक्तम् । न चात्र भूतभौतिकोपादानभूतरूपाया वाचो

नित्यत्वोक्तिः; तस्यः सुष्टुतिसाधन ासम्भवात्। शब्दात्मिकयैव वाचा सुष्टुतिः प्रसिद्धा।

'तस्मै नूनमभिद्यवे, वाचा विरूपनित्यया। वृष्णे चोदस्व सुष्टुतिम्' एतदर्थस्तु—हे विरूप नानारूपैतन्नामकमहर्षे त्वं तस्मै अभिद्यवेऽभिगतदीप्तये वृष्णे वर्षकाय अग्नये नित्यया उत्पत्तिरहितया वाचा सुष्टुतिं नूनमिदानीं चोदस्व स्तुहि। विरूप एवास्य षोडशर्चस्य द्रष्टा। अतः ऋषिरात्मानमेव ब्रवीति, यजमानो वा होतारम्।

एतेन—'तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥' (ऋ० सं० १०।९०।९, यजुः० ३१।७) इत्यादिमन्त्रैश्च प्रसिद्धानामेव ऋक्सामयजुषां यज्ञपदवाच्यात्परमेश्वरादेव आविर्भाववर्णनम्। तस्यैव निःश्वासरूपेणापि प्रसिद्धानाम् ऋग्वेदादीनामेव प्रादुर्भाववर्णनम्।

यच्च—"अव्ययपुरुषकलारूपा नित्या मनप्राणवाचः प्रकृतिसम्बन्धेन पुनरपरेण रूपेण प्रादुर्भवन्ति। सोऽयं प्रादुर्भावः सर्वहुन्नामकाद्यज्ञात् भवति। छन्दांस्यत्र तत्तत्पदार्थानां मर्यादाबन्धः। सर्वस्य पदार्थजातस्य नाभौ केन्द्रे यः प्रजापतिः प्रादुर्भवति तस्य निःश्वासभूता अर्थात् केन्द्रमभितो वितता इमा ऋगादिरूपा वाच उच्यन्ते। प्रथमः प्रजापतिः स्वयम्भूरित्याख्यायते। तथा चोक्तं मनुना—

'ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम्।
महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः॥' इति।

एतत् स्वयंभू-मण्डलमृग्यजुःसामेति त्रयीमयम्। अत एव ब्रह्मणः प्रादुर्भूता वेदा ब्रह्मरूपा एव, ऋगादीनां कार्यब्रह्मस्वरूपानतिरेकात्। इत एव स्वयम्भूमण्डलात् व्याख्यातपूर्वा वेदत्रयी सर्वत्र जगति प्रसरति, ऋग्यजुःसामान्येव स्वयम्भूमण्डलस्य मनोताः। यस्मान्मण्डलाद्ये प्राणा प्रसरन्ति, सर्वैश्चोपजीव्यन्ते, ते 'मनोता' उच्यन्ते। एवं तिस्र एता ऋगादिरूपा वाच एव स्वयम्भूमण्डलमुत्पादयन्ति। एतद्वाग्रूपमेव स्वयम्भूमण्डलम्। तदनु च तस्मान्मण्डलादिमा एव अंशरूपेण

निष्क्रम्य अन्यत्र गच्छन्तीति निःश्वासभूता एता उक्ताः। प्राणो हि शरीरारम्भकः शरीरधारकः। स एव चांशरूपनिःश्वासरूपतामापद्य शरीराद्बहिर्गच्छतीति निःश्वाससादृश्यम्।

'एवं वा अरे अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राणि अनुव्याख्यानानि व्याख्यानानि' (बृह० २।४।१०) इत्यत्र महाभूतपदेन प्रजापतिरेवेष्टव्यः, तस्य प्रतिपाद्यमानात्मब्रह्मस्वरूपानतिरेकात्। यदि तत्र ऋगादिपदेन प्रसिद्धा विज्ञानरूपा ग्रन्थरूपा वा वेदा गृह्यन्ते, तदा तु महद्भूतपदेन प्रक्रान्तः शारीर आत्मैव गृहीतुमुचितः, ब्रह्मानतिरिक्तात् शारीरादात्मन एव विज्ञानघनात् निःश्वासरूपेणानवरतं विज्ञानानां वृत्त्यात्मकानां प्रादुर्भावदर्शनात्, वेदादिग्रन्थानामपि तत एव प्रवृत्तेः। ईश्वरप्रेरितं वेदादिविज्ञानमस्य शरीरस्यान्तः प्रविशति। ततश्च सर्वजन-बोध्यतामाप्नुवद्वाग्रूपेण निष्क्राम्यतीति निःश्वाससादृश्यम्। अत एव श्लोकसूत्रव्याख्यानानुव्याख्यानादीनामपि महाभूतनिःश्वसितत्वमुच्य-मानमाञ्जस्येन उपपद्यते तेषामपि शारीरादात्मनः प्रादुर्भावात्।

यत्तु- 'श्लोकसूत्रादिकं सर्वमत्रोक्तं ब्राह्मण एवान्तर्भवती'ति मतम्, तत्तु तत्तद्वेदब्राह्मणानामपि तद्वेदस्वरूपान्तर्भावात् ऋग्यजुःसामपदैरेव ब्राह्मणानामपि सङ्ग्रहणात् नातीव समञ्जसं प्रतीयते। अत एव 'इमे वेदा निर्मिता' इति गोपथश्रुतिरपि सङ्गता स्यात्। तदित्थं वेदानामीश्वरस्व-प्रवाद ईश्वरनिःश्वसितत्वप्रवादश्च युक्त्या समर्थितः।

शरीरे द्विविधाः क्रिया दृश्यन्ते—(१) इच्छाजन्याः, (२) इच्छां विनैव स्वतः प्रवर्तमानाश्च। तत्र श्वासादिकं स्वतःप्रवर्तमानास्वन्तर्भवति। तेनेदमपि विवक्ष्यते यद् इमा ऋग्यजुःसामाख्या वाचः प्रजापतेः स्वत एव यज्ञप्रक्रियया प्रादुर्भवन्ति, न त्विच्छया उत्पाद्यन्ते। यथा हि निःश्वासैरेव मनुष्यजीवनस्य परिचयः, तथैताभिर्वाग्भिरेव प्रजापतेः परिचयः, स्वतः प्रजापतेरतीन्द्रियत्वात्। महतो भूतस्यात्मनोऽपि वृत्त्यात्मकैर्ज्ञानैरेव परिचयः इत्यादि सादृश्यमुन्नेयम्।

सर्वस्मिंश्च ब्रह्माण्डे मुख्यः प्रजापतिः सूर्यः। तत इमे ऋगादिवेदाः पुनः पुनः प्रादुर्भवन्ति। अत एव सूर्यप्रभवत्वमुक्तमेषाम्। इमे च ऋगाद्या गायत्रीमातृका वेदा इत्युच्यन्ते वैदिकपरिभाषायाम्" इति।

तदेतत्सर्वमपि अविचारितरमणीयम्; 'शास्त्रयोनित्वात्', 'शब्द इति चेन्नातः प्रभवात्' 'अत एव च नित्यत्वम्' इत्यादिसूत्रादिविरोधात्। तथा हि—शङ्करभगवत्पादैरन्यैश्च भाष्यकारैः शास्त्रयोनित्वादिति शास्त्रस्य ऋग्वेदादेः परमात्मप्रभवत्वेन परमेश्वरस्य सार्वज्ञ्यसिद्ध्या 'जन्माद्यस्य यतः' इति जगज्जन्मादिकारणत्वं समर्थितम्। तदुक्तम्—

"महत ऋग्वेदादेः शास्त्रस्यानेकविद्योपबृंहितस्य प्रदीपवत्सर्वार्थविद्योतिनः सत्यसङ्कल्पस्य योनिः कारणं ब्रह्म। नहीदृशस्य ... सर्वज्ञादन्यतः सम्भवोऽस्ति। ......यद्यद्विस्तरार्थं शास्त्रं यस्मात्पुरुषविशेषात् सम्भवति, यथा व्याकरणादि पाणिन्यादेर्ज्ञेयैकदेशार्थमपि ततोऽधिकतरविज्ञान इति प्रसिद्धं लोके। किमुत वक्तव्यमनेकशाखाभेदभिन्नस्य सर्वज्ञानाकरस्य अप्रयत्नेनैव लीलान्यायेन पुरुषनिःश्वासवद्यस्मान्महतो भूतायोनेः सम्भवः, तस्य महतो भूतस्य निरतिशयं सर्वज्ञत्वं सर्वशक्तिमत्त्वञ्च" इति।

न ह्यत्र वाक्प्राणमनसामुत्पत्तिर्वर्णिता, 'जन्माद्यस्य यतः' इत्यनेनैव तदुक्तत्वात्। न चात्र अवान्तरकारणस्य प्रजापतेः सकाशात् शास्त्रस्य उत्पत्तिर्विवक्षिता, परमकारणस्यैव प्रक्रान्तत्वात्। 'अस्य महतो भूतस्य' इत्यत्रापि परमात्मन एव वेदादिकारणत्वमुक्तम्।

ननु तत्र विज्ञानात्मन एव प्रक्रमः, 'आत्मनस्तु कामाय सर्वं प्रियं भवती'त्यादिषु पति-जाया-पुत्र-वित्तादिकं हि भोग्यभूतं जगदात्मार्थतयैव प्रियं भवतीति प्रियसंसूचितस्य भोक्तुरेव उपक्रमात् 'इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्यसंज्ञास्ति' इति प्रकृतस्यैव विज्ञानभावेन कथनात् 'विज्ञातारमरे केन विजानीयात्' इति कर्तृवचनेन तस्यैवोपसंहाराच्चेति चेन्न।

वाक्यान्वयाधिकरणे बादरायणेन प्रकरणस्यास्य परमात्मप्रकरणत्वाव-धारणात् 'अमृतत्वस्य तु नाशास्ति' इति याज्ञवल्क्यादुपश्रुत्य 'येनाहं नामृता स्यां किमहं तेन कुर्याम्' इत्यमृतत्वमाशासानाया मैत्रेय्या अमृतत्वसाधनोपदेशात्।

न च परमात्मविज्ञानादन्यत्र अमृतत्वं सम्भवति ; 'तमेव विदित्वाति-मृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इतिश्रुतेः, 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितमि'ति आत्मविज्ञानेन सर्वविज्ञानं चोक्तम्। अत्र आत्मशब्देन परमात्मग्रह एवोपपद्यते, सर्वकारणब्रह्म-विज्ञानेनैव सर्वविज्ञानस्य 'तदनन्यत्वमारम्भणशब्दादिभ्यः' ( ब्रह्मसूत्र ) इत्यादिषु प्रतिपादनात्। न चात्र औपचारिकं सर्वविज्ञानं सङ्गतम् ; 'ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद' इत्यादौ चात्मनोऽन्यत्र स्वातन्त्र्येण लब्धसद्भावं ब्रह्मक्षत्रादि जगत् पश्यन्तं तदेव ब्रह्मक्षत्रादिकं पराकरोतीति भेददृष्टिमपोह्य 'इदं सर्वं यदयमात्मे'ति सर्वस्य वस्तुजातस्य दुन्दुभ्यादि-दृष्टान्तैरात्माव्यतिरेकप्रतिपादनात्। प्रियसंसूचितस्य द्रष्टव्यत्वसङ्कीर्तनेन आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवतीत्यस्याः प्रतिज्ञायाः 'सिद्धि-रित्याश्मरथ्यः, उत्क्रमिष्यत एवं भावादित्यौडुलोमिः, अवस्थितेरिति काशकृत्स्नः' इत्यादिसूत्रैरयमर्थो भाष्ये विशदः।

न च परमात्मनः पुराणेतिहासश्लोकसूत्रादीनां कुतो निर्माणसम्भवः, तेषां तत्तदृषिकर्तृकत्वनिश्चयादिति वाच्यम् ; पुराणादिपदैः ब्राह्मण-विशेषणामेवोत्पत्तेर्भगवत्पादैर्व्याख्यातत्वात्। तथा हि—

'ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इति चतुर्विधं मन्त्र-जातम्। इतिहास इति उर्वशीपुरूरवसोः संवादादिः। 'उर्वशी हाप्सरा' इत्यादिब्राह्मणमेव। पुराणम् 'असद्वा इदमग्र आसीत्' इत्यादि। विद्या देवजनविद्या सोऽयमित्याद्याः। उपनिषदः 'प्रियमित्येतदुपासीते'त्याद्याः। श्लोका ब्राह्मण-प्रभवा मन्त्राः 'तदेते श्लोका' इत्यादयः। सूत्राणि वस्तुसङ्ग्रह-वाक्यानि यथा 'आत्मेत्येवोपासीते'त्यादीनि, अनुव्याख्यानानि मन्त्रविवरणानि। व्याख्यानानि अर्थवादाः...... ...इत्यष्टविध

ब्राह्मणम्। एवं मन्त्रब्राह्मणयोरेव ग्रहणम्। नियतरचनावतो विद्यमानस्यैव वेदस्याभिव्यक्तिः। पुरुषनिःश्वासवन्न पुरुषबुद्धिप्रयत्नपूर्वकं तन्निर्माणम्। अतः प्रमाणं निरपेक्षमेव स्वार्थे" इति।

यदुक्तम्—"ऋग्वेदादिष्वेव ब्राह्मणान्तर्भावः सम्भवती"ति। तन्न; वेदशब्देन ऋग्वेदादीनामन्तर्भावसम्भवेन विशिष्योपदेशानापत्तेः। अन्यथा भवदुदाहृत-गोपथश्रुतावपि 'इमे सर्वे वेदा' इत्यनेनैव अभीष्टसिद्धौ 'सकल्पाः सरहस्याः सब्राह्मणा' इत्याद्युपदेशो व्यर्थ एव स्यात्।

वस्तुतस्तु – इतिहास-पुराण-श्लोक-सूत्रादिग्रहणं भवत्पक्ष एव प्रतिकूलम्, विज्ञानात्मकत्वे वेदेतिहासादीनां प्रसिद्धवैलक्षण्यबाधात्। प्रजापतिनिःश्वासरूपत्वे च ऋगादीनामिव इतिहासपुराणश्लोकसूत्रादीनामपि निर्वक्तृकत्वापत्तेश्च। यथा ऋग्यजुःसाम्नां मूर्त्यादिरूपतेवतेषामपि रूपान्तराणि वक्तव्यानि।

एवमेव 'छन्दः'शब्देनापि प्रसिद्धार्थं परित्यज्य पदार्थमर्यादाद्यर्थकल्पनमपि निष्प्रमाणकमेव। पदार्थजातस्य नाभौ प्रजापतिर्भवति। तस्य परितः प्रसृता ऋगादय इतीयं कल्पना नितरां कल्पनैव। पूर्वोत्तरमीमांसारूपे वाक्यशास्त्रे तस्या अचर्चितत्वात्।

यत्तु—तत्साधनाय मन्त्रोपन्यासः कृतः, तस्य अन्यथा व्याख्यास्यमानत्वात्। तस्माद्यज्ञशब्देन महद्भूतशब्देन च परमात्मैव गृहीतः। तत एव प्रसिद्धानामपौरुषेयशब्दराश्यात्मकानामेव वेदानां प्रादुर्भावः पूर्वोक्तमन्त्रब्राह्मणयोर्वर्णितः। निःश्वासवत् पुरुषबुद्धिप्रयत्नानपेक्षतया परमेश्वरस्यापि नियतानुपूर्वीपरिवर्तने स्वातन्त्र्याभावात् पुरुषाश्रितभ्रम प्रमाद-करणापाटवादिदोषकलङ्कपङ्क-शून्यत्वादनपेक्षं तेषां प्रामाण्यम्।

'शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्' इति सूत्रे श्रीशङ्करभगवत्पादैरपि औत्पत्तिकं हि शब्दस्यार्थेन सम्बन्धमाश्रित्य अनपेक्षत्वाद्वेदस्य यत् प्रामाण्यं व्यवस्थापितं पूर्वमीमांसकैस्तदेवाङ्गीकृतम्। यैस्तु गुणवद्वक्तृकत्वेन प्रामाण्यमास्थीयते तेषां नैतदप्युपपद्यते।

ननु विग्रहवतां जननमरणवतामृषीणां देवानाञ्च कथं नित्येन शब्देन सम्बन्धः ? यतो नित्यस्य शब्दस्य नित्येनैवार्थेन नित्ये सम्बन्धे प्रतीयमाने यद्वेदस्य प्रामाण्यमुक्तं तद्विरुद्धयते इति चेन्न । सर्वस्यैव जगतः शब्दप्रभवत्वेन तदविरोधात् ।

ननु यदि वसवो रुद्रा आदित्या विश्वेदेवा मरुतः देवाः मन्त्रार्थः ; विश्वामित्रादय ऋषयश्च द्रष्टारः, उत्पत्तिमत्त्वादनित्या एवेति कुतः शब्दप्रभवत्वेन विरोधाभावः ? पुत्रे जाते नाम क्रियत इति हि लोके प्रसिद्धम् , विग्रहवतामनित्यानां वस्वादीनां देवानां विश्वामित्रादीनामृषीणां कुतो च नित्यनामानीति चेन्न । गवादिशब्दार्थसम्बन्धनित्यत्वदर्शनात् गवादिव्यक्तीनामनित्यत्वेऽपि गोत्वादिजातीनां नित्यत्वमेव । जातिभिरेव सम्बन्धः शब्दानां न व्यक्तिभिः, व्यक्तीनामानन्त्यात् सम्बन्धग्रहणानुपपत्तेः । तथा च व्यक्तिषु उत्पद्यमानास्वपि आकृतीनां नित्यत्वान्न गवादिशब्देषु विरोधः । तथैव देवादिव्यक्तिप्रभवाभ्युपगमेऽपि जातिनित्यत्वात् न कश्चिद्वस्वादिशब्देषु विरोधः । मन्त्रार्थवादादिभ्यो विग्रहवत्त्वावगमाद् देवादीनाम् । स्थानविशेषसम्बन्धनिमित्ताश्च इन्द्रादिशब्दाः सेनापत्यादिशब्दवत् । ततश्च यो यस्तत्स्थानमधिरोहति, स स इन्द्रादिशब्दवाच्यो भवति । तथा च इन्द्रादिव्यक्तीनामनित्यत्वेऽपि न विरोधः ।

न चेदं शब्दप्रभवत्वं ब्रह्मप्रभवत्ववत् उपादानाभिप्रायेणोच्यते । किन्तु स्थिते वाचकात्मना नित्ये शब्दे नित्यार्थसम्बन्धिनि शब्दव्यवहारयोग्यार्थव्यक्तिनिष्पत्तिः । जगतः शब्दप्रभवत्वं प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यां सिद्धं भवति । प्रत्यक्षं श्रुतिः, प्रामाण्यं प्रत्यनपेक्षत्वात् । अनुमानं स्मृतिः, प्रामाण्यं प्रति सापेक्षत्वात् । न चायं भेदः श्रुतिस्मृत्योः विज्ञानवादिमते सम्भवति, गुणवद्वक्तृकत्वस्य उभयत्रापेक्षणात् । ते हि श्रुतिस्मृती शब्दपूर्वां सृष्टिं दर्शयतः—

'एत इति प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानिन्दव इति पितृन् तिरः पवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति

शब्दमभिसौभगेत्यन्याः प्रजाः' इति श्रुतिः। 'स मनसा वाचं मिथुनं समभवत्' ( बृह० १ । २ । ४ )। स्मृतिरपि —

'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥'
'नामरूपञ्च भूतानां कर्मणाञ्च प्रवर्तनम्।
वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः ॥'
'सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥' इति।

अत्रापि शब्दराश्यात्मको वेद एव अनादिनिधना वाग् विवक्षिता। अत एव वाचो 'वेदमयी'ति विशेषणं सङ्गच्छते। 'यतः सर्वाः प्रवृत्तय' इत्यपि शब्दात्मकत्व एव सङ्गतं भवति। उत्सर्गोऽप्ययं सम्प्रदायप्रवर्तनात्मकः, अनादिनिधनाया अन्यादृशस्योत्सर्गस्यासम्भवात् द्रष्टव्य इति भगवत्पादाः। 'वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः' इत्यप्युक्तमेवार्थं पोषयति। नहि विज्ञानात्मकवेदग्रहणे तदुपपद्यते। लोकेऽपि चिकीर्षितमर्थमनुतिष्ठंस्तस्य वाचकं शब्दं पूर्वं स्मृत्वा पश्चात्तमर्थमनुतिष्ठतीति सर्वेषां नः प्रत्यक्षम्। तथैव प्रजापतेरपि स्रष्टुः सृष्टेः पूर्वं मनसि वैदिकाः शब्दाः प्रादुर्बभूवुः। पश्चात्तदनुगतानर्थान् ससर्ज। तथा च श्रुतिः—'स भूरिति व्याहरत्, स भूमिमसृजत्' ( तै० ब्रा० २। २। ४। २ )। ततश्च नित्येभ्यः शब्देभ्यो देवव्यक्तीनां प्रभव इत्यविरुद्धम्।

'अत एव च नित्यत्वम्' ( ब्रह्म० १। ३। २९ ) इत्यत्र स्वतन्त्रस्य कर्तुरस्मरणादिति स्थिते वेदस्य नित्यत्वे देवादिव्यक्तिप्रभवाभ्युपगमेन तस्य विरोधमाशङ्क्य 'अतः प्रभवादि'ति परिहृत्य तदेव वेदनित्यत्वं द्रढयति। अत एव नियताकृतेर्देवादेर्जगतो वेदशब्दप्रभवत्वात् वेदशब्दे नित्यत्वमपि प्रत्येतव्यमिति भगवत्पादाः। तथा च मन्त्रवर्णः—'यज्ञेन वाचः पद- वीयमायन् तामन्वविन्दन्नृषिषु प्रविष्टाम्' ( ऋ० सं० १०। ७१। ३ ) इति।

मन्त्रार्थस्तु—यज्ञेन वाचः वेदलक्षणायाः, पदवीयं मार्गयोग्यतां वेदग्रहणयोग्यताम्, आयन् आप्नुवन्तः। ततः ऋषिषु प्रविष्टां तां

वाचम्, अन्वविन्दन् अनुलब्धवन्तः। स्थितामेव वाचमनुविन्नां दर्शयतीति शाङ्करभाष्यम्। वेदव्यासश्चैवं स्मरति—

'युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।
लेभिरे तपसापूर्वमनुज्ञाताः स्वयम्भुवा॥'

अनेन विद्यमानानेव वेदान् लेभिरे, न स्वातन्त्र्येण निर्मितवन्तः इति स्पष्टम्। महाप्रलयेऽपि वासनारूपेण ब्रह्मणि वेदास्तिष्ठन्त्येव।

यदुक्तम्—"विद्यात्मनः शुद्धस्वभावस्य तदयोगः, प्रमाणापेक्षज्ञानानामविद्यावतामेव प्रमाणाश्रयत्वाद्"ति। तन्न; निरविद्यस्य सर्वप्रपञ्चाधिष्ठानतया प्रमाणाधिष्ठानत्वेऽपि प्रमाणवत्स्वरूपतदाश्रयत्वायोगात्, नहि कालस्य सर्वाधारत्वेऽपि घटादिवद्रूपवत्त्वम्।

यद्यपि महाप्रलये अन्तःकरणादयो न समुदाचरद्वृत्तयो भवन्ति, तथापि स्वकारणे अनिर्वाच्यायामविद्यायां लीनाः सूक्ष्मेण शक्तिरूपेण कर्मविक्षेपका विद्यावासनाभिः सहावतिष्ठन्ते। तथा चोक्तम्—

'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः॥' इति।

ते चावधिं प्राप्य परमेश्वरेच्छाप्रचोदिताः यथा कूर्मदेहे निलीनान्यङ्गानि ततो निःसरन्ति, यथा वा वर्षापाये प्राप्तमृद्भावानि मण्डूकशरीराणि तद्वासनावासिततया घनाघनासारावसेकसुहितानि पुनर्मण्डूकदेहभावमनुभवन्ति तथा, पूर्ववासनावशात् पूर्वसमाननामरूपाण्युत्पद्यन्ते। तेनेश्वरः प्राणभृत्कर्माविद्यासहकारी तदनुरूपमेव जगत् सृजति। सर्गप्रलयप्रवाहानादितया सर्वभेद उपपद्यते।

तथापि 'मन्त्रकृतो वृणीते', संहिताकारः, पदकारः, सूत्रकारः, ब्राह्मणकारः, 'विश्वामित्रस्य सूक्तं भवती'त्यादिप्रामाण्याद्वेदस्य पौरुषेयत्वशङ्कानिराकरणायैव 'अत एव च नित्यत्वमि'ति कर्तुरस्मरणेन सिद्धस्यैव अनुमानेन दृढीकरणम्।

'प्रजापतिर्यथा वैदिकाच्छब्दात् तेषामसाधारणनामरूपकृत्यविशेषान् अनुसन्धाय तथैव सृजति, ततश्च विश्वामित्रादीनामपि वेदशब्देभ्यः

पूर्वकल्पस्थित-विश्वामित्रादिनामरूपकृत्यविशेषान् अनुसन्धाय; तथैव स्रष्टृत्वलाभे सति अतीतवर्तमानकल्पगताः सर्वेऽपि विश्वामित्रादयः विश्वामित्रादिपदप्रापक-पूर्वकल्पानुष्ठितपुण्यवशात् विश्वामित्रसूक्तादीन् अनधीत्यैव पश्यन्तीति तत्तत्सूक्तादिद्रष्टृत्वमेव तत्तत्कर्तृत्वम्, न तु सूक्तान्तरादिकर्तृत्वम्, इत्यादि भामत्यादौ स्पष्टम्।

यथा स्वाप-प्रबोधयोः पूर्वप्रबोधवदुत्तरप्रबोधेऽपि व्यवहारान्न विरोधः, तथैव सर्गप्रलययोरपि बोद्धव्यम्। यथा प्रबोधेऽधीता वेदाः स्वापेऽपि संस्कारात्मना तिष्ठन्त्येव, अन्यथा प्रबोधे तद्व्यवहारानापत्तेः; तथैव प्रलयेऽपि संस्कारात्मना तिष्ठन्त्येव। स्वापप्रबोधयोरपि प्रलय-प्रभवौ श्रूयेते—

'यदा सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति तदैनं वाक् सर्वैर्नामभिरप्येति, चक्षुः सर्वैः रूपैः सहाप्येति।'
......स यदा प्रतिबुद्ध्यते यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन् एवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' इति।

(कौषी० ३।३)

सत्यपि सर्वव्यवहारोच्छेदिनि महाप्रलये परमेश्वरानुग्रहादीश्वराणां हिरण्यगर्भादीनां कल्पान्तरव्यवहारानुसन्धानसम्भवः। यद्यपि प्राकृताः प्राणिनो जन्मान्तरव्यवहारं न स्मरन्ति; तथापि न प्राकृतवदीश्वराणामपि भवितव्यम्, लोके ज्ञानैश्वर्यादितारतम्यदर्शनात्।

प्रतिवेदञ्च एवं काण्डर्ष्यादयः स्मर्यन्ते। श्रुतिरपि ऋषिज्ञानपूर्वकमेव मन्त्रेणानुष्ठानं दर्शयति—'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा प्रतिपद्यते' इत्युपक्रम्य 'तस्मादेतानि मन्त्रे मन्त्रे विद्यात्' इति। स्मृतिश्च—

'तेषां ये यानि कर्माणि प्राक् सृष्ट्यां प्रतिपेदिरे।
तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनः॥
हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मौ ऋतानृते।
तद्भाविताः प्रपद्यन्ते तस्मात् तत्तस्य रोचते॥' इति।

शक्त्यवशेषमेव जगत्प्रलीयते, तन्मूलमेव च प्रभवति, इतरथा आकस्मिकत्वप्रसङ्गात्। यथेन्द्रियविषय-सम्बन्धाद् व्यवहारस्य न प्रतिविषयमन्यथात्वं सम्भवति, तथैव वर्णाश्रमधर्मफलव्यवस्थानाञ्च संसारे नियतत्वमेव। 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इति श्रुतेः,

यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये।
दृश्यन्ते तानि तान्येव तथाभावा युगादिषु॥
यथाभिमानिनोऽतीतास्तुल्यास्ते साम्प्रतैरिह।
देवा देवैरतीतैर्हि रूपैर्नामभिरेव च॥' इतिस्मृतेश्च।

यदुक्तम् —"तद्वा ऋषयः प्रतिबुबुधिरे य उ तर्हि आसुः' (शत०), 'मनसो वै समुद्राद्वा चाभ्रा देवास्त्रयी विद्यां निरखनन् तदेष श्लोकोऽभ्युक्तः। ये समुद्रान्निरखनन् देवास्तीक्ष्णाभिरभ्रिभिः सुदेवोऽद्य तद्विद्यात् यत्र निर्वपणं दधुः' इत्यादिरीत्या 'मनसो वै समुद्रात् वाचाभ्या देवास्त्रयीं निरखनन्नि'त्यादिनापि देवर्ष्यादिकर्तृकत्वेन पौरुषेयत्वं सिद्ध्यति वेदस्य" इति। तदपि निःसारम्; निखननेन विद्यमानानामेव रत्नादीनां लाभदर्शनात् अत्रापि विद्यमानानामेव वेदानां देवादिकर्तृकलाभवर्णन एव श्रुतेस्तात्पर्यात्।

अत्र पञ्चदशसंख्यकानामपस्याख्यानामिष्टकानामुपधानं प्रक्रान्तम्। 'अर्णवे त्वा सदने सादयामि। प्राणो वा अर्णवः। प्राणे त्वा सादयति। समुद्रे त्वा सदने सादयामीति। मनो वै समुद्रः। मनसो ह समुद्राद्वाचाऽभ्रया देवास्त्रयीं विद्यां निरखनन्नि'त्युक्तम्। इह जन्मनि यथाऽभ्यासेन त्रयी मानुषे तिष्ठति तथैव विशिष्टानां मनसि जन्मान्तराभ्यासनिहिताऽपि त्रयी तत्र तिष्ठत्येव—'हृदयेष्वेव तिष्ठन्ते ये वेदा नः परं धनम्' (वाल्मीकिरामायणम्, अयोध्या०) इति।

एवं 'यो वै ज्ञातोऽनूचानः स ऋषिः' नानेनापि वाक्येन मन्त्रकर्तृत्वेनर्षित्वमायाति, गुरुशिष्यपारम्पर्येणाध्ययनस्यैव अनुवचनशब्दार्थत्वात्। 'एतैस्त्रिभिरायुर्भिरन्ववोचथाः' इत्यादौ तस्मिन्नेवार्थे प्रयोगदर्शनात्। तदपि विद्यमानानामेव वेदानामनुवचनं भवति।

यदप्युक्तम्—"द्रष्टुर्वाक्यं श्रुतिस्तत्प्रमाणमनपेक्षत्वात् । यथा हि श्रोतुर्वाक्यं स्मृतिरित्युच्यते, तच्च परतः प्रमाणं भवति, स्वप्रामाण्ये श्रुतिसापेक्षत्वात् । न तथायं साक्षात्कृतधर्मा तमर्थमानः स्वोक्तिप्रामाण्याय परप्रत्ययमपेक्षते । यश्च तपोयोगप्रभावजनितेन ईश्वरानुग्रहेण सन्देहविपर्ययादिलेशेनापि कालत्रयेऽस्पृष्टाशेषविशेषविषयकः स्फुटप्रतिभासलक्षणः साक्षात्कारो यैः प्राप्तस्ते ऋषयः, तेभ्यश्चोपदेशेन यैर्लब्धं ज्ञानं ते भवन्ति मुनयः । ऋषीणां वाक्यं श्रुतिः, मुनीनां तु स्मृतिः तेषां साक्षाद्द्रष्टृत्वाभावात् । श्रुतीनां स्वतः प्रामाण्यम्, स्मृतीनान्तु श्रुतिमूलकतये"ति ।

तत्सर्वं निर्मूलम्; पूर्वोत्तरमीमांसादृष्ट्या धर्मापूर्वादिविषयकसाक्षात्कारस्य निराकृतत्वात् । 'नावेदविन्मनुते तं बृहन्तम्', तं त्वौपनिषदं पुरुषं पृच्छामि', 'चोदनालक्षणोऽर्थो धर्मः' इत्यादिविरोधाच्च । नैयायिकादिमतरीत्या तादृक्साक्षात्कारस्य सत्त्वेऽपि न तद्वाक्यानां स्वतःप्रामाण्यं गुणवद्वक्तृकत्वेन तैः श्रुतिनामपि परतः प्रामाण्याभ्युपगमात् । तथा च श्रुतिस्मृत्योरवैशेष्यमेव स्यात् । अत एवास्मिन्नर्थे वात्स्यायनभाष्याद्याश्रयणं व्यर्थमेव, तैराप्तवाक्यप्रामाण्यस्य परतस्त्वाभ्युपगमात् । न च नैयायिकरीत्या धर्मादिसाक्षात्कर्तुर्वेदनिर्मातृत्वं मीमांसकरीत्या च वेदस्य प्रामाण्यस्वतस्त्वम् इत्यर्धजरतीयं युक्तम् ।

'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणम् बादरायणस्यानपेक्षत्वात्' इत्यत्र जैमिनिना वेदस्य स्वतःप्रामाण्यमुक्तम् । भगवतो बादरायणस्य अत्रार्थे सम्मतिः प्रदर्शिता । अत्र अनपेक्षत्वादित्यत्र कारणगुणसंवादाद्यर्थ-क्रियाज्ञानानधीनत्वे सति कारणदोषबाधकदोषवर्जितत्वे च सति अनधिगताबाधितार्थबोधजनकत्वरूपं प्रामाण्यस्वतस्त्वं विवक्षितम् । प्रमाणस्य अर्थानुसारेणैव प्रामाण्यम् । प्रमाणं स्वविषयेण सहैव स्वप्रामाण्यमपि गृह्णाति । अर्थान्यथात्वमेव अप्रामाण्यम् । तच्च बाधकज्ञानादिभिर्विज्ञायते । रज्जुसर्पादिज्ञानस्याप्रामाण्यं दीपादिसापेक्षं दृश्यत एव । यथा गुडस्य माधुर्यं स्वाभाविकमिति पर्यनुयोगानर्हम्, तथैव स्वाभाविकं प्रामाण्यमपि प्रमाणानां पर्यनुयोगानर्हमेव । गुडस्य माधुर्यमिव

वेदानां प्रामाण्यमपि स्वाभाविकमिति पारम्पर्येण सिद्धमेव। तदुक्तं भट्टपादैः—

"स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम्।
नहि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते॥
आत्मलाभे च भावानां कारणापेक्षता भवेत्।
लब्धात्मनां स्वकार्येषु प्रवृत्तिः स्वयमेव हि॥
यस्मात् स्वतःप्रमाणत्वं सर्वत्रौत्सर्गिकं स्थितम्।
बाधकारणदुष्टत्वबोधाभ्यां तदपोह्यते॥' इति।

कारणगुणसंवाद्यर्थक्रियाज्ञानानधीनत्वे सति कारणदोषबाधक-दोषवर्जितत्वे सति चानधिगताबाधितार्थबोधजनकत्वमेव प्रामाण्य-स्वतस्त्वम्। बाधकज्ञानकारणदोषविसंवादिज्ञानाधीनत्वाद् अप्रामाण्यस्य परतस्त्वम्। शब्दातिरिक्तं शब्दोपजीविप्रमाणातिरिक्तञ्च यत्प्रमाणं तज्जन्यप्रमितिविषयानतिरिक्तार्थको यो यस्तदन्यत्वे सति आमुष्मिक-सुखजनकोच्चारणकत्वे सति जन्यज्ञानाजन्यो यः प्रमाणराशिस्तत्त्वं वेदत्वम्। तच्चैतदपौरुषेयत्व एव घटते। आप्तसर्वज्ञपुरुषमूलकत्वेन गुणवद्वक्तृकत्वेन वा प्रामाण्येऽपि प्रामाण्यस्वतस्त्वं भज्यत एव। विचार-स्यापि पुरुषापराधनिवृत्तौ एवोपयोगः, प्रामाण्यपरतस्त्वापत्तेः। तदुक्तम्—

'पुरुषापराधविनिवृत्तिफलः संकलो विचार इति वेदविदः।
अनपेक्षतामनुपरुद्ध्य गिरः .....' इति संक्षेपशारीरके।
प्रामाण्यस्वतस्त्ववादिनां तु विरोधस्य प्रदर्शितत्वात्।

सर्वेषामपि प्रमाणानां प्रामाण्यस्वतस्त्वमेव, तेन स्मृतीनामपि प्रामाण्यस्वतस्त्वमेव। अनाप्तवाक्यानामप्रामाण्यं तु दुष्टमूलत्वेन परतो-ऽभ्युपेयते। चक्षुषो रूपज्ञापकत्वमिव शब्दस्यापि स्वार्थबोधकत्वं स्वाभाविकमेव। पुरुषाश्रितभ्रमादिदोषेण स्वाभाविकं तदपोद्यते। आप्तवाक्ये, अपौरुषेये वेदे चानाप्तप्रणीतत्वेन तदनपोदितमेव तिष्ठति।

किञ्च—एवं परमेश्वरनिर्मिततन्त्राणामपि द्रष्टुर्वाक्यत्वाच्छ्रुतित्वं

भविष्यति। तथा च "श्रुतितन्त्रभेदव्यवहारः किंमूलकः?" इत्यपि विशेषतः चिन्त्यम्।

किञ्च—नैयायिकरीत्या तु मन्त्रायुर्वेदादीनाम् ऋषिकर्तृकत्वं वेदस्य चेश्वरकर्तृकत्वमिति भेदे सत्येव मन्त्रायुर्वेदवच्चेति दृष्टान्तता सम्भवति मन्त्रायुर्वेदादेः। अत एव "य एवायुर्वेदादीनां प्रवक्तारस्त एव वैदिकमन्त्रादीनां द्रष्टारः" इति वात्स्यायनः ऋषीणामायुर्वेदप्रवक्तृत्वं वेदमन्त्रद्रष्टृत्वमाह। वेदमन्त्राणामीश्वरो निर्माता, ऋषयस्तु द्रष्टारः। आयुर्वेदस्य तु ऋषय एव निर्मातारः, तावतैव आयुर्वेदे श्रुतित्वाभावः। भवन्मते तु तेषामेव उभयनिर्मातृत्वेन श्रुतित्वमुभयत्र प्रसज्येत।

एतेन यदुक्तम्—"मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् इत्याप्तप्रामाण्यात् वेदानामपि प्रामाण्यं वदन् सूत्रकारः ऋषिकृतत्वं वेदानां स्फुटं व्यनक्ती"ति। तदपि परास्तम्; प्रयोगेण तद्भेदसूचनात्। आप्तप्रामाण्यात् तत्प्रामाण्यमित्यस्य त्वयमर्थो यत् यदाऽऽप्तनिर्मितानामपि प्रामाण्यं तदा किमु वक्तव्यं तैरेवाप्तैर्दृष्टानां स्वधर्मानुष्ठाने परमादरेण प्रयुज्यमानानामीश्वरनिर्मितानां वेदमन्त्राणां प्रामाण्ये? तत एव प्रवक्तृत्वेन द्रष्टृत्वेन तद्भेदवर्णनं सङ्गतं भवति। अत एव वार्तिकतात्पर्यपरिशुद्धिकारैः भरद्वाज-वाचस्पत्युदयनप्रभृतिभिर्वेदकर्तृत्वेनापि ईश्वरतत्सार्वज्ञ्यञ्च साधितम्—

"प्रमायाः परतन्त्रत्वात् सर्गप्रलयसम्भवात्।
तदन्यस्मिन्नविश्वासान्न विधान्तरसम्भवः॥
न प्रमाणमनाप्तोक्तिर्नादृष्टे क्वचिदाप्तता।
अदृश्यदृष्टौ सर्वज्ञे न च नित्यागमः क्षमः॥'

इत्यादिभिश्च उदयनाचार्यैः परमेश्वरस्यैव वेदकर्तृत्वमुक्तम्।

जयन्तभट्टो न्यायमञ्जरीकारस्तु सूत्रस्यास्य प्रसङ्गेन महता समारम्भेण ईश्वरं साधितवान्। एते न्यायशास्त्रनिष्णाताः न्यायनिष्ठाः सूत्रार्थं न जानन्ति, भवन्तस्तु क्वचिदंशेन न्यायसूत्रमुपयोजयमाना अतन्निष्ठाः सूत्रार्थं जानन्तीति को विश्वसेत्? भवदुक्तरीत्या तु बिलमभूतानां वेदानामपि स्मृतित्वमेवायाति। धर्मसाक्षात्कर्तृभिस्तदनुप-

निबद्धत्वात्। साक्षात्कृतधर्मभिरसाक्षात्कृतधर्मभ्यो मन्त्रदानम्। ते च बिल्मग्रहणाय वेदं वेदाङ्गानि च समाम्नासिषुरित्युक्तत्वात्। उपदेशेन मन्त्रान् सम्प्रादुरित्यादिषु विद्याभिप्रायेण मन्त्रशब्दप्रयोग इति भवद्भिरुक्तत्वात्। सिद्धान्तरीत्या तु तैर्नित्यसिद्धा एव मन्त्रा दत्ताः, तैश्च व्यासादिभिः सुखग्रहणाय व्यासेन अनेकशाखाभेदैः समाम्नाता इति न दोषः।

'अजान् ह पृश्नीनि'त्यस्यार्थस्तु पूर्वं स्पष्टीकृत एव। दर्शनादेवर्षित्वमित्यपि स्पष्टमेव। नात्र निर्मातृत्वमुक्तम्। 'यज्ञेन वाचः पदवीयमि'ति मन्त्रेण तत्रत्येन सायणभाष्येण च न वेदकर्तृत्वमृषीणां सिद्ध्यति। ऋषिषु प्रविष्टामेव वाचं मन्त्रः प्राह, न तन्निर्मिताम्। 'पदेन यातव्यः पन्थाः पदवीयस्तं वाचो मार्गं यज्ञेन आयन् प्राप्तवन्तः। ऋषिष्वतीन्द्रियार्थदर्शिषु प्रविष्टामन्वविन्दन् अलभन्त' इति सायणभाष्येण विद्यमानायाः प्रविष्टाया वाच उपलम्भ उक्तो न निर्माणम्।

अनन्तरं तां वाचमाहृत्य पुरुधा बहुषु प्रदेशेषु व्यदधुः व्यकार्षुः सर्वान् मनुष्यानध्यापयामासुरित्यनेनापि तन्निर्माणं न सिद्ध्यति। एतेन "ऋषीणां हृदयेषु ज्ञानप्रादुर्भावस्तत्कृतं वाग्रूपेण मुनीनामध्यापनम्, मुनिकृतश्च मनुष्येषु तत्प्रचार" इति कल्पनं सर्वथा निर्मूलम्। भगवत्पादैस्त्वनेनैव मन्त्रेण वेदानां नित्यत्वं साधितम्।

'यो वै ज्ञातोऽनूचानः स ऋषिः' (श० ४।३।४) इत्यनेनापि न मन्त्रकर्तृत्वं सिद्ध्यति, अनूचानशब्दस्य निर्माणार्थासङ्गतेः। 'अनूचानः साङ्गे प्रवचनेऽधीती' इति हरिस्वामिभाष्येण साङ्गवेदस्य कठादिवत् विशिष्टप्रवक्तुरेव ऋषित्वोक्तेः।

याज्ञवल्क्यस्यापि सूर्ये विद्यमानानामेव वेदानां ततोऽध्ययनेन प्राप्तिः। तत एव शुक्लत्वादिव्यवस्था। वान्त्या च भक्षणेनापि कृष्णान्यासन् यजूंष्यपि। आदित्यानीमानि शुक्लानि यजूंषि।

'सत्त्वप्रधानाच्छुक्लाख्यो यातयामत्ववर्जितात्।
कृष्णस्तु तित्तिरेर्भक्षात् तामसाद्यातयामतः॥'

याज्ञवल्क्येन विवादवशात् त्रयीमयं भगवन्तमादित्यं तपसा सन्तोष्य ततश्चत्वारोऽपि वेदाः प्राप्ताः। तथा चोक्तं स्कन्दपुराणे (नागर-खण्डे २७८)—

'स तथेति प्रतिज्ञाय प्रविश्यादित्यवाजिनः।
कर्णेऽपठत्ततो वेदांश्चतुरोऽपि च तन्मुखात्॥'

जाबालसंहितायामपि—

'ब्रह्मणः सम्प्रदायोऽयं व्याससन्दर्शितोऽभवत्।
विमलस्यैव वेदस्य सम्प्रदायो द्विधा मतः॥
ब्रह्मणः सम्प्रदायस्तु आदित्यस्य तथा मतः।
अयातयामसंज्ञोऽयं प्रतिकर्मप्रकाशकः॥
'आध्वर्यवं क्वचिद्धोत्रं क्वचिदित्यव्यवस्थया।
बुद्धिमालिन्यहेतुत्वाद्यजुः कृष्णमितीरितम्॥
याज्ञवल्क्यस्ततः सूर्यमाराध्यास्मादधीतवान्।
व्यवस्थितप्रकरणं यजुः शुक्लं तदीरितम्॥ इति॥

किञ्च एतत्सर्वमनपेक्षतया वेदप्रामाण्यमभ्युपगच्छतामेव सिद्ध्यति। पौरुषेयत्वेन गुणवद्वक्तृकत्वेन वेदप्रामाण्यमभ्युपगच्छतां भवतां तु मन्त्रदर्शित्वादिकमपि साधनीयम्। तच्च न स्वातन्त्र्येण सिद्ध्यति। बौद्धार्हतादिसार्वज्ञ्यसिद्धिवत् मन्त्रार्थदर्शनस्यापि सिद्धिर्दुर्लभै-वेत्युक्तमेव।

यदुक्तम्—"यथा विषमयद्रव्यविज्ञाने श्वबिडालादीनां विषहरौ-षधिज्ञाने नकुलादीनां पुरुषादृष्टसन्निधापितभाव्यर्थज्ञाने श्व-शिवा-वायस-पिङ्गलकादिशकुनीनां स्वरोगहरौषधिविज्ञाने सर्वेषामारण्य-पशूनां भविष्यद्वृष्टिविज्ञाने मण्डूकानां नैसर्गिकं विचित्रसामर्थ्यं तथैव अपूर्वमतीन्द्रियार्थावगमसामर्थ्यं तपःप्रभावेणोद्भूयमानमनुष्यकुले दृश्यते। स एवर्षिराख्यायते" इति। तन्न; निरुक्तदृष्टान्तैः सामर्थ्यस्य वैचित्र्यसिद्धावपि मनुष्यकुलस्य अतीन्द्रियधर्मादिज्ञानादर्शनेन तद-सिद्धेः। दर्शने सति विवादाभावापत्तेश्च। तथात्वे च महावीर-यीशू-मुहम्मदादीनामपि सार्वज्ञ्यं सिद्ध्येत्। न चेष्टापत्तिरेव; तद्विरोधे भवदभिमतानामृषीणामप्रामाण्यापत्तेः।

: २ :

## वैज्ञानिकार्थ-परीक्षणम्

वेदानां स्वरूपं कीदृशम् ? कश्च तदपरोक्षज्ञानोपायः ? किं वा तत्फल मिति जिज्ञासायाम् अपौरुषेयो मन्त्रब्राह्मणात्मकः शब्दराशिरेव यद्यपि तत्स्वरूपम्, अविच्छिन्नपारम्पर्येण तदाभ्यासजन्यसंस्कारसध्रीचीन-मनःसहकृतश्रोत्रेन्द्रियमेव तदापरोद्योपायः, तदर्थज्ञानानुष्ठानसापेक्षस्य तदपरोक्षज्ञानस्य चतुर्वर्गफलप्राप्तिः फलञ्चेति प्रसिद्धमेव; तथापि नवीना-विष्कारप्रधानेऽस्मिन् युगे प्रसिद्धमपरोक्षमपि परित्यज्य किञ्चित् नवीनं वस्तु आविष्कृत्य प्रसिद्धा दृष्टिरपसारणीयेति कुतूहलवशादेव एतत्प्रश्नत्रयं समुदेति।

अत्र केचित् सङ्गिरन्ते—"प्रत्नतत्त्वकोविदा विपश्चितः इतिहास-दृष्टया प्राच्यसंस्कृतेर्गवेषणापरा धीमन्तः तत्तत्सम्प्रदायशाखादिभेद-भिन्नाः सनातनधर्मानुसारिणः सर्वेऽपि महानुभावाः तदितरेऽपि विद्वांसो वेदानां महत्त्वं निखिलशास्त्राणामपेक्षया प्राचीनतमत्वञ्च मन्य-मानास्तद्विषयकं विविधं समालोचनादिकं विदधति। अस्माकं यावन्तो धर्ममार्गाः यावच्च वाङ्मयम्, सर्वमेव वेदानुमाणितम्। यत्र स्थूलदृष्टिभिः साक्षाद् वेदाश्रितत्वं न संलक्ष्यते, तत्रापि परम्परया द्वारद्वारिभावेन च वेदानां प्रभावः स्फुटमेव उन्नेतुं शक्यते इति विदुषां तत्तदर्थविवेचकाना-मभिमतम्। स्मृतिषु, दर्शनेषु इतिहासपुराणेषु तन्त्रेषु तथान्यत्रापि शास्त्रेषु सर्वत्रैव वेदानुमतत्वेनैव सिद्धान्तविशेषस्य शिष्टेषु परिग्रहः समादरश्च भवतीति दृश्यते।" तत्सत्यम्; सर्वमेतत्प्रसिद्धमेव वेद-माश्रित्य सङ्गच्छते।

यदपि तैः—"वस्तुतस्तु लौकिकदृष्टया समुच्छिन्नप्रायोऽप्ययं नैका-न्ततो बहुश्रुतानां पण्डितानामगोचरः। कियन्तो वेदाः कियत्यस्तेषां शाखाः कानि वा तेषामङ्गानि, उपाङ्गानि च। तत्रापि के तावद् ग्रन्था

मुद्रिता अमुद्रिता वा समुपलभ्यन्ते । के पुनर्लुप्ताः सर्वमेतन् न्यूनाधिकतया विदुषां सुविदितमेव । वेदानुशीलनकर्शितमतयः पाश्चात्त्यपण्डिताः स्वदेशेष्वपि केचन तादृशमेवालामर्थ्यं कृतविद्या भृशमन्वेषणतत्परा वेदेभ्यो भाषातत्त्वं शब्दतत्त्वसमाख्यानादिकम् सामाजिकं दार्शनिकम् ऐतिहासिकं भौगोलिकश्च तथ्यं जलधिभ्यो मथ्यमानेभ्यो रत्नखण्डानीव आविष्कुर्वन्तः स्वस्वप्रतिभामनतिक्रम्य, वेदज्ञानस्य समृद्धिं सम्पादयन्तीत्यतिरोहितं विशेषज्ञानाम्। वेदानां नित्यत्वमनित्यत्वं वा, पौरुषेयत्वमपौरुषेयत्वं वा, इत्यपि दार्शनिकैः स्वस्वसिद्धान्तानुगुणाभियुक्तिभिस्तत्र तत्र विवेचितम् । वेदप्रामाण्ये विप्रतिपन्नानां सौगतानामार्हतानाञ्च युक्तीरपाकुर्वद्भिराचार्यैस्तत्प्रामाण्यस्थापने प्रयत्नः कृत एव" इत्यभाणि। तदपि सत्यम् ; एतदपि प्रसिद्धमेव वेदं गमयति, अप्रसिद्धे विप्रतिपत्त्याद्यसम्भवात्, सर्वं ज्ञानं धर्मिण्यभ्रान्तम्, प्रकारे तु विपर्यय इति न्यायात् ।

यदपि तैः प्रतिपादितम्—"निरुक्तकृतां कालेऽपि वेदार्थनिर्णये पण्डितानां भूयान् मतभेद आसीत् । तदुत्तरकालिकेषु वेदार्थनिर्वचनपरेषु रावण-हरिस्वामि-स्कन्दस्वामि-सायणो-व्वट-महीधराद्याचार्येष्वपि तद्रूपमेव मतवैषम्यं लक्ष्यते" इति । तदपि अकिञ्चित्करम् ; वेदार्थविषयकमतभेदस्य वेदस्वरूप-भेद-तदज्ञानाप्रयोजकत्वात् ।

यदपि प्रसिद्धेभ्यो वेदेभ्य वास्तविकवेदबुद्धिनिरासायोक्तम्—"निखिलमिदं वाङ्मयं कण्ठे धारयतोऽपि वेदार्थमर्मग्रहणे यादृशं छायासु वस्तुत्वमारोपयतां छायाभ्यो वस्तुतत्त्वनिरूपणपराणां वस्तुस्वरूपविषये परिदृश्यते । प्रतिबिम्बितफलेभ्यो यथा वास्तविक-फलास्वादनजा तृप्तिः क्षुन्निवृत्तिश्च न संभवति, तथा वैखरीवागात्मकेभ्य ऋगादिमन्त्रेभ्यो वेदत्वेन लोके प्रसिद्धेभ्योऽपि साक्षादेव दैवीवाक्संराधनजममृतत्वं सर्वज्ञत्वादिकञ्च नोपलभ्यते" इति । तदपि नाकिञ्चित्; अनुक्तोपालम्भात् । अनुक्तोपालम्भनमेतत्—नहि कण्ठे धारणमात्रादमृतत्वं सर्वज्ञत्वादिकञ्च वेदे क्वचिदुक्तम् । किन्तु वेदार्थग्रहणानुष्ठानसापेक्षस्यैव कण्ठे धृतस्य वेदस्य तत्तत्पुरुषार्थसाधकत्वं श्रुतम् ।

यत्तु—"तत्राध्ययनमात्रेण घृतकुल्या-पयःकुल्यादि - फलश्रवणम्; अश्वमेधाध्ययनमात्रेण अश्वमेधफलप्राप्तिश्रवणात्" इति। तदपि धर्मज्ञानानुष्ठानाश्वमेधोपासनफलपरमिति सायणीये ऋग्वेदीय-भाष्योपोद्घाते स्पष्टमेव। तथा हि, सायणाचार्येण प्रकृतप्रसङ्गे मीमांसोपन्यस्ता—'दर्शपूर्णमासयोर्वेदविमर्शनं प्रकृत्य श्रूयते—'आस्य प्रजायां वाजी जायते य एवं वेद'। 'पूर्णाहुत्या सर्वान् कामानवाप्नोति' 'पशुबधयाजी सर्वान् लोकान् जयति', 'तरति मृत्युम्, तरति पाप्मानम्, तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनं वेद'। अग्न्याधेयपूर्णा-हुत्या सर्वकामप्राप्तेरग्निहोत्रादीन्युत्तरकालीनान्यनर्थकान्येव स्युः। तथा निरूढपशुबन्धानुष्ठानेन सर्वलोकाभिजयात् ज्योतिष्टोमा-दीनामानर्थक्यमेव स्यात्। एवमेव अध्ययनकालीनेनैव अश्व-मेधवेदनेन ब्रह्महत्यादितरणात् तदनुष्ठानं व्यर्थमेव स्यात्? एवं पूर्वपक्षस्य समाहितम्—पूर्णाहुतिं जुहुयादि'त्यस्य विधेः शेषोऽयमर्थ-वादः। सर्वकामावाप्तिहेतुत्वात् प्रशस्तेयमाहुतिः। यथा सर्वे ब्राह्मणा भोजयितव्या इत्यत्र सर्वत्वं स्वगृहागतब्राह्मणविषयम्, एवं पूर्णाहुत्या कर्मसाङ्गत्वम्। यत्फलं तस्मिन्नधिकारे प्रस्तावे सम्भावितं तद्वि-षयकमेव सर्वत्वं द्रष्टव्यम्। पूर्णाहुतेरभावे सत्याधानरूपं कर्माङ्गं विफलं भवति। तच्च वैकल्यं पूर्णाहुत्या समाधीयते—इत्येकः कामः, तस्मिन् समाहिते सति आहवनीयाद्यग्नयो अग्निहोत्रादिकर्मसु योग्या भवन्ति—इत्यन्यः कामः। तैश्च कर्मभिस्तत्तत्फलं भवतीति कामान्तरम्।

नन्वीदृशी सर्वकामावाप्तिराहुत्यन्तरेष्वपि विद्यत इति चेत्? भवतु, तथापि पूर्णाहुतिस्तुतेर्न काचिद्धानिः।

पृथिव्यादीनां फलानां कर्मान्तरेण परिणामाधिक्यं सारत्वं वा सम्पाद्यते, ततः फलविशेषः स्यात्। यथा निष्केण वस्त्रमात्रमुप-लभ्यते, निष्कद्वयेन तु सारभूतं दुकूलम्, तथैव ब्रह्महत्याया अपि मानस्या मनःकृतायाः स्वल्पाया वेदनमात्रेण तरणम्, कायिक्यास्तु महत्या अश्वमेधेनेति नानुष्ठानानर्थक्यम्।

मन्त्रान्तरेष्वपि वेदानुग्रहो दर्शितः। तथा हि--

'यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति।
यदीं शृणोत्यलकं शृणोति न प्रवेदे सुकृतस्य पन्थाम्॥'

'तस्मात् 'स्वाध्यायोऽध्येतव्यः', 'अध्येतारं पुरुषं तदीयप्रयासभिज्ञानेन सखिवत् पालयतीति सचिविद्वेदः, बहुद्रव्यप्रयाससाध्यक्रतुफलस्य अध्ययनमात्रेण सम्पादनं तत्पालनम् 'यं यं क्रतुमधीते तेन तेनेहास्येष्टं भवति, अग्नेर्वायोरादित्यस्य सायुज्यं गच्छतीति। यद्यप्येतद् ब्रह्मयज्ञस्वाध्यायरूतम्; तथापि ग्रहणार्थाध्ययनमात्रेण ब्रह्मयज्ञासम्भवात् ग्रहणार्थाध्ययनेऽपि तत्सङ्गतमेव। ईदृशं सखिविदं सखायं यः पुमानध्ययनमकृत्वा परित्यजति, तस्य वाच्यपि भाग्यं नास्ति, फले भाग्यं नास्तीति किमु वक्तव्यम्? सकलदेवतानां धर्मस्य परब्रह्मतत्त्वस्य च प्रतिपादकं वेदमनुच्चार्य परनिन्दास्तुतिकलहहेतुं लौकिकीं वार्तां सर्वत्रोद्घाटयतः स्पष्ट एव वाचि भाग्याभावः।

यद्यप्यसौ काव्यनाटकं शृणोति; तथापि निरर्थकमेष तच्छ्रवणम्; तेन सुकृतमार्गज्ञानाभावात्।

'योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥' (मनु.)

'स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानात्यर्थम्।
योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतात्मा॥'

यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तु ज्वलति कर्हिचित्॥'

'यो वेदार्थं जानाति सोऽयमिह लोके सकलं भद्रमश्नुते। ज्ञानेन पापक्षये मृतः स्वर्गमवाप्नोति'। तैत्तिरीयाश्च 'येऽर्वाङ् उत वा पुराणे वेदं विद्वांसमभितो वदन्त्यादित्यमेव ते परिवदन्ति सर्वे अग्निं द्वितीयं तृतीयञ्च हंसमिति।' 'यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति। तस्माद् ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यात् नाश्लीलं कीर्तयेदेता एव देवताः प्रीणाति।' अत्र वेदार्थज्ञ एव वेदवित् प्रशस्यते—

हंसं वायुम्, अन्यथा वेदमधीयानमित्याम्नायेत। यथा छिन्नशाखः शुष्कवृक्ष इन्धनार्थमेवोपयुज्यते न तु पुष्पफलार्थं तथा केवलेन पाठेन व्रात्यत्वमेवापैति, न त्वनुष्ठानं स्वर्गादिफलं वा लभ्यते।

यद्गृहीतमर्थज्ञातरहितं पाठरूपेणैव पुनः पुनरुच्चार्यते, तत्कदाचिदपि न ज्वलति, स्वार्थं न प्रकाशयति, यथाऽनग्नौ क्षिप्तं काष्ठं न ज्वलति। तस्य वाक्यस्य मुख्यं वेदत्वमपि न भवति। अलौकिकपुरुषार्थोपायं वेत्त्यनेनेति वेदशब्दनिर्वचनात्।

यदप्युक्तम्—'एकस्मादेव शब्दात् सम्यक् ज्ञातात् सुप्रयुक्तात् स्वर्गे लोके च सर्वकामप्राप्तिरवश्यं भवति। परमद्यत्वे च शब्दसहस्रेभ्योऽसकृदावृत्तेभ्योऽपि तादृशं फलं नोपलभ्यते। तेन कस्यापि शब्दस्य सम्यक् ज्ञानं विहितप्रयोगश्च नाभूदित्येव मन्तव्यम्" इति। तदपि न; वैदिकविशेषणाभावात्। उक्तश्रुत्या शब्दमात्रस्य सम्यक् ज्ञातस्य सुप्रयुक्तस्य कामदोग्धृत्वमुक्तम्। न ह्यनया श्रुत्या तत्तदपेक्षितानपेक्षस्य सुप्रयुक्तमात्रस्य शब्दस्यैव कामपूरकत्वमुक्तम्; तथात्वे तदर्थानुष्ठानस्य वैयर्थ्यापत्तेः। किन्तु यदर्थं शब्दः प्रयुज्यते तदर्थपूर्तिरेव सम्यक् ज्ञातेन शास्त्रान्वितेन सुप्रयुक्तेन शब्देन जायते। लोकेऽपि न्यायालयादिषु न्यायवादिभिर्यथायोग्यावसरं स्वरविशिष्टसूपन्यासविशेषसुप्रयुक्तैः शब्दैः कार्यसिद्धिर्जायते। वेदेऽपि सम्यक्ज्ञातैः शास्त्रान्वितैः सस्वरैः सुप्रयुक्तैः शब्दैस्तात्पर्यज्ञानाददृष्टोत्पादकत्वेन कामदोग्धृत्वम्। शब्दतदुच्चारणतज्ज्ञानादिवैशिष्ट्येन फलवैशिष्ट्यं श्रीमद्वाल्मीकीयरामायणे प्रदर्शितम्—

"नानृग्वेदविनीतस्य नायजुर्वेदधारिणः।
नासामवेदविदुषा शक्यमेवं प्रभाषितुम्॥ २८॥
कृत्स्नं व्याकरणं नूनमनेन बहुधा श्रुतम्।
बहु व्याहरताऽनेन न किञ्चिदपशब्दितम्॥ २९॥
न मुखे नेत्रयोश्चापि ललाटे च भ्रुवोस्तथा।
अन्येष्वपि च सर्वेषु दोषः संविदितः क्वचित्॥ ३०॥

अविस्तरमसन्दिग्ध - मविलम्बित - मव्यथम् ।
उरःस्थं कण्ठगं वाक्यं वर्तते मध्यमस्वरम् ॥ ३१ ॥
संस्कारक्रमसम्पन्ना - मद्रुतामविलम्बिताम् ।
उच्चारयति कल्याणीं वाचं हृदयहर्षिणीम् ॥ ३२ ॥
अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया ।
कस्य नाराध्यते चेत उद्यतासेररेरपि ॥ ३३ ॥

लेखकस्य वाचोभङ्ग्या ध्वन्यते यद् वैखरीवागात्मका वेदा न वस्तुतो वेदाः, किन्तु परा-पश्यन्त्याद्यात्मका एव मुख्या वेदाः । एवं परा-पश्यन्त्यादिस्वरूपविषयेऽपि आधुनिकवैदिकविज्ञानवादिनामन्यः पन्थाः । सर्वमेतदत्र विमर्शणीयं भवति । तदत्र पूर्वं परा-पश्यन्त्यादिरूपं नव्यमतानुगृहीतं समीक्ष्य ' कथं परा-पश्यन्त्याद्यात्मका एव न मुख्या वेदा इति विवेचयिष्यते ।

तत्राधुनिकाः केचन परा-पश्यन्त्यादिभेदैः प्रसिद्धरूपायाश्चतुर्विधाया वाचो लक्षणान्येवं प्राहुः--

"न प्रत्ययः कश्चन दृश्यते तथा, न यत्र शब्दानुगमोऽवभासते ।
शब्दानुविद्धा हि मतिः प्रजायते, या मानसी वागिह कथ्यते ॥
चेत् पुस्तकन्यस्तलिपिं प्रवाचयन्, नोष्ठापिधानं विवृणोति नो मुखम् ।
अश्रोत्रगम्यां यदि वाचमुच्चरेत् पश्यन्त्यसौ प्राणहिता हि वागियम् ॥
कर्णे यदा किञ्चिदयं प्रजल्पति, श्रोत्रेण शब्दः परिगृह्यतेऽन्तिके ।
ध्वनिर्न चेद्वायुहिता हि सा मता वाङ् मध्यमा नाम तदा स्फुटास्फुटा ॥
सा वैखरी वागिह नाम कथ्यते, ध्वनिस्फुटव्यक्तकृवाक्षरोदया ।
तामेव वाचं पशुपक्षिमानवा वदन्ति वर्णैरकृता कृतामपि ॥"

( ब्रह्मविनये, अक्षरानुवाके २७८-२८० )

परमेतत् प्राचीनपरम्पराविरुद्धम् । तदधस्तात् निर्दिश्यते--

चत्वारि वाक्परिमितानि—

'प्राणापानान्तरे नित्यमेका सर्वस्य तिष्ठति ।
इयमेव परमा प्रकृतिर्वाचः परमो रसः ॥'

प्राप्तरूपविभागाया यो वाचः परमो रसः ।
यत्तत्पुण्यतमं ज्योतिस्तस्य मार्गोऽयमाञ्जसः ॥'

इति वाक्यपदीये । ते हि सकलस्यापि जगतः कारणं शब्दब्रह्मनाम्ना स्फोटनाम्ना वा प्रवदन्ति ।

'यः सर्वपरिकल्पानामाभासेऽप्यनवस्थितः ।
तर्कागमानुमानेन बहुधा परिकल्पितः ॥
व्यतीतौ भेदसंसर्गौ भावाभावौ क्रमाक्रमौ ।
सत्यानृते च विश्वात्मा प्रविवेकात् प्रकाशते ॥
अन्तर्यामी स भूतानामाराद्दूरे च दृश्यते ।
सोऽत्यन्तमुक्तो मोक्षाय मुमुक्षुभिरुपास्यते ॥
प्रकृतित्वमपि प्राप्तो विकारो नाकरोति सः ।
क्षुधामेव ग्रीष्मान्ते महतो मेघसम्प्लवात् ॥

(तद्व्याख्या)

तदेव च—'अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ (वा० प०१।१)
शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः ।
छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत ॥' (वा०प०१।२१)

अत्र शब्दब्रह्मैव अनादिनिधनं ब्रह्म । तदेव परा वागिति स्पष्टम्— 'वैखर्या मध्यमायाश्च' इति कारिकाव्याख्याने । परन्तु पश्यन्ती-रूपमनपभ्रंशमसङ्कीर्णं लोकव्यवहारातीतम् । एवमेव 'तद्द्वारमपवर्गस्य' इति कारिकाव्याख्याने 'तस्माच्च सत्तानुगुण्यमात्रात् प्रतिभाख्यातशब्द-पूर्वयोगभावनाभ्यासाक्षेपात् प्रत्यस्तमितसर्वविकारोल्लेखमात्रां परां प्रकृतिं प्रतिपद्यते, इत्यनयोर्व्याख्याने भर्तृहरिणा पराया वाचो रूपं विवृतमेव ।

अपभ्रंशराहित्यम् लोकव्यवहारातीतत्वं दोषैरसङ्कीर्णत्वम् अथवा प्रत्यस्तमितसर्वविकारोल्लेखमात्रत्वमेवं तत्स्वरूपम् । पश्यन्त्यामपि केन-चिदंशेन इमे गुणाः सन्ति । परा तु तदपेक्षयाऽपि प्रकृष्टा सुसूक्ष्मा च । मूलाधारचक्रस्था परा वाक् यदा नाभिप्रदेशे स्पर्शयता वायुना संस्पृष्टा

भवति, तदा सा पश्यन्तीनाम्ना व्यवह्रियते। तत्रापि वाणी अविभाज्या-ऽभिन्ना सर्वथैव चाक्रमा भवति। सैव मध्यमावस्थायाम् अव्यक्तक्रमा वैखर्याञ्च व्यक्तक्रमा भवति। मध्यमावस्थायां शब्दार्थयोः संसृष्टेन अभिन्नेन रूपेण समष्टिरूपेण वा पदार्थप्रकाशनं बुद्धावनयैव क्रियते। पश्यन्त्यवस्थायान्तु सर्वविधस्यैवार्थस्य प्रशान्तिरभावो वा भवति। एवं परिच्छिन्नार्थप्रत्यवभासा संसृष्टार्थप्रत्यवभासा प्रशान्तसर्वार्थ-प्रत्यवभासा चेत्यपरिमाणभेदा सा। पश्यन्त्याः प्रकृष्टं रूपमेव पराया रूपम्।

यथा ज्ञानं ज्ञेयाकारे समाविष्टं भवति तथैव शब्दोऽर्थाकारे सन्निहितो भवति। शब्दार्थयोरभिन्नस्थितितया परस्परं विरुद्ध-स्वभावान् गवादिपदार्थान् प्रत्यवभासयति। तदेव पश्यन्तीनाम-निमित्तम्। मध्ययायां बुद्धौ शब्द एकेन विशिष्टेन क्रमेण अकारेण वा प्रत्यवभासितो भवति। वस्तुतः शब्दोऽक्रम एव भवति, बुद्धेरैक्यात् बुद्धिशब्दयोश्चाभिन्नत्वात् बुद्धिमात्रोपादाना सा।

नारायणपूर्वतापिन्यामपि—"परा-पश्यन्ती-मध्यमा-वैखरीरूपा सरस्वतीति चतुर्विधा वाचो वदन्ति" इति। तथा योगकुण्डल्युपनिषदि—

"परायामङ्कुरीभूता पश्यन्त्यां द्विदलीकृता।
मध्ययायां मुकुलिता वैखर्यां विकसीकृता॥"

इत्यासां वर्णनमुपलभ्यते।

शैवागमदृष्ट्या परमशिवस्य विमर्शशक्तिरेव परा वागुच्यते--

'परा भगवती संवित् प्रसरन्ती स्वरूपतः।
परेच्छाशक्तिरित्युक्ता भैरवस्याविभेदिनी॥'

(परात्रिंशिका, पृ०२)

सैव ज्ञानशक्तिरूपेण परिवर्तमाना पश्यन्तीक्रियाशक्तिरूपेण च परिवर्तमाना मध्यमा भवति। ताभ्यां युक्तः शिवः 'सदाशिव' इतिं 'ईश्वर' इतिनाम्ना च व्यपदिश्यते। अत्र पश्यन्त्यवस्थायां वाच्यवाचक-भेदोऽज्ञातो भवति। अथवा अभिन्नरूपेणैव वाच्यवाचकयोर्ज्ञानं तदा

जायते। मध्यमायां द्वयोर्भेदः प्रतीयते, परं न स्पष्टरूपेण, वैखर्यां वाच्यवाचकयोर्भेदः स्फुटः।

केषाञ्चिद्रीत्या तु सूक्ष्मेति नाम्ना परा व्यपदिश्यते। तद्रीत्या परमशिवस्य क्रियाशक्तिर्वैखरी, ज्ञानशक्तिर्मध्यमा, इच्छाशक्तिश्च पश्यन्ती। आसां तिसृणाञ्च अविभक्तं समन्वितं रूपं सूक्ष्माया भवति। सूक्ष्मा-पश्यन्ती-मध्यमा-वैखरीभिः सार्धं काचिदन्या परावाणी भवति। सा च परमाशिवस्य स्वरूपभूतैव। तदुक्तं महार्थमञ्जर्याम्— 'परा वाक् पुनस्तस्यैव परमेश्वरस्य स्वरूपमनु प्रविशन्ती परिस्फुरती'ति।

श्रीभास्कररायरीत्या तु—प्रलयावस्थायां ब्रह्म घनीभूतं किं वा प्राणिनामपरिपक्वैः कर्मभिरैक्यमापन्नं मायया समाच्छन्नं भवति। कालक्रमेण कर्मणां परिपाके जाते तस्मिन् ब्रह्मणि चिकीर्षा भवति। तदानीं सर्वोच्चशक्त्या मायया समन्वितं ब्रह्म 'अव्यक्तमि'त्युच्यते। तदेव च कारणं 'विन्दु'-नाम्ना व्यवह्रियते। तस्मात् कार्यबिन्दुः प्रभवति। ततो नादः, नादाच्च बीजमुत्पद्यते। कार्यबिन्दुः सूक्ष्मं सचेतनं तत्त्वम्, नादः तदपेक्षया किञ्चित्स्थूलः अंशतः सचेतनोंऽशतोऽचेतनश्च भवति। बीजं नादापेक्षयाऽपि स्थूलमचेतनञ्च भवति। कारणबिन्दुपदवाच्यमव्यक्तं ब्रह्मैव शक्तिपिण्ड-कुण्डलिन्यादिनामभिरपि व्यपदिश्यते। सामरस्यमपहाय कारणबिन्दुः कार्यबिन्दुनादबीजरूपेण परिणतः सन्नुन्मुखो भवति, तदा स्वात्मनो भिद्यते। तथा च तत्र शब्दब्रह्माभेद्योऽव्यक्तः शब्द उत्पद्यते। अयमेव शब्दः परा वागुच्यते। इयञ्च कारणबिन्दोरभिन्नत्वात् सर्वगता सत्यपि वक्तुर्मूलाधारे पवनसाहाय्येन व्यज्यते। सैव नाभिपर्यन्तमागच्छता मरुता व्यज्यमाना मनःसङ्गता सामान्यतः क्रियाशीला च सती पश्यन्तीत्युच्यते। हृत्स्पर्शिना मरुता हृदये व्यज्यमाना निश्चयात्मिकया बुद्ध्या स्फुटं क्रियाशीलतया समन्विता आहन्ति।

वाक्यपदीयरीत्या परा वागेव परमं तत्त्वम्। अभिनवगुप्तादीनां मतेऽपि परमशिवस्य स्वप्रकाशिका विमर्शशक्तिरूपत्वात्तथाविधैव सा। भास्कररायरीत्या तु परा वाक् तद्भिन्नैव।

लघुमञ्जूषाकारोऽपि तथैव परादिरूपाणि प्रस्तौति। तद्रीत्या प्रलयावस्थायां परब्रह्मणि लीनजगत्का माया प्रलीयते। कर्मणां परिपाके ततो माया पृथग्भूत्वा ब्रह्मणः प्रेरणया कारणबिन्दुरूपेण व्यज्यते। कारणबिन्दो रूपमेव अव्यक्तं तत्त्वम्। सत्त्वरजस्तमोभिश्च गुणैः समन्वितः। कारणबिन्दुरेव कार्यबिन्दु-नाद-बीजरूपेण परिवर्तते। यदा कारणबिन्दुस्तै रूपैर्विभज्यते तदैवाव्यक्तस्य शब्दब्रह्मण उत्पत्तिर्भवति। इदमेव व्यक्तं परा वागित्यभिधीयते। क्रमशो नाभौ हृदये मुखे च वायुसाहाय्येनैव स्थूलं स्थूलतरं स्थूलतमं भूत्वा पश्यन्ती-मध्यमा-वैखरी नामभिरभिधीयते।

नागेशरीत्या कार्यबिन्दु नाद-बीजमेतत्त्रितयं साक्षात्कारणबिन्दोरेव रूपम्। भास्कररायरीत्या तु कारणबिन्दुः कार्यबिन्दुरूपेण कार्यबिन्दुश्च नादरूपेण नादश्च बीजरूपेण परिवर्तते।

औपनिषदानां रीत्या तु परं ब्रह्मैव अभिधानाभिधेयात्मक-प्रपञ्चोत्पादानुगुणशक्त्यवच्छिन्नं सच्छब्दब्रह्म-कारणब्रह्मादिरूपेण व्यपदिश्यते। प्रलयावस्थायाम् अभिधानाभिधेयाभेद एव भवति। शर्सभेदविवक्षायान्तु अभिधानात्मकप्रपञ्चोत्पादानुगुणशक्त्यवच्छिन्नं चैतन्यानन्दात्मकं ब्रह्म शब्द-ब्रह्म परावागादिशब्दव्यपदेश्यम्। अभिधेयात्मकप्रपञ्चोत्पादानुगुणशक्त्यवच्छिन्नं सदानन्दात्मकं ब्रह्म कारणब्रह्मपदव्यपदेश्यम्। उभयोश्च ब्रह्माभिन्नत्वेन तदभिन्नाभिन्नस्य तदभिन्नत्वनियमेन अभेद एव। संविदानन्दविवर्तत्वेन शब्दस्य विषयित्वं सदानन्दविवर्तत्वेन अर्थस्य विषयत्वञ्च भवति। प्रणवस्य स्ववाच्येन परमात्मना प्रणवमात्राणामकारोकारमकाराणां विराड्-हिरण्यगर्भाऽव्याकृतैश्च सहाभेदो माण्डूक्यादौ स्फुटः।

यथा महदादिविकाराणां ब्रह्मविकारत्वात् ब्रह्मभिन्नत्वं तथैव प्रणवविकाराणामभिधानानां प्रणवात्मकत्वमेव। "अकारो वै सर्वा वाक्, 'अकारेण सर्वा वाक् सन्तृण्णा" इत्यादिश्रुतिभ्यः। "वाचारम्भणं विकारो नामधेयमि'तिरीत्या घटादीनां तत्त्वं कारणे पर्यवस्यति। कम्बुग्रीवाद्याकृतयस्तु तत्तन्नामस्वेव पर्यवस्यन्ति। नामरूपयोश्चान्तरत्वेन ऐक्य-

रूप्यमेव। अत एव कारणब्रह्मरूपं शब्दब्रह्म यद्यप्यनादिनिधनं भवति, तथापि परमार्थवदधिष्ठानभूतं निर्विशेषं ब्रह्मैव परमं तत्त्वमुच्यते। प्रणवस्य अर्धमात्रात्मकं तत्त्वं वाच-वाच्यकातीतं कार्यकारणातीतञ्च भवति। तस्मिन्नेव वाच्यवाचकात्मकप्रपञ्चसत्त्वस्य अध्यस्तत्वात्। एवमवच्छेदकयोर्नामरूपयोः मायिकत्वेनैक्यम्, अवच्छिन्नयोश्च चिदानन्द-सदानन्दयोस्तत्त्वेनैक्यम्।

परमात्मविकारत्वेन सर्वस्य महदादेः परमात्माभिन्नत्वेन विकाराणां नामधेयत्वेन नाममात्रस्य च प्रणवविकारत्वेन प्रणवात्मकत्वमेव। परमात्मवाचकत्वेन प्रणवस्य संविदानन्दरूपस्य तद्व्यञ्जकत्वेन विकारिणोऽपि परमात्मनो व्यङ्ग्यत्वेन विषयत्वेऽपि वस्त्वभिन्नतैव।

इत्थं परा-पश्यन्त्यादिवाचां तात्त्विकं प्राचीनपरम्परानुगृहीतं स्वरूपं विविच्य परा-पश्यन्त्यादेरेव मुख्यवेदत्वकथनस्य सदोषत्वं परीक्ष्यते। वस्तुतो विषयेऽत्र बहु वक्तव्यं नावशिष्यते, वाक्यपदीकारेणैव तदुपपादनात्। अनभिव्यक्त-वर्ण-पद-क्रमार्थरूपेषु परादिषु वेदत्वविशेषणसम्भवः, तत्र विकारभावात्, वैखर्यामेव वर्णपरिग्रहात्। तदुक्तम्—

'स्थानेषु विकृते वायौ कृतवर्णपरिग्रहा।
वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना॥' इति।

मध्यमाया रूपं तु--

'केवलं बुद्ध्युपादाना क्रमरूपानुपातिनी।
प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते॥' इति।

पश्यन्त्यां तु वर्ण-क्रम-तदर्थादिविभागो न स्फुरत्येव। यथा—

'अविभागात्तु पश्यन्ती सर्वतः संहृतक्रमा।
स्वरूपज्योतिरेवान्तःसूक्ष्मा वागनपायिनी॥' इति।

परा तु संविद्रूपैव। यथा—

'वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी॥' इति।

एवञ्च विकारः साङ्कर्यम्, तदपनोदकसंस्कारा अपि परादिषु न सम्भवन्ति, वैखर्यामेव संस्कारसम्भवत्। गुरुशुश्रूषादिभिः संस्कारैः अध्ययनाध्यापनादिभिः आशीर्भिश्च वैखर्यात्मकानां वेदानामेव अयातयामत्वं तेजस्वित्वं चाकाङ्क्ष्यते स्मृतिवचनेभ्यः।

एतेन सद्गुरूपदिष्टदिशा तत्र विहितस्य संस्कारस्य महिम्ना तेषां विकारहानिः आनुषङ्गिकं साङ्कर्यञ्च इत्यादिकमपास्तम्।

यदप्युक्तम्—"योगिभिः निर्वितर्क-निर्विचारादि-विकल्पहीन-समाधीनामभ्यासात् शब्दार्थज्ञानानां साङ्कर्यनिवृत्त्यर्थं या स्मृतिपरिशुद्धिः परिशील्यते, तादृश्येव शब्दपरिशुद्धिः अत्राप्यपेक्षिता। सम्पन्नायां तस्यां शब्दात्मकवेदानां स्वरूपजिज्ञासा क्रमशो निवर्तते" इति। तदपि सारशून्यमेव; शब्दार्थज्ञानात्मकविकल्पानामपि वैखर्यामेव सम्भवात्। किञ्च—समाधावपि लौकिक-वैदिकानामविशेषेणैव असङ्कीर्णानां शब्दानां स्फुटप्रतिपत्तिर्भवति। तत्र वेदस्वरूपविशेषनिर्णये किं वैशिष्ट्यं लप्स्यते ?

यदप्यभिहितम्—"केवलश्रोत्रेन्द्रियग्राह्यशब्दराशीनां पृथग्जनोचितेन आलोचनेन वेदविद्या न प्रसीदति, न वा वेदार्थो हृदये स्फुरति। तथा च श्रुतिः—

'उत त्वः पश्यन्न ददर्श वाचम्, उत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासा॥' इति।

अनेन वाग्रूपा भगवती चिच्छक्तिः यावत् प्रसन्ना सती प्रपन्ने स्वरूपं नोन्मीलयेत्, तावदिन्द्रियव्यापारेण चक्षुषा श्रोत्रेण वा तत्साक्षात्कारः कथमपि न भवितुमर्हतीति गम्यते। नहि स्थूलशब्दस्य श्रवणे तादृशस्य दर्शनेन वा वेदस्वरूपस्य अपरोक्षानुभवो जायते" इति। तत्सत्यम्; देवप्रसादस्य वेदार्थबोधे बहुशो हेतुत्वश्रवणात्।

'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥'

इति श्रुतेः। अत एव वेदलक्षणायाः सरस्वत्याः प्रसादो वैदिकैः सर्वदा काम्यत एव। परं नानेन मन्त्रेण प्रसिद्धेभ्यो वेदेभ्योऽन्यो वेदो

बोध्यते। चिद्रूपा सरस्वती प्रसिद्धानां वेदानामधिष्ठात्रीति वाग्देवता सा उच्यते।

'शब्दात्मिका सुविमलर्ग्यजुषां निधान-
मुद्गीथरम्यपदपाठवताञ्च साम्नाम्।
देवि त्रयी भगवती भवभावनाय ........'

इति सप्तशतीवचनात्। नहि केवलायां चिद्रूपायामृगादिप्रभेदाः सम्भवन्ति। तेन प्रसिद्धवेदानामधिष्ठात्री देवतैव सा। अत एव निरुक्तकारैरस्य मन्त्रस्य तात्पर्यमन्यथैव उपवर्णितम्। तथा हि—'अप्येकः पश्यन्न पश्यति, वाचमपि शृण्वन्न शृणोत्येनामिति अविद्वांसमाहाऽर्धमिति। अर्थात् योऽर्थं न वेत्ति तं प्रति पूर्वार्धेन मन्त्रो ब्रूते। एकपुरुषः पाठमात्रपर्यवसितो वेदरूपां वाचं पश्यन्नपि न सम्यक् पश्यति। एकवचन-बहुवचनादिविवेकाभावे पाठशुद्धेरपि कर्तुमशक्यत्वात्। 'वायुमेव स्वेन भागधेयेनोपधावति, आदित्यानेव स्वेन भागधेयेनोपधावति, स एवैनं भूतिं गमयति, त एवैनं भूतिं गमयन्ति' इत्यादौ अव्युत्पन्नः पाठं निश्चेतुं न शक्नोत्येव।

अन्यः कश्चिदर्थज्ञानाय व्याकरणाद्यङ्गानि शृण्वन्नपि मीमांसाराहित्यात् एनां वेदरूपां वाचं सम्यङ् न शृणोति। 'यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान् निर्वपेत्' अत्र व्याकरणमात्रेण प्रतिग्रहीतुरिष्टिः प्रतीयते। मीमांसायां तु उपक्रमन्यायेन 'प्रजापतिर्वरुणायाश्वमनयत्, स जलोदरेण गृहीतोऽभवत्, स एतान् वारुणांश्चतुष्कपालानपश्यत्, तन्निरवपत्' इत्यनुरोधेन प्रतिग्राहयितुः दातुरेव इष्टिर्निर्णीयते।

तृतीयपादतात्पर्यं दर्शयति—अप्येकस्मै तन्वं विसस्रे इति। स्वात्मानं विवृणुते ज्ञानं प्रकाशनमर्थस्याहाऽनया वाचा इति। अर्थात् अप्यर्थक उतो स च पूर्वोक्तानभिज्ञवैलक्षण्याय प्रयुक्तः, निपातानामनेकार्थत्वात्। यो व्याकरणाद्यङ्गैः स्वशब्दार्थं मीमांसया तात्पर्यं शोधयितुं प्रवृत्त-

स्तस्या एकस्यै वेदः स्वकीयां तनुं विसस्रे, वेदार्थप्रकाशनक्षमं सम्यग्ज्ञान-मनया तृतीयपादरूपया वाचा।

चतुर्थपादतात्पर्यं दर्शयति—उत्तमोत्तमया वाचा जायेव पत्ये कामयमाना सुवासा ऋतुकालेषु सुवासाः कल्याणवासाः कामयमाना ऋतुकालेषु यथा एनां पश्यति, स शृणोतीति अर्थज्ञप्रशंसा। अर्थादुत्तमया चतुर्थपादरूपया वाचा तृतीयपादार्थस्य उपमोच्यते। उशती कामय-माना यद्यपि गृहकृत्यवेलायां मलिनवासाः, तथापि सम्भोगकाले सुवासा भवति। यथा स एनां साकल्पेनाऽऽदरयुक्तः पश्यति, तयोक्तमर्थं हितबुद्ध्या शृणोति तथायं चतुर्दशविद्यास्थानपरिशीलनोपेतः पुरुषो वेदार्थरहस्यं सम्यक् पश्यति। वेदोक्तञ्च धर्मब्रह्मरूपमर्थं हितबुद्ध्या स्वीकरोति। सेयं वेदार्थाभिज्ञस्य प्रशंसा।

अन्योऽपि मन्त्रो यास्केन तदर्थवैशद्याय उदाहृतः—

'उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु।
अधेन्वा चरति माययैषा३ वाचं शुश्रुवामफलामपुष्पाम्॥'

इति पूर्वोक्तस्यार्थस्य भूयसे निर्वचनाय।

अपि च—एकं चतुर्दशविद्यास्थानकुशलं पुरुषं वेदरूपाया वाचः सख्ये स्थित्वा स्थैर्ये वेदोक्तार्थामृतपानयुक्तमाहुः अभिज्ञाः कथयन्ति। सखिविदं सखायः। यद्वा स्वर्गलोके वेदानां सख्ये स्थित्वा अतिशयेन पीतामृतमाहुः। वाचाभिना ईश्वरा सभासु प्रागल्भ्यवर्जितास्तेषु मध्ये-ऽप्येनं वेदार्थकुशलं चोदयितुं न हिन्वन्ति न केऽपि प्राप्नुवन्ति, तेन सह विवदितुमसमर्थत्वात्। यस्तु अन्यः पाठमात्रपरः पुष्पफलरहितो वाचं शुश्रुवान् भवति। पूर्वकाण्डोक्तस्य धर्मस्य ज्ञानं पुष्पम्, उत्तरकाण्डोक्तस्यार्थस्य ज्ञानं फलम्। यथा लोके पुष्पं फलोत्पादकं तथा वेदानुवचनादिधर्मज्ञानमनुष्ठानद्वारा फलात्मकब्रह्मज्ञानेच्छां जनयति। 'तमेतमात्मानं ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इत्यादिश्रवणात्। यथा फलं तृप्तिहेतुस्तथैव ब्रह्मज्ञानं कृतकृत्यत्वहेतु-रिति भावः।

यदपि समुपस्थापितम्—"वर्णसमुदाये वेदवादिनः पण्डितम्मन्यान् निन्दन्ती श्रुतिराह—

'ऋचोऽक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत् तद्विदुस्त इमे समासते ॥'

( ऋ० सं० १।१६४।३९ )

एवञ्च शब्दरूपं ब्रह्मैव वेदस्वरूपमिति सिद्धान्तः" इति । तदपि न स्वेष्ट-साधकम् ; शब्दसामान्यस्यैव शब्दब्रह्मरूपत्वे शब्दविशेषभूतानां वेदाना-मपि तत्त्वे विशेषाभावात् । ऋचः ऋग्वेदाः। ऋच इति यजुःसामाथर्वा-ऽऽङ्गिरसामुपलक्षणम् । सर्वे वेदाः परमे व्योमन् परमात्माकाशरूपेऽक्षरे पर्यवसिताः, 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्यः' इति श्रुतिस्मृतिभ्याम् । यस्मिन्नधि विश्वेदेवा निषेदुः तस्मिन्नेव वेदानां पर्य-वसानम् । यस्तद् वेदतात्पर्यविषयीभूतं ब्रह्म न वेद न विजानाति किमृचा किमृग्वेदादिभिः करिष्यति ? वेदतात्पर्यविषयीभूतपरमात्मविज्ञानेनैव वेदाध्ययनं फलवद्भवति । अर्थज्ञानहीनवेदाध्ययनं व्रात्यत्वापनोदन-फलकमेव भवति । ऋचः ब्रह्माधिकरणिकाः प्रसिद्धवेदविलक्षणाः । शब्दब्रह्मरूपता तु समेषां शब्दानां समानैव । किं बहुना, परब्रह्मरूपताऽपि सर्वस्य शब्दकार्यात्मकस्य प्रपञ्चस्यापि 'अत्र वेदा अवेदा भवन्ती'ति श्रुतेः । कारणभावमुपगतानां वेदानां परमात्मभावत्वेन अवेदत्वमेव, मृद्भावोपगतानां घटादीनामघटत्वादिकमिवेत्यर्थः । न च शब्दब्रह्मभाव-मुपगतानामपि वेदानां वेदत्वं सूक्ष्मरूपेण भवत्येवेति वाच्यम् ; अवैदिकशब्दानामपि तथात्वाविशेषात् ।

अत एव सायणाचार्यैर्व्याख्यातम्—ऋचोऽक्षरेति । अत्र ऋक्शब्देन ऋक्प्रधानभूताः साङ्गाः परविद्यात्मकाश्चत्वारो वेदा उच्यन्ते । ऋचः सम्बन्धिनि अक्षरे क्षरणरहिते अदृश्यादिगुणके नित्ये परमे उत्कृष्टे, व्योमन् व्योमसदृशे अलेपत्व-नीरूपत्व-व्यापित्वसादृश्येन व्योमेत्युक्तम् । यद्वा-विशेषेण सर्वस्य रक्षके, विपूर्वस्य अवतेर्धातोरर्थानुगमात् स्वाध्यस्तस्य सर्वस्य रक्षकत्वात् सत्तास्फूर्तिप्रदत्वेन सर्वत्र व्याप्ते ब्रह्मणि प्रतिपाद्य-

प्रतिपादकभावेन स्थितत्वाद्वेदानाम्। सर्वैर्वेदैः खलु ब्रह्माधिगम्यते—'तं त्वौपनिषदं पुरुषं पृच्छामी'ति, 'तमेतमात्मानं ब्राह्मणा विविदिषन्ती'ति श्रुतेश्च। यस्मिन् विश्वेदेवा अधि निषेदुः, निषीदन्ति तिष्ठन्ति, आश्रित्य तिष्ठन्ति। यद्वा—उक्तलक्षणे ब्रह्मणि ऋगाद्या वेदाः पर्यवसिताः। यस्तद्वेद-प्रतिपाद्यं वस्तु न वेद, स किम् ऋगादिशब्दजालेन करिष्यति? वेदेन साधनेन वेद्यमविदित्वा किं साधयतीत्यर्थः। प्रयोजनाभावात् सर्वस्य वेदस्य वैफल्यमिति भावः। य इत् य एव तत्तत्त्वं विदुर्जानन्ति त इमे समासते त एवेमे ज्ञातारः समासते। अपुनरावृत्त्या स्वरूपेऽवस्थानं समासनम्।

अथवा— ऋगाद्यात्मकस्य आदित्यमण्डलस्य सम्बन्धिन्यक्षरे हिरण्मये पुरुषे सर्वे देवा निषीदन्ति, यस्तन्न वेद किमृचा करिष्यति? अथवा—ऋगुपलक्षितसर्ववेदसम्बन्धिनि प्रणवे अविनाशिनि, तत्र देवा निषेदुरिति।

निरुक्तेऽप्ययं मन्त्रो व्याख्यातः—'अत्र ऋगर्चनीयो जीवः, तस्य सम्बन्धिन्यक्षरे अविनाशिनि व्याप्ते वा परमात्मनीत्यर्थः। अत एव जीवापेक्षया परम उत्कृष्टे निरुपाधिके व्योमन् विशेषेण सर्वाधिष्ठान-त्वेन रक्षके व्योमसदृशे वा यस्मिन् देवा गमनवन्तो व्यवहरन्तो वा इन्द्रियसंज्ञका विश्वेदेवा अधिनिषेदुः आश्रित्य वर्धन्ते। यस्तन्न वेद उपाध्यंशयोस्त्यागेन तदेव स्वरूपमिति न पश्यति स्थूलो जनः, किमृचा केवलेन जीवेन जीवभावेन किं फलं प्रपश्यति।

यद्यप्यभिहितम्—'परस्माद् ब्रह्मणः सर्गादौ अविभक्त एकरूप एव वेदो विवर्तते, परन्तु अधरभूमिषु ग्रहीतॄणां शक्तितारतम्यकृतविभागेन तत्र विभागो जायते' इति। तदपि तुच्छम्; तथात्वेऽपि सर्वेषां मन्त्राणामनादित्वव्याहतेः। 'अविभक्तः वेद आसीदि'त्यस्य अयमेवार्थो यदृगादिमन्त्राणां पार्थक्यं नासीत्। मिश्रिताः सर्वे वेदा आसन्। तथात्वे सर्ववेदाध्ययनमन्तरा अग्निहोत्राद्यनुष्ठानासम्भवः, इति शक्तिह्रासमवेक्ष्य मन्त्रब्राह्मणभेदेन ऋगादिभेदेन शाखाभेदेन च विभागः समजनि।

विद्यमानानामेव मिश्रितानां तिलतण्डुलादीनां यथा विभागो भवति, तथैव विद्यमानानामेव वेदानां विभागः।

यदपि च—"आचार्यखेटपालकृतायां स्वायम्भुवटीकायां पाशात्मकशब्दात् शिवात्मकशब्दस्य मन्त्ररूपस्य कर्तृशक्त्याऽवस्थानाद्विशेषमाह—'प्रमातृभूमिगतानां मन्त्राणां परभूमिगतानां च शब्दानां न तु वागिन्द्रियस्य कदाचित्। वागिन्द्रियं हि मायापद एव स्थितम्। शब्दस्तु परतन्मात्ररूपः परव्योममहाभूतमयः, परमेश्वरस्य पञ्चब्रह्मविन्यासे वक्त्रमुच्यते, व्याख्यानिगुरूणां, मतङ्गभाष्यस्थमिदं वचनं लौकिकशब्दात् मन्त्रात्मकशब्दस्य उत्कर्षद्योतकमिति स्पष्टमेव प्रतीयते" इति। तदपि न समीहितसाधनम्; यतो हि उक्तवाक्यैर्दिव्यशब्दानाम् अलौकिकशब्देभ्यो वैलक्षण्यमात्रं ज्ञायते। वैलक्षण्यञ्च तत्तददृष्टजनकत्वेन विलक्षणकार्यकरत्वेन च। तत्रापि लौकिकशब्दापेक्षया पौराणिक-तान्त्रिकाऽऽर्षशब्दानां तेभ्योऽपि वैदिकानामपौरुषेयाणां शब्दानां वैलक्षण्यं प्रसिद्धमेव।

यद्यपि मायाभूमिगतैरिन्द्रियैः परव्योमगतानां मन्त्राणां सम्बन्धो न सम्भवदुक्तिकः, ग्राह्यग्राहकभावस्य साजात्यनिबन्धनत्वात्। अत एव हि तैजसेन चक्षुषा तैजसमेव रूपं गोचरीक्रियते, न गन्धादिकम्; तथापि यथा सात्त्विकान्तःकरणवृत्तावेव दिव्याया ह्लादिनीशक्तिप्रकाशभूताया भक्तेः प्रादुर्भावः, तत्र च अलौकिकस्यापि ब्रह्मणः प्रादुर्भावः, तथैव संस्कृतैरिन्द्रियैर्मन्त्राणां ग्रहणधारणोच्चारणादिकं सम्भवत्येव। यथा वा संस्कारैर्मन्त्रैः विविधैर्न्यासजालैः भावनाभिः दिव्यभावापन्न-सामान्यार्घ्य-विशेषार्घ्यपृषद्भिश्च पूजक-पूजोपकरणादीनां दिव्यत्वं सम्पाद्यते तेन 'नादेवो देवमर्चयेत्', 'देवो भूत्वा देवान् यजेत' इत्यादिरीत्या पूज्य-पूजकादीनां साजात्यं सम्पाद्यते, तथैव प्रकृतेऽपि ध्येयम्। अत एव असंस्कृतानां मन्त्रोच्चारणश्रवणाद्यनधिकारः श्रुतिस्मृतिपुराणेषु बोध्यते। न तावतापि शब्दब्रह्मरूपेऽदृश्येऽग्राह्ये परस्मिंस्तत्त्व एव वेदत्वमिति वक्तुं शक्यम्। यथा मृत्तिकायामेव घटत्वमिति न वक्तुं शक्यते, तथैव शब्दब्रह्मरूपे वेदत्ववादेऽपि।

कैश्चित्त—'अतप्ततनुर्न तदामोऽश्नुते दिवमि'ति रीत्या अतप्ततनोः आमत्वात् परमात्मरूपाया दिवोऽप्राप्तिरिति तप्तशङ्खचक्रादिभिस्तनुतापो वितन्यते। अन्यैस्तस्य आमत्वस्य निवृत्तये कृच्छ्रचान्द्रायणादिभिरात्मा ताप्यते। परमन्यैश्च भगवद्विप्रयोगजन्यतीव्रतापानुभूत्यैव आमत्व-निवृत्तिरिष्यते। न केवलमामत्वमेव अपोद्यते, किन्तु भगवद्विप्रयोग-जन्येन तीव्रेण तापेन स्थूल-सूक्ष्म-कारणात्मकशरीरत्रयस्य तापोऽत्यन्तं बाधितो भवति। ध्यानप्राप्ताच्युताश्लेषोद्रिक्तरसपूरण-तत्संस्पर्शानुगुण-दिव्यदेहेन्द्रियादिलाभश्च सम्पद्यते। परं दिव्यतापादकेषु सर्वेष्वेव व्यापारेषु प्राकृतदेहादिसाधनानामुपयोगः सर्वेषामिष्टः, तदन्तरा तदनुप-पत्तेः। यथा रसायनप्रक्रियया रसनिघर्षणेन गन्धकं रसत्वमापद्यते, तथा चित्तादिकमपि भगवत्सम्बन्धेन भगवद्भावमापद्यते। भगवद्भावा-पत्तौ चित्तादिगतसर्वविकृतयो रसत्वमापन्ना भक्तिरसामृतसिन्धो-स्तरङ्गा भवन्ति। तेन यावदारभ्य भगवन्नामादिसंसर्गो भवति, तत आरभ्यैव देहादीनां प्राकृतत्वमपनुद्यते, अप्राकृतत्वञ्च सम्पाद्यते। भजनतारतम्यानुरोधेन प्राकृतत्वाप्राकृतत्वनिवृत्तिनिष्पत्तितारतम्यं जायते। अन्यथा प्राकृतसाधनाव्यापृतौ कथमिवाऽकस्मात् प्राकृतत्वनिवृत्तिः अप्राकृतत्वनिष्पत्तिश्च स्याताम्? तेन प्रसिद्धा वेदा एव भगव-न्निःश्वसितत्वात् नित्यत्वादपौरुषेयत्वाद् दिव्याः।

यद्यपि आनुपूर्वीविशिष्टा वर्णा एव पदानि वाक्यानि च भवन्ति, आनुपूर्वी च पौर्वापर्यरूपा नित्येषु विभुषु वर्णेषु न संभवत्येव, नित्यानां विभूनां तेषां देशतः कालतश्च पौर्वापर्यायोगात्; तथापि अनित्यानां वर्णाभिव्यक्तीनां कालतः पौर्वापर्यसम्पत्तौ सम्भवति सा। वर्णनित्यत्वेन वेदानां नित्यत्वे त्वस्मादादिवाक्यानामपि नित्यत्वं प्रसज्येत। पौर्वापर्य-दृष्ट्या तु वेदानामप्यनित्यत्वमेव। आनुपूर्वी च तत्तादुच्चारयितृभेदाद् भिन्नैव भवति। तथापि प्रतिपुरुषं प्रतिकल्पञ्च नियतानुपूर्वीकत्वेन वेदानां नित्यत्वं वक्तुं शक्यते। तेनैव चान्यवाक्याद्यपेक्षया वेदस्य वैशिष्ट्यं दिव्यत्वञ्च। तैरेव पुरुषः संस्क्रियते, संस्कृतैश्च पुरुषैस्ते अधी-

यन्ते, अभ्यस्यन्ते च। तदभ्यासतारतम्यापेक्षया पुरुषेषु दिव्यतातारतम्य-मभिव्यज्यते। तदभ्यासक्रमेणैव शब्दब्रह्मरूपायाः परस्या वाचोऽप्य-धिगतिः स्यात्; अन्यथा तस्या अधिगन्तुमशक्यत्वात्। शब्दब्रह्मरूपस्य शब्दस्य अव्यवहार्यत्वेन धर्मब्रह्मज्ञानहेतुत्वमपि नोपपद्यते। सर्वाद्या वाग् उपसंहृतक्रमा, अनन्तरा च क्रमवतीति भवदभ्युपगमः।

यदुच्यते—"अक्रमा याऽऽद्या वाक् सैव शुद्धप्रज्ञारूपा प्रतिभात्मिका योगशास्त्रोपदिष्टं तारकं ज्ञानम्। तथा सर्वशब्दार्थप्रकृतिः प्रणवोऽपि सैव। तयैव वाचा ब्रह्मज्ञानं भवतीति तस्या माहात्म्यम्। तां तारिणीं विद्यामनाश्रित्य न कोऽपि ब्रह्मस्वरूपावधारणे समर्थो भवतीति 'नावेद-विन्मनुते तं बृहन्तम्', 'सर्वे वेदा यत्पदमामनन्ति', 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिश्रुति-स्मृतिभ्यः स्पष्टम्। सा ब्रह्मरूपा कामदुघा वाक चिद्रूपैव ब्रह्मविद्याख्या परमा कला" इति। तदपि न सम्यक्; अक्रमायां संविदि मुख्यया वृत्त्या वेदत्वासम्भवात्, नियतक्रमवतां विशिष्टवर्णाना-मेव वेदत्वात्। महाप्रलयेऽपि परमेशबुद्धौ शक्त्यात्मना क्रमविशिष्टात्मनि एव वेदास्तिष्ठन्ति। अगृह्यमाणप्रविभागवत्त्वेन अप्रविभक्तत्वमिति व्यप-देशः, न त्वविद्यमानप्रविभागवत्त्वेन, साङ्कर्यापत्तेः।

एतेन—'सूक्ष्मामर्थेनाप्रविभक्ततत्त्वामेनां वाचमभिनिष्यन्दमानाम्। उतान्ये विदुरन्यामेव च पूतां नात्मरूपामात्मनि सन्निविष्टाम्' इत्यपि व्याख्यातम्, यथा प्रलयकाले अर्थेनाविभक्ततया सूक्ष्मरूपेण सा समाविष्टा। तत्र वस्तु-दृष्ट्या शब्दार्थयोर्भेदेऽपि यथा अगृह्यमाणत्वं तथैव क्रमस्य विद्यमानत्वे-ऽपि अगृह्यमाणत्वमुपपद्यते। सैव च सर्गकाले विवर्तमाना नानात्व-मुपेयुषी नानारूपा भवति। क्रमस्य सर्वथा नाशे सकर्तृकसाङ्ख्याद्य-पेक्षया वेदेषु वैशेष्याभावात् कथं न वेदानामपि प्रतिसञ्चरावस्थायां निरवशेषत्वं स्यात्। प्रणवरूपेणावस्थानं तु वेदानामिव साङ्ख्यादीनामपि समानमेव। तस्याः साक्षात्करणेन ऋषित्वमुपजायते। तदाश्रितमेव सर्वज्ञत्वमात्मज्ञानञ्चेति निरस्तम्; परस्यां वाचि सर्वपदवाच्यस्य प्रपञ्च-स्याभावेन तत्साक्षात्कारेऽपि सर्वज्ञत्वासम्भवात्।

किञ्च—शब्दब्रह्मरूपायाः परस्या वाचः साक्षात्कारेऽपि निर्विशेष-ब्रह्मज्ञानं कथं सम्भवति ? ब्रह्मज्ञानेन ब्रह्मकार्यज्ञानसम्भवेऽपि कार्य-ज्ञानेन ब्रह्मज्ञानासम्भवात्। शब्दब्रह्म-परब्रह्मणोरैक्येऽपि तज्ज्ञानमेव परब्रह्मज्ञानमिति कुतः शब्दब्रह्मज्ञानस्य परब्रह्मज्ञानहेतुत्वम् ?

'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति।'

इत्यादिवचनं प्रसिद्धवेदाभिप्रायेणैव तु सङ्गच्छते। उपनिषदादि-वेदज्ञानेन ब्रह्मज्ञानप्रतिभारूपा शुद्धप्रज्ञा या तत्त्वप्रकाशिका भवति, सा तु सविषया। परावाक् तु पुनरक्रमा अविषया च। योगशास्त्रोपदिष्ट-तारकज्ञानमपि वस्तुतत्त्वावद्योतकत्वात् सविषयमेव। प्रणवस्तु वाचक-त्वेन परमेश्वरस्य लक्षकत्वेन च शुद्धब्रह्मणो बोधको भवति।

यद्वा—विष्णुबुद्ध्या उपास्यमानः शालग्रामो यथा विष्णुप्राप्तिहेतुः, तथैव ब्रह्मबुद्ध्या उपास्यमानः प्रणवः परब्रह्मप्राप्तिहेतुर्भवति। वेद-तात्पर्यविषयीभूतं ब्रह्म वेदाश्रयणमन्तरा नाधिगम्यते इत्येतस्मिन्नेवार्थे 'नावेदविन्मनुते' इत्यादीनि श्रौतानि वचनानि सङ्गच्छन्ते।

वस्तुतस्तु—स्वप्रकाशं ब्रह्म, न तत्र प्रकाशापेक्षा। तत एव अवेद्यत्वे सति अपरोक्षं यत्तदेव ब्रह्म, 'यत्साक्षादपरोक्षाद् ब्रह्म' इति श्रुतेः। अनाद्य-निर्वचनीयाऽविद्यापनोदनाय महावाक्यजन्यान्तःकरणवृत्तिरेव अपे-क्षिता भवति। सा च प्रणवोपासनेन वाग्देव्याः प्रसादेन वा जायते। शब्देन शब्दार्थज्ञानमुत्पद्यते इति नीत्याऽपि प्रणवेन महावाक्येन ब्रह्मा-कारा परोक्षात्मिका वृत्तिरुदेति। तया आवरणभेदेन स्वप्रकाशं ब्रह्म स्वतोऽपरोक्षं भवति।

'फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम्।
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता॥'

इत्याप्तोक्तेः। सा च वृत्तिः प्रणवादपि भिन्ना शब्दब्रह्मणोऽभिन्नाया वाग्देव्याः प्रसादभूतत्वात् ततोऽपि भिन्नैव। शब्दार्थात्मकप्रपञ्चोत्पाद-नानुगुण-महाशक्त्यवच्छिन्नं ब्रह्मैव शब्दब्रह्मेत्याख्यायते। परं ब्रह्म तु

सर्वथाऽनवच्छिन्नमेव। स्वावस्थान्तरभूतवेदादिशब्दैरेव शब्दब्रह्म पर-ब्रह्मप्रकाशकं भवति।

यदप्युक्तम्—"गुहाहितं प्राकृतजनैर्दुर्निरीक्ष्यं धर्मस्य तत्त्वं विवृत-स्वरूपाया वाग्देव्याः प्रसादात् अचिरेणैव चेतसि समुल्लसति, येन-कर्तव्याकर्तव्यनिश्चयः शास्त्राणि उपदेष्टुर्वचनञ्च अनपेक्ष्यैव सुकरो भवति। संशय-विपर्ययादिगन्धशून्या सा वाक्प्रसादजा वागात्मिका प्रज्ञा लौकिकज्ञानेन अबाध्यमाना ऋतम्भरेत्यन्वर्थसंज्ञां दधातीति प्रसिद्धा योगिलोके" इति। तदपि न क्षोदक्षमम्; प्रमाणभूतैरपौरुषेयैः वैदिकैः शब्दैरेव वाग्देव्याः प्रसादेन धर्मब्रह्मणोरवगमप्रसिद्धेः। सरस्वतीरूपायाः परदेवताया वाग्देवतायाः प्रसादेनैव सोपकरणैर्वेदैः विपर्ययादिशून्यं धर्मब्रह्मज्ञानं जायते, न तु स्वातन्त्र्येण। यथा नहि चक्षुरन्तरा रूपज्ञानं जायते, न वा घ्राणमन्तरा गन्धज्ञानं सम्भवति, तथैव वैदिकशब्दमन्तरा न धर्मब्रह्मज्ञानं सम्भवति, 'तं त्वौपनिषदं पुरुषं पृच्छामि', 'नावेदविन्मनुते तं बृहन्तम्' इत्यादिश्रुतिभ्यः। अन्यथा का वाग्देवी, किञ्च तत्स्वरूपविवरणम्, कथञ्च तेन धर्मतत्त्वज्ञानम् इति प्रश्नाः असमाहिता एव स्थास्यन्ति। यदि च तत्समाधानार्थं वैदिक-तान्त्रिकवचनाश्रयणम्, तदा तु तैरेवेदं ज्ञायते यत्प्रमाणैरेव प्रमेयाधिगतिः। प्रमाणञ्च प्रत्यक्षानुमानागमात्मक-मेव। न च अव्यवहार्यं शब्दब्रह्म वाग्देवी वा प्रमाणेषु परिगण्यते। बुद्धेः शुद्ध्यै रागादिजनितचाञ्चल्यादिनिवृत्तये संशयादिराहित्येन वेदार्थप्रकाशाय देवताराधनादिकमुपयुज्यते। नहि चक्षुरादिमन्तरा देवताप्रसादमात्रेण रूपादिकं प्रकाश्यते, तद्वदेव प्रकृतेऽपि बोद्धव्यम्।

अत एव शास्त्राण्यनपेक्ष्य धर्माधर्मनिश्चयः सुकर इत्येतत् सर्वमप्यपास्तम्। 'तं त्वौपनिषदं पुरुषं पृच्छामि', 'चोदनालक्षणोऽर्थो धर्मः' इतिविरोधात्। यथा चक्षुषैव रूपमुपलभ्यते, नान्येन श्रोत्रादिना, दोषरहितेन आलोकादिसहकृतेन मनःसंयुक्तेन चक्षुषा रूपमुपलभ्यत एवेति अयोगा-ऽन्ययोगव्यवच्छेदकेन एवकारद्वयेनैव चक्षुषो रूपस्य

-चासाधारणः सम्बन्धो निर्णीयते। तेनैव च चाक्षुषं रूपमिति व्यवहारो भवति। तथैव चोदनाभिरुपनिषद्भिः धर्मब्रह्मणी गम्येते नान्यैर्मानैः, अधिकारिपुरुषैरुपक्रमादिभिः लिङ्गैर्विचार्यमाणाभिस्ताभिस्ते अधिगम्येते एवेति अन्ययोगायोगव्यवच्छेदेनैव अत्रापि असाधारणसम्बन्धनिर्णीतिः। अन्यथा तादृशो वाग्देव्याः प्रसादः कस्य सम्पन्नः, कस्य नेति निर्णयोऽपि दुर्भण एव। जैन-बौद्धाद्यवैदिकानामपि न तादृक् प्रसाद इति को वक्तुमीष्टे? तथा च धर्मस्य तत्त्वं वैदिकैर्विज्ञायते, अवैदिकैर्नेति कथं निर्णयः? न च अनौपदेशिक-प्रातिभादिज्ञानप्रसिद्धेरपलापो नोचित इति वाच्यम्; तत्तत्प्रमाणविषयानतिलङ्घितत्तादतिशयजनकत्वेन तत्सार्थक्यात्। अत एव तादृशातिशयवतामपि रूपे चक्षुष एव प्रवृत्तिः, न घ्राणस्य। गन्धे च घ्राणस्यैव प्रवृत्तिर्न चक्षुरादीनाम्।

'यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात्।
दूरसूक्ष्मादिदृष्टौ तु न रूपे श्रोत्रवृत्तिता॥'

इत्यभियुक्तोक्तेः। अत एव धर्मब्रह्मणोः वेदैकसमधिगम्यत्वप्रसिद्धिः सङ्गच्छते। प्रतिभायाः परस्या वाच एव वेदत्वे वेदनामाग्रहो व्यर्थ एव स्यात्। जैन-बौद्धागम-कुरान-बाइबिलादिनाम्भिरपि तस्या वक्तुं शक्यत्वात्। तस्मात् प्रसिद्धा एव वेदा वेदपदव्यपदेश्या इति मन्तव्यम्। अनौपदेशिकज्ञानस्य यथार्थत्वमपि प्रसिद्धैस्तैः प्रमाणैः संवादादेव निश्चेतव्यम्। अत एव सर्वज्ञताया योगजज्ञानस्य वा न लोकव्यवहारोपयोगित्वमिति प्रामाणिकमर्यादा। अत एव ऋतम्भराया ऋतम्भरात्वमपि तेनैव सम्पद्यते। अन्यथा ऋतम्भराप्रज्ञावतां सांख्ययोगादीनामपि परस्परमतभेदो दुःसमाधेय एव स्यात्।

यदप्युक्तम्—"विशेषार्थग्राहिणी सा प्रज्ञा स्वसंवेदनरूपाऽपि प्रपञ्चमवतरन्ती न कथमपि लोककल्याणं साधयितुमलमिति तस्याः प्रपञ्चावतरणक्रमो ज्ञातव्यः। वेदस्वरूपां दैवीं वाचं पश्यन्त ऋषयो विदितसकलवेद्या धर्मतत्त्वं साक्षात्कुर्वाणाः असाक्षात्कृतधर्मभ्योऽवरेभ्यः प्रवेदयिष्यमाणा बिल्मं समामनन्ति। बिल्मविधानक्रमेण आर्षज्ञानस्य

जगत्यवतारः। अद्यत्वे प्रचलिता वेदाख्यया प्रसिद्धाः सर्वेऽपि ग्रन्था बिल्मरूपा एव। एतन्निर्माणमेव ऋषीणामाम्नायविधानम्।

वस्तुतस्तु—आम्नायस्य नित्यत्वे साक्षात्कार एव भवति, न विधानमिति ज्ञेयम्। यथा निर्विकल्पस्य ज्ञानस्य नामजात्यादियोजनारहितव्यपदेशो नास्ति, तथा वेदस्वरूपानुभूतेरपि अन्वाख्यानं सम्भवति। एवं च सति तैर्ऋषिभिरनन्वाख्येयस्यापि ज्ञानस्य यदाख्यानं विहितम्, शास्त्रादीनि च रचितानि, तत्तु लोकानुजिघृक्षया विकल्पारोपबलेनैवेति निर्विवादम्" इति।

तदपि न; 'ब्रह्म स्वयम्भ्वभ्यनार्षत्' इति विरोधात्। तत्र हि तपस्यमानेभ्योऽजेभ्यः पृश्निभ्यः स्वयम्भुब्रह्माभिव्यक्तमित्युक्तम्। पारम्पर्येण अध्ययनमन्तरैव तपोबलात् स्वयम्भु नित्यं मन्त्रब्राह्मणात्मकं ब्रह्माऽऽविर्भूतम्। तेनैव नित्येन वेदेन ते ऋषयः साक्षात्कृतधर्माणः संशयविपर्यासादिराहित्येन निःसन्दिग्धधर्मनिश्चयवन्तः सञ्जाताः। धर्मस्य वेदैकसमधिगम्यपरोक्षस्वभावत्वेन साक्षात्कारासम्भवात्। तदुक्तं दुर्गाचार्येण—

'ऋषन्त्यमुष्मात् कर्मण एवमर्थवता मन्त्रेण संयुक्तादमुना प्रकारेणैवंलक्षणः फलविपरिणामो भवतीति पश्यन्ति ते ऋषयः। 'ऋषिर्दर्शनात्' इति वक्ष्यति (नि० २।११) तदेतत्कर्मणः साक्षात्फलविपरिणामदर्शनमौपचारिकया वृत्त्योक्तम्-साक्षात्कृतधर्माण इति। नहि धर्मस्य दर्शनमस्ति, अत्यन्ताऽपूर्वो हि धर्मः।'

ते चासाक्षात्कृतधर्मभ्योऽवरेभ्यो वेदमुक्तवन्तः। येषां श्रवणमन्तरैव तपसा मन्त्रोपलम्भः, स्तेऽवरेभ्यः शक्तिहीनेभ्यो येषां श्रुत्या मन्त्रज्ञानं जातं तेभ्यः श्रुतर्षिभ्यः उपदेशेन शिष्योपाध्यायिकया वृत्त्या मन्त्रान् ग्रन्थतोऽर्थतश्च सम्प्रादुः सम्प्रत्तवन्तः। तेऽपि चोपदेशेन जगृहुः। अत्र विद्यमानानामेव मन्त्राणां दानमुक्तम्, न निर्माणम्। अथ तेऽप्युपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणाय इमं ग्रन्थं निरुक्तं वेदं वेदाङ्गानि च समाम्नासिषुः। कथं नाम उपदिश्यमानमेते शक्नुयुर्ग्रहीतुमित्येवमर्थमधिकृत्य विद्यमानास्तेषु अगृह्णत्सु तदनु-

क्रमशया तेषामायुषः सङ्कोचमवेद्य कालानुरूपां च ग्रहणशक्तिं बिल्मग्रहणायेमं ग्रन्थं सुखेन स्पष्टग्रहणाय निरुक्तं वेदं वेदाङ्गानि चोक्तवन्तः। वेदञ्चैकमेव सन्तमतिमहत्त्वाद् दुरध्येयमनेकशाखाभेदेन समाम्नासिषुः। तद्यथा—एकविंशतिधा बाह्वृच्यम्, एकशतमाध्वर्यवम्, सहस्रधा सामवेदम्, नवधा आथर्वणम्, व्याकरणमष्टधा, निरुक्तं चतुर्दशधा, भिन्नान्येतानि शाखान्तराणि लघूनि सुखं गृह्णीयुरेते शक्तिहीना इत्येवमर्थमुक्तवन्तः।

न च परावाग्रूपं शब्दब्रह्मभूतमेव, स्वयम्भु ब्रह्म, वैखरीवागात्मकं प्रसिद्धवेदरूपन्तु बिल्मभूतमिति वाच्यम्; बौद्धागमादीनामपि बिल्मभूतवेदत्वापत्तेः, 'वाचा विरूपनित्यये'ति वैखरीवाग्रूपवेदस्यापि नित्यत्वोक्तेश्च। न च तत्रापि शब्दब्रह्मरूपाया वाच एव नित्यत्वोक्तिरिति वाच्यम्; 'तस्मै नूनमभिद्यवे, वाचा विरूपनित्यया। वृष्णे चोदस्व सुष्टुतिम्' इति वैखरीवाग्रूपयैव वाचा सुष्टुतिसम्भवात्। किञ्च—यदि तपसा सार्वज्ञ्यं तदा तेनैव सार्वज्ञ्यमस्तु, किं शब्दब्रह्मज्ञानेन? कथञ्च निर्विकल्पेन शब्दार्थक्रमानवभासिना व्यवहारातीतेन तेन सार्वज्ञ्यम्?

'ऋषिर्दर्शनात्' (नि० २।११) इति वचनेन मन्त्रदर्शनाद् ऋषित्वमुक्तम्। 'पश्यति ह्यसौ सूक्ष्मानप्यर्थान्' इति दुर्गाचार्यः। 'स्तोमान् ददर्श' इत्यौपमन्यवः। तानसौ तारकेन ज्ञानेन पश्यतीति औपमन्यव आचार्यो मन्यते। 'तद् यदेनांस्तपस्यमानान् ब्रह्मस्वयम्भ्वभ्यनार्षत्, ऋषयोऽभवंस्तदृषीणामृषित्वमिति विज्ञायते (तै० आ० २।६) ब्रह्मेत्यस्य ऋग्यजुःसामाख्यं स्वयम्भु इत्यस्य अकृतकम्, अभ्यनार्षत् अभ्यागच्छत्। अनधीतमेव तत्त्वतो ददृशुस्तपोविशेषेण इत्यर्थो दुर्गाचार्येणोक्तः। तेन नित्यसिद्धमन्त्राणां दर्शनादेव ऋषित्वं भवति। 'ऋषीणां मन्त्रदृष्टयो भवन्ति' (नि० ७।३) विद्यमानानामेव मन्त्राणामृषयो येन केनचिन्निमित्तेन निदानभूतेन हर्षशोकप्रशंसादिना मन्त्राणां द्रष्टारो भवन्ति। अनादिमन्त्राणामृषयो द्रष्टारो न तु कर्तार इति दुर्गाचार्यः।

निर्विकल्पं ब्रह्म व्यवहारातीतं शब्दब्रह्म च यद्यप्यनाख्येयम्;

तथापि वैदिकैः शब्दैरतद्व्यावृत्त्या तात्पर्यवृत्त्या लक्षणया च बोध्यत एव। विकल्पारोपेण तु जगत्कारणत्वादिकं तस्योक्तम्,

'अध्यारोपापवादाभ्यां निष्प्रपञ्चः प्रपञ्च्यते।'

इत्युक्तेः। अभिधावृत्त्या तदप्रकाश्यमित्येतावतैव तस्यानाख्येयत्वम्। परं तदेव मुख्यं वेदतत्त्वम्, तस्यैव आरोपबलेनाख्यानम् वेदनिर्माणमित्यादिकन्तु निर्मूलमेव। पूर्वोक्तनीत्या मन्त्रब्राह्मणात्मकस्य शब्दराशेरेव नित्यवेदत्वसिद्धेः।

यदप्युक्तम्—"सौगतैरपि एवमङ्गीक्रियते। तथा हि—अविद्योपप्लववशात् प्राकृतैर्जनैः असांवृतं परमार्थतत्त्वं न ज्ञातुं शक्यते, तस्य बुद्धेरगोचरत्वात् सर्वप्रपञ्चनिर्मुक्तत्वाच्च। शब्दा हि विकल्पवृत्तेरुद्भवन्तो विकल्पप्रतीतीनामगोचरे विषये न प्रवर्तन्त इति निर्विकल्पं स्वरूपं न कथञ्चिदपि शब्दानां गोचरीभवति तदभिलप्यं वा। अतः परमार्थतत्त्वस्य प्रतिपादनं दुःशकमेव। परन्तु भाजनश्रोतृजनानुग्रहार्थं परिकल्पमुपादाय संवृत्यनिदर्शनेन किञ्चिदभिधीयते। तथा च—

'अनक्षरस्य धर्मस्य श्रुतिः का देशना च का।
श्रूयते दृश्यते चार्थः समारोपादनक्षरः॥'

इति तैरुक्तमि' ति। तदपि न; अर्थान्तरत्वोपपत्तेः। तथा हि—माध्यमिकबौद्धरीत्या शून्यस्य सदसदादिकोटिचतुष्टयविनिर्मुक्तस्य शब्दप्रवृत्तिनिमित्ताभावेन शब्दाविषयत्वेन अवाच्यत्वेऽपि समाधिना सर्वविकल्पापोहेन तत्त्वभानाभ्युपगमः। नात्र तद्बोधोपयोगि-विकल्पारोपेण अन्वाख्यानस्य वेदत्वमिष्यते तैः।

यदपि—"वेद एव सर्वज्ञानप्रसूतिरित्यत्र नास्ति सन्देहलेशोऽपि। आम्नायविधातृणामृषीणां यदतीतादिविषयकमार्षं ज्ञानमिति शास्त्रेषु प्रसिद्धं सर्ववस्तुभानं भूतार्थकं तत्प्रातिभमिति प्रशस्तपादाचार्याः। तस्यानौपदेशिकत्वेऽपि आगमहेतुकत्वमव्याहतमेवेति भर्तृहरिपादाः। प्रत्ययमात्रस्यैव शब्दानुविद्धत्वेन शब्दस्य वेदात्मकतया ज्ञानमात्रमेव वेदमूलकम्। अनया दिशा प्रत्यक्षस्यापि परमार्थतो वेदमूलकत्वेन

अलौकिकप्रत्यक्षस्य च लौकिकप्रत्यक्षाद् बलीयस्त्वात् तस्य विशुद्धत्वेन वेदमूलमेवाभ्रान्तत्वम्। अत एव अतीन्द्रियपदप्रेप्सोर्वेदस्यैव शरणापत्तिरुचितेति ध्वन्यते" इति। तदपि निस्तत्त्वम्; श्रुतितर्कविरोधात्। तथा हि—बौद्धार्हतैः न तावद्वेदस्य सर्वज्ञानप्रसवहेतुत्वमुपेयते, किन्तु तेषां तारकज्ञानमन्यादृशमेव, यन्मूलकास्तेषामागमाः। कस्य योगः सम्यक् योगः, कस्य तपः सम्यक् तपः, कस्य च ज्ञानं तारकं ज्ञानमिति निर्णेतुं क उपायः? किञ्च—वैदिकैस्तु ऋषीणां नाम्नायविधातृत्वमुपेयते, किन्तु पूर्वोक्तरीत्या आम्नायद्रष्टृत्वमेव उरीक्रियते। तदपि-संप्रदायान्तरसंवादेन निश्चीयते। अन्यथा दृष्ट्वा निर्माय वा मन्त्रास्तैरुच्यन्ते, इत्यनिर्णये संशीतिरेव स्यात्। तथैव प्रशस्तपादाद्यभिमतम् अतीतादिसर्वविषयकमपि ज्ञानं भूतार्थकं सर्ववस्तुभानं प्रातिभमपि नानापेक्षिकम्, तत्रापि श्रुत्यादिसंवादापेक्षाया अनिवार्यत्वात्। अन्यथा प्रातिभज्ञानशालिषु तेषु ऋषिषु मतभेदानापत्तेः।

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥'

इतिरीत्या ज्ञानमात्रेषु शब्दानुवेधस्य वैयाकरणसम्मतत्वेऽपि नैयायिक-वैशेषिकैरनभ्युपगतत्वात् न तद्रीत्या तस्याऽऽगमहेतुकत्वमपि चोदक्षमम्। अत एव प्रत्यक्षसूत्रे 'न्यायमञ्जरीकारादिभिः तत्खण्डनमण्डनादि बहुधा प्रपञ्चितम्। कथञ्चित् केषाञ्चिद्रीत्या तदभ्युपगमेऽपि न शब्दानुवेधमात्रेण तस्य ज्ञानस्याऽऽगमिकत्वं वक्तुं शक्यम्, जन्य-वस्तुषु पौर्वापर्यमन्तरा तदविनाभूतहेतुसद्भावासिद्धेः। अत एव प्रत्यक्षादि-ज्ञानस्य इन्द्रियादिमूलकत्वं प्रसिद्धम्, न शब्दमूलकत्वम्, नतरां वेद-मूलकत्वम्; तथात्वे बौद्धादिभिरपि वेदप्रामाण्यस्याभ्युपेयत्वापातात्। शब्दमात्रस्य वेदत्वकल्पनं निष्प्रमाणकम्, उपहासास्पदञ्च। प्रत्यक्षस्य वेदमूलकत्वे कथं तत्राशुद्धिकल्पनाऽपि? तेन कुतोऽलौकिकप्रत्यक्षस्य लौकिकप्रत्यक्षाद् बलीयस्त्वमपि?

यदप्युक्तम्—"अतीन्द्रियपदप्रेप्सोर्वेदस्यैव शरणापत्तिरुचिते'ति। तदपि न चोदक्षमम्; परावाग्रूपस्य वेदत्वे तस्यापि अतीन्द्रियत्वा-

विशेषात्। तदुपलब्धौ साधनान्तरस्य वक्तव्यत्वात्। प्रसिद्धवेद-तदुपदिष्टोपायानां तत्साधनत्वे स्वीकार्यमेव तेषां वेदत्वम्। कथं वा बौद्धादिरीत्या प्रसिद्धवेदानामतीन्द्रियज्ञानसाधकत्वं सम्भवति ?

यदप्युक्तम्—"परब्रह्मणः सकाशात् तदनुकारस्यैव शब्दब्रह्माख्यस्य वेदस्य यथा वस्तुतः कोऽपि भेदो नास्ति, तथा वेदस्वरूपात् बिलम्भूतस्य वेदस्यापि तात्त्विको भेदो न संलक्ष्यते। परन्तु उभयत्र आभासमानस्य वेदस्य निवृत्तिमुद्दिश्य बिलमसमाश्रयेण वेदस्वरूपपरिग्रहः कर्तव्यः। ततश्च परब्रह्मावाप्तिरिति क्रमव्यवस्था" इति। तदपि नातीव हृद्यम्; सर्वस्यैव प्रपञ्चस्य वस्तुतो ब्रह्मभिन्नत्वाभावेन शब्दब्रह्मणो वैशेष्यानुपपत्तिवत् शब्दमात्रस्यैव शब्दब्रह्माभिन्नत्वे बिलम्भूतवेदेषु वैशेष्यासिद्धेः।

यदप्युक्तम्—"ब्राह्मणानां ब्राह्मण्यमपि वेदनिबन्धनमेव। यः शब्दब्रह्मणि निष्णातः, स एव ब्रह्माधिगन्तुमर्हति, नेतरः। स एवान्वर्थनामा ब्राह्मणः। शब्दब्रह्मावगतिरेव श्रुति-विद्यादिपदवाच्या। परन्तु तपसोऽनुष्ठानमन्तरा न कदाचिदेषा विद्या आविर्भवति। तपोऽनुष्ठानमपि देहविशेषादेव भवतीति योनिः जातिर्वाऽपि ब्राह्मण्यावाप्तौ बीजमभिधीयते। तपश्च क्रियाविशेषवाचकम्। नहि सर्वाः क्रिया निर्विशेषैः सर्वैरेव मन्त्रैर्निष्पादयितुं शक्याः, श्रोत्रादिना दर्शनादिक्रियावत् देहविशेषसाध्यः क्रियाविशेषो येन केनापि देहेन न सम्भवतीति स्फुटम्। अत एव ब्राह्मणस्वरूपप्रदर्शनार्थं महाभाष्यकारेणोक्तम्—

'विद्या तपश्च योनिश्च त्रयं ब्राह्मण्यकारणम्।
विद्यातपोभ्यां यो हीनो जातिब्राह्मण एव सः॥'

(म० भा० २। २। ६) इति।

तदपि निर्विचार-रमणीयम्; ब्राह्मण्यस्य वेदनिबन्धनत्वे शब्दब्रह्मणि निष्णातानां क्षत्रियादीनामपि ब्राह्मण्यापातात्। न च तेषां वेदाध्ययनानधिकारः; द्विजातीनां वेदेऽधिकारस्य श्रुतिस्मृत्युदितत्वात्। न च बिलम्भूतवेदाध्ययनाधिकारसत्त्वेऽपि तपःसाध्यत्वेन शब्दब्रह्मरूपवेदा-

वगमस्य तत्रानधिकारः क्षत्रियादानामिति वाच्यम्; तपस्स्वपि तदधिकाराविशेषात्, निषेधाभावाच्च।

'जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम्।
देवताराधनञ्चैव स्त्रीशूद्रपतनानि षट्॥'

इत्यादिस्मृतिषु शूद्राणां तपः निषेधो न क्षत्रियाणाम्। श्रोत्रेण रूपं नावगम्यत इति प्रत्यक्षसिद्धम्। क्षत्रियादीनां तपस्स्वनधिकार इति तु प्रमाणसापेक्षमेव। न च प्रमाणमुपलभ्यते। ययात्यादीनां लोकोत्तरतपस्वित्वेऽपि क्षत्रियत्वमेवासीत्, न ब्राह्मण्यम्। जनक-भीष्म-श्रीकृष्णादीनां ब्रह्मावगन्तृत्वेऽपि क्षत्रियत्वमेवाऽऽसीत्, न ब्राह्मण्यम्। यद्यपि सूक्ष्मसंस्थानभेदवशादन्योन्यभेदवन्तो भवन्ति देहाः, तेनैव च ब्राह्मण्यादिकं सिद्ध्यति; तथापि तपसि ब्रह्मावगतौ कीदृशस्य देहस्योपयोग इत्यस्य प्रमाणमन्तरा निर्णेतुमशक्यत्वात्। तपसो निषेधाद् उपनयनाविधानाच्च यद्यपि शूद्रस्य तपसि वेदाध्ययने चानधिकारः श्रुतार्थापत्त्या सिद्ध्यति; तथापि न क्षत्रियादीनामनधिकारः केनापि सिद्ध्यति। शूद्राणामेव सतां विदुरादीनां जन्मान्तराभ्यासवशात् पुराणादिश्रवणाद्वारा ब्रह्मावगमः सम्पन्न एव।

एवम्—ऊर्ध्वबिन्दुपातेन कस्य देहस्य जन्म, नाभिनिम्नस्थपातेन वा कस्य जन्मेत्यादिकमपि दुरवधारणमेव। संस्कारादिना ऊर्ध्वस्थितिमार्गोद्घाटनमपि यदि प्रयत्नसाध्यं तर्हि अधःस्थितेनापि बिन्दुना निर्मिते देहे कथन्न तत्सम्पादयितुं शक्यम्?

किञ्च—ब्राह्मणजातीयानां समेषां नाभेरूर्ध्वं स्थितेनैव बिन्दुना जन्म भवतीति कथं ज्ञातुं शक्यते? नहि कश्चित्तादृग्विधः संस्कारः प्रसिद्धो यदधीना ब्राह्मणानामेव शक्तेरूर्ध्वगतिः प्रसज्येत। किञ्च नाभिग्रन्थेरुन्मोचनेनापि ब्राह्मणानामेव रेतस ऊर्ध्वगमनं नेतरेषामित्यपि निष्प्रमाणमेव। अत एव तत्त्वदृष्ट्यपसर्पणवदेव वेदमार्गे प्रस्थितिः स्वाध्यायो वेदपाठो वेत्यपि आवहति चिन्त्यकक्षाम्। तथा च उपनयनानन्तरमेतदेव प्रयत्नकृतं तपोऽनुष्ठानम्।

एतेन—"परिकर्मणा ब्रह्मबीजस्य क्रमशो विकाशो भवति, सङ्कुरपदेन शब्दब्रह्मणि गतिरेव, सा चेयं दशा ब्रह्मचर्यपदेन प्राचीनैरुपवर्णिता" इत्यादिकमप्यपास्तम्। तथात्वे केषाञ्चित् अलौकिकानामेव ब्रह्मचर्यं वेदाध्ययनं सम्भवति। एवञ्च सत्यामिष्टापत्तौ वैदिकसम्प्रदायस्यैव लोपापत्तेः, तादृग्विधानस्य सूत्रग्रन्थादावनुपलब्धेश्च।

यच्चोक्तम्—"अन्तत आवृत्तिवशात् शब्द एव मननादिव्यापारशीलो मनोवृत्त्यादिकमतिक्रम्य चिदात्मके ज्योतिषि निवर्तते। पश्यन्तीरूपेण स्वात्मसाक्षात्काररूपेण आविर्भवति च। ऋषित्वप्रापिकायामस्यां वेदस्वरूपोपलब्धिदशायां स्वात्मावरणं चिरं नश्यति। ततः सर्वाधिकारनिवृत्तिर्जायते। चिद्रूपं ब्रह्म विदित्वा जीवो यथार्थनामा ब्राह्मणो भवति" इति। तन्न; श्रुतिविरोधात्। तथा हि—यद्यपि स्वाध्यायपराणामभ्यासवशात् मनोवृत्त्यात्मनैव शब्दः शिष्यते, ततश्च पुनरप्यभ्यासवैशद्येन मनोवृत्त्यादिकमतिक्रम्य चिदाकाशरूपतया तत्स्थितिः, तस्य चित्कार्यत्वेन चिदनतिरिक्तत्वात्; तथापि अचिदात्मत्वनिवृत्तेः अधिष्ठानसाक्षात्कारमन्तरा असम्भवात्। अधिष्ठानसाक्षात्कारस्तु प्रसिद्धमहावाक्यजन्यब्रह्माकाराकारिता वृत्तिरेव भवति, वैदिकशब्दानामेव प्रमाणकोटिषु परिगणनार्हत्वात् पश्यन्तीरूपाया वाचः साक्षात्कारशब्दानभिधेयत्वाच्च। ऋषित्वप्रापिका समाधिदशाऽपि न पश्यन्तीरूपा, तत्रार्थवर्णादिक्रमवतां मन्त्राणामभिव्यक्तेः। पश्यन्त्यां तु वर्णक्रमतदर्थादिविभागेन स्फुरत्येवेति पूर्वमुक्तमेव।

चिद्रूपब्रह्मज्ञानेन जीवस्य मुख्यं ब्राह्मण्यं भवतीत्यपि चिन्त्यम्; क्षत्रियादीनामपि तथात्वापत्तेः। 'ब्राह्मोऽजातौ' इति सूत्रेण जातिभिन्नेऽर्थे एव टिलोपस्य निपातनात् जातिरूपेऽर्थे एव टिलोपाभावप्रसक्त्या ब्राह्मणशब्दस्य जातिवाचकतया ब्राह्मणजातावेव ब्राह्मण्यसिद्धेः।

यच्चोक्तम्—"ऋषित्वमनापन्नस्य अतपस्विनो वा वेदस्य प्रत्यक्षं न भवति, न ह्येषु प्रत्यक्षमस्ति, 'अनृषेरतपसो वा' इति निरुक्तपरिशिष्टोक्तेः" इति। तदपि न; तत्र वेदार्थस्य प्रत्यक्षत्वमपि संशयविपर्यासादिरहितनिश्चयाभिप्रायेण द्रष्टव्यम्।

यदप्युक्तम्—"गुरुः शास्त्र उपायः, शास्त्रञ्च स्वपरामर्शे। स्वपरामर्शस्तु न कुत्राप्युपायत्वं भजते। तेन गुरुशास्त्रयोरुपायत्वं गौणत्वञ्च, स्वपरामर्शस्यैव प्राधान्यम्।

'उपादायापि ये हेयास्तानुपायान् प्रचक्षते।'

इति ह्युक्तेः। यस्य चेतसि गुरुशास्त्रानपेक्षतया स्वपरामर्शस्य उदयो भवति, तस्याधिकारः सार्वत्रिकोऽप्रतिहतश्च वेद्यः। अनधिगतगुरोः अनधीतशास्त्रस्य च तस्य स्वत एव शास्त्रार्थज्ञानम्। शुद्धविद्याया एतदेव माहात्म्यं यत्सा निरन्तरं सत्यमेव भासयति, नानृतम्।

'सर्वशास्त्रार्थवेत्तृत्वमकस्माच्चास्य जायते।'

इति पूर्वागमवचनात्। तादृग्ज्ञानोदयं यल्लोकोत्तरनिमित्तं तदेव परमेश्वरस्य शुद्धविलास-समुल्लासः। यतः सर्वविषयं सर्वथाऽविषयमक्रमञ्च प्रातिभं महाज्ञानं स्वात्मानं प्रकाशयति इति योगिषु ऋषिषु च सुविदितमेव" इति। तदपि न क्षोदक्षमम्; श्रुतियुक्तिविरोधात्। तथा हि—'नावेदविन्मनुते तं बृहन्तम्, 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति स्व-स्वरूपसाक्षात्कारात्मकस्य स्वविमर्शस्यापि प्रसिद्धवेदादिशास्त्रैकगम्यत्वावधारणात्। यत्र वामदेवादीनां शास्त्रानपेक्षमेव तत्त्वज्ञानं श्रूयते, तत्रापि जन्मान्तरीयशास्त्राभ्यासहेतुकत्वस्य कल्पनात्, स्वविमर्शस्यापि अन्ते हेयत्वावधारणाच्च। अत एव सांख्यीयरीत्या तत्त्वपुरुषान्यताख्यातेः हेयत्वावसायः। वेदान्तिमतरीत्याऽपि विषं विषान्तरं जरयति, पयः पयोऽन्तरं जरयति इतिन्यायेन स्वविमर्शस्य स्वपरविरोधित्वावगमात्। पारमेश्वरविलास-समुल्लासोऽपि न सर्वथा कारणानपेक्षः। तथात्वे क्वचिदेव तत्समुल्लासो नोपपद्यते, ईश्वरस्य सर्वसमत्वात्।

'समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।'

इति वचनात्। न च स्वातन्त्र्यरूपा स्वरूपशक्तिरेव सर्वसमाधानमिति वाच्यम्; पारतन्त्र्यात्यन्ताभावाधिकरणत्वस्यैव स्वातन्त्र्यात्। अन्यथा स्वगतभेदसत्त्वे 'एकमेवाद्वितीयम्' इति श्रुतिविरोधः स्यात्।

यद्यपि स्वभावतः सर्वार्थावभासनशालि बुद्धिसत्त्वं सर्वार्थावभासनक्षमं रजस्तमोभिरावृतं तत्तत्प्रमाणैः सीमितमेवार्थं प्रकाशयति। योगा-

भ्यासैरुपासनैश्चापाकृते तस्मिन्नावरणे सर्वार्थावभासनक्षमं भवति। तेन जन्मान्तरीयसर्वशास्त्राभ्यासजन्य-संस्कारसाचिव्येनैव उपासनादिभिः सर्वशास्त्रार्थवेत्तृत्वं सम्भवति। तथापि जीवेषु सातिशयमेव तदपाकरणं सम्भवति, नानतिशयम्। एतदर्थमेव निरतिशयं सार्वज्ञ्यमीश्वरस्यैवेति योगिभिरुपगम्यते।

अत एव तादृशं प्रातिभं महाज्ञानमपि प्रसिद्धवेदादिशास्त्राविरुद्धमेव मन्तव्यम्। अन्यथा बौद्धार्हतादीनामपि तादृशप्रातिभमहाज्ञानकल्पनात् तन्मूलकानां तदागमानामपि वेदादिवत् प्रामाण्यं प्रसज्येत। तथात्वे सुन्दोपसुन्द-न्यायेन उभयेषामपि प्रामाण्यं व्याहतं स्यात्।

'कपिलो यदि सर्वज्ञः कणादो नेति का प्रमा।
तावुभौ यदि सर्वज्ञौ मतभेदः कथं तयोः॥' इत्युक्तेः।

यदुक्तम्—"वेदज्ञानस्य पूर्वा कोटिः सर्वज्ञत्वम्, उत्तरा च आत्मज्ञानत्वम्। वेदात्मकस्य ज्ञानचक्षुष उन्मेषे तस्य पराङ्मुखत्वं यावदनुवर्तते, तावत् स्पष्टतया द्वैतात्मकस्य विश्वस्य पृथक्तया सत्त्वेन विषयज्ञानं जायत एव। प्रदक्षिणक्रमेण प्राङ्मुखं तन्नेत्रं शनैरभ्यासयोगाद् उदङ्मुखं भवति। प्राङ्मुखनयनस्य उदङ्मुखीभावे यः क्रमः, स एव विषयाणामुद्भासनपूर्विकाया निवृत्तेरपि क्रमोऽवसेयः। अत्र प्रथममनात्मनि देहादौ आत्मभावो निवर्तते, तदनन्तरमात्मनि आत्मभावोऽपि निवर्तते। इत्थं द्विविधस्यापि बन्धस्य व्युपरमे आत्मैव शुद्धस्तिष्ठति। ज्ञानाज्ञानयोरुभयोरपि परस्तात् इयमेव दशा जीवस्य महाव्याप्तिः, ब्रह्मावाप्तिश्च" इति।

तदपि न क्षोदक्षमम्; विकल्पासहत्वात्। तथा—हि वेदशब्दः परावाक्परः प्रसिद्धवेदपरो वा? न प्रथमः; तथात्वे तस्य सार्वज्ञ्यहेतुत्वाश्रवणात्, तया बौद्धार्हतादीनामपि सर्वज्ञताप्रसक्तेश्च। न द्वितीयः; तस्य सर्ववेदार्थज्ञानजनकत्वेऽपि अनापेक्षिकसर्वज्ञत्वाजनकत्वात्। वेदार्थोपासनाद्यर्थानुष्ठानद्वारा सार्वज्ञ्यजनकत्वेऽपि वेदज्ञानमात्रस्य तदजनकत्वात्। शब्दब्रह्मात्मकस्य वेदस्य नेत्रत्वे तस्य नित्यत्वेन तत्र अभ्यासजन्यातिशयायोगाच्च तेन तत्र प्राङ्मुखत्वोदङ्मुखत्वादिकल्पनमप्यार्थकम्।

यदप्युक्तम्—"स्वाध्यायेन पुनःपुनरनुष्ठितेन प्राणापानयोरापेक्षिकं साम्यं जायते। तदानीं स्थूलवायोः सूक्ष्मतासम्पत्तौ सूक्ष्मे ब्रह्मबिले सूक्ष्मस्य वायोः शनैः सञ्चारो भवति। तदनु मनोऽपि भूतासङ्गं परिहृत्य तदन्तः सञ्चरितुमुपसङ्क्रमते। इन्द्रियाधीनं बहिर्मुखं संस्कारकलुषं मनस्तस्मिन् ब्रह्मपथे प्रविशद् इन्द्रियेभ्यः प्रत्याहृतं स्वत एव भवति। स्वाध्यायकालीनः प्रयत्नसमुत्थः शब्दः प्राणमनसोर्विरलिमप्राप्तौ अनाहताख्यरूपे नादमये शब्दे तादात्म्यं गच्छति। वायुसंक्षोभजन्यस्य तरङ्गस्य वायूपशमे जलस्वरूपे विलयवत् अन्तः प्रविशन्नपि शब्दो वायुमनसोः क्रमसंस्कारमहिम्ना अधिकाधिकं संस्कृतो भवति। इयमेव अन्तःसङ्कल्परूपाया मध्यमाया वाचो भूमिः। इत ऊर्ध्वमपि वाचः संस्कारे क्रियमाणेऽर्थेन सह तस्या अविभागः प्रत्यक्षीक्रियते। इयं हि पश्यन्ती वाक्देवरूपा स्वात्मशक्तेरुल्लसनरूपा वा वेदितव्या। वस्तुतस्तु—मन्त्रस्य चित्तस्वरूपादभिन्नतया तत्स्फूर्तिरूपं दिव्यं ज्योतिरपि चित्तस्यैव एकाग्रतामापन्नस्य सिद्धरूपमिति निष्कर्षः। तत्र तत्र मन्त्रदेवतयोरभेदवर्णनं मन्त्रस्य देवताया विग्रहत्वेन वर्णनं चित्तदेवतयोरभेदविवरणञ्च प्राय एकार्थकमेव। वाचामर्थानां नानात्वं बहिर्दृशां सत्यमपि क्रमोपारूढम्। क्रमस्तु व्युत्थितदर्शनानां वस्तुपतित एव भाति। नादानुसन्धानकाले पुनस्तस्या भासमानत्वं स्पष्टं प्रतीयते। नादस्य परज्योतिषि विलये क्रमो विलीयते। वाचो भेदा अर्थस्य भेदाः, वागर्थयोः परस्परं भेदाः सर्वे एव विकल्पा एकस्मिन्नखण्डे चिद्व्योम्नि प्रशमं गच्छन्ति। तत्र भेदा अपि अभेदसमानाधिकरणाः अभेदसाम्यं गता इति तत्पदं विकल्पजालैः अनाप्लुतमवर्णनीयप्रायमेव। मूकास्वादनवदेव तत्र चिदानन्दसन्दोह-संवेदनम् अन्यत्रान्वाख्येयम्" इति।

अत्रोच्यते—यदि स्वाध्यायशब्दस्य 'अधीयते इति अध्यायः, स्वस्य अध्यायः स्वाध्यायः, स्वशाखीयो वेदस्तदुपलक्षितश्च सकलवेदराशिः अर्थोऽभिप्रेतः, तस्य चानुष्ठानम्, गुरुपारम्पर्येण तदध्ययनपूर्वकमभ्यासः, तदा अवश्यं अभ्यासातिशयेन प्राणापानयोः साम्यं स्थूलवायोश्च सूक्ष्मतापत्तिः, तस्य च सूक्ष्मे ब्रह्मबिले सञ्चारादिकम्। परमन्येषां

तान्त्रिकाणामवैदिकानाञ्च मन्त्राणामभ्यासेऽपि एतत् कथं न सम्भवेत् ? शब्दावर्तनमहिम्ना शब्दमात्रस्यैव तथात्वापत्तौ बाधाभावात्। यदि च स्वाध्यायशब्दस्य परावाग्रूपोऽर्थः; तदा तस्य प्रयत्नागोचरत्वेन अनुष्ठानासम्भव एव।

अपि च–स्वाध्यायाभ्यसनमात्रेणैव योगाभ्यासैकगम्यायाः पश्यन्त्याः संस्कारोऽपि न सम्भवति। एवमेव न केवलं मन्त्राणाम्, अपितु सर्वस्यैव दृश्यजातस्य चित्तमात्रत्वेन चित्तस्य च चिन्मात्रत्वेन चिदभिन्नत्वमेव। न तावता वैदिकानामेव मन्त्राणां किञ्चिद्वैशेष्यं सिद्ध्यति। मन्त्रदेवतादीनामभेदवर्णनं तु उपासनार्थमेव। वाचामभिधानात्मकप्रपञ्चोत्पादनानुकूलशक्त्यवच्छिन्नचिद्विवर्तत्वेन अर्थानाञ्च अभिधेयात्मकप्रपञ्चोत्पादनानुकूलशक्त्यवच्छिन्नसद्विवर्तत्वेन सतः स्वप्रकाशत्वेन चित्त्वम्, चितश्च अत्यन्ताबाध्यत्वेन सत्त्वमिति रीत्या सच्चितोश्चैक्यात् तदभिन्नाभिन्नस्य तदभिन्नत्वनियमेन वाचामर्थानाञ्चाभेदः।

नादस्य परज्योतिषि विलये यद्यपि वागादीनां भेदा विलीयन्ते; तथापि अधिष्ठानसाक्षात्कारमन्तरा न तेषामात्यन्तिको विलयः। नादानुसन्धानमात्रेण प्रतीत्या विलीनानामपि तेषां पुनरुद्भवदर्शनात्।

यदप्युक्तम्—"स्वरूपतः शब्दस्य चिदाकाशरूपतया तद्धर्मतया वा चिच्छक्तेरनतिरिक्तत्वेऽपि विकारभूतिषु अचिदात्मत्वेन अचित्तयैव व्यवहारः। एतदचिदावरणोन्मोचनमेव शब्दस्य चिद्रूपतापत्तिः। तदुक्तं विज्ञानभैरवे—

'बिन्दुरूपस्य मन्त्रस्य स्थूलवर्णक्रमेण तु।
अर्धेन्दुबिन्दुनादान्तशून्योच्चाराद् भवेच्छिवः॥' इति।

अनेन मन्त्रस्य उच्चारमहिम्नैव शिवस्वसम्पत्तिः, परासिद्धिः, चैतन्याभिव्यक्तिर्वा भवतीति द्योत्यते" इति।

अत्रोच्यते—यद्यपि अचिदावरणोन्मोचनम् अनिर्वचनीयानाद्यविद्यावरणापनोदनमन्तरा न सम्भवत्येव, तच्च अधिष्ठानसाक्षात्कारैकसम्पाद्यम्; तथापि जपस्य अभ्यासवशात् सौक्ष्म्यतारतम्येन मन्त्रेऽपि सौक्ष्म्यातिशयस्याभिव्यक्तिः। तस्य च पर्यवसानं चिदात्मन्येवेति

सापेक्षा चिद्रूपतापत्तिः सञ्जायते। न च मन्त्रमात्रेणैव अधिष्ठानसाक्षात्कारोऽपीति वाच्यम्; प्रत्यगभिन्नपरबोधकवेदान्तवाक्यविमर्शसापेक्षस्य जपस्य तद्धेतुत्वेऽपि तदतिरिक्तजपस्य तदहेतुत्वात्।

यदप्युक्तम्—"यः कुण्डलिनीशक्तेरुद्बोधप्रकारः, स एव शब्दयोगक्रम इति संज्ञाभेदेऽपि वेदमार्ग आगमसार्गादभिन्न एव। इच्छाजन्यप्रयत्नेन क्षोभमापन्नात् मूलाधारात् मनःपवनाभ्यां तादात्म्यमापन्ना कुण्डलिनी शक्तिः घोषाख्यं नादभावमुपगच्छति। ब्रह्मबिलमाश्रित्य व्योममार्गेण ऊर्ध्वं सञ्चरति। इदमेवोच्चारणम् यावदाज्ञान्तचक्रषट्कस्य अतिक्रमो न भवति तावद् वर्णानामुच्चारणकालो मात्राख्यो न केनाप्युपायेन क्षयं प्रापयितुं शक्यते। सदा स्वाध्यायेन योगाभ्यासेन च चक्रषट्कस्थपञ्चाशद्दलेषु विद्यमाना वर्णशक्तयः संहृत्य बिन्दुरूपेण एकाग्रतामापद्यन्ते, तदा भ्रुवोर्मध्यदेशे ज्ञानाख्यं बिन्दुस्वरूपं दिव्यचक्षुरुन्मीलति। तत्तु पतञ्जल्युपदिष्ट-सम्प्रज्ञातसमाधिजन्य-प्रज्ञाज्योतिषोन्मेषमात्रमिति। अत्रोच्चारणकालः अर्धमात्रेति वेदितव्यम्। तदनन्तरम् अर्धचन्द्रे रोधिन्यां नादे नादान्ते शक्तौ व्यापिकायां समनायाञ्च उपर्युपरिस्थितेषु पदेषु अर्धार्धक्रमेणोच्चारणकालस्य क्षये सति मन एकान्ततो निरुद्धं भवति, तदा कालस्य कलनं निवर्तते। इयं हि उन्मनी। अत्र भावे तत्तद्देवतादीनां सम्प्रज्ञानाभावात् सद्भावोऽपि न विकल्पयितुं योग्यः। एषा चिन्मयी निर्विकल्पावस्था देशकालनिमित्तैरनवच्छिन्ना परमानन्दमाधुर्यमयी निसर्गसुन्दरी च। इत्येतत् समावेश एव जीवमात्रस्य मुख्यः पुरुषार्थः" इति।

अत्रोच्यते—यद्यपि कुण्डलिनीशक्तिः ब्रह्मनाडीमार्गेण ऊर्ध्वगामिनी काचित् मूर्ता तडिदाभा सूक्ष्मा शक्तिरुच्यते; तथापि तन्त्रादिग्रन्थेषु तस्याश्चिद्रूपतैव वर्णिता। यथा—आमूलाधारादाब्रह्मबिलं विलसन्तीं बिसतन्तुतनीयसीं विद्युत्पुञ्जपिञ्जरां विवस्वदयुतभास्वत्प्रकाशां परःशतसुधामयूखशीतलतेजोदण्डाभां परचितिं भावयेत्। यथा निराकारस्य ब्रह्मणस्तत्तद्रूपकल्पनं तथैवास्या अपि। अथवा चिच्छक्तेः सूर्यादि-अपरज्योतिषामपि ज्योतिष्ट्वेन सर्वावभासकत्वादेव विवस्वदयुतप्रकाश-

वत्त्वादिकमुक्तम्।

'न तत्र सूर्यो भाति न चन्द्रतारकं,
नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्वं,
तस्य भासा सर्वमिदं विभाति॥'

इति श्रुतेः। अत एव इच्छाजन्यप्रयत्नेन मूलाधारस्थवायोः क्षोभेऽपि कुण्डलिन्या अक्षुब्धतैव। तदर्थं योगशास्त्रेषु तन्त्रेषु च उपायान्तरविधानात्। तथापि शब्दात्मकप्रपञ्चशक्तिविशिष्टचिद्रूपा परा वाक् तेन संक्षुब्धेन वायुना पश्यन्त्यादिरूपेण विवर्तते। सैव मनःपवनाभ्यां तादात्म्यमापन्नेव भवति। अत एव कुण्डलिनीमार्गात् भिन्नेनैव मार्गेण अस्या ऊर्ध्वम् उद्गमः।

'स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः।
मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति स्थविष्ठः॥'

इति वचनात्। अत एव कुण्डलिन्युत्थानमार्गः कस्यचिदेव उद्घाटितो भवति। शब्दोच्चारणन्तु जनसाधारणानामपि भवत्येव। किञ्च—सर्वेषामेव ह्रल्लेखादिमन्त्रोच्चारयितॄणां एता बिन्द्वादि-महाबिन्द्वन्ता अवस्था सम्पद्यन्त एव। तथापि पुरुषार्थोपयोगी मनोरोधस्तु कस्यचिदेव भवति। वृत्तीनां सन्धिषु निर्विकल्पायाश्चितेः सत्त्वेऽपि अननुभूतिवत् उन्मनायां महाबिन्दौ वा मनोरोधे सति निर्विकल्पायाश्चितेरननुभवः।

यद्यपि केषाञ्चिद्रीत्या—

'नलिनीपत्रसंहत्याः सूक्ष्मसूच्यभिवेधने।
दले दले तु यः कालः स कालो लवसंज्ञितः॥'

इत्युक्तदिशा षट्पञ्चाशदुत्तर-शतद्वयलवैरेका मात्रा। तथा च बिन्दोरष्टाविंशदुत्तर-शतं लवाः। अर्धचन्द्रस्य चतुःषष्टिः। रोधिन्या द्वात्रिंशत्। नादस्य षोडश। नादान्तस्य अष्ट। शक्तेश्चत्वारः। व्यापिकाया द्वौ। समनाया एको लवः। उन्मनाया नास्त्येव कालः।

'अतः सूक्ष्मतमः कालो नोपलभ्यो भृगूद्वह।' इति।

परमन्येषां रीत्या द्वादशोत्तर-पञ्चशतलवात्मकत्वमेव मात्रायाः स्वरूपम्। ततश्च मात्राया द्वादशोत्तर-पञ्चशततमो भाग उन्मनाकालः। एतद्रीत्या महाबिन्दावेव कालाभावः। यस्य मन्त्रानुसन्धानं समाधि-भावापन्नं भवेत् तस्यैव महाबिन्द्वनुभवः पुरुषार्थोपयोगी मनोरोधश्च सम्भवति। तद्बलेनैव च चक्रषट्कस्था वर्णशक्तयः बिन्दुभावमापद्यन्ते। परमेतत् सर्वं वैदिक-तान्त्रिक-तद्भिन्न-बौद्धाऽऽर्हतादिमन्त्रानुसन्धानेष्वपि समानमेव योगक्षेमम्। वेदस्वरूपनिर्णये न किञ्चिदपि तेन निर्वहति। केवलं यथाकथञ्चित् प्रचलितेऽपि वेदस्वाध्याये केषाञ्चित् शैथिल्यमेव जायते। तेनायं विचारो न वेदश्रद्धाविधायकः, किन्तु तदपनोदक एव।

यदप्युक्तम्—"पश्यन्त्यादिभेदभिन्ना त्रिविधा वाक् स्थूला सूक्ष्मा परा चेति अवान्तरभेदमुपेत्य यदा, नवधा सम्पद्यते, तदा परा वाक् दशमीत्याख्यायते। वर्णादीनां प्रविभागरहिता स्वरप्रधाना सङ्गीतरूपा वाक् स्थूला पश्यन्ती। जिगासारूपा सैव सूक्ष्मा। जिगासाहीना संवि-द्रूपा सा परा। चर्मावनद्धे मृदङ्गादौ करघातादिना समुद्भूता ध्वनिरूपा वाक् स्थूला मध्यमा। विवादयिषारूपा सैव सूक्ष्मा, तादृशेच्छारहिता संविद्रूपा निरुपाधिका सैव परा। इत्थं पश्यन्त्यादयस्तिस्रोऽपि वाचः परावस्थायां परचिदात्मना परब्रह्मणा सङ्गते गतास्तदेकात्मतया अव-तिष्ठन्ते। तदानीं तत्पतिः परमेश्वरः (वाचस्पतिः) स्वात्मज्योतिषा स्वाभिन्नं भावजातं नित्यं भासयते। तद्भासनादेव तत्रेच्छायाः समुद्रेको भवति। यदधीनः विश्वसर्गादिव्यापारः। परमेश्वरो निरंशप्रकाशात्मक-तया चिदेकरसोऽपि यद्विभागेन भासते, तत्तु तदनुबन्धिनीनां शक्तीनां वैचित्र्यनिमित्तं विजृम्भणम्। तथा हि—अइउण् इति मातृकात्रयदर्शित-रूपस्य पराऽपरा-परापराख्यशक्तित्रिकस्य अनुत्तराया इच्छाया उन्मेषस्य च प्रभावेण अद्वयोऽपि परमात्मा नानेवावभासते। इमास्तिस्रः शक्तयः क्षोभमापन्नाः षड्रूपा भवन्ति। क्षुब्धा अपीमाः संविदः स्वस्वरूपादप्रच्युत-त्वादमलाः परस्परं सङ्घट्टनेन अक्षपाशोक्तप्रक्रियया निखिलानि संविद-न्तराणि जनयन्ति अवभासयन्ति च। इमा एव मुख्याः सूर्यरश्मयः, येभ्यः सर्वविधस्य वर्णप्रपञ्चस्य अभिव्यक्तिर्भवति। तथा च—

'षडेव ते स्वरा मुख्याः कथिता मूलकारणम् ।
ते च प्रकाशरूपत्वाद्विज्ञेयाः सूर्यरश्मयः ॥'

दहनी पचनी धूम्रा कर्षिणी वर्धिनी रसा च षडेव देवता बोध्याः" इति ।

अत्रापि इदमेव वक्तव्यम्—यद्यपि पश्यन्त्यादिभेदभिन्ना वाचः परावस्थायां परब्रह्मणा सङ्गतास्तदेकात्मतयाऽवतिष्ठन्ते; तथापि निरुपाधिके तस्मिन् परमात्मनि तासां सङ्गमायोगात् सोपाधिके एव तस्मिंस्तद्योगः ऊरीकार्यः । सोपाधिकस्यैव च तस्य सर्वावभासकत्वम्, परापरादिशक्तिमत्त्वञ्च । तदाश्रिता एव तच्छक्तयो विश्वप्रपञ्चोत्पत्तिस्थितिलयकारिण्योऽपि । तथापि वेदस्वरूपनिर्णये अस्य प्रपञ्चस्य क उपयोग इति तु सुधीभिर्विचारणीयम् ।

यदपि च—"सावित्र (त्री) रश्मीनामभ्यन्तरे चन्द्रकलायाः सत्त्वेन तेषु सर्वत्रैव चान्द्रं रूपमपि वर्तते । परन्तु दीर्घत्रिक एव चान्द्रं रूपं स्फुटतया परिज्ञायते । एषां षण्णां रश्मीनामन्योन्यसङ्घट्टनेन क्रियाशक्तेरुद्रेको भवति, द्वादशसंविद आविर्भवन्ति । एवं शनैरभ्यासक्रमतो योगी नवविधान् नादान् वशीकृत्य परावाक्स्वरूपनिष्ठो भवति । सर्वेषामवान्तरशब्दानां विलयनात् परावागात्मकं तत्पदं अशब्दमपि क्वचिद् व्यपदिश्यते । केवलात्मस्वरूपे तस्मिन् विभागादयो न स्फुरन्ति" इति । तदपि सत्यम्, तथापि तादृक्परावागात्मकस्य अशब्दपदस्य सर्वकारणत्वात् सर्वसाधारणत्वाच्च वेदेन न कश्चन विशिष्टः सम्बन्धः सिद्ध्यति ।

यच्च—"परब्रह्ममार्गं प्रविष्टस्य योगिनः फलप्राप्तिपर्यन्तमवस्थापञ्चकमुपलक्ष्यते तत्रैवाऽऽनन्द व्यज्यते । पूर्णताया अंशतः स्पर्शात् (औन्मुख्यमात्रात्) अस्याभिव्यक्तिर्भवति । तदनन्तरं पूर्णतावेशात् देहात्मभावे विगलिते प्राचीनदशातो विश्लेषो भवति, परधामसमारोहश्च जायते । दशेयमुद्भवनाम्ना शास्त्रेषु प्रसिद्धा । इत ऊर्ध्वं क्षणिकसमावेशस्य प्रभावतो जन्मपरम्पराप्राप्तं देहात्मनैक्यं निवर्तते । ततश्चिदात्मनः स्वरूपशक्त्यात्मकबलस्य आक्रान्तिर्भवति, येनात्मन्येव आत्माभिमानस्य

आविर्भावो भवति। अनात्मनि आत्माभिमानः शिथिलो जायते। अनेन क्रमेण देहादिषु दृढत्वेऽपगते कम्पाख्या तृतीया दशा आविर्भवति। देहतादात्म्यबोधस्य सम्यकृतया निवृत्त्यनन्तरं संविदोन्मुख्ये जायमाने बाह्यवृत्तीनामुपरमात् आन्तरस्य कस्यचनानुभवस्य स्फुटमनुदयात् योगनिद्राख्या तुरीयदशा समुन्मेषमुद्गच्छति। एतदुत्तरमेव चिदात्मनि पूर्णा रूढिः सञ्जायते। तदा समग्रं विश्वमेव ब्रह्मरूपेण भासते, चिदात्मकतया साक्षात्क्रियते च। अस्यां दशायामधिरूढस्य महायोगिनः स्पन्दाख्याया महाशक्तेः तादात्म्यं भवति। एतदेव च महाव्याप्तिरिति घूर्णिरिति शास्त्रेषु प्रसिद्धा तुर्यातीता परब्रह्मरूपा दशा। अस्यामवस्थितस्य योगिनः सदैव सृष्टिसंहाराधिकारित्वेन परमैश्वर्यमुदेति। महाभावस्वरूपेयं दशा वस्तुतो वाग्वृत्तीनामगोचरत्वादवर्णनीयैव" इति।

तत्राप्युच्यते—केवलात्मस्वरूपावाप्तिः नाप्राप्तप्राप्तिः, किन्तु विस्मृतग्रैवेयकमणिप्राप्तिरिव ज्ञानमात्रसाध्या प्राप्तप्राप्तिरेव। अज्ञानेन आरोपितस्य अकैवल्यस्य ज्ञानेन निवृत्तिरेव कैवल्यप्राप्तिः। तेनैव देहात्मबोधबाधादिसर्वा अवस्था गतार्था भवन्ति। मुक्तानामेवं कैवल्यमुपगतानां सृष्टिसंहाराद्यधिकारित्वरूपमैश्वर्यमशास्त्रीयमेव, 'जगद्व्यापारवर्जम्'इति बादरायणसूत्रविरोधात्।

यच्च—"पश्यन्त्येव सूक्ष्मत्वेन परा वाक्। पश्यन्तीमतिक्रान्ता तद्भिन्नरूपा वा से"तिस्तु विचारस्तु व्यर्थ एव। सगुणनिर्गुणभेदेन परापरभेदेन च द्विविधतया वर्णितस्यापि ब्रह्मणो यथैकत्वं न विरुद्धं तथैकैव प्रत्यवमर्शिनी वाग् गुणभूमिमतीत्य कदाचित् पश्यन्तीति कदाचित् परेति संज्ञया उपवर्ण्यते। परन्तु वर्तते तत्रापि किञ्चिद्रहस्यमिति यथाऽनुभवं तन्निवेद्यते। षोडशकले पुरुषे पञ्चदशकलानां परिणामशालित्वेऽपि षोडशीरूपा एका चित्कला परिणामस्य साक्षिभूता परमामृतस्वरूपा तिष्ठति। अस्यां द्रष्टस्वरूपायामधिकारो निवर्तते। इयं दैवी वाक् योगिभिर्ज्ञानिभिश्च द्रष्टृत्वेन निर्दिश्यते। अमृतरूपाया अस्या निरोधोऽपि न सम्भवति, कुतस्तु विनाशः? तथापि वक्तृविवक्षावशान्निरोधे व्यपदिश्यमाने महाबिन्द्वात्मक-निष्कलासनसमारूढं निष्कलं परमं तत्त्वं तत्त्वोत्तीर्णमपि

परतत्त्वरूपेण उपवर्ण्यमानं नित्यलीलारसोल्लासपरं स्वात्मनि साक्षात्क्रियते। सामरस्यमुपगतमनादिमिथुनं वागर्थयुगलमेव निरञ्जनं परब्रह्मपदमिति अद्वयविदां परिभाषेऽगति।

तत्राप्युच्यते—यद्यपि केषाचिद्रीत्या पश्यन्त्येव परा भवति; तथापि कार्यकारणोपाधिको भेदस्तु अभ्युपगन्तव्य एव। सगुण-निर्गुणयोः परा-ऽपरयोश्च तादृग् भेदोऽभ्युपगम्यत एव। अत एव गुणभूम्युपाधिकत्वेन पश्यन्त्याः सोपाधिकत्वम्, तद्राहित्येन च परस्या निरुपाधिकत्वमपि आपेक्षिकं वर्णयितुं शक्यते। षोडशी चित्कला तु सर्वसाक्षिभूता निरुपाधिकस्वरूपैव। दृश्यसत्त्वे तत्र द्रष्टृत्वव्यपदेशे सत्यपि वस्तुतो दृशिरूपत्वमेव। 'स भगवः कस्मिन् प्रतिष्ठितः? स्वे महिम्नि' इति रीत्या अन्तिमाधारस्य निराधारत्वमेव, अन्तिममूलस्य अमूलत्वमिव च सर्वावभासकस्य सर्वाधारस्य सर्वमूलस्य अनाधारत्वादिकमेव मुख्यम्। उपाधिविवक्षायामेव स्वे महिम्नि तस्याऽवस्थानम्। तत्रैव महाबिन्द्वात्मकनिष्कलासनत्वकल्पनम्। तत्राभिव्यक्ते परस्मिन् तदारूढत्वव्यपदेशः। तस्मिन्नेव स्वात्मनि सामरस्यमुपगतत्वमनादिमिथुनत्वञ्च परिकल्प्यते। 'आत्मरतिरात्मक्रीड आत्ममिथुन' इत्यादिश्रुतेस्तत्रैव पर्यवसानम्। चैतन्यं पुरुषस्य स्वरूपमितिवत् विकल्पारोपेण अभेदेऽपि भेदव्यपदेशसम्भवात्। यथाकथञ्चित् श्रौतमद्वैतसिद्धान्तं तान्त्रिकं शैवं शाक्तं वा मतमाश्रित्य अंशतो विप्रतिपत्तावपि तत्त्वोत्तीर्णे परमतत्त्वे सामञ्जस्यं सम्भवति। परं वेदस्वरूपनिरूपणे अस्य भागस्य न कोऽपि उपयोग इति तु निश्चप्रचमेवेति संक्षेपः।

: ३ :

## वेदे ऐतिहासिकघटनादि-विचारः

यदुक्तम्—"पौराणिकभुवनकोशवर्णनप्रसङ्गे इतिहासादिप्रसङ्गे च पुराणटीकाकारैः औदासीन्यं प्रदर्शितम्। एवं विकाशवादादीनि विज्ञानानि भूस्तरविद्यादयश्च तैरुपेक्षिता" इति। तदपि न; श्रीधर-नीलकण्ठादिभिः यथाप्रमाणं भुवनकोशाद्युपवर्णनात्। सर्वथा आधुनिकविज्ञानानुसारेण पुराणादिव्याख्यानन्तु उपहासास्पदमेव—केनचिद् व्याख्यात्रा तरुतारमिति वाक्येन यथा तन्त्रीविज्ञानं साधितं तद्वत्। निरुक्तकृतो विज्ञानानुसारि-वेदार्थाख्यानन्तु दुर्गाचार्यादिभिः स्पष्टीकृतमेव।

यदप्युक्तम्—"इतिहाससम्बन्धे ततोऽप्यधिको विप्लवः, वेदानामपौरुषेयत्वं समर्थयमानेन भगवता जैमिनिना 'अनित्यदर्शनाच्च' इति पौरुषेयता-पूर्वपक्षमुद्भाव्य 'परन्तु श्रुतिसामान्यमात्रम्' इति समाहितम्। जैमिनेर्भगवतः क आशय इति तु वेत्ति सर्वान्तर्यामी। अनेकधा स विवरीतुं शक्यते, विव्रियते च बहुभिः। पर श्रीशबरस्वामिप्रभृतयो मीमांसाका इत्थं वर्णयन्ति यन्मनुष्या यदि वेदेषु वर्ण्यन्ते तर्हि वेदास्तन्मनुष्यादुत्तरं प्रादुर्भूता इत्यनादित्वमपौरुषेयत्वञ्च वेदानां भज्येतेति शङ्का।

न सन्त्येव मानुषाणि चरितानि। नामसादृश्यमूलया तु भ्रान्त्या नित्यपदार्थसम्बन्धिवर्णनं मानुषमित्यभिमन्यते कैश्चित्। यथा 'बबरः प्रावाहणिरकामयत' इत्यादिषु 'बब' इति शब्दानुकृत्या वायुरभिधीयते, स च प्रवहणशील इति प्रावाहणिरुक्तः। अत्र प्रवहणपुत्रो बबरनामा कश्चिन्मनुष्यो भवेत्, तदितिहासभ्रान्तिः लोकानां जायते। वस्तुतस्तु वाय्वादेर्नित्यस्यैवेदं वर्णनमिति तत्समाधानञ्चेति।

एतेन "मनुष्येतिहासो वेदेषु नास्त्येवेति मतं बहुभिरेवेदानीमादृतम्, अनूदितञ्च" इति। तदपि न किञ्चित्; यतो जैमिनिना नान्तर्याम्यर्थं सूत्रं रचितम्, किन्तु वाक्यशास्त्राधिकारिणां कृते। अतः शबरस्वाम्यादिभिरेव तद्धृदयं निवेदितम्। श्रीशङ्करभगवत्पादाः 'शास्त्रतात्पर्यविदः' इति सबहुमानं श्रीशबरस्वामिनः स्मरन्ति। तद्विपरीतविवरणन्तु सूत्राननुसार्येव। सूत्राक्षराणि च स्वारस्येन अस्मिन्नेवार्थे सङ्गतानि। अवश्यं वेदशब्दानामितिहासानुसारित्वे पौरुषेयत्व-सादित्वदिना अपौरुषेयत्वहान्या प्रामाण्यस्वतस्त्वं वेदानां भज्यते। उत्तरमीमांसकाश्चाप्यत्र संवदन्ते। 'अत एव च नित्यत्वम्, शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्' इत्यादिभिस्तदुक्तमेव।

घटनाऽननुसारित्वमेव वैदिकशब्दानां वैशेष्यम्। शब्दानुसारिण्यस्तु घटना भवन्त्यो न वार्यन्ते, सृष्टेः शब्दपूर्वकत्वनिर्णयात्। अत एव प्रमाणान्तराविरुद्धा अनादित्वा-ऽपौरुषेयत्वाप्रतिरोधिकाश्च घटनाबोधिका आख्यायिका भूतार्थवादिन्यः सत्यो भवन्त्वितिहासरूपाः, परन्तु प्रमाणान्तरविरुद्धा अनादित्वविरोधिन्यस्तु ता गुणवादिन्य एव। गुणवादिन्योऽपि इतिहासवदेव व्याख्यायन्ते। न च तावता पूर्वोक्तमीमांसा-सिद्धान्तविरोधः।

अत एव "इमां पद्धतिमवलम्ब्य मीमांसकाभिमतस्य मन्त्र-ब्राह्मणात्मकस्य कृत्स्नस्य वेदस्य प्रामाणिकी व्याख्या न केनाप्यद्यावधि कृता" इत्यपि निर्मूलम्। उक्तरीत्यैव सायणादिभिर्व्याख्यातमित्युक्तत्वात्। नहि बबर-शब्दव्याख्यानवदेव तदनुसारिव्याख्यानम्, मानुषादिचरिताननुसारिणो वैदिकाः शब्दा इत्येव मीमांसकमतम्। तदनुसार्येव सर्वमपि आस्तिककृत-वेदव्याख्यानम्।

यदुक्तम्—"सायण-माधवाचार्यौ सादरमुपोद्घाते मीमांसकमतमिदमन्व वदताम्, परं व्याख्यानकाले त्विदं सर्वं व्यस्मरतामिव, यतो बहवो मन्त्रा बहूनि च ब्राह्मणानि मानुषेतिहासावलम्बनेनैव तत्र भवद्भ्यां व्याख्यातानि। यथा—'आभोगयं प्रयाहि गच्छन्त ऐतना''''

इति मन्त्रं व्याचक्षाणो माधवाचार्य आह—ऋभवो हि सुधन्वनः अङ्गिरसस्य पुत्राः, कुत्सोऽप्याङ्गिरसः, अतस्तेन मदीया ज्ञातयः इत्युक्तम्। हे सौधन्वनासः सुधन्वनः पुत्राः। एवमेव 'भ्रातरत्रं प्र तरित्वा दधाति' इत्यत्रापि माधवाचार्यः दीर्घतमः कक्षीवतोः सर्वमितिहासं भावव्यपुत्रेण स्वनयेन यद्दत्तं तस्य विवरणञ्च सर्वमुपबध्नाति। तदेव तत्र वृत्तमवलम्ब्य सूत्रमिदं व्याचष्टे" इत्यादि।

तदपि न पूर्वोक्तसिद्धान्तप्रतिकूलम्; तच्चरितानुसारिमन्त्रनिर्माणमित्यस्यार्थस्य तद्व्याख्यानेन सिद्धेः। भवन्मतरीत्याऽपि मन्त्रार्थ-तज्ज्ञानयोः ईश्वरप्रसादलभ्यत्वम्। मानुषादिचरितानाम् अनित्यत्वे कथं तत्र मन्त्रार्थता घटते? कुतो वा वृत्ततज्ज्ञानयोरीश्वरप्रसादलभ्यत्वम्? यथाकथञ्चित्तु सर्वस्यैव वृत्त-ज्ञानादेरीश्वरप्रसादजत्वमेवेति मन्त्रार्थ-ज्ञानयोः किं वैलक्षण्यम्? एवमेव हरिश्चन्द्रोर्वशीपुरूरवादि-कथावर्णनमपि नाऽनादित्वाऽपौरुषेयत्वादिविरोधि तद्बोधक-मन्त्रब्राह्मणादीनां तत्तद्घटनाननुसारित्वादेव। मन्त्रादिशब्दानुसारिण्यो भवन्त्यस्तु घटना न वार्यन्ते, वेदापौरुषेयत्वाविरुद्धत्वादेव इत्युक्तमेव।

यदुक्तम्—"उपनिषत्सु उपलभ्यमाना आख्यायिका मनुष्यपरतयैव श्रीशङ्कराचार्यप्रभृतिभिः सर्वैः भाष्यकृद्भिः व्याख्याता, 'शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि, क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्' (ब्रह्मसूत्रे १।३।३४, ३५) इत्यपशूद्राधिकरणे। भगवता व्यासेनैव मनुष्याख्यानमभिमतमि"ति। तदपि न किञ्चित्; श्रीशङ्कराचार्यैः तादृगाख्यानानां सुखावबोधार्थमाख्यानमात्रपरत्वस्य अनेकत्र उक्तत्वात्। तत्रैव प्रमाणान्तराविरोधे भूतार्थवादरूपत्वेन इतिहासत्वमपि सङ्गच्छते। अत एव बृहदारण्यकोपनिषदि इतिहास-पुराणमित्यत्र उर्वशी-पुरूरवसोः संवादादि 'उर्वशी ह्यप्सरा' इत्यादि ब्राह्मणमेवेत्युक्तम्। तदभिप्रायेणैव वैयासिकमपशूद्राधिकरणसूत्रमपि सङ्गच्छते। न च तावताऽपि लौकिकेतिहासवद् घटनानुसारित्वं संभवति। 'अत एव च नित्यत्वमि'ति विरोधाद् अन्यथोपपत्तेश्च। एवम्—

'भूतं भवद्भविष्यच्च सर्वं वेदात् प्रसिद्ध्यति ।'

इति मनुवचनमपि उक्तसिद्धान्तानुसारेणैव उपपद्यते । न च घटनानुसारीतिहासवर्णने तत् सङ्गच्छेत; अन्यथा अपौरुषेयत्वाद्यनुपपत्तेः ।

यदप्युक्तम्—"न कदाचिदनीदृशं जगत् इत्यभिमन्यमानानां मीमांसकानामनया युक्त्या अपौरुषेयत्वरक्षणं स्यादपि । अन्येषां तु सर्गप्रलयप्रवाहमुररीकुर्वतां दार्शनिकानां पौराणिकानाञ्चैते वर्तमानकल्पसम्बन्धिनः पृथिव्यादिपदार्था अप्यादिमन्तः इति वर्णनेऽपि वेदानामनादित्वभङ्गशङ्कातङ्को दुस्तर एव । प्रवाहरूपेण नित्यता तु पृथिव्यादीनामिव देवर्षि-पितृ-राजर्षिप्रभृतीनामपि पौराणिका अभ्युपगच्छन्त्येवेति पक्षद्वयेऽपि साम्येन इतिहासविलोपपक्षस्य प्रयोजनं न पश्यामः" इति । तन्न; सृष्टिप्रलयाङ्गीकर्तॄणां वेदान्तिमीमांसकानामपि प्रमाणान्तरेणार्थमुपलभ्य विरचितत्व-प्रथमोच्चरितत्व-पूर्वानुपूर्वीनिरपेक्षोच्चारणविषयत्वादिरूप-पौरुषेयत्वाभावेन तदपौरुषेयत्वसिद्धेः । नियतानुपूर्वीतत्तत्संस्कारवन्मायावदीश्वरे नियतानुपूर्वीविशिष्टानां वेदानां सम्प्रदायाविच्छेदस्य अभ्युपगमात् पौरुषेयाणां पुराणादीनामपि यद्यपि पृथिव्यादीनामिव प्रवाहरूपेण नित्यत्वम्; तथापि तत्र अर्थनित्यत्वेऽपि आनुपूर्वीनैयत्याभावात् पौरुषेयत्वम् । वेदे तु प्रतिकल्पम् अश्वमेधब्रह्मवधादीनाम् इष्टानिष्टजनकत्वनैयत्यवद् आनुपूर्वीनैयत्यस्यापि सत्त्वेनापौरुषेयत्वम् । तदुक्तं भामतीकृता—

'अनाद्यविद्योपधानलब्धसर्वशक्तिज्ञानस्यापि परमात्मनो नित्यस्य वेदानां योनेरपि न तेषु स्वातन्त्र्यम्, पूर्वपूर्वसर्गानुसारेण तादृशतादृशानुपूर्वीविरचनात् । यथा यागादिब्रह्महत्यादयोऽर्थानर्थहेतवो ब्रह्मविवर्ता अपि न सर्गान्तरे विपरीयन्ते । नहि जातु क्वचित् सर्गे ब्रह्महत्याऽर्थहेतुरनर्थहेतुश्च अश्वमेधो भवति, अग्निर्वा क्लेदयति आपो वा दहन्ति तद्वत् । यथाऽत्र सर्गे नियतानुपूर्व्यं वेदाध्ययनमभ्युदयनिःश्रेयसहेतुः, अन्यथा तदेव वाग्वज्रतयाऽनर्थहेतुः, एवं सर्गान्तरेऽपि तदनुरोधात् सर्वज्ञोऽपि सर्वशक्तिरपि पूर्वपूर्वसर्गानुसारेण वेदान् विरच-

यन्न स्वतन्त्रः। पुरुषास्वातन्त्र्यमात्रं चापौरुषेयत्वं रोचयन्ते जैमिनीया अपि। तच्च अस्माकमपि समानम्, अन्यत्राभिनिवेशात्' इति।

एतेन मन्त्रेषु ब्राह्मणेषु च तास्ता आख्यायिका इतिहासाश्च वेदापौरुषेयत्वाविरोधिनो ग्राह्या एव। तदभिप्रायेणैव सायणादीनां यथाश्रुतार्थव्याख्यानम्, एकत्र निर्दिष्टस्य सिद्धान्तस्य सर्वत्र योजयितुं शक्यत्वात्। एतेन निरुक्ते (अ० २)—'आर्ष्टिषेणो होत्रमृषिर्निषीदन् देवापि देवसुमतिं चिकित्वान्' इत्यादिषु देवापि-शन्तनु-प्रभृतीनां चरितं तत्तन्मन्त्रनिदानत्वेन प्रस्तौति। बृहद्देवताकृत् शौनकोऽपि बहूनामृषीणां चरितानि मन्त्रनिदानत्वेन बृहद्देवतायां स्पष्टमाचष्टे इत्यादिकमपि समाहितमेव।

यत्तु—"वेदेषु सर्वथेतिहासानभ्युपगमे महान् विप्लवः स्यात्, वेदेषु ऊर्वशी-पुरूरवो-हरिश्चन्द्रप्रभृतीनां बहव इतिहासाः। ते च पुराणेष्वपि उपबृंहिताः। ततश्च वेदेषु ते यथाऽन्यपराः पुराणेष्वपि ते तथैव सम्भाव्यन्ते। तथा च तद्घटितपौराणिकराजवंशस्य ऐतिहासिकं तथ्यं दूरोत्सारितं स्यात्। ततश्च 'नास्त्येव भारतीयानां कोऽपि इतिहासः। कल्पनामात्रसाराः पौराणिका इतिहासाः। नासीत् कोऽपि रामो युधिष्ठिरो वा' इत्यादिपाश्चात्यानामनर्गला जल्पना एव विजयन्ते। तथा गुहायां दृढदत्तार्गलञ्च भारतीयसभ्यतायास्तत्त्वं स्यात्। कुतश्च श्रीशबरस्वामिना उपबृंहितं मतमेव प्रमाणीकुर्वीमहि? न तु शौनक-यास्क-शङ्कर-माधवादिभिः स्वीकृतवेदेषु स्फुटं भासमानं स्वारसिकसिद्धान्तम्" इति।

तदपि निस्सारमेव; भामतीप्रदर्शितरीत्या पूर्वोत्तरमीमांसकानामुक्तार्थे विरोधाभावस्य उक्तत्वात्। शौनक-यास्कादीनामपि मतं तदनुगुणमेव, दुर्गाचार्यैस्तत्र तत्र तथैव व्याख्यातत्वात्। 'यत्परः शब्दः स शब्दार्थः' इति न केवलं पूर्वमीमांसकमतम्, उत्तरमीमांसकैरपि तथैवाभ्युपगमात्। वेदार्थविचारे वाक्य-शास्त्ररूपयोः पूर्वोत्तरमीमांसयोरेव परमादर आवश्यकः। मीमांसानिर्णीतार्थस्यैव पुराणेतिहासादिषु प्रतिपादितत्वात्।

यदुक्तम्—"वेदप्रामाण्यसाधनाय बद्धपरिकरा महतो वेदभागस्य मिथ्याप्रतिपादकत्वलक्षणमप्रामाण्यं शब्दान्तरेण प्रसञ्जयेयुरिति महदुपहासास्पदमिगति । तदपि निस्सारम्; वाच्यार्थस्य मिथ्यात्वेऽपि यत्परः शब्दस्तस्य अबाध्यत्वेन अप्रामाण्यानुपपत्तेः ।

किञ्च—येषां शङ्कर-सायण-माधवादीनां सबहुमानं स्वपक्षसाधनाय उपस्थापनं क्रियते, तेषां रीत्या ब्रह्मातिरिक्तस्य सर्वस्यैव मिथ्यात्वेन महतो वेदभागस्य तत्त्वावेदकत्वलक्षण-प्रामाण्यासम्भवेन व्यवहाराबाध्यबोधकत्वेनैव प्रामाण्यमिष्टमेव ।

वस्तुतस्तु—

'विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥'

इत्यादिरीत्या देवताधिकरणादिषु वेदानां नित्यत्वेऽपौरुषेयत्वे सत्यपि तदविरुद्धानां मन्त्रार्थवादाख्यायिकादीनां स्वार्थेऽवान्तरतात्पर्याभ्युपगमे न काचिदनुपपत्तिरिति प्रदर्शितमेव । वेदानां नित्यत्वापौरुषेयत्वादिबाधे तु वेदपुराणगतानामितिहासानां स्वार्थपर्यवसायित्वाभ्युपगमेऽपि कल्पनामात्रसारत्वादिजल्पनाः सुतरां दुरुत्तरा भविष्यन्ति, बौद्ध-जैनादिजातकादिवद् वेदानामपि पौरुषेयत्वापत्त्या तदप्रामाण्यध्रौव्यात् । वेदानामपौरुषेयत्वे नित्यत्वे स्वतःप्रामाण्ये च सिद्धे वेदेषु सर्वथाऽपि घटनापूर्वकशब्दोल्लेखस्वरूपश्चेतिहासः सर्वथा न सम्भवत्येव, तथात्वे तेषां नित्यत्वादिव्याकोपात् । शब्दपूर्विकास्तु घटना भवन्त्यो न निवार्यन्ते इत्यप्युक्तमेव ।

सर्वथाऽपि घटनापूर्वकशब्दोल्लेखरूपश्चेतिहासः सर्वथा न संभवत्येव; तथात्वे तेषां नित्यत्वादिव्याकोपात् । शब्दपूर्विकास्तु घटना भवन्त्यो न निवार्यन्ते इत्यप्युक्तमेव, शब्दपूर्वकसृष्टिसिद्धान्ताङ्गीकारात् । तत्र वैदिकशब्दानुसारिण्यो या घटनाः संवृत्तास्ता एवेति वैदिकेतिवृत्ततद्घटितैतिहासिकपुरुषादयो वक्तुं शक्यन्ते । परन्तु तावता आधुनिकेतिहासवत् तद्बलेन तत्तद्घटनाबोधकमन्त्रादीनां कालादिनिर्धारणं शक्यशङ्कम् । तेन वेदार्थविचारसमये वाक्यशास्त्ररूप-पूर्वोत्तरमीमांसासिद्धान्ता-

श्रयणमन्तरा यत्किञ्चिदाश्रयणं समुत्तरणाय कुशकाशावलम्बनमेव। अत एव शङ्करभगवत्पादा अपि श्रीशबरस्वामिनः शास्त्रतात्पर्यविद इति वदन्ति। भट्टपादा अपि तथैताननुसरन्ति।

वस्तुतस्तु—पाश्चात्त्यानैतिहासिकान् वैज्ञानिकांश्च निन्दन्तोऽपि तदनुप्राणिता एव वेदेषु विज्ञानानि इतिहास-भूगोल-विकासादींश्चान्वेषमाणाः शब्दसाम्यमात्रेण तत्तदर्थाभिनिविष्टा एते महानुभावा प्राचीनाचार्यपरम्परा-प्राप्तवेदार्थविचारसरणिं परित्यज्य वेदार्थाद् दूराद् दूरमुपगता वेद-नित्यत्वादिकमपि व्यक्तवन्तः। शब्दसाम्येन यदि आधुनिकविज्ञानसिद्धानि कतिचित् तत्त्वानि वैदिकेषु शब्देषु वाच्यतया बलात्-निवेशितानि भवेयुस्तदापि किं वस्तुतो वैज्ञानिकप्रक्रियया तेषां प्रत्यक्षीकरणं शक्यसम्पादम्? न च तदन्तरा वैज्ञानिकेषु तन्महत्त्वं सेत्स्यति। विज्ञानशब्दमात्रेण वैज्ञानिकेषु न चमत्कार आधातुं शक्यः, वैदिकश्च परम्पराप्राप्तः पन्थाः परित्यक्तः। अत एव वैदिकविज्ञानानुयायिनः केषाञ्चिदपि प्राचीनाचार्याणामृषीणां साङ्गोपाङ्गं मतं नानुसर्तुं शक्नुवन्ति। तत्तत्स्वाभिमतसिद्धये तु सर्वानप्याश्रयन्ते, स्थानान्तरे सर्वान् विरुन्धन्ति।

यद्यपि च अग्नीषोमात्मकं जगत्, यद्यपि च प्रश्नोपनिषदि प्राणस्य अग्निरूपता उच्यते; तथापि न तेन प्राणस्य अग्नेर्वा मूर्तिक्लृप्तिरुपपद्यते इत्यप्युक्तमेव। तत्र तु प्रजाकामेन प्रजापतिना हिरण्यगर्भेण तपस्तप्त्वा रयिप्राणात्मकं मिथुनमवान्तरप्रजास्रष्टृत्वेन उत्पादितम्। तथैव व्याख्यातं भगवत्पादैः। "रयिं सोममन्नं प्राणञ्चाग्निमत्तारमित्येतावग्नीषोमौ अत्त्रन्नभूतौ मे मम बहुधा प्रजाः करिष्यत इत्येवं सञ्चिन्त्य अण्डोत्पत्तिक्रमेण सूर्याचन्द्रमसावकल्पयत्" इति तत्रैव मूले स्पष्टम्। तथा हि—'आदित्यो ह वै प्राणः, रयिरेव चन्द्रमाः, रयिरेव एतत्सर्वं यन्मूर्तञ्चामूर्तञ्च। तस्मान्मूर्तिरेव रयिः। मूर्तामूर्ते अत्त्रन्नरूपे अपि रयिरेव। तस्मात् प्रविभक्तादमूर्ताद् यदन्यन्मूर्तं सैव रयिः, अमूर्तेन अद्यमानत्वात्। तथैव अमूर्तोऽपि प्राणोऽत्ता, सर्वमेव यच्चाद्यम्। तस्यैव

आदित्यरूपेण स एव वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते ।' पृथिव्या अपि त्रयीरूपत्वं प्रकारान्तरेण व्याख्यातमेव । पृथिव्यामन्तरिक्षे दिवि च ऋगादिदृष्टयोऽत्र उपासनार्थं वर्ण्यन्ते । अत एवात्र स्पष्टमन्तरिक्षमेव यजूंषि द्यौः सामानीत्युच्यते, न त्वन्तरिक्षस्थे पृथिव्या रसे न वा पृथिव्या द्युव्यापिनि मण्डले सामत्वमुच्यते ।

'यथाग्निगर्भा पृथ्वी यथा द्यौरिन्द्रेण गर्भिणी ।' ( बृह० ६. ४. २२ ), 'अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम्' ( प्रश्नोप० २. ६ ) इत्यादि श्रुतिवाक्यैरपि न प्रकृतमण्डलादिपुष्टिः ।

'एषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो मघवानेष वायुः ।
एष पृथ्वी रयिर्देवः सदसच्चामृतञ्च यत् ॥'

इति पूर्वमन्त्रेण प्राणस्य सार्वात्म्यविवक्षया अग्निसूर्यत्वाद्युक्तिः । अत एव भगवत्पादैरुक्तम्—'एष प्राणोऽग्निः संस्तपति सूर्यः सन् प्रकाशते, पर्जन्यः सन् वर्षति . अपर-ब्रह्मरूपस्य प्राणस्य सर्वकारणत्वादेव सर्वरूपता ।' अत एव प्राणे सर्वं प्रतिष्ठितम् । यथाऽभिधेयजातस्य तत्र प्रतिष्ठा तथा ऋगादिप्रधानस्य अभिधानमयप्रपञ्चस्यापि तत्रैवावस्थानम् । न केवलमृगादयो मन्त्रा एव तत्रावस्थिताः, किन्तु तत्साध्या यज्ञास्तत्कर्तृत्वेन अधिकृतं क्षत्र-ब्रह्मादिकमपि तत्रैव प्रतिष्ठितम् । न चैतावता वस्तुगत्याऽपि प्राणस्याग्नेर्वा ऋगादिरूपत्वम्; तथात्वे चात्माश्रयत्वापत्त्या वेदानां प्राणप्रतिष्ठितत्वानुपपत्तेः । अत एव प्राणप्रधानस्य हिरण्यगर्भस्य स्वकार्यापेक्षया सर्वकारणत्वेऽपि न ऋगादीनां सर्वोपादानत्वादिकम् । निमित्तकारणत्वाभिप्रायेण सर्वकारणत्वं तु सृष्टेः शब्दपूर्वकत्वाभ्युपगमेन इष्यत एव ।

यदप्युक्तम्—"अग्निर्जागार तमृचः कामयन्ते' इत्यत्र अग्निनाम्ना यजुरेवोक्तम् । पूर्वब्राह्मणेन एकवाक्यतासिद्धेः सोमस्य तत्सहचरत्वम्, ततो न्यूनत्वञ्च 'न्यौकाः' इति पदेन विवक्षितम् । मनुरप्याह—

'एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् ।
इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥' इति ।

तदपि न ; पौर्वापर्यानुरोधेन मन्त्रार्थस्य सायणेन अन्यथा व्याख्यातत्वात् । तथा हि—

'यो जागार तमृचः कामयन्ते यो जागार तमु सामानि यन्ति ।
यो जागार तमयं सोम आह तवाहमस्मि सख्ये न्योकाः ॥'

( ऋ० सं० ५.४५.१४ )

भाष्यम्—यो देवः गृहे विनिद्राः, तम् ऋचा सर्वशाखात्मिकाः कामयन्ते सामानि स्तोत्ररूपाणि यन्ति प्राप्नुवन्ति । अयमभिषुतः सोम आह वक्ति—मां स्वीकुर्विति । तादृशस्य तव सख्ये समानख्याने हितकरणो न्योकाः नियतस्थानः अहमस्मि भवामि ।

तथा च अग्नेर्जागार तमृचः कामयन्ते आहिताग्नीनां गृहे आहवनीयादिरूपेण अग्नेरेव विनिद्रतालक्षणं जागरणमुपपद्यते । सख्यहितकरणे न्योकाः इत्यस्यापि निश्चितमोकः स्थानं यस्येति रीत्या नियतस्थानत्वमेव सोमस्योच्यते ।

यजूरूपस्य अग्नेः कथं किं जागरणम्, कथञ्च ऋक्सामयोस्तत्कामयितृत्वम्, कथञ्च तदपेक्षया सोमस्य न्यूनत्वम् ? इत्येतत् सर्वमस्पष्टम्, असङ्गतञ्च । प्राणस्य सर्वकारणत्वात् तत्र ऋगादीनां प्रतिष्ठोक्ता । मन्त्रे तु देवतात्वेन अग्निमृगादयः कामयन्ते । अत्र ऋच इति यजुरादिशाखमात्रस्य उपलक्षणम् । अत एव यजुषोऽनिर्देशः । भाष्ये च ऋचः सर्वशाखात्मिका इति व्याख्यातम् । गीतिवैशेष्यात्तु साम्नः पृथग्ग्रहणम् ।

'य एतस्मिन् मण्डले पुरुषः सोऽग्निस्तानि यजूंषि स यजुषां लोक' इति ब्राह्मणे तु मण्डलान्तर्गते पुरुषेऽग्निबुद्धिः उपासनार्थमुपदिष्टा । तत्रैव यजुर्बुद्धिरपि कर्तव्येत्याद्युक्तमेव । मनुस्तु सर्वान्तर्यामिणं परमेश्वरमेव मनुप्रजापतीन्द्रप्राणादिशब्दवाच्यं तत्तदवस्थाविशेषाभिप्रायेण वदति ।

'प्रशासितारं सर्वेषामणीयांसमणोरपि ।
रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम् ॥' इति ।

प्रश्नोपनिषद्यपि प्राणस्य अग्न्यादिरूपतोक्ता, तस्यैव प्रकृतत्वात् । मण्डलब्राह्मणेऽपि मण्डलान्तर्गतपुरुषमेव प्रकृत्य तं यथा यथोपासते

इति सर्वान्तर्यामिण एव सर्वात्मत्वमुक्तम्। तस्यैव च हिरण्मयस्य परमेश्वरत्वम् 'अन्तस्तद्धर्मोपदेशात्' इति बादरायणेनापि निर्णीतम्।

'एष सर्वाणि भूतानि पञ्चभिर्व्याप्य मूर्तिभिः।
जन्म-वृद्धि-क्षयैर्नित्यं संसारयति चक्रवत्।
स सर्वसमतामेत्य ब्रह्माभ्येति परं पदम्॥'

इत्यन्ते तमेव उपसंहरति मनुः। प्राणस्य तु न परब्रह्मत्वमिति स्पष्टमेव। अपरब्रह्मरूपस्य हिरण्यगर्भात्मकस्य प्राणस्य तु अवान्तरकारणत्वेन अग्न्यादिरूपता युज्यते, 'एषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो मघवानेष वायुः', 'इन्द्रस्त्वं प्राण तेजसा रुद्रोऽसि परिरक्षिता। त्वमन्तरिक्षे चरसि सूर्यस्त्वं ज्योतिषां पतिः' इत्यादिवचनेभ्यस्तत्र तत्र।

यदपि च—"लोके स्वज्योतिषः, परज्योतिषः, रूपज्योतिषः, अज्योतिषश्चेति चतुर्विधाः पदार्था उच्यन्ते" इति। तदपि निरर्थकम्; स्वज्योतिषः परज्योतिष इति द्वैविध्यस्यैवोपपत्तेः। शब्दादिवद् रूपस्यापि ज्योतिष्ट्वानुपपत्तेः। यथा शब्दस्पर्शौ श्रोत्रत्वग्भ्यां प्रकाश्येते तथैव रूपमपि चक्षुषा प्रकाश्यते। न च रूपस्य ज्योतिष्ट्वं श्रुतम्। शब्दस्य तु विषयप्रकाशकत्वेन ज्योतिष्ट्वं सुप्रसिद्धम्। 'वाचैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते' इति श्रुतेः।

वस्तुतस्तु—नेत्र-मन-आत्मा-ज्योतींष्यनपेक्ष्य सूर्यस्यापि प्रकाशाभावात् सूर्यस्यापि परज्योतिष्ट्वमेव, अवेद्यत्वे सत्यपरोक्षस्य ब्रह्मण एव स्वज्योतिष्ट्वोपपत्तेः 'यत् साक्षादपरोक्षाद् ब्रह्म' इति श्रुतेः। आपेक्षिकं तु स्वयंज्योतिष्ट्वम् अग्न्यादित्यचन्द्रविद्युदादीनां सममेव। रूपापेक्षया शब्दस्यैव ज्योतिष्ट्वम्। रूपस्य आलोकसापेक्षचक्षुर्वेद्यत्वम्। शब्दस्य तु तदनपेक्षश्रोत्रवेद्यत्वमेव। रूपस्य तु वेद्यत्वमेव। शब्दस्य तु स्वविषयवेदकत्वमपीति कुतो न तज्ज्योतिष्ट्वव्यवहारः?

'एकं सद्विप्रा' इति मन्त्रोऽपि आदित्योपाधिकस्य परमेश्वरस्यैव अग्न्यादिरूपतां वक्ति। तच्च तद्भाष्येणैव स्पष्टम्। यथा—

'एकं इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।
एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः॥'
(ऋ० सं० १. २. २.)

भाष्यम्—अमुमादित्यम् ऐश्वर्यविशिष्टम् इन्द्रम् आहुः, तथा मित्रं प्रमीतेर्मरणात् त्रातारम् अहरभिमानिनं मित्रनामकं वरुणं पापस्य वारकं रात्र्यभिमानिनं देवमाहुः। तथाऽग्निम् अग्रनयनादिगुणविशिष्टमाहुः। अथो अपि। अयमेव दिव्यः सुपर्णः सपतनः, गरुत्मान् गरणवान् पक्षवान् वा एतन्नामको यः पश्यति सोऽप्ययमेव। कथमेकस्य नानात्वमित्युच्यते—एकमेव वस्तुतः सन्तं विप्रा मेधाविनः तत्तत्कार्यकरणेन बहुधा वदन्ति। तमेव वृष्ट्यादिकारणवैद्युताग्निम्। यमं नियन्तारम्, मातरिश्वानम् अन्तरिक्षे श्वसन्तं वायुम् आहुः। सूर्यस्य ब्रह्मात्मकत्वेन सार्वात्म्यमुक्तमिति।

यदुक्तम्—"'अग्नेर्ऋग्वेदोऽजायत' इत्यादिना अग्निवायुरविभ्यस्त्रयाणां वेदानामुत्पत्तिराख्याता। 'इतरेतरजन्मानो भवन्ति इतरेतरप्रकृतयः' (निरुक्त ७.४.१२) इति वेदेभ्यो देवा जायन्ते, देवेभ्यश्च वेदा इति वैज्ञानिकप्रक्रियायां नात्र विशेषः। तन्तुभ्यो हि पटो जायते, पटाच्च तन्तवः इत्यन्योन्यप्रकृतिकत्वं लोके दृश्यत एव।" तदपि न सङ्गतम्; अग्न्यादिभ्यो वेदानामुत्पत्तिश्रवणेन ऋग्वेदादीनामग्न्यादिप्रकृतिकत्वेऽपि देवानां वेदप्रकृतिकत्वाप्रसङ्गात्। यद्यपि 'असृग्रमिति मनुष्यानिन्दव इति देवान् तिरः पवित्रमिति पितॄन्' इत्यादिना सर्वस्यैव-प्रपञ्चस्य वैदिकशब्दप्रभवत्वं श्रूयते, परं न तत्र प्रकृतित्वमुच्यते, किन्तु निमित्तत्वमेव, परमेश्वरस्यैव सर्वप्रकृतित्वाभ्युपगमात्। यथा कुलालो घटादिशब्दैः घटादिकं ज्ञात्वा मृदादिभिरेव घटादिकं रचयति, तत्र मृद एव प्रकृतित्वम्, न शब्दस्येति तद्वदेव प्रकृतेऽपि ज्ञेयम्। नहि लोके इतरेतरजन्मानो दृश्यन्ते, न वा इतरेतरप्रकृतयो दृश्यन्ते। तन्तुभ्यः पटो जायते, परं न पटात्तन्तवो जायन्ते प्रत्यक्षविरोधात्।

निरुक्तेऽपि देवताधर्मो मनुष्यधर्माद्भिन्न एवोक्तः। तदुक्तं दुर्गाचार्येण—

"मनुष्यधर्मविपरीतोऽतिदेवताधर्मोऽनैश्वर्यात् मनुष्याणामैश्वर्याच्च देवतानाम्। यतो भेदमाश्रित्य ते इतरेतरजन्मानः, न मनुष्याणामियं शक्तिः। पिता पुत्रं जनयति, न पुनरिच्छन्नपि पुत्रः पितरं जनयति। देवतानामग्रे सूर्यो जायते 'एष प्रातः प्रसुवति' ( मै० सं० १. ५. ७ )। तस्मात् 'सूर्यस्याग्निः प्रकृतिः, सूर्याच्चाग्निः सायं जायते। तस्मादग्नेः सूर्यः प्रकृतिः, अदितेर्दक्षो दक्षाच्चादितिः' ( ऋ० १०. ७२. ४ )।

किमर्थमीश्वराः सन्तो देवा जायन्ते ? इति। कर्मजन्मानः कर्मफलसिद्धये लोकस्य अग्निवायुसूर्या जायन्ते लोकमनुजिघृक्षन्तः। सर्वे चात्मजन्मानः। योऽसौ एक आत्मा बहुधा स्तूयते, तस्मात् परमात्मनो जायन्ते। ननु सर्वेषामेव ततो जन्मेति को विशेष एतेषाम् ? इत्याह— कामकारेण देवतानां जन्म, अकामकारेण इतरेषाम्।" अन्यदत्र समाहितम्।

यदुक्तम्—"पृथिव्याप्राणरूपोऽग्निः पृथिव्या उत्थाय सूर्य्यमण्डलपर्यन्तं गच्छति। यावत्पर्यन्तं रूपज्योतिषः प्राणाः प्रसर्पन्ति तावत्पर्यन्तमेव तद्वस्तु दृश्यते। यस्य तु साममण्डलं नास्माकं चक्षुरिन्द्रियपर्यन्तं व्याप्नोति तन्न दृश्यते। साम च ऋगनुसारेण विस्तृतम्" इति। तत्सर्वं निर्मूलमेव ; चक्षुषः सामर्थ्यतारतम्यानुसारेणैव तदुपपत्तेरुक्तत्वात्। दूरस्थस्य महतोऽपि पदार्थस्य लघुत्वप्रतीतिस्तु दूरत्वदोषनिमित्ता सोपाधिकभ्रान्तिरूपैव इत्यप्युक्तमेव।

यदुक्तम्–"पृथिव्यारन्तरं साम सूर्यरथं तरतीति सूर्यमण्डलमभितो विराजमानं देवमण्डलमेव सूर्यरथ उच्यते, 'चित्रं देवानामुदगादनीकमि'ति मन्त्रवर्णात्। देवानां प्राणभूतानामनीकं मण्डलमभितस्तिष्ठति, आत्मैवैषां रथः" ( नि० ७.४.१५ ) इति।

'त्र्यशीतिमण्डलशतं काष्ठयोरन्तरं द्वयोः।
आरोहणावरोहाभ्यां भानोरब्देन या गतिः॥
स रथोऽधिष्ठितो देवैरादित्यैर्ऋषिभिस्तथा।
गन्धर्वैरप्सरोभिश्च ग्रामणी-सर्प-राक्षसैः॥'

( वि० पु० २.१०.१.२ )

इत्याद्युच्यते तादृशरथपर्यन्तं पृथिव्याः सामेति रथन्तरम्, रथं तरतीति व्युत्पत्तिस्तत्रानुगुणा" इत्यादि।

तन्न ; भवन्मतरीत्या सर्वस्यैव मण्डलस्य रथत्वेन तत्तरणात् सूर्यमण्डलात् परतोऽपि पृथिव्या दर्शनप्रसङ्गात्। आत्मैवैषां रथ इत्यनेन ऐश्वर्ययोगाद् रथायुधादयस्तदात्मका एवेत्युच्यते। नानेन रथाश्वादीनामभाव एव प्रत्येतव्यः, तद्वर्णनपर-पुराणादिविरोधात्।

तत्र 'गीतिषु सामाख्या' इतिरीत्या गीतेरेव मुख्यं सामत्वम्। अन्यत्र तु गौण्या वृत्त्या उपासनार्थं सामत्वादिव्यपदेशः। न सूर्यरथस्य तरणाद् रथन्तरस्य रथन्तरत्वम्, न वा पृथिव्यपेक्षया सूर्यसाम्नो बृहत्त्वेन बृहत्साम्नो बृहत्त्वम्, निष्प्रमाणत्वात्। ताण्ड्यब्राह्मणे तयोरन्यथा निर्वचनश्रवणात्। ताण्ड्यमहाब्राह्मणे नानाविधानां साम्नां नामानि तन्निर्वचनानि चोपलभ्यन्ते।

बृहद्रथन्तरसामसम्बन्धे षष्ठाध्याये षष्ठखण्डे उक्तम्—

'प्रजापतिरजायत बहु स्यां प्रजायेयेति।
स तूष्णीं मनसा - ध्यायत्।
तस्य यन्मनस्यासीत्, तद् बृहत् समभवत्।
ध्यातुर्मनसि यदासीत् तत्साम समभवत्।
संभूतं सामत्वेन परिणतम्।'
'स आदधीत गर्भो मेऽयमन्तर्हितं वाचा प्रजनया' इति।

स प्रजापतिः आदधीत मेऽन्तरयं गर्भो निहितस्तं खलु गर्भं वाचा साधनेन प्रजननाय उत्पादयामीति। स वाचं व्यसृजत्। सा वाग् रथन्तरमन्वपद्यत। स ध्यायन् प्रजापतिर्वाचं व्यसृजत्। सा च सृष्टा वाक् रथन्तरं सामानु सृज्य पश्चात् उदपद्यत उत्पन्नासीत्।

रथन्तर शब्दनिर्वचनञ्च तत्रैव—

'रथन्मर्या क्षेप्ला तारीदिति तद्रथन्तरस्य रथन्तरत्वम्।'

हे मर्या रथन्तरवद्देवानां वाहनभूतां वाचमिदं साम क्षेप्लाक्षितभावेन अतारीद्गच्छदिति इन्द्रोऽब्रवीत्। तेन रथन्तरस्य रथन्तरत्वमायातम्। इन्द्रस्य उक्तप्रकारवचनमेतच्छब्दप्रवृत्ति निमित्तमभूदित्यर्थः।

ततो बृहत उत्पत्तिर्निर्वचनञ्च तत्रैव—

'ततो बृहदनु प्राजायत बृहन्मर्याः।
इदं सज्योगन्त्वरभूरिति तद्बृहतो बृहत्वम्।'

रथन्तरसृष्टेरनु पश्चाद् बृहत् साम प्राजायत। तदिदं बृहत् साम हे मर्या इदं ज्योक् चिरकालं रथन्तरोत्पत्त्यनन्तरकालपर्यन्तम् अन्तः प्रजापतेः मनस्यभूत् स्थितमासीत्। यदिन्द्रोऽब्रवीत् तत्साम्नो बृहत्त्वं सम्पन्नम्। ज्येष्ठपुत्रत्वेन तत्प्रशंसा। यथा वै पुत्रो ज्येष्ठी एवं प्रजापतेः। ननु रथन्तरात् पश्चात् बृहदुत्पन्नम्, तत्कथं ज्येष्ठपुत्रत्वमस्येति ? तत्राह—'ज्येष्ठं ब्राह्मणं वा एतत्।' रथन्तरसृष्टिप्रकाशकाद् ब्राह्मणात् 'स वाचं व्यसृजत' इत्यादिकात् अर्थात् ब्राह्मणात् प्रथमं सामप्रकाशकं ब्राह्मणमस्तीति तस्य ज्येष्ठत्वम्।

एवं "पृथिव्या रथन्तरं साम सूर्यस्य बृहत्साम" इत्यपि निराधारम्; यथाविनियोगं बृहद्रथान्तरादिभिः संस्तवनदर्शनात्।

'चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः।
आ प्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥'
(ऋ० सं० १.११५.१)

अस्यार्थस्तु—देवानां दीव्यन्तीति देवा रश्मयस्तेषां देवजनानां वा अनीकं समूहरूपं चित्रमाश्चर्यकरं सूर्यमण्डलम् उदगात् उदयाचलं प्राप्तमासीत्। तच्च मित्रस्य वरुणस्य अग्नेस्तदुपलक्षितानां जगतां चक्षुः प्रकाशकम्, चक्षुःस्थानीयं वा उदयं प्राप्य द्यावापृथिवीमन्तरिक्षञ्च आप्राः स्वतेजसा समन्तात्। अपूरयत् मण्डलान्तर्वर्ती सूर्यः अन्तर्यामी सर्वस्य प्रेरकः परमात्मा जगतो जङ्गमस्य तस्थुषः स्थावरस्य आत्मा स्वरूपभूतः सर्वकारणत्वात्, कार्यस्य तदनन्यत्वाच्च। अथवा सर्वजीवनहेतुत्वादात्मा जीवः। उदिते हि सूर्ये मृतप्रायं सर्वं जगत् पुनश्चेतनयुक्तं सदुपलभ्यते। योऽसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेति' (तै० आ० १.१४) इति श्रुतिः।

यदपि च—

"ऋग्भ्यो जातां सर्वशो मूर्तिमाहुः सर्वा गतिर्याजुषी हैव शश्वत्।
सर्वं तेजः सामरूपं ह शश्वत् सर्वं ह्येदं ब्रह्मणा हैव सृष्टम् ॥"

इतीयमपि श्रुतिः शब्दराशिस्वरूपाद् व्यतिरिक्तमेव वेदस्वरूप माह। सर्वासां मूर्तीनामृग्जन्यत्वं स्पष्टमेवोक्तम्। मण्डलश्रुतौ तु मण्डलस्यैव ऋक्त्वमाम्नातम्। तत्र यजुषोऽग्निरूपत्वमुक्तम्, इह तु गतेर्यजुर्मयत्वमुक्तम्। एतेन वैलक्षण्येन प्रतीयते पूर्वोक्तेभ्योऽपि वेदेभ्य एतच्छ्रुत्युक्ता वेदाः सूक्ष्मतराः। त इमे के? इत्यपि श्रुतिभ्य एवं विचार्यताम्। तदपि शतपथब्राह्मणे पुरश्चरणश्रुतिराह—'वागेवर्चश्च सामानि च मन एव यजूंषि' इति वाच एव ऋक्त्वं सामत्वञ्च आम्नातम्। सर्वकारणभूतस्य अव्ययपुरुषस्य सृष्टिसाक्षिभूताः कलाः मनःप्राणवाचः 'स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयो वाङ्मयः प्राणमयः' इत्यसकृत् श्रुतिराह।

अस्या वाचश्च बहुधा वर्णनं श्रुतिषु श्रूयते। 'वाचं देवा उपजीवन्ति' 'यदि वै प्रजापतेः परमस्ति वागेव तत्', 'यावद्ब्रह्म विष्ठितं तावती वाक्' 'वाग्वै ब्रह्म तस्यै वाचः सत्यमेव ब्रह्म' 'ता एताः सत्यमेव व्याहृतयो भवन्ति।' सेयं सर्वकारणभूता वाक्। जगति हि त्रीणि तत्त्वान्युपलभ्यन्ते ज्ञानं क्रिया अर्थश्चेति। तदनुकूलं त्रयमेव तत्कारणत्वेन श्रुतिष्वाम्नायते। ज्ञानस्य मूलभूतं मनः, क्रियाया मूलभूताः प्राणाः, अर्थस्य मूलभूताः वाक्। इयमर्थमूलत्वात् स्थूलतया मनःप्राणापेक्षयाऽवरेति अवाञ्चतीति वाक् 'वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोरि'ति अकारलोपोऽनुमीयते।

इन्द्रस्य प्राणस्य चेयं पत्नी सहचरणात् तदपेक्षया अप्रधानत्वाच्च। तत एव इन्द्रपत्नीत्वमस्याः प्रथमोक्तायां श्रुतौ।

सेयमेव सर्वादिभूता व्यापिनी वाक् 'नादब्रह्म'दिशब्देन आगमशास्त्रे आख्यायते। ब्रह्मरूपेण ब्रह्मनिःश्वसिततया उपनिषत्सु श्रूयते। ब्रह्मणो हि मनःप्राणवाग्रूपं त्रिविधमिदं व्याकरणं न केनचिद्यत्नेन जनितम्। यत्नानां मायावृत्तिरूपाणां परतः प्रादुर्भावादिति निःश्वसितपदेनैवास्य व्याकरणाभिधानं युक्तिमत्। इयमेव च अपौरुषेयी, अव्ययपुरुषरूपत्वेन अक्षर-क्षरपुरुषयोर्जनकत्वेन चास्याः स्वीकरणात्।

इयं व्यापिका सर्वत्र प्रसृता वागेव यदा केन्द्रं प्रकल्प्य प्रतिष्ठिता भवति तदा श्रुतौ वेदनाम्ना आगमे च बिन्दुनाम्ना व्यवह्रियते। तस्याः

केन्द्रं प्रकल्प्य व्यवस्थितायाः प्रतिनिधिभूत ओङ्कारः । इयं हि वाक् प्राणगर्भैव भवति, मनःप्राणवाचामविनाभावात् । तथैव ओङ्कारे वर्णत्रयम्—अकारो मनसो बोधकः, प्रश्लिष्ट उकारश्च प्राणस्य, स्थूलो मकारस्तु वाच इत्योङ्कारो व्यापिकाया वाचः प्रतिनिधिर्भवति । ओङ्कार एव मुख्यो वेद इति माण्डूक्यश्रुतौ विवृतम् । "एतद्वै सत्यकाम परं चापरञ्च" इति । तस्यैव वेदत्रयरूपता प्रश्नोपनिषदि आम्नाता, एवं पुराणेष्वपि —

'एकस्य वेदस्याज्ञानाद्वेदास्ते बहवः कृता ।' इति ।

इयं च वागेव मुख्यो वेदः । सैव शब्दानामर्थानाञ्च उत्पादिकेति विवृतम् । तस्या एव मूर्तिजनकत्वम् 'ऋग्भ्यो जातां सर्वशो मूर्तिमाहुः' इति स्पष्टीकृतम् । अथ सर्वा गतिर्याजुषी इति गतिशब्देन गतिवृत्तिको गतिहेतुः प्राण उक्तः । तेजःशब्देन प्रथमविवर्तरूपं मन उक्तमिति । मूलभूतानामात्मत्वेन निदर्शितपूर्वाणां मनःप्राणवाचां वेदत्वमनया श्रुत्या सिद्ध्यति । एतेषाञ्च परस्परमविनाभावात् क्वचित् प्राणरूपताऽपि सर्वेषां वेदानामाम्नायते । यथा उक्थं यजुः साम इति सर्वं प्राण एव इति विस्तरेण व्याख्यातम् । यजुषश्च सर्वोत्पादकता शतपथे स्पष्टं श्रुता—

'अयं वाव यजुर्योऽयं पवते । एष हि यन्नेवेदं सर्वं जनयति । एतं यन्तमिदमनु प्रजायते तस्माद्वायुरेव यजुः । अयमाकाशो जूः यदिदमन्तरिक्षम् । एतं ह्याकाशमनुजवते । तदेतद्यजुश्च अन्तरिक्षञ्च । यच्च जूश्च । तदेतद्यजुः ऋक्सामयोः प्रतिष्ठितम्, ऋक्सामे वहतः ।'

अत्र गतिशीलस्य मूलतत्त्वस्य यजुष्ट्वमाम्नातम् । तदेव 'सर्वा गतिर्याजुषी हैव शश्वत्' इत्युक्तम् । अत्रोक्तौ आकाशवायू न भूतरूपौ, भूतानां वेदापेक्षया अतिपरत्वात् । वेदेभ्यो हि देवाः, तदनन्तरं भूतानि जायन्ते । तस्माद् भूताकाशवाय्वोः प्रागवस्थैवात्र कार्यकारणयोरभेदाद् आकाशवायुपदाभ्यां व्याख्याता । 'अयं वा इन्द्रो योऽयं पवते' इति प्राणरूपस्येन्द्रस्य वायुरूपतां ब्रुवत्या श्रुत्यैव स्पष्टीकृतोऽयमभिप्रायः । यजुषश्च मुख्यत्वम्, ऋक्सामयोस्तद्वाहकत्वञ्च । तेन ऋक्सामयोरायतनरूपता, यजुषश्च रसरूपतोक्तैव ।

'आत्मा ह्यग्निः तदेनमेते उभे रसो भूत्वाऽपीतः। ऋक् च साम च तदुभे ऋक्सामे यजुरपीतः (शत० १०.१.१.६) तत्राप्ययं दर्शितः। 'ऋचोऽक्षरे परमे व्योमन्' इति मन्त्रोऽपि परमव्योमपदेन बोधितस्य परब्रह्मण ऋगक्षरे प्रतिष्ठितत्वमाह। तस्य ज्ञानमेव मन्त्ररूपाणामृचां मुख्यं प्रयोजनम्। तदित्थं ब्रह्मस्वरूपभूता मनःप्राणवाच एव मुख्या वेदा इति विवृतम्। एते रसवेदाः, पूर्वोक्तमण्डलक्रमेण चक्षुःपर्यन्त-मागत्य तत्तद्वस्तुजनकाः। वस्तुवितननात् वितानपदेन व्यवहार्याः। यैर्वस्तुनो दूरे दूरे लघुत्वं व्याख्यातम्, ते तु छन्दोवेदा इति त्रिविधा वैज्ञानिका वेदाः" इति।

अत्रोच्यते—यस्याः श्रुतेर्बलादेतत्सर्वं कल्प्यते, तस्याः पूर्वाचार्यैः अन्यस्यैव अर्थस्य वर्णनात्। तथा हि—

ऋग्भ्यो जातां सर्वशो मूर्तिमाहुः सर्वा गतिर्याजुषी हैव शश्वत्।
'सर्वं तेजः सामरूपं ह शश्वत् सर्वं हेदं ब्रह्मणा हैव सृष्टम्॥'
(तैत्ति० ब्रा० ३.१२.९)

मन्त्रस्यास्य सायणभाष्यम्—या या मूर्तिरस्ति आदित्यस्य वा देवतान्तरस्य वा तां सर्वामप्यभिज्ञा ऋग्भिः समुत्पन्नामाहुः। या या गतिर्देवतानां विद्यते सा सर्वा शश्वत् सर्वदैव याजुषी हैव यजुषैव सम्पादिता। यद्यत्तेजो देवेषु विद्यते, तत्सर्वं शश्वत् सर्वदा सामरूपं ह साम्नैव निरूपणीयम्। तदेवं सर्वमपीदं देवव्यवहारजातम् ब्रह्मणा हैव वेदेनैव सृष्टम्।

अयमभिप्रायः—अग्निवाय्वादित्येभ्यो जातत्वात् तत्प्राधान्येन सर्वासां मूर्तीनामग्निमयेन ऋग्वेदेन, सर्वासां गतीनां वायुमयेन यजुर्वेदेन सर्वेषां तेजसामादित्यमयेन साम्ना प्रादुर्भावो युक्त एव। एतदभिप्रायेणैव उत्तरत्रापि वैश्यादीनामप्युत्पत्तिस्तत्र श्रूयते—

'ऋग्भ्यो जातं वैश्यं वर्णमाहुः, यजुर्वेदं क्षत्रियस्याहुर्योनिम्।
सामवेदो ब्राह्मणानां प्रसूतिः, पूर्वे पूर्वेभ्यो वच एतदूचुः॥' इति।

यथा देवव्यवहारस्य सर्वस्य हि वेदत्रयमेव कारणम्, एवं मनुष्य-व्यवहारस्यापि इत्येतद्वचः पूर्वे सृष्ट्यादावुत्पन्ना महर्षयः पूर्वेभ्य-स्तदानीन्तनेभ्यः स्वशिष्येभ्यः ऊचुः। तदुक्तं पुराणेषु—

'विसृष्टौ ऋङ्मयो ब्रह्मा स्थितौ विष्णुर्यजुर्मयः।
रुद्रः साममयोऽन्ते च तस्मात्तस्याशुचिर्ध्वनिः॥'

तेन ब्रह्मरूपात् तेजोमयाद् ऋग्वेदात् विशां सृष्टिः, सत्त्वात्मकाद् विष्णुमयाद् यजुषः पालकस्य क्षत्रियस्योत्पत्तिः, 'नाविष्णुः पृथिवीपतिः' इत्यादिवचनात् । तमोमयाद् रुद्रात्मकात् साम्नो ब्राह्मणोत्पत्तिः, तेषां निवृत्तिनिष्ठत्वात् । सामध्वनेरशुचित्वकथनन्तु ऋग्यजुषोस्तदानीम् अध्ययननिषेधार्थमेव, न तु निकर्षवर्णनाभिप्रायेण 'वेदानां सामवेदोऽस्मि' इति गीतायां सर्वापेक्षया तदुत्कर्षवर्णनात् । तमोगुणमयत्वकथनमपि नापकर्षाय, लयाधिकरणत्वेन तस्यैव सर्वकारणत्वोपपत्त्या कार्यापेक्षया कारणोत्कर्षस्य सर्वसम्मतत्वात् । अत एव रुद्रस्य समष्टिव्यष्टिसौषुप्ततमोनियामकत्वेन सर्वोत्कर्षः । यदि प्रथममन्त्रे सर्वकारणभूता वाग्गृहीता भवेत्तदा तयैव वैश्यादीनामप्युत्पत्तिः सिद्ध्यत्येवेति वैयर्थ्यमेव उत्तरमन्त्रस्य स्यात् ।

'स यद्येकमात्रमभिध्यायीत तेनैव संविदितस्तूर्णमेव जगत्यामभिसंपद्यते । तमृचो मनुष्यलोकमुपनयन्ते । अथ यदि द्विमात्रेण मनसि सम्पद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते । यः पुनः त्रिमात्रेण स सामभिरुन्नीयते ब्रह्मलोकम्' इत्यादिभिः ऋगाद्यधिष्ठातॄणां देवानां तत्तत्फलप्राप्तये तत्तल्लोकनयनं श्रूयते । 'वागेव च सामानि च यदि वै प्रजापतेः परमस्ति वागेव तत्' इत्यादीनामभिप्रायस्तु वर्णित एवान्यत्र ।

'वाचं देवा उपजीवन्ती'त्यस्यापि अन्य एवार्थः । तथा हि—

'वाचं देवा उपजीवन्ति विश्वे वाचं गन्धर्वाः पशवो मनुष्याः ।
वाचीमा विश्वाभुवनान्यर्पिता सा नो हवं जुषतामिन्द्रपत्नी ॥'

( तै० ब्रा० २. ८. ८. ४ )

अत्र पूर्वमन्त्रोक्तरीत्या सर्वे देवा आहुतिकालीनमन्त्ररूपां वाचमेव उपजीवन्ति । गन्धर्वादयश्च वाचैव व्यवहरन्ति । पशूनामपि हम्भारवादिरूपया वाचैव व्यवहारो दृश्यते । तस्मादिमा विश्वाभुवनानि सर्वलोकनिवासिन एते प्राणिनो वाच्यर्पिताः वाचमेवाश्रित्य वर्तन्ते । येयमीदृशी वाक् सेयमिन्द्रपत्नी इन्द्रस्य पालयित्री सती नो हवमस्मदीयमिदं हविर्जुषताम् ।

इह वेदादिलक्षणशब्दाभिव्यञ्जिका वाग् इन्द्रियरूपैव संस्तुता। सापि प्राणरूपस्य इन्द्रस्य पत्नी। एवमन्यान्यपि तादृशाणि श्रुतिवाक्यानि। यथा—

'वाचं धेनुमुपासीत। तस्याश्चत्वारः स्तनाः—स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारः' इति।

'स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयो वाङ्मयः प्राणमय' इत्यत्रापि न वाग्वाकाशाद्युत्पत्तेः पूर्ववर्तिन्यः काश्चन कला विवक्षिताः। अयमात्माऽपरोक्षः। प्रत्यगात्माऽत्र विवक्षितः, 'यत् साक्षादपरोक्षात्' इति तस्यैवापरोक्षत्वप्रसिद्धेः। तस्यैव च ब्रह्मरूपताऽपि युक्ता सर्वोपाधिनैरपेक्ष्याभिप्रायेण। तत्तदुपाधिवैशिष्ट्याभिप्रायेण तु विज्ञानमयो मनोमयः वाङ्मयः प्राणमय इत्यादिव्यपदेशाः, वागादीनां भौतिकत्वश्रवणात्।

यदुक्तम्—'ज्ञानञ्च क्रिया च अर्थश्चेति त्रीणि तत्त्वानि उपलभ्यन्ते तदनुकूलं त्रयमेव कारणत्वेनाम्नायते श्रुतिषु मनः प्राण वाच" इत्यादि। तदपि न क्षोदक्षमम्; मनआदीनां ज्ञानादिकारणत्वे सत्यपि तेषामभौतित्वानुपपत्तेः। 'अन्नमयं हि सोम्य मनः आपोमयः प्राणस्तेजोमयी वाग्' इत्यादि-छान्दोग्यश्रुतिविरोधात् शब्दमूलत्वात् सृष्टेरर्थस्य वाङ्मूलत्वं वक्तुं शक्यते।

कैश्चित्तु शब्द-तन्मात्रमूलकत्वात् आकाशादिप्रपञ्चस्य शब्दमूलत्वमुच्यते। अन्यैस्तु—'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' 'अतः कविर्नामसु यावदर्थः स्यादप्रमत्तो व्यवसायबुद्धिः' इत्यादिरीत्या विकाराणां कारणातिरेकेणासत्त्वात् नामधेयमात्रत्वमुक्तम्। अन्यैस्तु—स्फोटात्मकज्ञानस्यैव शब्दरूपत्वात् तदात्मकस्य ब्रह्मणो जगत्कारणत्वमेव शब्दस्य वाचो वा जगत्कारणत्वम्। अपरैस्तु—'ओमिति ब्रह्मे'ति रीत्या वाच्यवाचकयोः अभेदात् ओमात्मवागभिन्नब्रह्मकारणत्वमेव जगतः, अर्थस्य वा वाक्कारणत्वम्, नादबिन्द्वादिरूपेण ब्रह्मतच्छक्तिरूपचिदचित्तन्मिश्राद्यवस्थारूपेण ब्रह्मण एव विवर्त इति। तदेतत्सर्वं मञ्जूषादिषु स्पष्टमेव। निःश्वसितरूपत्वन्तु शब्दराशिरूपवेद-तद्गत-मन्त्रब्राह्मणोपनिषदादीनामेवेति संक्षेपः।

यच्च वेदानामपौरुषेयत्व-परमेश्वरप्रणीतत्व-मनुष्यप्रणीतत्वपक्षाणां समन्वयायोक्तम्—"वेदशब्दः तदवान्तरविशेषवाचका ऋग्यजुःसामाथर्वशब्दाश्च द्वेधा श्रुतिष्वेव व्यवहृताः—वैज्ञानिकार्थपराः, ज्ञानपराश्च। अव्ययपुरुषकलासु अन्यतमा वाक् ऋग्यजुःसामाथर्वरूपा; तद्वितानश्चैषां शब्दानां वैज्ञानिकोऽर्थः। ज्ञानपरो वेदशब्दोऽपि ज्ञाने, तत्सम्बद्धे, शब्दसमूहे ज्ञानविषयीभूतेषु लौकिकेषु अलौकिकेषु चार्थेषु व्यासज्यवृत्तिः। सर्वविध-लौकिकाऽलौकिकार्थविषयकं शब्दाभिव्यक्तिप्रयोजकम्, अभिव्यक्तशब्दप्रयोज्यं वा ज्ञानं वेदः। तादृशज्ञानविषयीभूतास्ते तेऽर्था वेदः। तत्तज्ज्ञानानुवेधकः तत्तदर्थज्ञानप्रयोज्याभिव्यक्तिकः अभिव्यक्तः सँस्तत्तदर्थज्ञानप्रयोजको वा शब्दसमूहो वेदः। समुदाये प्रवृत्ताः शब्दा अवयवेष्वपि प्रवर्तन्ते' इति न्यायेन केवले ज्ञाने केवले शब्दसमूहे, केवले अर्थेष्वपि वेदशब्दप्रवृत्तिः। 'वेदनं वेदः, विद्यते (ज्ञायते) अनेन, वेद्यते ज्ञाप्यते अनेनेति वा वेदः, वेद्यन्ते वा ये ते वेदाः' इति विभिन्नाभिः व्युत्पत्तिभिः विभिन्नेष्वर्थेषु विभिन्ना वेदशब्दा वा अभ्युपगम्यन्ते।

तत्र केवलज्ञानाभिप्रायेण प्रयुक्ते वेदशब्दे वेदस्य अपौरुषेयत्वम्, ज्ञानस्य स्वरूपेण नित्यत्वात्, केनाप्युत्पादयितुमशक्यत्वाच्च। त एव ईश्वररूपा वेदा इति शक्यं वक्तुम्, ईश्वरस्य ज्ञानरूपतायाः सर्वत्र व्यवहृतत्वात्। ज्ञानविषयीभूतार्थाभिप्रायेण केवलार्थाभिप्रायेण वा प्रयुक्ते वेदशब्दे ईश्वरनिर्मिता वेदाः, अर्थानां परमेश्वरनिर्मितत्वात्। तादृशस्य ज्ञानस्यापि महर्षिभिरीश्वरप्रसादेनैव लब्धत्वात्।

तत्रापि तादृशज्ञानाभिप्रायेण ईश्वरनिःश्वसितं वेदाः, ज्ञानस्य नित्यत्वेन अर्थोपहितत्वमात्रस्य ईश्वरसम्पादितत्वेन प्रणीतत्वकथनस्यापि सामञ्जस्यात्। निःश्वसितत्वं तु ततो निष्क्रान्तत्वमेव। तत्तदर्थपरत्वे तु ईश्वरप्रणीता इति युक्तम्। ज्ञानानुविद्धशब्दसमूहाभिप्रायेण प्रयुक्ते वेदशब्देऽपि शब्दनित्यत्ववादिनामपौरुषेया वेदाः। अनित्यत्ववादिनां

तु ईश्वरप्रणीताः। पुरुषाणां तु न पश्यन्त्या वाच उत्पादने व्यापार इत्युक्तमेव उपरिष्टात्।

अथ आदिप्रवक्तॄणां ज्ञानप्रयोज्यशब्दसमूहाभिप्रायेण श्रोतॄणां ज्ञान-प्रयोजकशब्दसमूहाभिप्रायेण वा प्रयुक्ते वेदशब्दे तु ऋषिप्रणीताः वेदाः, ऋषिभिरेव ईश्वरप्रसादेन ज्ञानमवाप्य मन्त्र-ब्राह्मणात्मकशब्दसमूहस्य प्रयुक्तत्वात्। तत्रापि शब्दनित्यतावादे वाक्यरचनाभिप्रायेण प्रणीतत्वम्, अनित्यतावादे तु शब्दाभिप्रायेणापि, वाक्य-स्फोटवादिनां वाक्यनित्यता-पक्षे तादृश-वाक्याभिव्यञ्जकप्रथमध्वनिकर्तृत्वमात्रेण प्रणेतृत्वमित्यति।

तदपि पूर्वोक्तरीत्याऽसङ्गतमेव ; मन्त्रब्राह्मणात्मकशब्दराशौ तद्विशेष-नियताक्षरपद्य-गद्य-गीति-तन्मिश्रात्मकेषु ऋगादिष्वेव वेद-तद्विशेष-शब्दानां सर्वत्र प्रयोगदर्शनेन उक्तसमुदायवाचकत्वाभावात्, अन्यत्र तु प्रयोगस्य लाक्षणिकत्वात्।

यद्यपि 'वेदनं वेदः, विद्यतेऽनेनेति वेदः, वेद्यतेऽनेनेति वेदः, विद्यन्ते वेद्यन्ते वा ये ते वेदा' इत्यादिव्युत्पत्तिभिः प्रत्यक्षादिप्रमाणेषु आलोकादि-सहकारिकारणेषु घटादिष्वर्थेषु च वेदशब्दप्रयोगः प्रसज्यते, परं न तथा शिष्टप्रयोगो दृश्यते। वेदशब्दस्य अनेके अर्था भवन्तु नाम, प्रकृते तु रूढिर्योगमपहरतीति न्यायेन योगरूढार्थस्यैव शिष्टैः परिगृहीतत्वात्, तत्रैव पौरुषेयत्वाऽपौरुषेयत्व-जीवेश्वर-कृतत्वादिना विप्रतिपत्तिरिति ज्ञानाद्यंशेन अपौरुषेयत्वसमर्थनाभासो व्यर्थ एव, तत्र विप्रतिपत्तेरेवा-भावात्। समुदाये प्रयुक्तस्य शब्दस्य तदवयवेषु प्रवृत्तिः रूढ्यर्थाभिप्राये-णैव, 'पञ्चाल आगतः, ग्रामो दग्धः, ग्राम आगत' इति रूढशब्दानाम् उदाहरणरूपेण ग्रहणात्। नात्र समुदाये वेद-शब्दस्य रूढिः, योगेन तु सम्पाद्यतेऽनेकार्थता।

'त्रयो वेदाः, त्रयी विद्या, त्रयं ब्रह्म' इत्यादि-वेद-ब्रह्म-विद्या-शब्दा अपि शब्दराशिपरा एव। न च शब्दे विद्याशब्दप्रयोगाभावः शङ्कनीयः; 'पञ्चाक्षरी-विद्या, पञ्चदशी, षोडशी विद्ये'त्यादौ मन्त्रेषु विद्याशब्द-प्रयोगदर्शनात्, 'विद्यां जपेत्' इति शिष्टप्रयोगदर्शनाच्च। नहि 'वेदं

कृत्वा वेदिं करोति' इत्यादौ वेदशब्दस्य व्युत्पत्तिलभ्यास्ते 'तेऽर्था ग्रहीतुं शक्याः केनापि, पारम्पर्यविरोधात्।

यदप्युक्तम्—"मन्त्रशब्दः शब्दोपदिष्टविज्ञाने रूढः शब्देऽपि प्रवर्तते" इति। तदपि न युक्तम्; निष्प्रमाणकत्वात्। 'मन्त्रान् सम्प्रादुरि'त्यत्र तु शब्दाभिप्रायेणैव तत्प्रयोगस्य युक्तत्वात्, तथैव शिष्टसम्मतत्वाच्च। न च 'यदेतन्मण्डलं तपति तन्महदुक्थम्', 'मण्डलमेवर्चः', 'वाग्वा असावादित्यः' इत्यादिषु तेषु तेषु वैज्ञानिकेष्वर्थेषु वागादिशब्दप्रयोगेण अस्त्येव समुदायवाचकतेति वाच्यम्; 'प्राणो वा अर्णवः, मनो वै समुद्रः' इत्यादिवत् उपासनार्थमौपचारिकाभेदप्रयोगस्यैव तत्र तत्रोक्तत्वात्। यथा 'प्राणो वा' इत्यादिना प्राणार्णवयोर्नाभेदः, न वा अर्णवस्य प्राणशब्दवाच्यत्वं ज्ञायते, तथैव नोक्थादित्ययोः अभेदो न वा आदित्यस्य उक्थादिशब्दवाच्यत्वम् 'वाग्वा' इत्यादिना विज्ञायते। किन्तु केनचिद् योगेन अभेदोपासनं तत्र विधित्सितमित्याद्युक्तमेव।

किञ्च—न्याय-वेदान्त-मीमांसादिप्रवर्तकानां केषाञ्चनापि महर्षीणां न सम्मतोऽयं पन्थाः, तत्तद्विरोधस्य प्रदर्शितत्वात्। कस्मिंश्चिदंशे पूर्वमीमांसावलम्बनम्, क्वचिच्च बादरायणमतावलम्बनम् अर्धजरतीयमेव। पौरुषेयत्वसाधनाय न्याय-वैशेषिकमतमवलम्बितम्, वेदस्य परमेश्वरज्ञानरूपत्वसिद्धये ज्ञानस्य च नित्यत्वसाधनाय तत्त्यक्त्वा बादरायणमतमूरीकृतम्, पौरुषेयत्वसाधनावसरे च बादरायणमतमुपेक्षितम्। शबरस्वामिनः सम्बन्धे भगवत्पादादयः 'तथा चाहुः शास्त्रतात्पर्यविदः' इति परमादरं सूचयन्ति। परमस्मिन् पक्षे 'आख्या प्रवचनात्' इति पारमर्षं सूत्रं तत्रत्यं शाबरभाष्यञ्च खण्डितमेव। मीमांसकानां मतमालम्ब्य प्रामाण्यस्वतस्त्वसाधनावसरे नैयायिकानां प्रामाण्यपरतस्त्वं स्वत एव निरस्यते। प्रामाण्यस्वतस्त्वञ्च मीमांसकानभिमतमेव किमप्युच्यते। एवमेव स्मृतिपुराणेतिहासादिष्वपि केचिदंशा गृह्यन्ते, केचिच्च उपेक्ष्यन्ते।

वेदान्तिमतरीत्या ज्ञाननित्यत्वमादाय ज्ञानात्मकस्य वेदस्य नित्यत्वमपौरुषेयत्वञ्च साधितम्। परं निर्विशेषब्रह्मरूपस्यैव नित्यत्वं तैरिष्यते।

निर्विकल्पज्ञानस्य चेद्वेदत्वं तर्हि पुराण-काव्यादिरूपत्वं कथं न भवेत्, सर्वस्यैव निर्युक्तिकत्वात्। तत्तन्मन्त्रार्थविशिष्टस्य ज्ञानस्य वेदत्वञ्चेत् कुतस्तन्नित्यत्वम्, विशिष्टस्य सर्वस्यैव वेदान्तिनयेऽनित्यत्वाभ्युपगमात्। लौकिकाऽलौकिकार्थविषयकविशिष्टज्ञानेषु वेदशब्दप्रयोगस्तु अनुपलम्भपराहत एव।

यदप्युक्तम्—"तपोयोगादिनां परमेशप्रसादमवाप्य समाधौ तत्तत्स्वर्गापूर्वदैवतादिज्ञानं यज्ञ-स्वर्गादि कार्यकारणभावविज्ञानं च प्रत्यक्षरूपमवाप्य महर्षिभिः मन्त्राः ब्राह्मणानि च प्रकटीकृतानि। तन्त्रेषु मन्त्रेषु त एव ऋषिनाम्नापि स्मर्यन्ते। ब्राह्मणान्यपि तत्तदृषिनाम्ना प्रसिद्ध्यन्ति। ते च मन्त्र-ब्राह्मणात्मका वेदाः शिष्य-प्रशिष्यपरम्परायां प्रकीर्णरूपेण प्रचरन्ति स्म कालेन। व्यासोपज्ञं तेषां संहितारूपेण ग्रथनमासीत्। शाखाभेदश्च प्रवक्तॄणामभिप्रायभेदाद् उच्चारणभेदाद्वा अभूत्, शाखाभिर्भिन्नाः तास्ताः संहिता व्यास-शिष्यपरम्परानाम्नैव अद्यापि व्याह्रियन्ते" इति।

तदपि निर्मूलम्; स्वतःसिद्ध-वेदप्रामाण्यमन्तरा तपोयोगादीनां तादृशसाक्षात्कारस्य च कार्य-कारणभावासिद्ध्या तत्र प्रवृत्त्यसम्भवस्य उक्तत्वात्, 'चोदनालक्षणोऽर्थो धर्मः' इत्यादिविरोधाच्च। ऋषित्वेन स्मरणन्तु द्रष्टृत्वेन, न कर्तृत्वेनेत्यपि विस्तरेणोक्तमेव। वेदानां व्यसनात् पूर्वमेकरूपेणैव प्रचरणमासीत्। शक्तिह्रासेन सर्ववेदस्य एकैकेन ग्रहणधारणासामर्थ्यमवेक्ष्य अनुष्ठानसौकर्याय शाखाभेदेन विभागः कृतो व्यासेनेति न कदापि प्रकीर्णरूपेण तेषां प्रचरणं सिद्ध्यति। दर्शपूर्णमासादितत्तत्कर्मोपयोगिनां मन्त्राणामेकत्र सन्निवेशेऽपि सामस्त्येन प्रकीर्णताऽसिद्धेः। सिद्धान्तकौमुद्यामिव अष्टाध्याय्यां प्रयोगानुसारेण सूत्रसङ्कलनाभावेऽपि नाष्टाध्यायीसूत्राणां प्रकीर्णता भवति, क्रमबद्धतायास्तत्रापि सत्त्वात्। तथैव प्रकृतेऽपि बोद्धव्यम्।

एवं प्रवक्तॄणामभिप्रायभेदात् शाखाभेदोऽपि न सङ्गतः; पुरुषाभिप्रायस्य तत्र संनिवेशे पौरुषेयत्वापातात्। तत्तच्छिष्यैरपि विभाग एव कृतः।

एतेन पाठभेदोऽपि पुरुषकृतोऽपास्तः। अपौरुषेये वेदे पाठभेदस्यापि अपौरुषेयत्वात्। अत एव विविधासु शाखासु पुरुषसूक्तादिपाठभेदेऽपि सर्वपाठानामनादित्वमेव। तत्तद्व्यासशिष्यनामभिः तासां प्रसिद्धयस्तु प्रवक्तृत्वेनैवोक्ता 'आख्या प्रवचनात्' इत्यादिना। चरणव्यूहस्य महिदासवृत्तौ तदेवोक्तम्—

'आद्यो वेदश्चतुष्पादः शतसाहस्रसम्मितः।
ततो दशगुणः कृत्स्नो यज्ञोऽयं सर्वकामधुक्॥
अत्रैव सत्सुतो व्यासो ह्यष्टाविंशतिमेऽन्तरे।
वेदमेकं चतुष्पादं चतुर्धा व्यभजत्पुनः॥' इति।

तैत्तिरीयब्राह्मणे तु 'त ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयाञ्चकार, अनन्ता वै वेदा' इत्युक्तम्। मुक्तिकोपनिषदि श्रीमद्भागवतादौ ब्रह्मसूत्रमाध्वभाष्ये चापि शाखाभेदप्रपञ्च उक्तः। तैत्तिरीयादि-नामसम्बन्धिन्यः कथा अपि आख्यायिकारूपा एव। तासां स्वार्थे तात्पर्याभावान्न ताभिः शाखानां सादित्वं पुरुषकृतत्वञ्च सिद्ध्यति। सर्वमेतदस्माभिः वेदस्वरूप-तत्प्रामाण्यनिरूपणपरे हिन्दीग्रन्थे विस्तरेणोक्तम्।

बृहद्देवतानुक्रमण्यादिभिरपि मन्त्रद्रष्टृत्वेनैव ऋषित्वमुक्तम्, न कर्तृत्वेनेत्युक्तमेव।

यदप्युक्तम्—"अध्यायपुरुष-कलारूपा वाक्, तद्विस्ताररूप-प्रतननञ्चेति सर्वथाऽपौरुषेयो वेदः, सर्वादिभूतायास्तस्याः केनापि उत्पादयितुमशक्यत्वात्, पुरुषस्वरूपान्तर्गतायाः वेदलक्षणाया वाचः पौरुषेयत्वासंभवात् अव्ययपुरुषस्य ईश्वरत्वव्यवहारे ईश्वररूपा सेत्यपि वक्तुं शक्यम्। अथ अव्ययपुरुष-शक्तिसमुल्लासे क्षरपुरुषविस्तारे प्रथमं वाङ्मयं स्वयम्भूमण्डलं प्रादुर्भवति। ऋगाद्यास्तस्य प्राणाः। ततः प्रसृत्य मुख्यप्रजापतौ सूर्ये प्रविशन्ति। अनुप्रविष्टाः वाग्रूपा वेदा ईश्वरनिःश्वसिता ईश्वरनिर्मिता वा शक्यन्ते वक्तुम्।

ऋगाद्याश्च सूर्यमण्डलसम्बन्धिन्यः, तथैवेमे एव गायत्रीमातृका वेदा उच्यन्ते, गायत्र्याः सूर्यमण्डलशक्तिरूपतया श्रूयमाणत्वात्। तदनु सौरे जगति समुत्पद्यमानेषु पदार्थेषु अनुप्रविष्टा वाक् ऋगाद्याश्च ऋषिकृताः,

प्राणभूतानामृषीणामेव वाचः, ऋषीणामेव प्रथमाविर्भूतत्वात्" इति। परं सर्वमिदं कल्पनामात्रम्; निर्विशेषब्रह्मव्यतिरिक्तस्य सर्वस्यैव कार्यत्वेन भवदभिमतापौरुषेयत्वासम्भवात् 'एवमेवाद्वितीयमि'त्यादिश्रुतिविरोधाच्च। ब्रह्मान्तर्गतत्वेऽपि स्वगतभेदापत्त्या न विरोधपरिहारसम्भवः। जीवानामपि परमार्थतो ब्रह्मरूपतैवेति न तेन सद्वितीयतापत्तिः। न तथा प्रकृतितद्विकाराणां ब्रह्मणा मुख्याभेदस्तत्र, बाधसामानाधिकरण्यं 'योऽयं स्थाणुः पुमानेष' इति बाधेनैव अभेदव्यवहारात्।

न च उपनिषत्पुराणादिषु न वा तद्विचाररूपे ब्रह्मसूत्रे च तन्निर्णयः, तेषां ब्रह्मभिन्नत्वे कार्यत्वम्, अभिन्नत्वे चिद्रूपता, प्राणादीनामचिद्रूपतावर्णनविरोधश्च। इन्द्रियरूपाया वाचो वेदलक्षणायाश्च तदधिष्ठात्र्या वाग्देवताया व्यतिरिक्ताया वाचः सत्त्वे प्रमाणाभावाच्च। तस्या भूतभौतिकोपादानत्वम् आनन्त्यादिकञ्च निष्प्रमाणकमेव।

एवं स्वयम्भूमण्डल-तत्प्राणप्रतननादिकमपि काल्पनिकमेव। शालग्रामे विष्णुबुद्धिवत् सूर्ये त्रयीबुद्धिकरणस्य विधानात् 'असौ आदित्यो देवमधु, एतमेव दृष्ट्वा तृप्यन्ति' इत्यादिरीत्या त्रयीकर्मफलरूपत्वात् सूर्यस्य त्रयीविद्याश्रयत्वाच्च त्रयीमयत्वम्। यथा वेदविदुषां वेदमूर्तित्वव्यपदेशो यथा वा न्यायाधीशानां न्यायमूर्तित्वव्यपदेशः, तद्वत्।

एतेन मूलतत्त्वस्य विद्याकर्मात्मत्वमपि प्रत्याख्यातम्, 'मायिनं तु महेश्वरमि'ति रीत्या मायाविशिष्टस्यैव मूलत्वात्। न च मायाया एव कर्मरूपता; तस्या अतीन्द्रियत्वात्। न च कर्मणो मायोपादानकत्वेन मायायाः कर्मत्वम्; सर्वस्यैव तत्कार्यत्वेन मायायास्तत्तच्छब्दव्यपदेश्यत्वापातात्। एवं प्रसुप्तबलस्य रसस्य निर्विशेषत्वमपि नोपपद्यते, प्रसुप्तबलविशेषस्य सत्त्वेन तदयोगात्। तत्समसत्ताकत्वाभावेन तत्त्वे तु प्रबुद्धबलविशिष्टस्यापि तथात्वापातात्।

न चाऽव्ययपुरुषवाङ्मनःप्राणानां सद्भावः साधयितुं शक्यः; 'अप्राणो ह्यमनाः शुभ्रः' इति श्रुतिविरोधात् 'तन्मनोऽसृजत' 'स प्राणमसृजत' इत्यादिश्रुतिविरोधाच्च नहि तत्कार्यस्य तद्रात्मकत्वं सम्भवति।

न च प्रकाशक्रियोपादानाभावे अव्ययकारणत्वं नोपपद्यत इति वाच्यम्; प्रकाशक्रियावष्टम्भशीलसत्त्वादिगुणात्मप्रकृत्युपाधिकस्य परस्य तदुपपत्तेः। विशुद्धसत्त्वप्रधानमायोपाधिकस्य निमित्तत्वेन ज्ञातृत्वम्, तमःप्रधान-प्रकृत्युपाधिकस्य उपादानत्वम्; रजउपाधिकस्य उभयोपकारकत्वम्।

न च आधुनिकविज्ञानानिरूपणं प्राचीनभाष्यकाराणां सायणादीनां न्यूनतैवेति वाच्यम्; तेषां वेदव्याख्यानस्य वेदाङ्गादिप्रमाणपारतन्त्र्येण तददूषणात्। न च केवलं पारलौकिककर्म-तत्फलमेव तत्र विवृतम्; सूत्ररूपेण धर्मार्थकाममोक्षप्रसङ्गेन अपेक्षितस्य सर्वस्यैवार्थस्य वर्णनात्।

न च वैज्ञानिकार्थावर्णनं दोषः; सर्ववैज्ञानिकतत्त्वानाम् आधुनिक-वैज्ञानिकव्याख्याकारैरपि वर्णयितुमशक्यत्वात्। नहि विविधान्याधु-निकानि यन्त्राणि शस्त्रास्त्राणि तत्सिद्धान्तास्तन्निर्माण-सञ्चालनप्रकारा वा कैश्चिदपि वेदार्थतया व्याख्यातुं शक्यन्ते। न च तावताऽपि 'भूतं भवद् भविष्यच्च सर्वं वेदात् प्रसिद्ध्यती'ति विरोधः; एकस्मिन् विज्ञाते सर्व-मिदं विज्ञातं भवतीतिवत् तात्त्विक धर्मा-ऽर्थ-काम-मोक्ष-तदुपायप्रसिद्धेरेव तदर्थत्वात्। सर्वविद्यास्थानमूलत्वेनैव भूतादिसर्वतत्त्वबोधकत्वमेव वेदेन वेद्यते, न प्रातिस्विकस्वरूपभेदादिकम्।

किञ्च—भाविनि काले वर्तमानविज्ञानविरुद्धस्यापि विज्ञानस्य आवि-र्भावः संभवति, इदानीं यावदुत्तरोत्तराभिनवविज्ञानानां प्रादुर्भावदर्शनात्। तथा च तैस्तैः संस्कारैर्वेदार्थकरणे अनवस्थैव स्यात्। तत एव लोकमान्य-तिलकमहोदयैः तादात्विकसंस्कारसाहकार्येणैव भौतिक-सामाजिक-राज-नीतिककार्यकौशलाख्ये कर्मयोग एव गीतायास्तात्पर्यं निर्धारितम्।

कैश्चित्तु यन्त्रचक्रान्दोलन ( चर्खा-आन्दोलन )-संस्कारेण—

'एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः।'

इति गीतावाक्यस्य नवीनोऽर्थो दृष्टः।

कैश्चित् पाश्चात्त्यैश्च ब्राह्मण-सूत्र-मीमांसा-निरुक्त-व्याकरण-कोश-पुराणेतिहासादिसंस्कारत्यागेन वर्तमान-'भाषाविज्ञान'शास्त्रेणैव वास्त-विक वेदार्थज्ञानसंभवोऽभ्युपगम्यते।

वस्तुतस्तु—'स्वाध्यायोऽध्येतव्यः' इति विधिना सार्थस्यैव स्वाध्यायपदवाच्य-वेदराशेः अध्ययनविधानात् तदर्थमेव पूर्वोत्तरमीमांसात्मकस्य वाक्यशास्त्रस्य प्रवृत्तेश्च आचार्यपारम्पर्येणैव वेदस्वरूपग्रहणवद् वेदार्थस्यापि ग्रहणौचित्यम्। यद्यपीदानीं पारम्पर्यविलोप इव दृश्यते; तथापि वशिष्ठ-मनु-व्यास-जैमिनि-कुमारिल-शङ्कर-मण्डन-पद्मपाद-तोटक-हस्तामलक-वाचस्पति-सायणादिभिः पारम्पर्येणैव वेदांस्तदर्थांश्च अधिगत्यैव तदर्थसम्बन्धे किञ्चिदुदितं लिखितं वा। अतो मन्त्राणां ब्राह्मणानां श्रौतसूत्राणां पूर्वोत्तरमीमांसासूत्राणां यागोपासनादिपद्धतीनाञ्च अनुष्ठानपारम्पर्याणाञ्च एकरूप्येण संगतिर्भवति। व्याकरण कोशादिबलेनैव अर्थकरणे तु शतधा सहस्रधा विरुद्धा अपि पण्डितप्रकाण्डैरनेके विस्मापका अर्थाः कर्तुं शक्यन्त एव।

यदुक्तम्—"तदानीं भौतिकविज्ञानस्य अनाविर्भूतत्वाद् वैज्ञानिकेऽर्थे तेषां भाष्यकाराणां दृष्टिर्न गता, इदानीन्तनानां विज्ञानसंस्कृतत्वात् वैज्ञानिकार्थाविष्कारः संभवतो"ति। तन्न; तथात्वे वेदस्य आधुनिकविज्ञानैरेव गतार्थत्वात् अनुपादेयत्वापत्तेः। किञ्च—यदि संशय-विपर्ययानास्कन्दितं यथार्थज्ञानमेव विज्ञानं तदा तु सायणादिभाष्यमपि विज्ञान बोधकमेव भाष्यमिति वक्तुं शक्यत एव।

यदप्युक्तम्—"विभिन्नं वस्तुजातमखिलश्लीकृत्य मूलान्वेषणक्रमेण एकत्वपर्यन्तं गतिर्ज्ञानम्, एकं तत्त्वं निरूढं मत्वा क्रमेण तस्य अनन्तरूपताप्रतिपत्तिर्विज्ञानम्, विशिष्य ज्ञानं हि विज्ञानम्, विविधं ज्ञानं विभेदेन ज्ञानं वा विज्ञानमिति प्रत्यक्षे प्रत्यक्षायिते वा स्फुटे प्रतिभासे विज्ञानशब्दः प्रवर्तते। 'मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः' इति कोषादि"ति। तदंशत एव सत्यम्; मोक्षहेतुज्ञानेऽपि विज्ञानशब्दप्रयोगदर्शनात्। अत एव 'विज्ञानं शिल्पशास्त्रयोरि'त्यपि नैकान्तिकम्, किन्तु प्रायिकमेव।

'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः।'

इति बृहदारण्यके मोक्षहेतौ विज्ञानशब्दप्रयोगदर्शनात्। अन्यत्राप्युक्तम्—

'अविज्ञातं विजानतां विज्ञातमविजानताम् ।' ( केनोपनिषद् )

'एवं मुनेविर्जानत आत्मा भवति गौतम ।' ( काठके )

'विज्ञातारमरे केन विजानीयात् ।'

'तद्विज्ञानेन परिपश्यन्ति धीराः ।'

'वेदान्त-विज्ञान-सुनिश्चितार्थाः ।' ( इति मुण्डके )

'आनन्दो ब्रह्मेति व्यजानात् । ( तैत्तिरीयके )

'तद्धास्य विजज्ञाविति विजज्ञाविति ।' ( छान्दोग्ये )

'भूमानं भगवो विजिज्ञासे ।'

सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमनुविद्य विजानाति ।'

'विज्ञातारमरे केन विजानीयात् ।' ( बृहदारण्यके )

यथा 'सत्यं ज्ञानमि'ति ज्ञानपदं ब्रह्मपरम्, तथैव 'विज्ञानमानन्दं ब्रह्मे'ति विज्ञानपदमपि ब्रह्मपरम् ।

'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते ।'

'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।' ( बृहदारण्यके )

'तयैतन्मोह्यते विश्वं सैव विश्वं प्रसूयते ।

सा याचिता च विज्ञानं तुष्टा ऋद्धिं प्रयच्छति ॥' (सप्तशतौ)

'विबुद्ध्य भक्त्यैव कथोपनीतया प्रपेदिरेऽञ्जोच्युत ते गतिं पराम्' इति च । विबोधो विज्ञानमित्यनर्थान्तरम् ।

वस्तुतस्तु—ब्रह्मसाक्षात्कारस्य अपरोक्षरूपत्वात् ब्रह्मज्ञानं प्रत्यक्षज्ञानमेव । तेन तत्र तत्र विज्ञानशब्दप्रयोग एव । अत एव 'ज्ञानं तेऽहं सविज्ञानम्' इत्यत्र ज्ञानपदेन शास्त्रार्थज्ञानं विज्ञानशब्देनअपरोक्षज्ञानमेव विवक्षितम् । तेनैव 'तमेव विदित्वा', ऋते ज्ञानान्न मुक्तिः' इत्यादौ तु ज्ञानशब्देनैव अपरोक्षज्ञानं विवक्षितम्, तस्यैव मोक्षहेतुत्वात् ।

अत एव श्रीशङ्कराचार्यप्रभृतिभिः विज्ञानसहितमित्यस्य अनुभवयुक्तमिति विवरणं कृतम् ।

'नवैकादश पञ्च त्रीन् भावान् भूतेषु येन वै ।

ईक्षेताथैकमप्येषु तज्ज्ञानं मम निश्चितम् ॥'

एतदेव हि विज्ञानं न तथैकेन येन तत् ।
स्थित्युत्पत्त्यप्ययान् पश्येद्भावानां त्रिगुणात्मनाम् ॥'

इति भागवत-वचनानामपि श्रीधरस्वामिभिः भेदनिरसनपूर्वकमेकत्व-दर्शनमेव विज्ञानमित्यर्थ उक्तः । तथा हि—यत् यदा एकेनानुगतान् एकात्मकान् भावान् पूर्वमैक्षत, ते तथा पूर्ववन्न पश्येत् । तदेकं परमकारणं ब्रह्मैव । तदा एतदेव विज्ञानमुच्यते । स्थित्युत्पत्त्ययानित्यत्वेन तदुत्पत्त्यादिमत्त्वेन तदनन्यत्वं समर्थ्यते, तेन नैकवाक्यताऽपि च्छिद्यते, न वाऽध्याहारादिकम्, सिद्धस्यैव स्फुटीकरणात् ।

न चैवं 'ज्ञानं तेऽहं सविज्ञानमि'ति विज्ञानस्य अप्रधानतादर्शनं विरुद्ध्येत इति वाच्यम्; 'यज्ञेन विविदिषन्ति' इत्यादौ शाब्दन्यायेन प्रत्ययार्थस्य प्राधान्येऽपि तेनापि ईप्सिततमत्वेन इष्यमाणवेदनस्य प्राधान्यवत् ज्ञानस्याप्राधान्येऽपि तत्साध्यत्वेन तत्प्राधान्यविरोधात् ।

वेदान्तिनये महावाक्यादिभिः शब्दैरेव अपरोक्षता भवति । मननादिभिस्तु प्रतिबन्धनिवृत्तिरेव । तदुक्तं संक्षेपशारीरके—

'पुरुषापराधमलिना धिषणा निरवद्यचक्षुरुदयापि यथा ।
न फलाय भक्तुं विषया भवति, श्रुतिसंभवापि तु तथात्मनिधीः ॥
पुरुषापराधविनिवृत्तिफलः सकलो विचार इति वेदविदः ।
पुरुषापराधविगमे तु पुनः'........................॥' इति ।

ज्ञानं विज्ञानमिति परोक्षापरोक्षभेदेन ज्ञानद्वैविध्योक्तिरपि न विरुद्ध्यते । प्रसङ्गानुसारेण विज्ञानशब्दस्यार्थो यज्ञादिविविधज्ञानमपि न विरुद्ध्यते । अपरोक्षज्ञानाभिप्रायेण लौकिकविद्यास्वपि विज्ञानपदप्रयोगे न विरोधः अपरोक्षप्रतिभासत्वस्य सर्वानुगतत्वात् । परोक्षरूपासु विद्यासु तु ज्ञानवैविध्याभिप्रायेणैव विज्ञानपदप्रयोगोऽस्तु । हर्यादिशब्दवद् अनेकार्थताङ्गीकारस्यापि अदोषत्वात् ।

ननु अनेकार्थतास्वीकारस्य मीमांसकैः कदर्थितत्वाद् विज्ञानशब्दस्य क्रमिको विकास एव सिद्ध्यतीति चेन्न । 'औत्पत्तिकस्त्वर्थस्य शब्देन सम्बन्ध' इत्यादिसूत्रे शब्दार्थतत्सम्बन्धानान् औत्पत्तिकत्वाभ्युपगन्तृभिः मीमांसकैः विकासस्य नितरां निरस्तत्वात् ।

अध्यारोपस्य विज्ञानार्थत्वे तेनैव मोक्षः सिद्ध्येत्, पूर्वोदाहृतश्रुतिषु विज्ञानस्य मोक्षहेतुत्वश्रवणात् । तस्मात् अध्यारोपापवादसिद्ध-मोक्षहेतुभूत-निर्विशेषतत्त्वप्रतिभासेऽपि विज्ञानशब्दो अकामेनाप्यभ्यु-पेतव्यः सत्यनेकार्थत्वे विज्ञानशब्दस्य तत्तदाचार्याणां विविधोक्तयोऽपि समञ्जसा भवन्ति ।

निदर्शित-श्रुतिषु निर्विशेष-ब्रह्मसाक्षात्कारे निर्विशेषे ब्रह्मणि च विज्ञानशब्दप्रयोगः प्रदर्शित एवेति तदन्यप्रमाणानि तदनुसारेणैव नेयानि । अत एव बौद्धैः ज्ञानसामान्य एव विज्ञानशब्दः प्रयुज्यते । तावतैव ते विज्ञानवादिन उच्यन्ते । जैनैस्तु अपरोक्षात्मक-सर्वज्ञज्ञानमपि ज्ञान-शब्देनैव व्यवह्रियते ।

'ज्ञायते विद्यतेऽस्मादिति ज्ञानम्, पिता' इति मेदिनी ।

'ज्ञातेयं ज्ञातृत्वम्'—इत्यमरः ।

'विज्ञान—ज्ञान । जानकारी । बुद्धि । प्रतिभा । विवेक । निपु-णता । पटुता । लौकिक ज्ञान । काम-धन्धा । व्यवसाय । सङ्गीत ।'—इति संस्कृतशब्दार्थकौस्तुभः ।

'विवेकविज्ञाने । शास्त्राचार्योपदेशजे, साक्षान्मोक्षफले, आत्म-निश्चये । तत्त्वज्ञाने । शास्त्रे । मोक्षफलिकायां धियि । जीवेश्वरजगद्भेद-भ्रमाधिष्ठानभूते, नित्यस्वप्रकाशे, सच्चिदानन्दरूपाद्वितीये, परमार्थसत्ये । आत्मानात्मसर्वपदार्थावबोधे । विज्ञानं ज्ञानकर्मणोरिति मेदिनी । विज्ञानं कार्मणे ज्ञाने, इति हेमचन्द्रः । संशयविपर्ययरहिते ज्ञाने । चिच्छक्तौ । विज्ञप्तिरूपे ब्रह्मणि । अपरोक्षे ज्ञानफले । ब्रह्मात्म्यैका-नुभवे । विज्ञप्तौ । यज्ञादिधर्मकौशले । विवेकबुद्धौ । उपासने । शास्त्रार्थ-विषयज्ञाने । शिल्पबुद्धौ । शिल्पकर्मणि ।'—इति शब्दार्थचिन्तामणिः ।

"ज्ञानं विशेषेण सामान्येन चावबोधः । 'मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः' इत्यमरः ( १. ५. ६ ) । अस्यार्थः—मोक्षे शिल्पे शास्त्रे च या धीः सा ज्ञानं विज्ञानञ्चोच्यते । एषा विशेषप्रवृत्तिः । अन्यत्र घटपटादौ या धीः साऽपि ज्ञानं विज्ञानञ्चोच्यते । एषा सामान्या प्रवृत्तिः । मोक्षे धीर्ज्ञानं विज्ञानञ्च, यथा—ज्ञानान्मुक्तिः । 'सा याचिता

च विज्ञानं तुष्टा ऋद्धिं प्रयच्छति' । अन्यत्र यथा—'ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरे' इति । घटत्वप्रकारकज्ञानमिति केचित् । 'ये केचित् प्राणिनो लोके सर्वे विज्ञानिनो मताः' इति ।'—इति शब्दकल्पद्रुमः ।

'चतुर्दशानां विद्यानां धारणं हिं यथार्थतः ।
विज्ञानमितरं विद्याद्येन धर्मो विवर्धते ॥
अधीत्य विधिवद्विद्यामर्थञ्चैवोपलभ्य तु ।
धर्मकार्यान्निवृत्तश्चेन्न तद्विज्ञानमिष्यते ॥
यथा सदेवो भगवान् विद्यते यत्र विद्यते ।
साक्षादेव महादेवस्तज्ज्ञानमिति कीर्तितम् ॥'

—इति कौर्मे उपविभागे १४ अध्याये ।

भौतिकविज्ञानवादिभिस्तु प्रमाणैर्ज्ञातस्य युक्तिभिः परीक्षितस्य प्रयोगेणानुभव एव विज्ञानं मन्यते । न च वैदिकविज्ञानवादिनां प्राण-वागादयः प्रयोगेणानुभवितुं शक्यन्ते, शब्दप्रमाणायत्तत्वात्तद्विज्ञानस्य ।

"यत जूः इति शब्दाभ्यां 'इलेक्ट्रोन-प्रोट्रोन' इति वैज्ञानिकप्रसिद्धे तत्त्वे गृह्यते" इति कथनन्तु परानुकरणमेव ।

किञ्च—प्रत्यक्षं प्रत्यक्षायितं वा ज्ञानमेव विज्ञानमिति रीत्याऽपि वैदिकार्थज्ञानस्य न विज्ञानपदव्यपदेश्यत्वं संभवति, धर्मादितत्त्वस्य शब्दैकसमधिगम्यत्वेन अपरोक्षत्वासंभवात् । वेदस्य दृष्टार्थपरत्ववर्णनं तु भट्टपादैर्बहुधा खण्डितमेव—

'लोकायतिकमूर्खाणां नैवान्यत् कर्म विद्यते ।
यावत्किञ्चिददृष्टार्थं तद् दृष्टार्थं हि कुर्वते ॥
वैदिकान्यपि कर्माणि दृष्टार्थान्येव ते विदुः ।
अल्पेनापि निमित्तेन विरोधं योजयन्ति च ॥
तेभ्यश्चेत् प्रसरो नाम दत्तो मीमांसकैः क्वचित् ।
न च कञ्चन मुञ्चेयुर्धर्ममार्गं हि ते तदा ॥
प्रसरं न लभन्ते हि यावत् क्वचन मर्कटाः ।
नाभिद्रवन्ति ते तावत्पिशाचा वा स्वगोचरे ॥

कच्चिद् दत्तेऽवकाशे हि स्वोत्प्रेक्षालब्धजन्मभिः।
जीवितुं लभते कस्तैस्तन्मार्गपतितः स्वयम्॥
तस्माल्लोकायतस्थानां धर्मनाशनशालिनाम्।
एवं मीमांसकैः कार्यं न मनोरथपूरणम्॥' इति।

नास्तिकतानिराकरणायैव भट्टपादानां मुख्यः प्रयत्न आसीत्। यथा—

'प्रायेणैव हि मीमांसा लोके लोकायतीकृता।
तामास्तिकपथे कर्तुमयं यत्नो मया कृतः॥ इति।

यदुक्तम्—"वेदेषु विज्ञानसारैव शैली दृश्यते, एकस्मात् मूलात् परस्परायत्त-विलक्षणपदार्थघटितस्य उत्पत्तिः बहुधा प्रपञ्चिता। तत्त-द्वस्तुधर्माश्च करतलामलकवद्विस्पष्टं ग्राहिताः। तस्माद्वैदिकं सर्वमपि विज्ञानम् आत्मविज्ञानं ब्रह्मविज्ञानं धर्मविज्ञानं विज्ञानशब्देनैव उपदेष्टुमर्हम्" इत्यादि। तत्सत्यम्; विस्पष्टताऽभिप्रायेण तथात्वेऽपि धर्मा-ऽपूर्व-स्वर्गाद्यतीन्द्रियाणां पदार्थानां शास्त्रैकसमधिगम्यत्वेन करतल-गतामलकवत् अपरोक्षत्वासंभवस्य उक्तत्वात्। मोक्षहेतुज्ञानस्यापि वैदिकत्वेन तस्य च भवदुक्तरीत्या विज्ञान-पदव्यपदेश्यत्वाभावाच्च। धर्मब्रह्मात्मकस्य वेदार्थस्य महता समारम्भेण वशिष्ठ-मनु-व्यास-जैमिनि-शबर-शङ्कर-सायणादिभिः विवरणं कृतमेव। तेन तद्गौरवमपि स्फुटमेव।

न चातीन्द्रियाणां पदार्थानामपि प्रत्यक्षतोपपादनमेव गौरवम्; तस्य भ्रमरूपत्वात्। शास्त्रतात्पर्यविदां शबरस्वामिनां कुमारिलभट्ट-पादानां च वेदादिसकलशास्त्रपाण्डित्यप्राखर्यमपि तद्ग्रन्थपरिशीलिना-मतिरोहितमेव। परोक्षेऽर्थे कर्मोपासनादावपि उपपत्तयोऽपेक्ष्यन्ते। न च तावताऽपि तेषामपरोक्षता संभवति; चोदनैकसमधिगम्यत्वविरोधात्। अत एव कर्मोपासनादौ श्रद्धाया एव प्राधान्यम्। 'श्रुतौ श्रद्धां बद्ध्वा कृतपरिकरः' इत्याद्युक्तेः। स्वस्वाभिमतेऽर्थे युक्तयो बौद्धार्हतादयो-ऽप्युपस्थापयन्त्येव, स्व-स्वशास्त्राणां सर्वार्थप्रतिपादकत्वाभ्युपगमात्। विज्ञान-पदप्रसिद्धार्थस्य पदार्थविज्ञानस्य मन्त्रेषु सङ्केतरूपेण ब्राह्मणेषु विवृततया वर्णनन्तु न विरुद्ध्यते। 'अग्निर्हिमस्य भेषजम्' इत्यादिरीत्या

मानान्तरसिद्धार्थस्यापि धर्मब्रह्मपर्यवसायिभिः मन्त्रब्राह्मणैर्व्याजेन वर्णनसंभवात् । तथापि वैज्ञानिका यथा यन्त्रादिसाहाय्येन तत्तद्-पदार्थान् प्रयोगेण परिचिन्वन्ति, न तथा वैदिकविज्ञानवादिभिरापरो-क्ष्येण ते ते गुणधर्मा निश्चेतुं शक्यन्ते । उपपत्तियुक्तैरपि शब्दैः सञ्जातं ज्ञानं परोक्षमेव तिष्ठति । अत एव लौकिकमनो-वाक्-प्राणादि-व्यतिरिक्तानां जगन्मूलभूतत्वेनाभिमतानां मनोवाक्प्राणादीनां तद्विशे-षाणां वैज्ञानिकपदार्थत्वेनाभिमतानां वेदानां तद्विशेषाणामृगादीनाञ्च न वैज्ञानिकार्थवदपरोक्षता संपादयितुं शक्यते । प्राचीनभाष्यकारैस्तु मन्त्रार्थवादाद्यनुरोधेन नानाविधलौकिका-ऽलौकिक-यौक्तिक-शाब्दिकार्थ-जातं विवृण्वद्भिरपि धर्मज्ञानस्यापरोक्षता नोच्यते । ब्रह्मणस्तु साक्षादप-रोक्षप्रत्यगभेदेन तज्ज्ञानस्य अपरोक्षता उच्यते । अत एव ब्रह्मसम्बन्धे 'मन्तव्यश्चोपपत्तिभिरि'त्युक्तम् । धर्मस्य भव्यत्वाद् ब्रह्मणश्च भूतत्वा-दुभयोर्वैलक्षण्यमिष्टमेव ।

यत्तूक्तम्—"अग्निमीळे पुरोहितमि'ति मन्त्रे पार्थिवोऽग्निः स्तूयते, न वैद्युत-सौरा-ऽन्तरिक्ष्य-दिव्याग्निः, पुरोहितमिति विशेषणात् पुरः-स्थितस्यैव अग्नेर्ग्रहणात्" इति । तदपि न रमणीयम्; प्रसिद्धार्थत्यागे मानाभावात् । लोकेषु येष्वर्थेषु ये शब्दाः प्रसिद्धाः, वेदेऽपि तेषां शब्दानां त एवार्था इति मीमांसकसिद्धान्तात् । अग्निम् पुरोहितं यज्ञस्य देव-मृत्विजं होतारमित्येते सर्वेऽपि शब्दाः प्रसिद्धार्थकाः, तेन तदनुरोधे-नैव सायणोक्तोऽर्थः । यथा—

'अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ।'

भाष्यम्—अग्निम् अग्निनामकं देवम् । ईडे स्तौमि । मन्त्रस्य होत्रा-प्रयोज्यत्वात् होतैवात्र स्तोता । कीदृशमग्निम् ? पुरोहितम् । यथा राज्ञः पुरोहितस्तदभीष्टं सम्पादयति, तथाऽग्निरपि यज्ञस्यापेक्षितं होमं सम्पादयति ।

एवं प्रथमं प्रसिद्धार्थानुरोधेन पुरोहितशब्दं व्याख्याय यौगिकार्था-नुरोधेनाऽऽह—यद्वा पुरः यज्ञस्य सम्बन्धिनि पूर्वभागे आहवनीयाग्नि-

रूपेण हितं स्थितं पुरोहितम्। यज्ञपदसन्निधानाद् आहवनीयोऽग्निः पुरोहित इति श्लिष्टोऽर्थः। 'पार्थिवोऽग्निः पुरोहित' इति तु वैज्ञानिकार्थलापनार्था क्लिष्टकल्पनैव, तस्य पुरोहितत्वाननुभवात्, यज्ञासम्बन्धत्वाच्च। यज्ञस्यापि प्रसिद्ध-यज्ञव्यतिरिक्तार्थकल्पनमपि कल्पनमेव। किञ्च—यथा शालग्रामरूपेण पुरःस्थितस्यापि विष्णोः स्तवो न शालग्रामपाषाणमात्रस्य स्तवः, किन्तु सर्वकल्याणगुणाकरस्य सर्वेश्वरस्य विष्णोरेव स्तवः, तथैव अग्निनामकस्य देवस्य आहवनीयाग्निरूपेण वा पुरःस्थितस्य संस्कृताग्नेः संस्तवेन पार्थिव-वैद्युत-दिव्याग्न्यादिरूपेण व्यापकस्य पञ्चीकृतस्य अपञ्चीकृतस्य च मूलतेजसस्तदभिमानिनो देवस्य तदन्तर्यामिणश्च संस्तवो भवत्येव।

पुनः कीदृशम्? देवम्=दानादिगुण युक्तम्। पुनः कीदृशम्? होतारम् ऋत्विजम्। देवानां यज्ञेषु होतृनामक ऋत्विक् अग्निरेव। तथा च श्रूयते—'अग्निर्वै देवानां होता' (ऐ० ब्रा० ३-१४)। पुनः कीदृशम्? रत्नधातमम्, यागफलरूपाणां रत्नानामतिशयेन धारयितारं पोषयितारम्।

यास्केन अग्निशब्दस्य बहुधा निर्वचनं कृतमेव—'अथातोऽनुक्रमिष्यमाणोऽग्निः पृथ्वीस्थानस्तं प्रथमं व्याख्यास्यामः। अग्निः कस्मात् अग्रणीर्भवति? अग्रम्, यज्ञेषु प्रणीयतेऽङ्गं नयति''''इत्यादिना (नि० ७।१४)।

पृथ्वीलोके' स्थितोऽग्निः व्याख्यायते। कस्मात् प्रवृत्तिनिमित्ताद् देवताऽभिधीयते इति प्रश्नस्य अग्रणीः इत्यादिकमुत्तरम्। देवसेनामग्रे नयतीत्यग्रणीः, 'अग्निर्देवानां सेनानीः' इति ब्राह्मणम्। 'अग्निमुखं प्रथमो देवतानाम् (ऐ० ब्रा० १.४), 'अग्निर्वै देवानामवमः' (ऐ० ब्रा० १.१।)

वाजसनेयिनस्तु—'स वा एषोऽग्रे देवतानामजायत। तस्मादग्निर्नाम यज्ञेषु अग्निहोत्रेष्टिपशुसोमरूपेषु अग्रं पूर्वदिग्वर्त्याहवनीयदेशं प्रति गार्हपत्यात् प्रणीयते इति द्वितीयं प्रवृत्तिनिमित्तम्। सन्नममानः सम्यक् स्वयमेव प्रह्वीभवन् अङ्कं स्वकीयं शरीरं नयति काष्ठदाहे हविष्पाके प्रेरयतीति तृतीयं प्रवृत्तिनिमित्तम्।

एवं न क्नोपयति, न स्नेहयति, किन्तु काष्ठादिकं रूक्षयतीत्यभिः। एवम् इतः इण् गतौ, अक्तः अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, दग्धः दह भस्मीकरणे, नीतः णीञ् प्रापणे। तथा च अग्निशब्द एति-धातोरुत्पन्नात् अयनाद् अकारमादत्ते। अनक्तिगतं ककारम्, तस्य गादेशं कृत्वाऽऽदत्ते। यद्वा—दहतेर्दग्धरूपाद् गकारमादत्ते। नीञ्धातुर्ह्रस्वो भूत्वा परो भवति। एवं धातुत्रयं मिलित्वा अग्निशब्दो भवति। तथा च यज्ञभूमिं गत्वा स्वकीयमङ्गं नयति, काष्ठदाहे हविष्पाके च प्रेरयतीति समुदायार्थः।

पुरोहितशब्दस्यापि 'यद्वापिः शं तनवे पुरोहित' इति मन्त्ररीत्या भाष्यार्थ एव समर्थ्यते। तैत्तिरीयाश्च पौरोहित्ये स्पर्धमानस्य पश्वनुष्ठानं विधाय तत्फलत्वेन पुर एनं दधते इत्यामनन्ति।

देवशब्दस्यापि निरुक्तकारेण अनेकधा अर्थो बोधितः। देवशब्दो दान-दीपन-द्योतनानामन्यतमम् अर्थमाचष्टे।

यद्यपि अग्निः पृथिवीस्थानः; तथापि देवानां हविर्वहनाद् द्युस्थानो भवति। होतृशब्दस्य देवानामाह्वाता अर्थः। जुहोतेर्निष्पन्नत्वे तु होमाधिकरणत्वेन होतृत्वम्। तदेवं मन्त्र-ब्राह्मण-सूत्र-यास्कस्थौलष्ठीविशाकपूण्यादि-विविध-निरुक्तकार-पाणिन्यादि-व्याकरणपारम्पर्याश्रयेणैव सायणभाष्यं प्रवृत्तम्। तेन वेदाक्षरग्रहणवत् वेदार्थस्यापि पारम्पर्येण ग्रहणं युक्तम्। पारम्पर्यानुसार्येव सायणभाष्यम्, तत्रैव सर्वसामञ्जस्यञ्च।

यदुक्तम्—'वेदार्थसम्प्रदायलोपेन' वैज्ञानिकार्थविलोप' इति। तदपि न; वेदाक्षरसम्प्रदायाविलोपस्येव वेदार्थसम्प्रदायस्याप्यविलोपापत्तेः। 'व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम्। श्रीशङ्कराचार्यम्...' इत्यादि पारम्पर्योपलब्धेश्च। एवं जैमिनि-शबर-कुमारिलादिक्रमेणापि वेदार्थसम्प्रदायोऽक्षुण्ण' एवासीत्। याज्ञिकपद्धतयस्तदनुसारीणि कर्मानुष्ठानानि चाद्यापि प्रचलन्ति। तेन परम्पराप्राप्त एवार्थः सायणादिभिर्वर्णितः।

यदुक्तम्—'सर्वत्रावस्थितोऽग्निः किं करोतीति आह—देवमिति द्वितीयेन विशेषणेन। नैकान्ततः सत्तां जहाति, तदिदं सर्वं यज्ञकर्तृ स्वीयानां भावानामन्यत्रार्पणम्। अन्यतश्च भावानाम् आपानम्' इतीयम्

आदान-प्रदानप्रक्रिया यज्ञः। यथा प्रदीपः प्रकाशं सर्वत्रार्पयति तैलावयवांश्च अजस्रमुपादत्ते, वृक्षलताः पुष्पफलानि ददति, पृथिव्या अपाञ्च रसमजस्रमाददते, प्राणिन आहारमाददते, मलं बलञ्च तत्र तत्र प्रयोजयन्तीति सुस्फुटं सर्वत्रानुभूयते। सूक्ष्मया दृशा सोऽयमादान-प्रदानापरपर्यायः अन्नाऽन्नादभाव एव प्राकृतो यज्ञ उच्यते। स चाग्नि-साध्य इत्यग्निरेव यज्ञदेवः। अग्नौ सोमाहुतिरेव यज्ञसम्पादिका। अनेन यज्ञेन सर्वेषामुत्पत्तिः स्थितिश्च, प्राणिनामङ्गपोषो वृक्षादीनां पर्ण-पुष्पादिप्रसवश्च सर्वोऽग्नियज्ञसाध्य" इति।

तदत्रोच्यते—कामं बृहदारण्यकोक्त-मधुब्राह्मणेन सर्वस्यैव प्रपञ्चस्य परस्परोपकार्योपकारकभाव उक्तः। यथा— 'इयं पृथिवी सर्वेषां भूतानां मधु, अस्यै पृथिव्यै सर्वाणि भूतानि मधु, यथैको मध्वयूपोऽनेकैर्मधुकरै-र्निर्वर्तित एवमेव पृथिवी सर्वैर्भूतैर्निर्वर्तिता, तथा सर्वाणि भूतान्यस्यै पृथिव्यै। पृथिव्या अस्या मधु कार्यम्' ( बृहदारण्यके )। एवमेव इमा आपः, अयमग्निः, अयं वायुः, अयमादित्यः, इमा दिशः, अयं चन्द्रः अयं स्तनयित्नुः, अयमाकाशः, अयं धर्मः, इदं सत्यम्, इदं मानुषम्, अयमात्मा इत्येवं परस्परोपकार्योपकारकभावेन आत्मप्रभव-प्रलयत्वमुक्तम्। तत एव प्रतिपर्यायं 'यश्चायमस्मिन् पृथिव्याम् अप्सु आत्मनि तेजोमयोऽमृतमयः पुरुषः, यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदञ्च सर्वम्। अन्ते स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा। तद्यथा—रथनाभौ रथनेमौ चाराः समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि, सर्वे देवाः, सर्वे लोकाः, सर्वे प्राणाः, सर्व एत आत्मानः सम-र्पिताः' इति परिशिष्टस्य विज्ञानमयस्य परमात्मभावमुक्त्वा तत्रैव सर्वार्पितत्वञ्च उक्त्वा तस्यैव सर्वाधिष्ठानत्वेन सर्वपालकत्वं सर्वात्म-त्वञ्च विशदीकृतम्। तस्मिन्नेव च 'अहमन्नमहमन्नम्, अहमन्नादोऽह-मन्नादः' इत्यादिना सर्वात्मभावेन परस्यैव अन्नाऽन्नादभाव उक्तः।

एवं यज्ञसादृश्येन यज्ञारोपोऽपि तत्र तत्र दृश्यत एव। तेन आदान-प्रदानप्रक्रियायामपि यज्ञारोपः शक्यते कर्तुम्; तथापि स एव यज्ञशब्दार्थं

इति तु न युक्तम्। यज् देवपूजासङ्गतिकरणदानेषु इति धातोर्निष्पन्नस्य याज्ञिकैः परिभाषितस्य द्रव्यदेवतामयस्य संस्कृताग्न्यधिकरण-स्रुक्स्रुव-दर्व्यादिकरणका-ऽऽध्वर्यवाद्यृत्विक्साध्य - स्वर्गाद्युद्देश्यक-मन्त्रहविरादि-सम्पाद्यषडष्टादशादियागनिर्वर्त्यस्य कर्मविशेषस्यैव यज्ञपदव्यपदेश्यत्वात्। अत एव 'द्रव्यं देवता त्यागः' ( कात्या० १ अ० ) इति यागस्वरूपं निरूपितम्। देवतोद्देश्येन क्रियमाण-स्वस्वत्वनिवृत्त्यनुकूलो व्यापार एव यागः। तत्रापि तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोनुवाक्या-वन्तो यजतयो भवन्ति। उपविष्टहोमाः स्वाहाकारप्रदाना जुहो-तयः। स्वाभाविकाऽऽदान-प्रदानात्मकप्रक्रियाया एव यज्ञत्वे न सङ्गतिः, तस्याः स्वतःसिद्धत्वात् तद्विधानानुपपत्तेः, 'विधिरत्यन्तमप्राप्तौ' इति मीमांसकप्रसिद्धेश्च। ततदारोपेण ब्रह्मज्ञानेऽपि यज्ञत्वारोपः।

'ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्म कर्मसमाधिना॥'

अत्रापि अर्पणमिति स्रुगादिब्रह्मणेति ऋत्विङ्मन्त्रादिकं विवक्षितम्। अग्निहविरादिवर्णनं तु स्पष्टमेवोक्तम्। यस्मिन्नर्थे यः शब्दो लोके प्रसिद्धः, वेदेऽपि तस्मिन्नेवार्थे स ज्ञातव्य इतिरीत्या लोकप्रसिद्धयज्ञशब्दार्थो ग्राह्यः। मन्त्र-ब्राह्मण-सूत्रादिभिर्निरुक्तः पारिभाषिको वार्थो ग्राह्यः।

सर्वपदार्थजातं चिद्भिन्नं दृश्यमानमदृश्यमानं वा प्राकृतत्वादेव परिवर्तमानम्। परिवर्तमानञ्च नैकान्ततः सत्तां जहातीति निरन्वय-विनाशानभ्युपगन्तॄणां सांख्य-योग-वेदान्तिनामिष्टमेव, 'चलञ्च गुणवृत्तम्, क्षणपरिणामिनो हि भावा ऋते चितिशक्तेः' इत्यादिप्रसिद्धेः।

सत्त्वरजस्तमसामपि अङ्गाङ्गिभावतयैव कार्यकर्तृत्वप्रसिद्ध्या तदात्म-कानां प्राकृतभावानामपि तथात्वमुचितमेव। तस्मिन्नर्थे यज्ञत्वारोपोऽपि कर्तुं शक्यते। सत्यप्येवं विधिप्राप्ते एवारोपः फलवान्, निष्फलश्चावैधः। 'योषा वाव गौतमाग्निः' इत्यादिरूपेण पञ्चाग्निविद्यासु योषादिष्वग्नि-दृष्टिः पुरुषशुक्रादिषु हविर्दृष्टिश्च विहितत्वादेव सफला। 'तस्या वेदिरुपस्थो लोमानि बर्हिश्चर्माधिषवणे समिद्धो मध्यस्तौ मुष्कौ स यावान् वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति'

इत्यादिना मैथुनकर्मणि वाजपेयत्वसम्पादनमपि विधिबलादेव क्रियते। यथा प्रसिद्धस्य सिंहस्य शौर्यक्रौर्यादिगुणयोगेन अन्यत्रारोपेणैव सिंहत्वं व्यपदिश्यते, तथैव केनचिद्गुणयोगेन प्रसिद्धस्य यज्ञस्यैव अन्यत्र आरोपो भवति। प्रसिद्धयज्ञस्यैव दानादिगुणयुक्तोऽग्निरिज्यत्वेन देवः, यज्ञापेक्षित-होमसम्पादकत्वेन पुरोहितः, आहवनीयाग्निरूपेण वा पुरोहितः, देवानां यज्ञेषु होतृकर्मसम्पादकत्वेन च होता ऋत्विगित्याद्युक्तमेव।

किञ्च—विधिप्रयुक्ताया एवाग्नौ सोमाहुतेर्यज्ञत्वम्। परापचिकीर्षया तदन्नघृतादीनां वह्नौ निक्षेपस्य यज्ञपदार्थत्वाभावात्, क्षेत्रादिषु बीजादिनिक्षेपस्य यज्ञत्वेन अप्रसिद्धत्वाच्च। भौतिकपदार्थोत्पत्त्यादिषु तु सर्वेषां भूतानां प्राणात्मादीनामपि उपकारकत्वमस्त्येवेति कुतोऽग्निनैव सर्वेषामुत्पत्तिः? सर्वोत्पत्तिहेतुत्वेन अग्नेर्यथा देवत्वं तथैव अबादीनामपि देवत्वं भवत्येवेति कुतो वा विशिष्योक्तिः? प्रसिद्धे यज्ञे तु अग्निमुखेन सर्वैर्देवैः हविर्गृह्यते इति तस्य यज्ञस्य देवत्वं सम्भवतीति।

यदुक्तम्—"प्र मातुः प्रतरमि'ति मन्त्रेऽयमर्थः स्फुटः" इति। तदपि चिन्त्यम्; सायणादिभिस्तस्य अन्यथा व्याख्यातत्वात्। तथा हि—

'प्र मातुः प्रतरं गुह्यमिच्छन् कुमारो न वीरुधः सर्पदुर्वीः।
ससं नपक्वमविदच्छुचन्तं रिरिह्वांसं रिप उपस्थे अन्तः॥'

(ऋ० सं० १०.७९.३)

अत्रत्यं सायणभाष्यम्—आग्नेयं त्रैष्टुभम्, सौचीकगुणोऽग्निः ऋषिः, वैश्वानरगुणो वा। सप्तिर्नाम वाजम्भरपुत्रो वा ऋषिः। पूर्वं द्वाभ्यां मन्त्राभ्यामग्ने रूपगुणादिकं वर्णितम्। प्रथमेन मर्त्यासु विक्षु मनुष्यरूपासु प्रजासु तासां हृदये वैश्वानररूपेण अमर्त्यस्य दावाग्निरूपेण भूरिकाष्ठमरण्ये भक्षयन्त्यौ स्तोतारमसंखादन्त्यौ नानाहनू संभरतो महतोऽग्नेर्महत्त्वमुक्तम्। द्वितीयेन च तस्यैव वैशिष्ट्यमेवं वर्ण्यते। अस्याग्नेः शिरः मूर्धा गुहायां मनुष्योदरेषु वर्तते। तथा अक्षी अक्षिणी पृथक् चन्द्रसूर्यात्मना निहिते। ईदृशः असिन्वन् दन्तै रसं खादन्

जिह्वया वनान्यत्ति। अस्मै अध्वर्य्वादयः षड्भिः पादैरभिगम्य अन्नाणि हवींषि सम्भरन्ति। उत्तानहस्ता पात्रधारणार्थमुन्नतकराः नमस्यायुक्ताः। कुत्र ? अधिविक्षु प्रजासु ऋत्विक्षु वा। अयमग्निः मातुः पृथिव्याः सम्बन्धिनीः उर्वीं बह्वीः वीरुधः लता इच्छन् तथा प्रतरं प्रकृष्टतरं गुह्यं गोप्यं तासां वीरुधां मूलमपीच्छन् प्रसर्पत् प्रसरति। किमिव ? कुमारो न कुमार इव। स यथा स्तन्यं पातुं जानुभ्यां सर्पति तद्वत्। ससन्नपक्वं पक्वमन्नमिव शुचन्तं दीप्यमानं नीरसं वृक्षं रिपः पृथिव्याः उपस्थे अन्तः अविदत् विन्दति। पुनः कीदृशम् ? रिरिह्वांसम् आकाशमास्वादयन्तम्। यद्वा—मूलैर्मातरं पृथिवीं रिरिह्वांसमिति।

यदुक्तम्—"एकवाक्यतापेक्षया पक्वमन्नमिव शुचन्तं नहि संवृक्षमविदत् रिप उपस्थे अन्तः पृथिव्याः उत्सङ्गे रिरिह्वांसं रसमास्वादयन्तं चाविदत् इति पृथग्वाक्यत्वे ततोऽधिकं स्पष्टता स्यादि"ति। तदपि न; सकृदुच्चरितस्य अविददित्यस्यावृत्त्यापत्तेः। सम्भवन्त्यामेकवाक्यतायां वाक्यभेदस्य मीमांसकैर्दोषत्वाभ्युपगमात्। वाक्यभेदकल्पकश्चकारोऽपि न मन्त्रेऽस्ति। तेनाग्निः रिपः पृथिव्या उपस्थे अन्तः आकाशमास्वादयन्तं मूलैर्मातरं वाऽऽस्वादयन्तं शुचन्तं नीरसवृक्षमेव पक्वमन्नमिव विन्दतीत्येकमेव वाक्यमिदम्।

किञ्च—भवत्पक्षे रसमास्वादयन्तमित्यर्थे कृते वृक्षस्य शुष्कत्वोक्तिर्विरुद्ध्यते। 'आकाशमास्वादयन्तम्' इत्याकाशाध्याहारे तु नायं दोषः। अध्याहारमनादृत्यैव तु यद्वा मूलैर्मातरमित्युक्तं सायणेन। 'रसमास्वादयन्तमार्द्रं वृक्षं विन्दती'त्युक्तौ तस्याप्यध्याहारः कर्तव्यः। वीरुधः उर्वीरिति गतार्थता च।

यदप्युक्तम्—"वृक्षलतादिषु सिक्तमादित्यरश्मयः ऊर्ध्वमाकृषन्ति। तेन सहैव तज्जलसंसक्तः पार्थिवोऽग्निरूर्ध्वमाक्रमते। तदेतदग्नेरुत्सर्पणमृचः पूर्वस्मिन्नर्धे तस्यैतस्य वृक्षे चीयमानस्याग्नेरुपरितनो भागो वायुसंपर्काच्छुष्कतामापद्यते। अन्तस्तु प्रवहत्येव रसोऽजस्रम्" इति। तदपि न सङ्गतम्; प्रसर्पत् इत्यस्य उत्सर्पणार्थकल्पने मानाभावात्।

किञ्च—किमिच्छन्नूर्ध्वमुत्सर्पतीति न समाधानं सुशकम्। उर्वीः वीरुधस्तासां मूलञ्चेच्छतः प्रसर्पणन्तु उपपद्यत एवेति वृथैव सायणभाष्य-दूषणप्रवृत्तिः। तादृग्विज्ञानं तिष्ठतु, परं तदनेन मन्त्रेण सिद्ध्यतीति कथनं तु विदुषां न शोभते।

बौद्धैस्तु—प्रत्ययोपनिबन्धनिरूपणावसरे अन्यथैव अङ्कुरादिनिष्पत्ति-वृद्ध्यादिकं समर्थ्यते। यथोक्तं भामत्याम्—'पृथिवीधातुर्बीजस्य संग्रह-कृत्यं करोति, यतोऽङ्कुरः कठिनो भवति। अब्धातुर्बीजं स्नेहयति। तेजो-धातुर्बीजं परिपाचयति। वायुधातुर्बीजमभिनिर्हरति। ततोऽङ्कुरो बीजान्नि-र्गच्छति। आकाशधातुर्बीजस्य अनावरणकृत्यं करोति। ऋतुरपि बीजस्य परिणामं करोति। तदेतेषां समवाये सति बीजे रोहत्यङ्कुरो जायते, नान्यथा।' यथात्रद् रसास्वादने वृक्षोच्छोषणञ्च न भवत्येव। रस-मास्वादयन्तमार्द्रमेव वृक्षमुपरिष्टाच्छुचन्तं शुष्कं विन्दतीत्युक्तौ तु एक-वाक्यत्वमेवाऽऽयातम्। तथा क्लिष्टार्थकल्पनं निष्प्रयोजनम्।

यदुक्तम्—"त्वमिमा ओषधिरित्ति मन्त्रे जले सोमस्य प्राधान्यमिति स्पष्टीकृतमि"ति। तदपि न; ओषधीनामिव अपामपि सोमकर्तृकत्वोक्तेः। तथा हि—

'त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः।
त्वमा ततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ॥'

(ऋ० सं० १.९१.२२)

अत्र भाष्यम्—हे सोम त्वमिमा ओषधीः अजनयः। तथा तत्कारण-भूता अपः उत्पादितवानसि। त्वं गाः सर्वान्पशून् उदपादयः। उरु विस्ती-र्णम् अन्तरिक्षं त्वमाततन्थ विस्तारितवानसि। तस्मिन्नन्तरिक्षे यत् तमः दृष्टिनिरोधकं तमः तदपि त्वं ज्योतिषा स्वप्रकाशेन वि ववर्थ विवृतं विनष्टं कृतवानसीति।

यदुक्तम्—"पार्थिवेऽग्नौ सोमाहुतिरेव वृक्षोत्पत्तिहेतुरिति यज्ञस्य हेतुता सिद्धा। अनेन यज्ञेनैव वृक्षादीनामूर्ध्वं तिर्यक् च क्रमेण विस्तारः।

तिर्यग्रसप्रसार एव शाखापर्णादिजनकः। तस्यैव च रसस्य पर्णपुष्प-फलादिरूपेण परिणामः" इति।

तदपि न किञ्चित्; धरणिजलानिलादियोगेनैव बीजाद् वृक्षादीना-मुत्पत्तिप्रसिद्धेः। तत्र सति विधाने कस्मैचित् फलाय यज्ञत्वारोपोऽपि कर्तुं शक्यते। विधानाभावात्तु वृथैव तत्कल्पनम्। अत एव मन्त्रेषु न यज्ञत्वोक्तिर्दृश्यते। विहितानामेव चाग्नौ सोमप्रक्षेपादीनां यागत्वम्, न स्वरूपेण सताम्।

यदुक्तम्—'कस्य वृक्षलतादेः कियती प्रसृतिरूर्ध्वं तिर्यग्वेति सर्वमिदं मूले स्थितस्य प्राणस्याऽऽयत्तम्। सेयं मूलशक्तिरेव अस्यामृचि प्रतरं गुह्यमिति सङ्केतिता। प्रसरतः पार्थिवस्य रसस्य कृष्णवर्णताया आदित्यस्य च 'पिशङ्गं द्रापिं प्रतिमुञ्चते कविः' (ऋ० सं० ४.५३.२) इति पीतवर्णतायाः श्रुतत्वेन उभयोः संयोगाद्धरितं रूपं वृक्षपर्णादिषु उपलभ्यते। यदा तु यमेन प्रतिबद्धो रसे नोपसर्पति तदा केवलस्याऽऽदि-त्यस्य पीतमेव रूपं पर्णेषु प्रतिभासते। तदा मूलात् प्रवर्ग्यं प्राप्तोऽयमग्निः पृथगवस्थया पर्णादिषु स्थिरो भवति। एवमेव शुष्केष्वन्नेष्वपि भिन्नयैव अवस्थया अग्नेरवस्थितिः। ते उभे अप्यवस्थे पृथगृचि प्रतिपादिते—'अग्निर्वै शर्माण्यन्नानि प्रयच्छति' इति। ब्राह्मणेषु च विस्पष्टीकृतं विवरणमि"ति।

तदपि न क्षोदक्षमम्; तत्तत्सहकारिसापेक्ष-बीजशक्त्यनुसारेणैव वृक्षलतादीनां तिर्य्यगूर्ध्वादिप्रसरणोपपत्तौ प्राणायत्तत्वकल्पनाया अन्यथा-सिद्धत्वात्, निष्प्रमाणकत्वाच्च। अन्वयव्यतिरेकौ च तत्रैव सङ्गतौ। तथा हि—क्षीणाद्बीजादूष्यां भूमौ तत्तदुपचजलाद्यभावे अल्पप्रसरमङ्कु-रादिकं जायते। पुष्टाद्बीजादुर्वरायां भूमावुपचादिसाहचर्याद् बृहत्प्रसरत् तदुपलभ्यते।

किञ्च—अद्यत्वे तु विविधोपचजलविद्युदादिसमवधानेन स्वेच्छया तत्प्रसरादिकं सम्पाद्यते। यदि प्रजापतिशक्तिरपि तदनुविधायिन्येव तर्हि कृतं वराक्या तया, तैरेव तदुपपत्तेः। तथा च यथा बीजशक्त्यनुरोधिनः

अङ्कुर-नाल-स्कन्ध-पत्र-पुष्प-फल-रसादिभेदास्तथैव तत्प्रसरणादिकमपि तदनुरोध्येवेति मन्तव्यम् ।

'प्रतरं गुह्यम्' इति पदाभ्यां कथं प्राणशक्तिः सङ्केतितेति तु नावगन्तुं शक्यते । 'प्रतरं प्रकृष्टतरं गुह्यं तासां वीरुधां मूलमि'ति तु सायणोक्तिः श्लिष्यते, तत्राप्यग्नेः प्रसर्पणस्य दृष्टत्वात् । एवं रसादिवद्वर्णादि-व्यवस्थाऽपि बीजशक्त्यनुसारिण्येवेति तत्रापि कारणान्तरान्वेषणं व्यर्थमेव ।

'पिशङ्गं द्रापिमि'ति पूर्णो मन्त्रस्त्वित्थम्—

'दिवो धर्ता भुवनस्य प्रजापतिः पिशङ्गं द्रापिं प्रति मुञ्चते कविः ।
विचक्षणः प्रथयन्नापृणन्नुर्वजीजनत् सविता सुम्नमुक्थ्यम् ॥
(ऋ० सं० ४.५३.२)

तदर्थस्तु—दिवो धर्ता धारकः । न केवलं दिवः, अपि तु भुवनस्य कृत्स्नस्य लोकस्य धर्ता प्रजापतिः, प्रकाशवृष्ट्यादिना प्रजानां पालयिता । कविः प्राज्ञो देवः पिशङ्गं द्रापिं हिरण्मयं कवचं प्रतिमुञ्चते आच्छादयति प्रत्युदयम् । विचक्षणः विविधं द्रष्टा स एव देवः प्रथयन् प्रख्यापयन् तेजः आपृणन् आपूरयन् परितः उरु प्रभूतं सुम्नं सुखम् उक्थ्यं स्तुत्यम् अजीजनत् उत्पादयति ।

एवं यदुक्तम्—"ऋत्विजमिति तृतीयं विशेषणमपि, ऋतुभिर्यजति इति, ऋतून यजति ददाति इति वा तस्यार्थः । प्रथमे विग्रहे ऋतस्य सौराग्नेरवयवा एव ऋतुशब्दार्थः । द्वितीये तु तत्तत्फलपुष्पादिजनकत्वेन प्रसिद्धकालः, स काल एव ऋतुशब्दार्थः । उभयथापि सौराग्निना सङ्गतोऽयं पार्थिवोऽग्निः तत्तदृतुव्यपदेशप्रयोजक इति सिद्ध्यति । सौरस्य संवत्सररूपतामाप्तस्य अग्नेरपेक्षयैव ऋतूनां नामान्यपि क्लृप्तानि । अग्नयोऽत्र वसन्तः क्रमेण सर्वत्र व्याप्नुवानाः सन्ति स कालो वसन्तः । यदा तु सर्वानर्थान् गृह्णानः आत्मसात्कुर्वाणोऽस्ति स कालो ग्रीष्मः, ग्रहधातोर्निष्पन्नत्वात् । यदा तेऽग्नयः प्रवृद्धा भवन्ति तदा वर्षा, वृध् धातोः निष्पन्नत्वात् । शरन्तोऽग्नयो यत्र स शरत्कालः । हीनतायां

हेमन्तः। सर्वथा विशीर्णेषु शिशिरः। जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, विनश्यति इति यास्कपरिपठिताः षड्भावविकारा एव ऋताग्नि-सम्बन्धेनेह ऋतुवाचकैः शब्दैः प्रदर्शिताः" इति।

तदपि न सङ्गतम्; प्रसिद्धार्थं परित्यज्य क्लिष्टार्थकल्पने मानाभावात्। ऋतुशब्देन ऋताग्नेरवयवा ग्राह्या इत्यपि प्रमाणापेक्षमेव।

वस्तुतस्तु—विदितपदतदर्थसम्बन्धानां मन्त्रपदानामभिधादिवृत्तिभिः प्रतीयमानोऽर्थो वेदार्थो भवति। अत्र तु कञ्चनार्थं मनसा निर्धार्य तस्मिन्नेवार्थे मन्त्राणां योजनं प्रतीयते।

यत्तु—ऋतुः सौरोऽग्निरेव ऋतूनां प्रधानं कारणम्, परं नैकरूपः स विभिन्नप्रकारानृतून् जनयितुमलमिति सोमसम्बन्धस्तत्र विभिन्न-दशासम्पादनाय अपेक्षणीयः। सोममण्डलञ्च चन्द्र इति चन्द्रस्यापि ऋतुजनकत्वमाम्नातम्" इति। तन्न; मन्त्रान्तरे ऋतूनामुत्पत्तौ चन्द्रस्यैव प्राधान्यवर्णनात्। तथा हि—

'पूर्वापरं चरतो माययैतौ शिशू क्रीलन्तौ परि यातो अध्वरम्।
विश्वान्यन्यो भुवनाभिचष्ट ऋतूँरन्यो विदधज्जायते पुनः॥'

(ऋ० सं० १०.८५.१८)

सूर्याचन्द्रमसावस्मिन् मन्त्रे प्रस्तुतौ। तावेव शिशू इति रूपितौ। तत्रैकः भुवनानि प्रकाशयति। अन्यश्चन्द्रस्तु ऋतून् विदधत् पुनर्जायते इति चन्द्रस्यैव ऋतुविधानं प्रति प्राधान्यमुक्तम्। तदित्थं सूर्याचन्द्रमसौ ऋतूत्पादकौ इति।

यत्तु—"तत्तदृतुषु या फलपुष्पान्नादिसमृद्धिः, तत्र हेतुः पार्थिवोऽग्निरेव। नहि पार्थिवाग्निसम्बन्धमन्तरेण पृथिव्यां किमप्युपपद्यते नाम। सूर्याचन्द्रमसोः प्रभावः पार्थिवाग्नौ, पार्थिवश्चाग्निः ताभ्यां सङ्गत्य तत्तदन्नादिजनकः इति सर्वमिदमृत्विजमिति त्रिभिरक्षरैरुक्तमि"ति। तन्न; पार्थिवाग्नेस्तथाहेतुत्वाश्रवणात्। 'ऋतूँरन्यो विदधज्जायते' इति मन्त्रांशेन चन्द्रस्यर्तुविधायकत्वं यद्यपि स्पष्टं प्रतीयते, तथाप्यृतुविधाने सूर्यस्यापि हेतुत्वं मन्त्रान्तरे श्रुतम्। तथा हि—

'साकं जानां सप्तथमाहुरेकजं षलिद् यमा ऋषयो देवजा इति ।
तेषमिष्टानि विहितानि धामशः स्थात्रे रेजन्ते विकृतानि रूपशः ॥

( ऋक् सं० १.१६४.१५ )

अत्र भाष्यम्—एकस्मात् सूर्यात् सहोत्पन्नानामृतूनां मध्ये सप्तथं सप्तमम् एकजम् अधिकमासोत्पन्नमाहुः कालतत्त्वविदः । इत् षडेव यमा मासद्वयरूपा ऋषयो गन्तारः, ते देवजा आदित्याज्जाताः अधिकमासस्य देवाभावः । षडेव देवजाः, अदेवज एकः । तेषामृतूनां स्वरूपाणि इष्टानि धामशः तत्तत्स्थाने विहितानि व्यवस्थितानि रूपशः रूपभेदेन विकृतानि विविधाकृतियुक्तानि भवन्ति । 'सरसमह वसन्ताय प्रायच्छध्वं ग्रीष्माय ( तै० सं० ७.२.१०.१ ) इति श्रुतेः । स्थात्रे अधिष्ठात्रे तदर्थाय रेजन्ते चलन्ति जगद्व्यवहाराय पुनःपुनरावर्तन्ते ।

पृथिव्यामाधिक्येन ऋतुलिङ्गानामभिव्यक्तौ तस्या अपि सम्बन्धः कथञ्चित् कल्पयितुं शक्यते । परं सर्वमेतद् ऋत्विक्शब्देन कथं ज्ञातुं शक्यते ? 'प्राधान्येन व्यपदेशा भवन्ति' । न च पार्थिवाग्नेस्तत्र प्राधान्यम्, चन्द्रस्यैव तत्र प्राधान्योक्तेः ।

किञ्च—अन्वय-व्यतिरेकादिना पृथिव्या हेतुत्वज्ञानमपि सुशकम् । पार्थिवाग्नेर्हेतुत्वन्तु अनुपलम्भपराहतम् । पार्थिवोष्मादिकं तु पृथिव्यगंतमेवेति न तस्य पृथग्घेतुत्वकल्पनं युक्तम्, कुलालपित्रादिवत् तस्य अन्यथासिद्धत्वात् । ऋत्विक्शब्दश्चायं होत्रादियज्ञनिर्वर्तकेषु प्रसिद्धः । न च तत्रर्तु निर्वर्तकत्वम्, तेनात्रापिबलादेव ऋत्विक्शब्देन विज्ञानसाधनम् ।

'ब्राह्मणा ऋत्विजो भक्षप्रतिषेधादितरयोः ।' ( का० सू० १. २. ८ )

अर्थः—ऋत्विक् । पुं । पुरोहिते । याजके । ऋतैः यजति, ऋतुं यजति, ऋतुप्रयुक्तो वा यजति इति । रूढिरेव यथाकथञ्चिद् व्युत्पाद्या । यज् देवपूजादौ । ऋत्विगादिना क्विन्नन्तो निपातः । 'अग्न्याधेयं पाकयज्ञान् अग्निष्टोमादिकान् मखान् । यः करोतिवृतो यस्य स तस्यर्त्विगिहोच्यते ॥'

इति मनुः (२।१४३) तेऽत्र यज्ञे षोडश भवन्ति (शब्दार्थचिन्तामणिः) तेन ऋत्विक्शब्दो याजकादिपर एव।

यच्च—"होतारमिति चतुर्थविशेषणं ह्वेञ्-धातोर्निष्पाद्य ब्राह्मणेषु व्याख्यातम्। तेन अग्निर्देवानाह्वयति, अग्निद्वारैव अस्माकं सौरमण्डलस्थैर्देवैः सम्बन्ध इति गम्भीरतत्त्वं विज्ञायते, यदद्यापि सर्वथा-परोक्षं वैज्ञानिकानामि"ति। तदपि न किञ्चित्; वैदिकप्रसिद्धेरेव वेदार्थोपपत्तेः। तथा हि—होतृनामकेन ऋत्विजा मन्त्रैर्देवानामाह्वानं विहितम्। अग्निरपि देवेषु ब्राह्मणो होतृनामक ऋत्विक् चासीत्। मन्त्रशक्तिश्च अचिन्त्या वैदिकैरभ्युपेयत एव। तेन मन्त्रैर्देवानामाह्वानं सङ्गच्छते।

यदपि—"रत्नधातममिति रत्नानामुत्पादयितेति भूगर्भविज्ञानं स्फुटयति" इति। तदपि न शोभनम्; यतः प्रकृतयज्ञादिप्रसङ्गे नानाविध-फलरूप-रत्नधारयितृत्वरूपस्यैवार्थस्य समञ्जसत्वात्।

किञ्च—धर्म-ब्रह्मनिरूपणप्रसङ्गेन अनेके लौकिकालौकिकाश्च अर्था मन्त्रेभ्यो ब्राह्मणेभ्यश्च प्रस्फुटन्ति, इत्यत्र नास्ति विप्रतिपत्तिः। परं तावतैव 'रत्नधातमम्' इत्यनेनैव भूगर्भविज्ञानं कथं सिद्ध्यति? 'अग्निर्हिमस्य भेषजमि'ति प्रत्यक्षसिद्धमपि अर्थमनुवदत्येव श्रुतिरर्थान्तर-विवक्षया। इतिहासवर्णनमपि पुराकल्पाद्यर्थवादरूपमेव, अनादि-वेदे घटनानुसारीतिहासस्यासम्भवात्। वेदशब्देभ्यो जगज्जन्मश्रवणाद् वैदिकशब्दानुसारिण्यो भवन्त्यो घटनास्तु न वार्यन्ते। वैदिकलङ्लुङादीनां कालसामान्यमेवार्थ इत्युक्तमेव। तेन अनादिवेदैकगम्या यज्ञा नित्यसिद्धा अपि कस्मिंश्चित् कल्पादौ कैश्चिद्यज्ञसम्प्रदाय एव प्रवर्तितः, तस्यैव सङ्केतो निम्नोद्धृतेन (ऋ० सं० १, १६५, ५०) मन्त्रेण भवति—

'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥' इति।

तदर्थस्तु—यथा इन्द्रादयो देवा यज्ञेन ज्योतिष्टोमेन यज्ञपुरुषं वासुदेवं विधिना अयजन्त, यतस्तानि यजनरूपाणि धर्माणि प्रथमान्यासन्। ते ह महाभाग्ययुक्ताः नाकं स्वर्गं सचन्त सेवन्ते यत्र पूर्वे साध्याः प्रथमे सुराः विद्यन्ते सन्ति देवा तेजसा देदीप्यमानाः। तेन प्रवाहनित्यायां

सृष्टौ पूर्ववदेव यज्ञादिपारम्पर्यं प्रचलति । 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पत्' ( ऋ० सं० १०.१९०.३ ) इत्यादि-मन्त्रवर्णात् ।

यच्च—"इषे त्वोर्जे त्वे'ति व्याख्याने उक्तम्, इडित्यन्तम् । ऊर्गिति बलम्, तद्वायोरेव अन्नबलसम्पादकत्वं वृष्टिद्वारेणेति वायोर्गुणाः । वायौ च गतिः सूर्यप्रेरणयैवेति विज्ञानसिद्धान्तः स्फुटीभवति । हे वायवः सविता देवो वः प्रार्पयतु प्रेरयतु । सूर्यप्रेरणया वायौ गतेः सुप्रतिपन्नत्वात् । सवितृप्रसूत एष पवते इति शतपथे व्याख्यातत्वात् । किञ्च—यज्ञो हि श्रेष्ठतमं कर्म, तस्मै यूयमाप्यायध्वम्, परिपुष्टा भवत । व्याख्यातपूर्वस्य प्राकृतयज्ञस्य वायुपरिपोषाधीनत्वमत्र शिक्षितमि"ति । तन्न ; तादृगर्थस्य मन्त्राक्षराननुगमात् । त्वा त्वा स्थ इति पदत्रयस्य अर्थानुक्तेश्च । मन्त्रस्तु—

'इषे त्वोर्जे त्वा वायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे । आप्यायध्वमघ्न्याऽ इन्द्राय भागं प्रजावतीरनमीवा अयक्ष्मा मावस्तेन ऽईशत माघशंसो ध्रुवा अस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून् पाहि ॥" ( यजुःसंहिता, १. १ ) इति ।

मन्त्रस्यास्य न भवदभिमतस्य प्राकृतयज्ञस्य श्रेष्ठतमत्वकथनेऽभिप्रायः, तस्य स्वतःसिद्धत्वात्, ब्राह्मणसूत्राद्यनन्वयाच्च । महीधरानुसारी त्वय-मर्थोऽस्य मन्त्रस्य—

'तत एतं परमेष्ठी प्राजापत्यो यज्ञमपश्यद्यद्दर्शपूर्णमासौ' इति श्रुतेरुक्तमन्त्राणां परमेष्ठी प्राजापत्य ऋषिः । 'ते देवा अकामयन्त' इत्यु-क्रम्य तत एतं हविर्यज्ञं ददृशुर्यद्दर्शपूर्णमासौ देवानामार्षं कथ्यते । सर्वाण्येव यजूंष्यस्मिन्नध्याये । पुरा क्रूरस्येतीयं त्रिष्टुप् । अन्यदृष्टत्वा इषे त्वा इति द्विपदो मन्त्रः, त्र्यक्षरत्वाद्देव्यनुष्टुप् । 'इषे त्वा शाखां छिनत्ती'ति श्रुत्या शाखाच्छेदे विनियुक्तः । न चाख्यातमुपलभ्यतेऽत्र । न चाख्यातं विना वाक्यं किञ्चिद्विधत्ते इत्यध्याहारेण वाऽनुषङ्गेण वा वाक्यपूर्तिः कर्तव्या । तत्र लौकिकोऽध्याहारो भवति । यथा—पिनष्टि प्राणाय त्वेति प्रतिमन्त्रं प्राणाय त्वा पिनष्मि इति । अनुषङ्गस्तु

मन्त्रावयव एव । यथा—अस्मादन्नान्निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मः अस्यै प्रतिष्ठायै निर्भक्त इति विष्णुक्रममन्त्रेषु परिपठितमिहाभिसम्बद्ध्यते, अपरिपूर्णत्वाद् वाक्यस्य । इह त्वन्यशाखापठितेन आख्यातेन सूत्रकारेण वाक्यपूर्तिः कृता, छिनद्मीति उभयोश्च साकाङ्क्षत्वात् । सन्नमयामीति वोत्तर इति अत्र शाखोच्यते । हे शाखे इषे अन्नाय वृष्ट्यै वा त्वा त्वां छिनद्मि । इष्यते काङ्क्ष्यते सर्वैर्व्रीह्यादिधान्यनिष्पत्तये सा इट्, वृष्टिः 'वृष्ट्यै तदाह यदाह इषे त्वा' ( १. ७. १.२ ) इति श्रुतेः ।

'पर्णशाखां छिनत्ति शामीलीं वेषे त्वेत्यूर्जे त्वेति वा ।'

'छिनद्मीति वोभयोः साकाङ्क्षत्वात् ।'

'सन्नमयामीति । वोत्तरे ।' ( कात्या० ४. २. १–३ ) इति ।

सूत्रार्थस्तु—पलाशशाखा शमीशाखाऽत्र विकल्पिता । तच्छेदने इषे त्वोर्जे त्वेति द्वौ मन्त्रौ विकल्पितौ । तयोः क्रियापदाकाङ्क्षत्वात् छिनद्मीति पदमध्याहर्तव्यम् । यद्वा—इषे त्वेति छेदनार्थो मन्त्रः । ऊर्जे त्वेति संनमनार्थः । संनमनम् = ऋजूकरणम्, शाखालग्नधूल्याद्यपनयनञ्च । शाखैवात्र देवता । हे शाखे त्वां संयमयामि ऋजूकरोमि । किमर्थम् ? ऊर्जे ऊर्ज बलप्राणनयोः, ऊर्जति सर्वान् मनुष्यपश्वादीन् बलयति पानादिना दृढशरीरान् करोति; प्राणयति प्रकर्षेण चेष्टयतीति व्युत्पत्तिद्वयेन वृष्टिगतो जलात्मको रस ऊर्जशब्देनोच्यते । तस्मै रसाय त्वाऽनुमार्ज्मि, 'यो वृष्टादूर्ग्रसो जायते तस्मै तदाह' ( १.७.१.१ इति ) श्रुतेः । एतन्मन्त्रद्वयपाठेन अध्वर्युरिष्यमाणमन्नं बलकरमाज्यक्षीरादि रसञ्च यजमाने दधाति इति तित्तिरिवचनात् ।

हे वत्साः यूयं वायवः स्थ वायुदेवरूपाः मातृभ्यः सकाशादन्यत्र गन्तारो भवत । मातृभिः सह गमने सायंदोहो न लभ्यते इत्यभिप्रायः । तथा च कात्यायनः—'मातृभिर्वत्सान् संसृज्य वत्सं शाखयोपस्पृशति वायवः स्थ' इति । वा गतिगन्धनयोः, वान्ति गच्छन्ति वायवः ।

—वायुसादृश्याद्वायुत्वं वत्सानाम् । यथा वायुः पादप्रक्षालन-निष्ठीवनादिभिरुपहतां भूमिं शोषयित्वा पुनाति एवं वत्सा अपि अनुलेपनहेतुभूत-गोमयादिप्रदानेन भूमिं पुनन्ति । तस्माद् वायुसादृश्यम् ।

अथवा—नृणामिव स्वनिवासाय पशूनां गृहनिर्माणादिसामर्थ्याभावात् निरावरणेऽन्तरिक्षे सञ्चरणादन्तरिक्षमेव पशूनां देवता। तस्यान्तरिक्षस्य वायुरधिपतिः। स च स्वावयवानिव पशून्पालयतीति पशूनां वायुरूपत्वम्। तथा पालनाय पशून् वायवे समर्पयितुं वायुरूपत्वमापाद्य वायवः स्थ इति मन्त्रः प्रवर्तते। वायवः स्थेत्याह 'वायुर्वा अन्तरिक्षस्याध्यक्षोऽन्तरिक्षदैवत्याः खलु पशवो वायव एवैतान् परिददाति' इति तैत्तिरीयश्रुतेः।

यद्वा—तृणभक्षणाय अहनि तत्र तत्रारण्ये चरित्वा सायंकाले वायुवेगेन यजमानगृहे समागमनाय पशून् प्रवर्तयितुं वायुरूपत्वमुच्यते। 'देवो वः मातॄणामेकां व्याकृत्य; ऐन्द्रं भवति माहेन्द्रं वा' इति कात्यायन-(४. २. ९-१०) सूत्रानुसारेण वत्सानां या मातरो गावस्तासां मध्ये एकां गां व्यावृत्य पृथक्कृत्य देवो व इति मन्त्रेण शाखयोपस्पृशेत्। तथा सति गोसम्बन्धि दधिरूपं हविरैन्द्रं माहेन्द्रं वा भवति।

'देवो व' इति मन्त्रस्य इन्द्रो देवता। सु प्रेरणे सुवाति स्वस्वव्यापारे प्रेरयति सविता। देवः द्योतमानः परमेश्वरः। तथा चायं मन्त्रार्थः—

हे गावः, सविता देवो वो युष्मान् प्रार्पयतु प्रभूततृणोपेतं वनं गमयतु। किमर्थम्? श्रेष्ठतमाय कर्मणे अप्रशस्तं प्रशस्तं श्रेष्ठं श्रेष्ठतममिति चतुर्विधं कर्म। लोकविरुद्धवध-बन्धन-चौर्यादिकमप्रशस्तम्। लोकैः श्लाघनीयं बन्धुवर्गपोषणादिकं प्रशस्तम्। स्मार्तं वापी-कूप-तडागादिनिर्माणं श्रेष्ठम्। वेदोक्तं यज्ञरूपं श्रेष्ठतममिति, 'यज्ञो वै श्रेष्ठतमं कर्म' (१.७.१.५) इति श्रुतेः।

हे अघ्न्या गावः गोवधस्य उपपातकरूपत्वात् हन्तुमयोग्याः। तथाविधा यूयमिन्द्राय भागम् इन्द्रमुद्दिश्य सम्पादयिष्यमाणदधिरूपहविर्हेतुक्षीरम्, आप्यायध्वम्=समन्ताद्वर्धयध्वम्। सर्वास्वपि गोषु प्रभूतक्षीरं कुरुत। वो युष्मानपहर्तुं स्तेनश्चौरः मा ईशत समर्थो मा भूत्। अघशंसः घातको व्याघ्रादिरपि वो हिंसको मा भूत्। कीदृशीः युष्मान्? प्रजावतीः बह्वपत्याः, अनमीवाः कृमिदष्टत्वादिस्वल्परोगरहिताः, अयक्ष्मा यक्ष्मादिप्रबलरोगरहिताश्च।

किञ्च—यूयं गोपतौ युष्माकं पत्यौ यजमाने ध्रुवाः शाश्वतिकीः बह्वीर्बहुविधाः स्यात भवत।

पुनश्च 'यजमानस्य पशूनित्यग्न्यागारस्यान्यतरस्य पुरस्ताच्छाखामुपगूहति' इति (४. २. ११) कात्यायनसूत्रानुसारेण यजमानस्य पशूनिति मन्त्रेण आहवनीयागारस्य गार्हपत्यागारस्य वा पूर्वभागे शाखां स्थापयेदध्वर्युः। मन्त्रार्थस्तु—हे पलाशशाखे त्वमुन्नतप्रदेशे स्थित्वा प्रतीक्षमाणा सती यजमानस्य पशून् अरण्ये सञ्चरतश्चोरव्याघ्रादिभयात् पाहि रक्ष, शाखया रक्षिता गावो निरुपद्रवाः सत्यः सायं पुनरागच्छन्तीति।

यद्यपि अचेतना शाखा, तथापि तदभिमानिनी देवतामुद्दिश्यैवमुक्तम्। यथा शास्त्रप्रामाण्यात् अचेतनेऽपि शालग्रामे शास्त्रदृष्ट्या विष्णुसन्निधिमभिप्रेत्य विष्णुं सम्बोध्य षोडशोपचारान् विदधत इति तद्वत्।

एवं 'सामसंहितामन्त्रे आदित्यः संस्तुतः' इत्यपि न सङ्गतम्; भाष्यकारैरन्यथा व्याख्यातत्वात्। तथा हि—

'अग्न आ याहि वीतये। गृणानो हव्यदातये। निहोता सत्सि बर्हिषि।'

अर्थः—अग्ने भरद्वाजस्यार्षम्। अग्ने आयाहि आगच्छ। किमर्थं पुनरागच्छामीति? उच्यते—वीतये भक्षणायेत्यर्थः। कस्य सामर्थ्यात्? हविषाम्। गृणानः स्तूयमानः। हव्यदातये हविर्दानार्थमित्यर्थः। निहोता नीत्ययमुपसर्गः सत्सीत्याख्यातेन सम्बन्धयितव्यः। होता आह्वाता। केषां देवानामित्यध्याहारः, निषत्सि निषीदेत्यर्थः। क पुनर्निषीदामि? उच्यते, बर्हिषि यदेतदास्तीर्णं बर्हिस्तत्रेत्यर्थ इति।

यत्तु—

'आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च।
हिरण्ययेन सविता रथेनाऽऽदेवो याति भुवनानि पश्यन्॥'

(ऋ० सं० १.३५.२)

इत्यनेन मन्त्रेण सूर्यमण्डलस्य कृष्णवर्णत्वसाधनप्रयासः, सोऽपि न सम्यक्; निम्नोक्तवचनैः आदित्यस्य अनेकरूपत्वावगमात्। 'यदेतदादित्यस्य शुक्लं भा सैवर्ग्यत् नीलं परः कृष्णं तत्साम' इति चादि-

त्यस्य न केवलं कृष्णरूपम्, किन्तु शुक्लरूपमपि तस्य श्रूयते। छान्दोग्ये तृतीयाध्याये तत्रैव मधुविद्यायाम्—'असौ वाऽऽदित्यो देवमधु। तस्य द्यौरेव तिरश्चीनवंशोऽन्तरिक्षमपूपो मरीचयः पुत्राः।... ऋच एव मधुकृतः, ऋग्वेद एव पुष्पम्, ता अमृता आपस्ता वा एता ऋचः।...तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसमजायत। तद्व्यक्षरत्, तदादित्यमभितोऽश्रयत्। तद्वा एतद्यदादित्यस्य रोहितं रूपम्।...दक्षिणा मधुनाड्यः, यजूंष्येव मधुकृतः। यजुर्वेद एव पुष्पम्।... तदादित्यमभितोऽश्रयत्। तदादित्यस्य शुक्लं रूपम्।... परं कृष्णंरूपम्।...मध्ये क्षोभत इव।'

(अ० ३, ख० १-५) इति।

'एवं संस्तूयमानस्तु देवैर्देवर्षिभिस्तथा।
मुमोच स्वं तदा तेजस्तेजसां राशिरव्ययः॥
यत्तस्य ऋङ्मयं तेजो भविता तेन मेदिनी।
यजुर्मयेनापि दिवं स्वर्गः साममयं रवेः॥
शातितास्तेजसो भागा ये त्वष्ट्रा दश पञ्च च।
त्वष्ट्रैव तेन शर्वस्य कृतं शूलं महात्मना॥
चक्रं विष्णोर्वसूनां च शङ्करस्य सुदारुणा।
पावकस्य तथा शक्तिः शिबिका धनदस्य च॥
अन्येषामसुरारीणामस्त्राण्युग्राणि यानि वै।
यक्षविद्याधराणाञ्च तानि चक्रे स विश्वकृत्॥
ततश्च षोडशं भागं बिभर्ति भगवान् विभुः।
तत्तेजः पञ्चदशधा शातितं विश्वकर्मणा॥' इति।

(मार्कण्डेय पु०, ७८, १५-२०)

अपि च—आदित्यस्य कृष्णवर्णत्वे तद्रश्मीनामपि कृष्णत्वमेव स्यात् महेन्द्रनीलमणिरश्मीनां नीलरश्मिवत्। 'आकृष्णेन रजसा वर्तमान' इत्यत्र सवितृव्यतिरिक्तलोकस्य कृष्णत्ववर्णनात् 'हिरण्यकेशः' इत्यादिना तेजोमयस्य आदित्यस्य आदित्यपुरुषस्य हिरण्यमयत्वश्रवणाच्च तस्य

कृष्णवर्णत्वासम्भवात्। अत एव कृष्णेन लोकेन कृष्णान्तरिक्षमार्गेण आवर्तमानः पुनःपुनरावर्तमान इत्येवार्थः। तदुक्तं सायणेन—

'सविता सूर्यः 'कृष्णवर्णेन कृष्णं कृष्यतेर्निकृष्टो वर्णः' ( निरुक्त २.२० )। 'लोका रजांस्युच्यन्ते ( नि० ४.१९. )। अन्तरिक्षलोको हि सूर्यागमनात् पुरा कृष्णवर्णो भवति। कृष्णेन रजसा लोकेन अन्तरिक्ष-मार्गेण आवर्तमानः पुनःपुनरागच्छन् अमृतं देवं मर्त्यं मनुष्यञ्च निवेशयन् स्वस्वव्यवहारे व्यवस्थापयन्। यद्वा—अमृतं मरणरहितं प्राणं मर्त्यं मरणसहितं शरीरञ्च निवेशयन्, 'मर्त्यानि हीमानि शरीराणि अमृतैषा देवता' ( ऐ० आ० २. १. ८ ) इति श्रुतेः। स सविता देवः भुवनानि सर्वान् लोकान् पश्यन् अवेक्षमाणः प्रकाशयन् हिरण्ययेन सुवर्णनिर्मितेन रथेन आयाति अस्मत्समीपमागच्छति इति।

यदुक्तम्—

'उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम् ॥'

( ऋ० सं० १. ५०. १ )

इति मन्त्रस्यापि व्याख्याने "सूर्यकिरणा विश्वस्मै दर्शयितुं सूर्यं देवमुद्वहन्ति ऊर्ध्वं प्रापयन्ति। व्याख्यातञ्च तथैव भाष्यकारैः पूर्वमूर्ध्व-स्थितमादित्यमधःस्थितानस्मान् किरणा दर्शयन्ति, तेन उपवहन्तीति वक्तव्ये कुत उद्वहन्ति ? यद्यपि ऊर्ध्वमपि प्रसरन्ति किरणाः ; तथापि न तैरस्मत्प्रयोजनं सिद्ध्यति। अस्मभ्यं दर्शनं तु अधःप्रसरणादेव भवति। सूर्यकिरणानामधःप्रसरणादेवास्माकम् उदयात् पूर्वमेव सूर्यदर्शनं भवति। तदेतत् तदैवोपपद्यते यदा वैज्ञानिकानामेष सिद्धान्तोऽधीयते यद् यावत् सूर्योऽस्मत्-क्षितिजादधस्तादेव भवति, नेत्रसूत्रसम्बन्धं नैव गच्छति तावदेव किरणाः पृथिव्या उपरिष्टाद्वायुमण्डले पतिताः वक्रीभूय अस्मन्नेत्राणि अनुप्रविष्टाः स्वसंमुखमभिसूर्यं दर्शयन्ति। सूर्यस्य वास्तविकोदयात् पूर्वमेव सूर्योदयोऽस्माभिरनुमन्यते। यावदियं घटना तावदेव सूर्यमण्डलं रक्तं प्रतीयते। ततश्च क्षितिजादधःस्थितमेव सूर्यं केतव उद्वहन्ति विश्वं दर्शयन्ति" इति।

तदेतदपि वेदेषु विज्ञानप्रदर्शनाभिनिवेशमात्रम्। सायणोक्तरीत्या मन्त्रार्थस्य अन्यथोपपत्तेः।

ननु चोर्ध्वं स्थितस्यैव सूर्यस्य कथं विश्वदर्शनाय किरणैरुद्वहनम्? कथञ्च आधुनिकवैज्ञानिकरीत्याऽपि अधःस्थितस्यैव सूर्यस्य उदयेन ऊर्ध्वंगमनसिद्धिः? वायुना किरणानां वक्रीभावेन यदपि सूर्योदयदर्शन-मुक्तम्, तदपि न सम्भवम्; किरणानामेव दर्शनं सम्भवति, न सूर्य-मण्डलस्य। तथा च सूर्योदयात् पूर्वमेव सूर्योदयाभिमानोऽसङ्गत एव।

वस्तुतस्तु प्रतीत्यभिप्रायेणैव एषोक्तिः। अधस्तादुदीय ऊर्ध्वमुद्गमा-दिकमादित्यस्य प्रत्यक्षं दृश्यत एव। अत एव उदेति, उदय इत्यादिशब्द-व्यवहार उपपद्यते। तदभिप्रायेणैव सायणभाष्यम्—

'केतवः प्रज्ञापकाः सूर्याश्वाः। यद्वा रश्मयः। सूर्यं सर्वस्य प्रेरक-मादित्यम्। उद् ऊर्ध्वं वहन्ति। उ इति पादपूरणः। मिताक्षरेष्वनर्थकाः कमीमिद्विति (नि० १.९)। विश्वाय विश्वस्मै, भुवनाय दृशे द्रष्टुम्। यथा सर्वे जनाः सूर्यं पश्यन्ति तथा ऊर्ध्वं वहन्ति। कीदृश सूर्यम्? त्यम् प्रसिद्धम्। जातवेदसं जातानां प्राणिनां वेदितारं जातप्रज्ञं जातधनं वा। देवं द्योतमानम्, 'उद्वहन्ति तं जातवेदसं देवम् अश्वाः केतवो रश्मयो वा, सर्वेषां भूतानां संदर्शनाय सूर्यम्' (नि० १२.१५) इति।

यदुक्तम्—"अभित उदकधाराभिरान्तरिक्ष्योऽग्निर्दीप्यते इति वदन् निरुक्तकारः श्रुतिषु स्फुटतरं वैद्युतं विज्ञानं वदति। 'अप्स्वग्ने सधिष्टव-सौषधीरनुरुध्यते। गर्भे सन् जायते पुनः' (यजुः० १२.३६) इत्यादि-मन्त्रेष्वपि स्फुटं विद्युद्विज्ञानम्। अपान्नपात् इति अन्तरिक्षाग्निनाम सुपठ्यते निघण्टैः। ततश्च अविन्धनः अप्सु अन्तर्वर्तमानः आन्तरिक्ष्यो-ऽग्निरित्यतः परं किं विद्युतः परिचयदानं संभवेत्" इति।

तदपि न समीचीनम्; मन्त्रेऽत्र वैद्युताग्नेः प्रसङ्गाभावात्। तथा च सायणोक्तोऽर्थः—'तथा हि, हे अग्ने अप्सु जलेषु तव सधिः स्थानम्, स त्वमोषधीः यवाद्या अनुरुध्यसे ओषधिपरिणाममनुपरिणमसे। यद्वा—ओषधीः स्वीकरोषि जठराग्निरूपेण। किञ्च—गर्भे अरण्योर्मध्ये स्थितः सन् पुनःपुनर्जायसे' इति।

'यो अनिध्मो दीदयदप्स्व१न्तर्यं विप्रास ईलते अध्वरेषु ।
अपां नपान्मधुमतीरपो दा याभिरिन्द्रो वावृधे वीर्याय ॥

( ऋ० सं १०.३०.४ )

अस्मिन् मन्त्रेऽपि विद्युद्विज्ञानचर्चा नास्ति । तत्र अपान्नपात्-शब्देन वृष्ट्यधिकृतो देव उक्तः । उत्तरार्धस्य प्रत्यक्षकृतत्वात् एकवाक्यताऽपि युष्मच्छब्देन । समानार्थो भवच्छब्दः प्रथमार्धेऽध्याहार्यः । यः भवान् अपान्नपात्, अप्स्वन्तः अपां मध्ये मेघस्थाने अनिध्मः काष्ठवर्जितः सन् दीदयत् दीप्यते । विप्रासः मेधाविन ऋत्विग्यजमानाः, अध्वरेषु यागेषु यं भवन्तं ईलते स्तुवन्ति, हे अपान्नपात् स त्वं मधुमतीः मधुर-रसयुक्ता अपः वृष्टिलक्षणाः, दा अस्मभ्यं देहि । याभिः वसतीवर्येक-धनारूपाभिः सोमेन मिश्रिताभिरद्भिः, इन्द्रः वीर्याय वृत्रवधाय शूरकर्मणे वावृधे वर्धते, ता अपो देहीति सम्बन्धः । अपान्नपाद्-दैवत्या अब्दैवत्या वा इमे मन्त्राः ।

'अध्वर्यवोऽप इता समुद्रमपां नपातं हविषा यजध्वम् ।
स वो ददूर्मिमद्या सुपूतं तस्मै सोमं मधुमन्तं सुनोत ॥'

( ऋ० सं० १०.३०.३ )

अस्यार्थः—हे अध्वर्यवः यूयम् अपः एकधनाख्याणि उदकानि आहर्तुम्, समुद्रम् उदधिस्थानीयं जलाशयम्, इत गच्छत । अद्य इदानीं स अपान्नपात्, वः जलाशयं प्रति गतेभ्यो युष्मभ्यम्, सुपूतं सुशुद्धम्, ऊर्मिम् जलसमूहम् ददत् ददातु । यूयमपि तेन समूहेन तस्मै अपान्नपाते मधुमन्तं सोमं सुनोत अभिषुणुत । सोमाख्येन हविषा अपान्नपातं वृष्टिकर्मण्यधिकृतं देवं यजध्वम् । तथा च नहि सर्वाणि उक्तार्थानि विशेषणानि विद्युति सङ्गच्छन्ते ।

यदुक्तम्—'अस्य वामस्ये'ति मन्त्रे सूर्यमुत्क्रम्य मध्यम आन्तरिक्षयो-ऽग्निः तद्भ्राता तद्भरणीय उक्तः । तेन विद्युतः सूर्यादुत्पन्नताऽपि स्फुटीकृता । किमन्यत्, विद्युतमेव अवलम्बमानमाधुनिकं विज्ञानं विद्युतस्तत्त्वमद्यापि न बुद्ध्यति । भूतरूपेयम् केवलशक्तिरूपेयं वा ?

इत्यद्यापि विचारयत्येव। श्रुतिस्तु तस्या इन्द्ररूपतां सूर्याद् भरणीयतां स्पष्टैः शब्दैराचष्टे इति किमपि माहात्म्यं श्रुत्या आविर्भवति" इति।

अत्रोच्यते—श्रुतेर्माहात्म्यं प्रत्यक्षाद्यनधिगत-धर्मब्रह्मप्रतिपादनेन भवति, न प्रत्यक्षादिसिद्ध-विद्युतादिप्रतिपादनेन। 'अस्य वामस्ये'ति मन्त्रार्थस्तु सायणोक्त एव परम्पराप्राप्तः। तत्र तु मध्यमो भ्राता वायुरेव प्रोक्तः। आदित्याग्नी अपेक्ष्य तस्यैव मध्यमत्वात्, भूर्भुवः स्वर्लोक-सारत्वेन अग्निवाय्वादित्यानामेव निर्णीतत्वात्। ऋग्यजुःसाम-कारणत्वेनापि तेषामेव वर्णनात्। अश्न इति वायोरेव व्यापकत्वमपि सम्भवति, न विद्युतः, तस्या अविन्धनत्वेन तदपेक्षया सीमितत्वात्। स एव वृष्ट्यर्थं रश्मिभिराहृतानां हरणाद् भ्रातोच्यते। मन्त्रस्तु यथा—

'अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमोऽस्त्यश्नः।
तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम्॥'

(ऋ० सं० १.१६४.१)

अत्र द्वितीयपादे तच्छब्दश्रुतेः प्रथमपादे प्रतिविशेषणं योग्य-क्रियार्थसम्बद्धो यच्छब्दोऽध्याहार्यः। योऽयं दिवि द्योतते तस्य अस्य वामस्य संवननीयस्य संभजनीस्य आरोग्यार्थिभिः सर्वैः सेवनीयस्य पलितस्य पालयितुः प्रकाशवृष्ट्यादिप्रदानेन पालकस्य तथा योऽयं दिवि द्योतते तस्यास्य होतुः आह्वानार्हस्य आदित्यस्य मध्यमः मध्यमस्थानस्य मध्ये भवो वायुरुच्यते। आदित्याग्नी अपेक्ष्यास्य मध्यमत्वम्। स च अश्नः सर्वत्र व्याप्तः। नहि वायुरहितः कश्चित्प्रदेशो-ऽस्ति। तादृशो भ्राता भ्रातृस्थानीयो भवति। यथा लोके भ्राता पितृधनस्य भागं हरति तद्वत् मध्यस्थानमन्तरिक्षलोकं हरतीति वा वृष्ट्यर्थं रश्मिभिराहृतानां भौमानां रसानां हरणाद्वा भ्रातेत्युच्यते। पित्र्येण धनेन स्वार्जितेन वा भर्तव्यो भवतीति भ्राता। मध्यमो वायुरपि वृष्ट्यर्थं रसैर्भर्तव्यो भवति।

किञ्च—घृतपृष्ठः घृतमाहुतिलक्षणं पृष्ठे यस्य तादृशो भ्राता तस्य तृतीयः अस्ति भवति। त्रयाणां पूर्णस्तृतीयः, उक्तोभयापेक्षया तृतीयत्वम्।

भ्रातृत्वमुक्तप्रकारेण अत्रापि द्रष्टव्यम्। रात्रौ सवितृतेजोभागस्य हरणात् दिवा स्वकीयतेजसो भागस्य तदर्थमेव भक्तकत्वात् वा भ्रातृत्वम्। अत्र एषु भ्रातृषु मध्ये पुरोदेशे वा विश्पतिं प्रजापालयितारं सप्तपुत्रं सर्पणशीलरश्मिपुत्रोपेतम्। ऐतिहासिकपक्षे अदितिः पुत्रकामा इति प्रस्तुते मित्रावरुणादिषु अदितिपुत्रेषु अस्यादित्यस्य सप्तमपुत्रत्वम्। ईदृशं महानुभावमादित्यम् अपश्यम् अद्राक्षं भावनया आत्मत्वेन साक्षात्करोमीत्यर्थः। 'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' इति श्रुतेः। एवं वा अस्य वामस्य विश्वस्योद्गरितुः स्रष्टुरित्यर्थः। पलितस्य स्वसृष्टं जगत् पालनशीलस्य होतुरादातुः स्वस्मिन् संहर्तुः परमेश्वरस्य सृष्ट्यादिकर्तृत्वं श्रुत्यादिषु प्रसिद्धम्। तस्य परमेश्वरस्य भ्राता भागहारी तदंशभूतः सूत्रात्मा मध्यमः सर्वत्र मध्ये वर्तमानः जगद्धारकत्वेन वर्तते। स च अश्नः व्यापनशीलः 'वायुना वै गौतम सूत्रेणायं लोको परश्च लोकः सर्वाणि च भूतानि संदृब्धानि' ( बृ० उ० ३. ७. २ ) इति श्रुतेः वक्ष्यमाणविराडपेक्षया वा मध्यमत्वम्।

किञ्च—अस्य तृतीयो घृतपृष्ठः। घृतमिति उदकनाम, तेन तत्कार्यं शरीरमित्युच्यते। तदेव पृष्ठं स्पर्शकं वा यस्य तादृशः, पृष्ठं स्पृशतेः ( नि० ४.३ )।

यद्वा—प्रदीप्तपृष्ठः। पृष्ठशब्दः कृत्स्नशरीरोपलक्षकः प्रकाशितशरीराभिमानीत्यर्थः। न त्वयं सूक्ष्मशरीराभिमानिसूत्रात्मवत् स्पर्शनाविषयो भवति। अत्र एषु मध्ये विश्पतिं प्रजापतिं सर्वस्य पतिं 'सर्वस्य पतिः सर्वस्येशानः' इति श्रुतेः। सप्तपुत्रं सप्त लोकाः पुत्रा यस्य तादृशम्। स्वमायया सृष्टसर्वलोकम्, अपश्यं पश्येयं साक्षात्करोमि।

अयमाशयः—स्वाधीनमायो जगत्कारणभूतः परमात्मा एकः। तत उत्पन्नौ स्थूल-सूक्ष्म-शरीराभिमानिनौ द्वौ विराट्सूत्रात्मानौ। तेषु मध्ये द्वयोः साक्षात्कारेण मोक्षाभावात् सृष्ट्यादिकारणं परमेश्वरं ज्ञेयत्वेन प्रसिद्धं श्रवणादिसाधनेन साक्षात्करोमीत्यर्थः। एवमुत्तरत्रापि अध्यात्मपरतया योजयितुं शक्यम्; तथापि स्वरसत्वाभावात् ग्रन्थविस्तारभयाच्च

न लिख्यते। यत्र 'द्वा सुपर्णा' इत्यादौ स्फुटमाध्यात्मिकोऽर्थः प्रतीयते, तत्र तत्र प्रतिपादयामः। अयं मन्त्रो यास्केन व्याख्यातः—'अस्य वामस्य वननीयस्य पलितस्य पालयितुरि'ति ( नि० ४.२६ )।

'अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा।
अग्निञ्च विश्वशम्भुवमापश्च विश्वभेषजीः॥'
( ऋ० सं० १. २३. २० )

इति मन्त्रेण जलस्य यौगिकता स्फुटीकृता" इति। तदपि न; तेजः-कारणत्वेन पञ्चीकृतप्रक्रियया जलेऽग्निसत्त्वेऽपि तस्य स्वतन्त्रतत्त्व-द्वयान्तरनिर्मितत्वासिद्धेः।

नन्विदानीं वैज्ञानिकैः 'आक्सिजन-हाइड्रोजन-नामक-पदार्थयोगेन जलं निर्मीयत एवेति चेन्न। जलहेतुत्वेन अभिमतस्य पदार्थद्वय-स्यापि सूक्ष्मजलानतिरेकात्। सूक्ष्मजलं तु सर्यरश्म्यादिषु स्थितमपि नोपलब्धुं शक्यम्।

मन्त्रार्थस्तु—अप्सु जलेषु अन्तः मध्ये विश्वानि भेषजा सर्वाणि औषधानि सन्तीति मे मह्यं मन्त्रदर्शिने मुनये सोमो देव अब्रवीत्। तथा विश्वशंभुवं सर्वस्य जगतः सुखकरम् एतन्नामकं च अग्निम् अप्सु वर्तमानं सोमोऽब्रवीत्। तथा च तैत्तिरीयाः—'अग्नेस्त्रयो ज्यायांसः' इत्यनुवाके 'सोऽपः प्राविशत्' ( तै० सं० २. ६. ६. १ ) इति अग्नेः अप्सु प्रवेशमामनन्ति। लता-गुल्म-वृक्ष-मूलादीनाम् औषधानां वृष्टि-जन्यत्वेन जलवर्तित्वं प्रसिद्धम्। विश्वभेषजीः विश्वानि भेषजानि यासु तथाविधाः अप अपि अब्रवीत्। भेषजा 'सुपां सुलुक्' इति आकारः। विश्वशंभुवम्, भवतेरन्तर्भावितण्यर्थात् क्विप्। व्यत्ययेन पूर्वपदप्रकृति-स्वरत्वम्। यद्वा—विश्वे सर्वेऽपि व्यापाराः सुखकरा यस्य, 'बहुव्रीहौ विश्वं संज्ञायाम्' ( पा० सू० ६.२.१०६ ) इति पूर्वपदान्तोदात्तत्वम्। आपः। कर्मणि शपि प्राप्ते व्यत्ययेन जस्। 'अप्तृन्...' ( पा० सू० ६.-४.११ ) इत्यादिना उपधादीर्घः। विश्वभेषजीः विश्वशंभुवमितिवत्।

यदप्युक्तम्—"सर्वाणि रूपाणि सूर्यरश्मिभिरेव निर्मीयन्ते। शुक्लं कृष्णञ्चेति द्वे एव रूपे मुख्ये। तत्सन्धिगतं रक्तम्, मिश्रणजानि चान्यानीति रूपविषये वैज्ञानिकानां दर्शनम्। तदपि 'इन्द्रो रूपाणि कनिक्रदचरत्'

'शुक्रं ते अन्यद् यजतं ते अन्यद् विषुरूपे अहनी द्यौरिवासि।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु॥'
(ऋक् सं० ६. ५८. १)

इत्यादिषु स्फुटमाम्नातम्" इति। तदपि न; मन्त्रस्यान्यपरत्वात्। तथा हि—हे पूषन् ते तव शुक्रं शुक्लवर्णम् अन्यत् एकम् अहर्भवति वासरात्मकम्। तथा ते तव सम्बन्धि यजतम्। यजिरत्र सङ्गतिकरणे वर्तते। यजनीयं प्रकाशेन सङ्गमनीयं स्वतः कृष्णवर्णम् अन्यत् एकम् अहर्भवति रात्र्याख्यम्। इत्थं विषुरूपे शुक्लकृष्णतया नानारूपे अहनी तव महिम्ना निष्पद्येते।

यद्वा—हे पूषन् त्वदीयमन्यदेकं रूपं शुक्रं निर्मलं दिवसस्योत्पादकम्, त्वदीयमन्यदेवं रूपं यजतं केवलं यजनीयं न प्रकाशकं रात्रेरुत्पादकम्। अत एव विषुरूपे अहनी अहश्च रात्रिश्च भवतः। अहोरात्रयोर्निर्माणे सूर्य एव कर्ता। कथमस्य प्रसक्तिरिति तत्राह—द्यौरिवासि। यथा द्यौः आदित्यः प्रकाशयिता तथा त्वं प्रकाशकोऽसि। कुत इत्यत आह—हे स्वधावः अन्नवन् पूषन् विश्वाः सर्वाः मायाः प्रज्ञाः हि यस्मात्कारणात् अवसि रक्षसि, अतः कारणात् त्वं सूर्य इव भवसीत्यर्थः। तादृशस्य ते तव भद्रा कल्याणी रातिः दानम् इह अस्मासु अस्तु भवतु। यास्कस्तु आह—'शुक्रं ते अन्यल्लोहितं ते अन्यद्यज्ञियं ते अन्यदिति वा विषमरूपे अहनी कर्मणा द्यौरिव चासि। सर्वाणि च प्रज्ञानान्यवस्यन्नवन्' (निरुक्ते ११.१७) इति।

यदुक्तम्—'विपरीते काले स्वार्थबुद्धौ प्राबल्यमागतायाम् आभिचारिककर्म सुप्रसारं गतेषु जगद्धितबुद्ध्या क्रियमाणानां यज्ञानां विरलतामापन्ने प्रचारे वैदिकं विज्ञानं क्रमेण शैथिल्यमभजत्। महाभारतयुद्धानन्तरं तु चित्रपट इव परिवर्तते स्म। देशविप्लवात् खिन्नेषु लोकेषु का नाम

विज्ञानोन्नतिकथा ? विरलतामापन्न उच्छिन्नो वैदिको गुरुसम्प्रदायः, विद्याश्च विरलतामापन्नाः। अस्मिन् व्यतिकरे प्राक्तनाः सामयिका वा वेदाङ्गप्रवक्तॄणां दर्शनसूत्रकाराणां चैकदेशमवलम्ब्य लोकदृष्टिमाक्रष्टुं कृता अपि प्रयत्ना न साफल्यमभजन्। प्रत्युत अङ्गविस्तारो मतभेद-विस्तारश्च वैदिक-विज्ञान-तिरोधानायैव अकल्प्यत।

ब्राह्मे क्षात्रे च युगपद्विलयं गते दैवादुपस्थितो बौद्धानां समयः। तदानीं न केवलं सम्प्रदाय एव उच्छिन्नः, अपि तु वेदरहस्यबोधका निदान-रहस्यादिग्रन्था अपि प्रलयं गताः। उच्छिन्ना वेदशाखाः व्यलुप्यन्त बहूनि ब्राह्मणानि। नाममात्राया अवशिष्यन्त विद्याः। ब्रह्मतेजःप्रभावेणैव प्रशान्तः स झञ्झावातः। कर्मकाण्डमुपासना-काण्डं ज्ञानकाण्डञ्च पुनरपि सम्प्रदायबद्धमभूत्। परं विज्ञानशैली तु विलुप्तैवाभवत्। सम्प्रदायस्य विच्छिन्नप्रायत्वात् ग्रन्थानां विलोपाच्च विज्ञानकथा-भिरपि शून्ये ऐन्द्रजालिकमायाप्रधाने कालेऽधिकारिणां विरहान्न तदुद्धाराय समय आसीत्। आचार्यैः आवश्यककर्मसम्प्रदाय-रक्षा कृता। मन्त्र-ब्राह्मणात्मकस्य वेदस्य कर्मावबोधकः साम्प्रदायिकोऽर्थः सुरक्षितोऽभूत्। उपपादकं तु विज्ञानम् अर्थवादशब्दवाच्यतामापाद्य परित्यक्तमभूत्। विज्ञानविरहाच्च इयमार्यविद्या शब्दप्रधानतां गता। तर्क व्याकरण-साहित्यादयः शब्दाडम्बरमात्रसारा लोकेभ्योऽरोचन्त। जल्पप्रक्रिया कवित्वप्रक्रिया च विनोदायालमभूत्।

वेदानां भाष्याणि व्यरच्यन्त, परं कर्मोपयोगिसम्प्रदायप्राप्तो-ऽर्थस्तत्र विवृतः। वैज्ञानिकानां वैदिकानां सङ्केतानां सम्प्रदायविच्छेदाद् विलोप एवाभूत्। तत एवाधुनिकेषु भाष्येषु न वैज्ञानिकीं पद्धति-मुपलभामहे। मनुष्ययज्ञोपयुक्ततया मन्त्रा व्याख्याताः। विज्ञान-जीवातुभूता प्राकृतयज्ञपरता तु समुपेक्षितैव। प्राकृतेन यज्ञेनैव जगदुत्पत्ति-स्थिती स्तः। तं प्राकृतं यज्ञमुपजीव्यैव अस्माकं प्रातिस्विकी यज्ञप्रक्रिया प्रचलति। तयोः सम्बन्धोऽपि वेदेषु सङ्केतितः। परं स न भाष्येषु स्पष्टीक्रियते। अध्यात्ममधिभूतमधिदैवतञ्च ये देवपित्राद्याः, तेषां विवेकोऽपि भाष्येषु नोपलभ्यते। तत एवैकस्य धर्मा अपरसम्बन्धि-

रत्वेन प्रतिसन्धीयमानां बुद्धिं विप्लावयन्ति। तत्र काले तस्या विद्याया अभाव एवापराध्यति, को दोषो भाष्यकृताम् ?" इति।

तदत्रोच्यते—महाभारतयुद्धानन्तरं विज्ञानह्रासोऽभ्युपेयते भवता, किन्तु तत्र प्रदर्शितं कारणं नोपपद्यते। यतो महाभारतयुद्धानन्तरमपि व्यासाद्या महर्षयस्तु अवशिष्टा एवासन्। सर्वज्ञः श्रीकृष्णोऽप्यवशिष्ट एवासीत्। युधिष्ठिरा-ऽर्जुन-सात्यक्यादयश्चासन्। साक्षाद् बृहस्पतेः शिष्य उद्धवोऽप्यासीत्। विशेषतो म्रियमाणस्य ज्ञानसूर्यस्य भीष्मस्य मुखात् अनेकदिनानि धर्मब्रह्म-राजनीत्याद्याश्रयाणि अनेकानि ज्ञानविज्ञानानि श्रीकृष्णेन सार्धं युधिष्ठिरादिभिराकर्णितानि। व्यासादिभिः महाभारत-पुराणोपपुराणादीनि रचितानि। नानासंहितासूत्राणि धर्मशास्त्राणि च प्रसृतान्येवासन्। व्यास-जैमिनीभ्याञ्च वेदार्थविचारात्मके पूर्वोत्तर-मीमांसे निर्मिते। ततश्च कश्चनापि वेदार्थसम्प्रदायो लुप्त इति कल्पना निराधारैव। कर्मोपासन-ब्रह्मज्ञानसम्प्रदायः सुरक्षित आसीदिति भवद्भि-रपि अभ्युपगम्यत एव।

ततो यदि विज्ञानानुसारी कश्चन सम्प्रदाय आसीत्तदा व्यासादिभिः सोऽज्ञात आसीत् ज्ञातो वा ? ज्ञातश्चेत् तर्हि कुतो न तैः स्वग्रन्थे स वर्णितः ? अज्ञातश्चेन्नतरां तत्संभवः। सायणादिभिः पारम्पर्यप्राप्तकर्म-ज्ञानादिसम्प्रदायानुरोधेनैव व्याख्यानं कृतमित्यपि भवद्भिरुपेयते। सायणस्य महतीं प्रशंसां कृत्वाऽपि तद्भाष्यन्यूनतावर्णनं न वस्त्वनुरोधि, तदर्थस्य सम्प्रदायसिद्धत्वात्।

यदुक्तम्—"विष्णुना विधृते' इति मन्त्रे स्फुटतराकर्षणविज्ञानेऽपि 'दाधर्थ पृथिवीमभितो मयूखैः' इति मन्त्रे मयूखशब्दस्य पर्वतोऽर्थोऽनेन भाष्यकारेण कृतः। किरणैः पृथिवीधारणं कथं संभवेदिति तस्य संशयो-ऽभूत्। पर्वतैस्तु पुराणेषु उक्तमिति तदेव व्याख्यातमि"ति।

तदपि न किञ्चित्; भवद्भिरेव तत्समाहितत्वात्। 'इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत्' इत्युक्तरीत्या पुराणमेव मुख्यं वेदार्थव्याख्यानम्, तदनु-रोधिव्याख्यानञ्चेत् कुतस्तदुपालम्भमर्हति ? किञ्च—किरणा यथा किरण-

मालिनोऽशास्तथा पर्वता अपि पृथिव्या अंशा इति त एव मयूखपदवाच्या भवितुमर्हन्ति, आकर्षणशक्तिसु मयूखशब्दस्याप्रसिद्धत्वात्।

'इरावती धेनुमती हि भूतं सूयवसिनी मनुषे दशस्या।
व्यस्तभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः ॥'

( ऋ० सं० ७.९९.३ )

हे द्यावापृथिव्यौ मनुषे स्तुवते मनुष्याय दशस्या दित्सया युक्ते युवाम् इरावती अन्नवत्यौ धेनुमती गोमत्यौ सुयवसिनी शोभने यवसे च भूतम् अभूतम्। हि प्रसिद्धौ। विष्णुना विक्रान्तत्वाद्युवाम् एवमेव खलु पूर्वमभूतम्। हे विष्णो एते इमे रोदसी द्यावापृथिव्यौ व्यस्तभ्नाः विविधमधारयः पृथ्वीमूर्ध्वमुखत्वेन द्यामधोमुखत्वेनेति विविधत्वम्। अपि च–यथा पृथिवी प्रथितामिमां भूमिम् अभितः सर्वतः स्थितैः मयूखैः पर्वतैः दाधर्थ धारितवानसि। यथा न चलति तथा दृढीकृतवानसि। पर्वता हि विष्णोः स्वभूताः। 'विष्णुः पर्वतानामधिपतिः' ( तै० सं० ३.४.५.१ ) इति श्रुतेः।

विष्णुदेवताकोऽयं मन्त्र इति विष्णुरेव स्तुत्यो नादित्यः। नहि वैज्ञानिकार्थप्रकाशनलालसया मुख्यार्थत्यागो युक्तः, वैज्ञानिकसिद्धान्तस्य अद्याप्यव्यवस्थितत्वात्। अत एव सूर्याकर्षणविज्ञानमिह वर्णितमिति न वक्तुं शक्यते। किञ्चैवम्–आकर्षणेनैव पृथ्वीधारणोपपत्तौ पर्वतानां भूधरत्वसंज्ञाऽपि पूर्वजानामज्ञानमूलिकैवेति मन्तव्यं भवेत्, विष्णोरन्यथासिद्धत्वञ्च स्यात्।

यदप्युक्तम्—"'यज्ञ इन्द्रमवर्धयत्' इति मन्त्रे पृथिव्या दैनन्दिनगतिरपि सूर्येणैव भवती"ति। तदपि न; मन्त्रार्थस्य अतथात्वात्।

'यज्ञ इन्द्रमवर्धयद् यत् भूमिं व्यवर्तयत्। चक्राण ओपशं दिवि ॥'

( ऋ० सं० ८. १४.५ )

अर्थः—यज्ञः यजमानैरनुष्ठीयमानो यागः इन्द्रं देवम् अवर्धयत् श्रूयते हि 'इन्द्र इदं हविरजुषतावीवृधत महो ज्यायोऽकृत' ( तै० ब्रा० ३.५.१०.३ )। यत् यस्मात् भूमिं पृथिवीम्; व्यवर्तयत् वृष्ट्यादि-

प्रदानेन विशेषेण वर्तमानामकरोत्। किं कुर्वन् ? दिवि अन्तरिक्षे मेघम् ओपशम् उपेत्य शयानम्, चक्राणः कुर्वन्। यद्वा—आत्मनि समवेतो वीर्य-विशेष ओपशः, तमन्तरिक्षे कुर्वन्। व्यवर्तयत् इत्यस्य विशेषेण वर्तमानाम् (सस्यश्यामलाम्) अकरोत् इत्येवार्थः, न भ्रामणम्, विपूर्वस्य वर्तते-स्तदर्थाभावात्। तच्च वृष्ट्यादिप्रदानेन तदर्थमेवान्तरिक्षे ओपशं मेघं वीर्यविशेषं वा चक्राणः कुर्वन् इत्येवार्थः। तेन ओपशपदं शृङ्गवाचकम्। किरणानां व्याघातेन वक्रीभावे शृङ्गं भवतीत्यादिकल्पनं निराधारमेव, मन्त्रे तादृगर्थबोधकपदाभावात्।

यदप्युक्तम्—"सौरः प्रकाशोऽनुभूयते। स सौररश्मिसम्पर्कात् सर्वत्र व्याप्तस्य सोमस्याभिज्वलनात् निष्पन्न इति च श्रूयते—

'सोमेनादित्या बलिनः सोमेन पृथिवी मही।
अथो नक्षत्राणामेषामुपस्थे सोम आहितः॥' इति।
(ऋ० सं० १०.८५.२)

तदपि श्रद्धामात्रम्; मन्त्रार्थस्तु—सोमेन आदित्याः अदितेः पुत्रा इन्द्रादयः बलिनो भवन्ति। ऐन्द्रवायवादि-ग्रहपरिग्रहादिति भावः। तथा सोमेन आहुत्यात्मना अग्नौ हुतेन पृथिवी भूमिः मही महती भवति। आहुत्या वृष्टिद्वारेण सस्यादिसम्पत्तेः। अथो अपि चायं सोमः नक्षत्राणामेषाम्। न क्षीयते येन स नक्षः सोमः, 'अपाम सोममभृता अभूमे'ति मन्त्रवर्णात्। नक्षं त्रायन्ते इति नक्षत्राः ग्रहचमसादयः। तेषा-मेषामुपस्थे सोमः रसात्मकः आहितः। यद्वा—प्रसिद्धानामेव नक्षत्राणा-मुपस्थे उपस्थाने द्युलोके सोम आहितः, 'तृतीयः स्यामितो दिवि सोम आसीतं गायत्र्याहरत्' (तै० ब्रा० ३.२.१.१) इत्यादिश्रुतेः। देवतारूप-सोमपक्षे सोमेन आदित्या देवाः बलिनो बलवन्तो भवन्ति, तस्य एकैककलास्वादनात्।

'प्रथमां पिबते वह्निं द्वितीयां पिबते रविः।'

इत्यादिस्मृतेः सोमेन पृथिवी मही। अमृतसेकेन ओषध्याद्यभिवृद्ध्या पृथिव्या बलवत्त्वम्। चन्द्रस्य नक्षत्राणामुपस्थे स्थितिः प्रसिद्धा।

सोमेन आदित्यप्रकाशाभिज्वलनमिति नोक्तमन्त्राक्षरैः सिद्ध्यति। तेजसां राशेरादित्यतेजसैव सोमस्याप्यायनात्।

"अस्यैवार्थस्य दृढीकरणाय 'आदित् प्रत्नस्ये'त्यादि" यदुक्तम्। तदपि न; तस्यापि अन्यार्थोपपत्तेः। तथा हि—

'आदित् प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम्।
परो यदिध्यते दिवा ॥'

(ऋ० सं० ८.६.३०)

अर्थः—परः दिवा दिवः परस्तात् द्युलोकस्योपरि यत् यदा अयमिन्दुः सूर्यात्मना इध्यते दीप्यते, आदित् अनन्तरमेव प्रत्नस्य चिरन्तनस्य रेतसः गन्तुः। री गतिरेषणयोः' इत्यस्मात् 'सुरीभ्यां तुट् च'(उ० सू० ४.६४१) इत्यसुन् तुडागमश्च। यद्वा-रेत इत्युदकनाम। रेतस्विनः उदकवतः सामर्थ्यात् मत्वर्थो लक्ष्यते। ईदृशस्येन्द्रस्य सूर्यात्मनः वासरं निवासकं वासरस्य निवासस्य हेतुभूतं वाद्यं ज्योतिः द्योतमानं तेजः पश्यन्ति सर्वे जनाः। यद्वा--वासरमिति अत्यन्तसंयोगे द्वितीया। कृत्स्नमहरुदयप्रभृत्यास्तमनं यावत्, ज्योतिष्पश्यन्तीत्यर्थः। 'इसुसोः सामर्थ्ये' (पा० सू० ८.३.४४) इति विसर्जनीयस्य षत्वम्।

एवम्—

"अभि प्रवन्त समनेव योषाः कल्याण्यः स्मयमानासो अग्निम्।
घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः॥

(ऋ० सं० ४.५८.८)

अनेन वैद्युतविज्ञानमुच्यते" इति; तदपि न किञ्चित्।

मन्त्रार्थस्तु—घृतस्य धाराः अमुम् अग्निम्, समनेव समानमनस्काः योषाः योषितः पतिमिव अभिप्रवन्त अभिनमयन्ति, निमग्नं कुर्वन्ति। कीदृश्यस्ताः? कल्याण्यः भद्ररूपाः। स्मयमानासः हसन्त्यः। किञ्च—ताः समिधः सम्यक् दीपयित्र्यः सत्यः। नसन्त व्याप्नुवन्ति। ताः एव धाराः जुषाणः प्रीयमाणः सेवमानो वा अयं जातवेदाः हर्यति कामयते। घृतशब्दस्य उदकमिति पक्षे अग्निजातवेद-

शब्दाभ्यां वैद्युतोऽग्निरादित्यो वा गृह्यते। तं देवमुदकधारा अभिप्रवन्त नसन्त च, स ताश्च हर्यति।

यदप्युक्तम्—"'तिस्रो मातृः तिस्रो भूमिर्धारयत' इत्यादिभिरपि मन्त्रैः सूर्यकृतं पृथिव्यादिधारणं सिद्ध्यति" इति। तदपि न; मन्त्रयोरनयोरन्यार्थकत्वात्। समग्रौ मन्त्रौ मन्त्रार्थचेत्थम्—

'तिस्रो मातृस्त्रीन् पितॄन् बिभ्रदेक ऊर्ध्वस्तस्थौ नेमव ग्लापयन्ति।
मन्त्रयन्ते दिवो अमुष्य पृष्ठे विश्वविदं वाचमविश्वमिन्वाम्॥'
(ऋ० सं० १.१६४.१०)

अर्थः—एकः प्रधानभूतः असहायो वा पुत्रस्थानीयः आदित्यः संवत्सराख्यः कालो वा तिस्रः मातृः सस्यवृष्ट्याद्युत्पादयित्रीः, क्षित्यादिलोकत्रयमित्यर्थः। तथा त्रीन् पितॄन् जगतां पालयितॄन् लोकत्रयाभिमानिनः अग्निवायुसूर्याख्यान् बिभ्रत् सन् ऊर्ध्वस्तस्थौ उन्नतः अत्यन्तदीर्घस्तिष्ठति भूतभविष्याद्यात्मना। सूर्यपक्षे सर्वेभ्य उन्नतः। ईम् एनं न अवग्लापयन्ति ग्लानिं नैव कुर्वन्ति। नहि कालः आदित्यो वा अन्येन पराभूयते। दिवः पृष्ठे द्युलोकस्योपरि अन्तरिक्षे मन्त्रयन्ते गुप्तं परस्परं भाषन्ते देवाः। किम्? विश्वविदं विश्ववेदनसमर्थां विश्वैर्वेदनीयां अविश्वमिन्वाम् असर्वव्यापिनीं वाचं गर्जितलक्षणाम् अमुष्य आदित्यस्य सम्बन्धिनीं मन्त्रयन्ते इत्यर्थः।

यथा लोके पुत्रो मातापित्रोः पोषकत्वेन धारको भवति, तथैवात्र सूर्यस्य संवत्सरस्य वा क्षित्यादिधारयितृत्वम्। नात्र आकर्षणविज्ञानबोधकः कश्चन शब्दोऽस्ति।

'तिस्रो भूमीर्धारयन् त्रीँरुत द्यून् त्रीणि व्रता विदथे अन्तरेषाम्।
ऋतेनादित्या महि वो महित्वं तदर्यमन् वरुणमित्र चारु॥'
(ऋ० सं० २.२७.८)

अर्थः—तिस्रो भूमीः। अत्र भूमिशब्दो लोकत्रये वर्तते। 'यो द्वितीयस्यां तृतीयस्यां पृथिव्याम्' इत्यत्र यथा पृथिवीशब्दः। भूम्यन्तरिक्षस्वर्गांस्त्रीन् लोकान् आदित्याः धारयन् वृष्टिप्रदानादिना धारयन्ति।

उत अपि च यून् दीप्तान् तत उपरितनान् महरादिकानपि त्रीन् लोका धारयन्ति । यद्वा—दीप्तान् अग्नि वायुं सूर्यञ्च धारयन्ति । अपि च—एषामादित्यानां विदथे यज्ञे अन्तः मध्ये त्रीणी व्रता सवनत्रयनिष्पाद्यानि त्रीणि कर्माणि सन्ति। यद्वा—एषां लोकानामन्तर्मध्ये विदथे यज्ञे निमित्त-भूते सति एषामादित्यानां त्रीणि कर्माणि रसादान-धारण-विसर्जन-लक्षणानि सन्ति । उत्तरोऽर्धर्चः प्रत्यक्षकृतः । हे आदित्याः ऋतेन सत्येन यज्ञेन वा महि महत् प्रभूतं वः युष्माकं महित्वं महत्त्वं यन्महाभाग्यं हे अर्यमन् वरुण मित्र तन्महाभाग्यं चारु शोभनम्, सर्वोत्कृष्ट-मित्यर्थः ।

यदप्युक्तम्—"आकृष्णेन रजसा' इत्यत्रापि रजसो लोकस्य कथं कृष्णत्वमिति शङ्का 'सूर्योदयात् पूर्वं लोकः कृष्ण एव भवती'ति तेन समाहिता । सूर्यमण्डलस्य कृष्णत्वं तु न तद्बुद्धावुपारूढम् । तस्मिन्काले एवंविधानां विज्ञानानामत्यन्ताभाव एवात्रापि निदानम् । न खलु अश्रुतादृष्टचरेऽर्थे बुद्धिः प्रसरति" इति ।

तदप्ययुक्तोपालम्भनम्; मन्त्रेणानेन सवितुः कृष्णवर्णत्वानुक्तेः । अमुकेन ग्रामेण गन्तव्यमिति यथा ग्रामस्य मार्गरूपेण निर्देशस्तथैवा-त्रापि रजसा लोकेन वर्तमानेति मार्गनिर्देशः । तस्य चान्तरिक्षलोकस्य न स्वाभाविकं कृष्णत्वमिति युक्तमेव । सूर्योदयात् प्राक् तस्य कृष्णत्व-प्रतीतिः । श्रुतिषु त्वादित्यस्य अनेकानि रूपाणि वर्णितानि । तथा हि छान्दोग्ये तृतीयाध्याये मधुविद्यायाम्—

'असौ वा आदित्यो देवमधु । तस्य द्यौरेव तिरश्चीन-वंशोऽन्तरिक्षमपूपो मरीचयः पुत्राः । तस्य प्राञ्चो मधुनाड्यः, ऋच एव मधुकृतः । ऋग्वेद एव पुष्पम् । ता अमृता आपस्ता वा एता ऋचः । एतमृग्वेदमभ्यतपत् । तस्याभितप्तस्य यशस्तेज इन्द्रियवीर्यमन्नाद्यं रसोऽजायत । तद्व्यक्षरत्तदादित्यमभितो-ऽश्रयत् । तद्वा एतद्यदेतदादित्यस्य रोहितं रूपम् ।... अथ ये दक्षिणरश्मय यजूंष्येव मधुकृतः । तदादित्यस्य शुक्लं

रूपम्। ये प्रत्यञ्चो रश्मयः सामान्येव मधुकृतः। तत्कृष्णं रूपम्।...अथर्वाङ्गिरस एव मधुकृतः। तदादित्यस्य परं कृष्णं रूपम्। येऽस्या ऊर्ध्वरश्मयः गुह्या आदेशा एव मधुकृतः। तदादित्यस्य मध्ये क्षोभत इव' इति।

सूर्यस्य रूपवर्णने पुराणवचनानि यथा—

'नमस्तुभ्यं परां सूक्ष्मां सौवर्णीं बिभ्रते तनुम्।
धाम धामवतामीश धाम्नामाधार शाश्वत॥'

(मार्कण्डेयपुराणे १०४.१८)

'ततः स्वतेजसस्तस्मादाविर्भूतो विभावसुः।
अदृश्यत तदादित्यस्तप्तताम्रोपमः प्रभुः॥'

(१०५.१)

'संस्तूयमानः स तदा गर्भाण्डात् प्रकटोऽभवत्।
पद्मपत्रसवर्णाभस्तेजसा व्याप्तदिङ्मुखः॥' (१०५.१७)

'कदम्बपुष्पवद् भास्वानधश्चोर्ध्वञ्च रश्मिभिः।
वृत्ताग्निपिण्डसदृशो दध्रे नातिस्फुरद्वपुः॥'

(मार्कण्डेय० १०५.२७)

'भवतिमिरासवपानमदात् भवति विलोहितविग्रहात्।
मिहिर विभासि यतः सुतरां त्रिभुवनभावन-भानिकरैः॥'

(मार्कण्डेय० १०७.७)

सूर्यस्य त्रयीमयत्वेन त्रय्यारूपेण तस्य रूपवत्त्वम्। त्रय्याश्च रूपाणि पुराणेषु—

'ऋचो रजोगुणाः सत्त्वं यजुषाञ्च गुणा मुने।
तमोगुणानि सामानि तमःसत्त्वमथर्वसु॥
एतानि ज्वलमानानि तेजसाऽप्रतिमेन वै।
पृथक् पृथगवस्थानभाञ्जि पूर्वमिवाभवन्॥
ततस्तदाद्यं यत्तेज ओमित्युक्त्वाऽभिशब्द्यते।
तस्य स्वभावाद् यत्तेजस्तत्समावृत्य संस्थितम्॥

यथा यजुर्मयं तेजस्तद्वत् साम्नां महामुने ।
एकत्वमुपयातानि परे तेजसि संश्रये ॥
शान्तिकं पौष्टिकञ्चैव तथा चैवाभिचारिकम् ।
ऋगादिषु लयं ब्रह्मँस्त्रितयं त्रिष्वथाऽगमत् ॥
ततो विश्वमिदं सद्यस्तमोनाशात् मुनिर्मलम् ।
विभावनीयं विप्रर्षे तिर्यगूर्ध्वमधस्तथा ॥
ततस्तन्मण्डलीभूतं छान्दसं तेज उत्तमम् ।
परेण तेजसा ब्रह्मन्नेकत्वमुपयाति तत् ॥' इति ।

( मार्कण्डेय० १०२. ७—१३ )

'तस्मादण्डाद्विभिन्नात्तु ब्रह्मणोऽव्यक्तजन्मनः ।
ऋचो बभूवुः प्रथमं प्रथमाद् वदनान्मुने ॥
जपापुष्पानिभाः सद्यस्तेजोरूपान्तसंहताः ।
पृथक् पृथक् विभिन्नाश्च रजोरूपवहास्ततः ॥
यजूंषि दक्षिणाद् वक्त्रादनिरुद्धानि काञ्चनम् ।
यादृग्वर्णं तथा वर्णान्यसंहतिधराणि च ॥
पश्चिमं यद्विभोर्वक्त्रं ब्रह्मणः परमेष्ठिनः ।
आविर्भूतानि सामानि ततश्छन्दांसि तान्यथ ॥
अथर्वाणमशेषञ्च भृङ्गाञ्जनचयप्रभम् ।
यावद्घोरस्वरूपं तदाभिचारिकशान्तिकम् ॥
उत्तरात् प्रकटीभूतं वदनात्तस्य वेधसः ।
सुखसत्त्व-तमःप्रायं सौम्यासौम्यस्वरूपवत् ॥' इति ।

( मार्कण्डेय० १०२. १—६ )

यदप्युक्तम्—"पृथिव्यन्तरिक्षदिवामग्निवाय्वादित्या देवताः । ता एव एव प्रधानीकृत्य वेदत्रयी प्रवर्तते । अत एव 'अग्निमीळे पुरोहितमि'ति ऋक्संहितायाः प्रारम्भे पुरःस्थितस्य अग्नेरेव प्रस्तावः । 'इषे त्वोर्जे त्वा वायवः स्थ देवो वः सविता प्रार्पयतु' इति यजुःसंहिताप्रारम्भे वायुकीर्तनम् । 'अग्न आ याहि वीतये' इति सामसंहितारम्भे आगन्तु-

काग्निरूपस्य आदित्यस्य प्रस्तावः। इदमेवाभिप्रेत्य 'ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्' इति ब्राह्मणश्रुतौ अग्न्यादिभ्य ऋग्वेदादीनामुत्पत्तिराम्नाता, विषयस्य ज्ञानकारणताया निरूढत्वात्। यद्यस्त्यग्निः ततः एव ऋग्वेदो जायते। न भवेच्चेत् कं वर्णयितुमृग्वेदः प्रवर्तेतेति तस्य कारणत्वमुपपादयति। अयमेवाभिप्रायो इति मनुनाऽपि शब्दान्तरैरुपदिष्टः। यथा—

'अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।
दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम्॥' इति।

परमशेषशेमुषीसम्पन्नैः विद्वत्प्रवरै रचितासु मनुस्मृतेष्टीकासु नैकत्राप्यस्यार्थस्य स्पष्टीकरणमुपलभामहे। 'पूर्वोक्ता श्रुतिरपि प्रायेण सर्वैः समुद्धृता। अग्न्यादिभ्यश्च कथं वेदानाम् उत्पत्तिरित्याशङ्कितमपि परमागमिकत्वान्नातिशङ्क्यमेतत्' इति गोविन्दराजेनाभिहितम्। 'सारासारवचःप्रपञ्चनविधौ मेधातिथेश्चातुरी' इति बहुधा स्तुतेन सर्वमान्येन मेधातिथिना बहु खल्वत्र विवेचितम्। 'परं किं नोपपद्यते।' कः? शक्तो दृष्ट्वा असतीर्वक्तुमर्हति। नाख्यातोऽर्थो विकल्पयितुं युक्तः' 'अग्न्यादयो देवता ऐश्वर्यभाजः, निरतिशयशक्तिश्च प्रजापतिस्तत्र का नामानुपपत्तिः? 'अर्थवादाश्चैते' इत्यादिशब्दैः शङ्कमानानां मुखमुद्रणं कृतम्। महामतेस्तस्योक्तेऽर्थे दृष्टिर्मनाक् प्रसृता। परम् ऋग्वेद आग्नेयसूक्तानामारम्भ दर्शनमेव ऋग्वेदस्याग्निजन्यत्वे तेन हेतूकृतम्, न तु तत्राग्निविज्ञानं प्राधान्येनास्तीति स्पष्टीकर्तुं तस्यापि वाक् प्राभवत्। भाष्यकृता माधवाचार्येण तु 'अग्न्यादिजन्यत्वेन वेदानां पौरुषेयत्वं प्रसक्तमिति उपोद्घाते पूर्वपक्षीकृत्य उत्तरपक्षे न किमपि समाहितम्। वैदिकविज्ञानपद्धतौ तस्मिन्काले दृष्टिनिक्षेप एव नाभूदित्येव सर्वस्य निदानम्" इति।

अत्रोच्यते—पूर्वाचार्यव्याख्यानमेवात्र युक्तम्, नाग्न्यादिविज्ञानप्रतिपादकत्वेन ऋग्वेदादीनामग्न्यादिजन्यत्वं वक्तुं युक्तम्, चिकित्सादिप्रतिपादकग्रन्थानां चिकित्सादिजन्यत्वापत्तेः।

अपि च न ज्ञानमात्रं वेदः, किन्तु शब्दराशिरूप इत्युक्तमेव, अन्यथा आनुपूर्वीनैयत्यानुपपत्तेः। अपि च न ज्ञानमात्रं प्रति विषयस्य कारणत्वं वक्तुं शक्यते अतीतानागतानामर्थानामसत्त्वेऽपि तज्ज्ञानदर्शनात्। न च कार्याव्यवहितावर्तिनामपि कारणत्वं संभवति कारणन्यायातिपातित्वात् तेषाम्। अपरोक्षज्ञानं प्रति विषयस्य हेतुत्वे भव्यधर्मादीनामापरोक्ष्यानुपपत्त्या तदनुपपत्तिः। धर्मस्यैव वेदार्थत्वेन वेदस्य धर्मजन्यत्वाद्यापत्तेश्च। न च अपरोक्षार्थस्यैव वेदार्थत्वमिति युक्तम्; धर्मादीनां तदनुपपत्तेः।

किञ्च—ऋग्वेदे, अग्निविज्ञानस्य प्राधान्येन कथञ्चिदाग्नेयसूक्तानामग्निजन्यत्वेऽपि नेन्द्रविष्णुवाय्वादित्यादिसूक्तानामग्निजन्यत्वसंभव इति कथं सर्वस्य ऋग्वेदस्य अग्निजन्यत्वसिद्धिः? कथञ्चिद्विषयस्य ज्ञानहेतुत्वेऽपि न जनिप्रकृतित्वं संभवति, तथात्वे पाणिन्यादेर्जायमानस्य व्याकरणादेः पाणिन्यादिविषयत्वापत्तिश्च।

यत्तु जातिसम्बन्धे बौद्धमतमाश्रित्य प्रोक्तम्।

"विधिरूपं सामान्यं (जातिः) न सम्भवति, अनुगतप्रतीतेरतद्व्यावृत्यैवोपपत्तेः। गौरयमिति प्रतीतेरगोव्यावृत्तोऽयमिति विषयः सामान्यवादिनापि गोत्वादिविशिष्टप्रत्ययस्य तद्विषयत्वाभ्युपगमात्। नहि वैशिष्ट्यमतद्व्यावृत्तेरन्यत्। गवादिपदप्रवृत्तिनिमित्तमप्यगोव्यावृत्यादिरेव। किञ्च गोत्वं कुत्र वर्तते? न तावद् गवि, गोत्ववृत्तेः पूर्वं तस्याभावात्। नाप्यगवि विरोधात्। यत्र गोपिण्डो भवति तत्र कुत आगत्य गोत्वं वर्तते? न तावत्तत्रैवासीत्, देशस्यापि तस्य गोत्वापत्तेः। नापि गोत्वमपि तदानीमेवोत्पन्नम्, नित्यत्वाभ्युपगमात्। नाप्यन्यत आगतम्, निष्क्रियत्वाभ्युपगमात्, नचैकस्यैव नित्यस्य नानाव्यक्तिवृत्तित्वम्, कार्त्स्न्यैकदेशविकल्पानुपपत्तेः। नहि कृत्स्नमेकत्रैव वर्तते, अन्यत्र तद्विशिष्टप्रत्ययानुदयप्रसङ्गात्। नाप्येकदेशेन, जातेरेकदेशस्याभावात्। तदुक्तम्—

'न याति न च तत्रासीत् न चोत्पन्नं न चांशवत्।
जहाति पूर्वं नाधारमहो व्यसनसन्ततिः॥'

कणादेनापि सामान्यं विशेष इति बुद्धयपेक्षमेव सामान्यं वदता काल्पनिकमेव तदित्यङ्गीकृतम् इति, तन्न. सूत्रार्थानवबोधात् । तत्रैवोपस्कारकारादिभिर्बौद्धादिपक्षनिरसनपुरःसरं सामान्यव्यवस्थापनात् ।

सूत्रार्थस्तु—सामान्यं सत्तारूपं परसामान्यम् । अपरं सत्ता द्रव्यत्वादिकम् । बुद्धिलक्षणन् । तेनोभयविधस्य सामान्यस्य बुद्धिरेवलक्षणम् । इतिना तद्वयवच्छिद्य परामृश्यते । तेन बुद्धयपेक्षमिति नपुंसकनिर्देशः ।

वृत्तिकारस्तु—विशेषान्वयमाह । 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामित्यनेनैकवद्भावो नपुंसकता चेत्याह । बुद्धिरपेक्षालक्षणं लिङ्गं यस्य तद्बुद्धयपेक्षम् ।

नित्यमनेकवृत्ति सामान्यम् । परन्तु सामान्यं विशेषसंज्ञामपि लभते । यथा द्रव्यमिदमित्यनुवृत्तप्रत्यये सत्येव नायं गुणो, नेदं कर्मेति विशेषप्रत्ययः । तथा च द्रव्यत्वादीनां सामान्यानामेव विशेषत्वम् ।

सामान्यं नित्यं व्यापकञ्च । व्यापकत्वमपि स्वरूपतो न सर्वदेशसम्बद्धत्वम्, तत एव न देशानां गोव्यवहारापत्तिः । समवायेन तद्व्यवहारस्याभ्युपगमात् । कालस्य रूपादिमत्त्वेऽपि कालो रूपवानित्यप्रतीतिव्यवहारवत् । तथा च यत्र पिण्ड उत्पद्यते तत्रस्थमेव गोत्वं तेन सम्बद्धयते ।

जातः सम्बद्धश्चेत्येकः काल इत्यभ्युपगमात् । कीदृशे आश्रये वर्तत इत्यत्र यत्र प्रतीयत इत्युत्तरम् । कुत्र प्रतीयत इत्यत्र यत्र वर्तत इत्युत्तरम्, गोत्ववृत्तेः पूर्वं स पिण्डः कीदृगासीदित्यत्र नासीदित्येवोत्तरम् । अतद्व्यावृत्तिरेव गोत्वमित्यत्र गौरयमिति विधिमुखः प्रत्यय एव बाधको ऽनुभवस्य प्रत्याख्यातुमशक्यत्वात् । एतेन 'न याति न च तत्रासीदिति परिदेवनमात्रम् ।

सामान्यं विशेष इति द्वैविध्यं यदुक्तं तदुपपादयन्नाह—भावोऽनुवृत्तेरेव हेतुत्वात् । सामान्यमेव भावः सत्ता अनुवृत्तेरेव हेतुः; न व्यावृत्तेरपि । तथा च विशेषसंज्ञां न लभते । केषां सामान्यानां विशेषसंज्ञा इत्यपेक्षायामाह—द्रव्यत्वं गुणत्वं कर्मत्वं च सामान्यानि विशेषाश्च

सत्तासामान्यविप्रतिपत्तिनिरासाय सदिति । यतो द्रव्यगुणकर्मसु सत्ता इत्युक्तम्। अपि च 'द्रव्यगुणकर्मभ्योऽर्थान्तरं सत्ता' इति सूत्रेण स्पष्टमेव सत्ताया द्रव्यादिभ्योऽर्थान्तरमुक्तम्। यत्तु तेभ्योऽन्यत्र नोपलभ्यम् तदयुतसिद्धिबलात्। घटपटयोस्तु युतसिद्धत्वेन पृथगुपलब्धिः। तस्मात् सूत्रानुयायिनां भाष्यानुसार्य्येव सूत्रार्थ इति मन्तव्यम्।

यदुक्तम्

संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः।
संस्त्यानेस्त्यायतेर्ड्ट् स्त्री सूतेः स प्रसवे पुमान्॥

इति वार्तिकव्याख्यानमहाभाष्येणाप्यादानप्रदानयज्ञप्रक्रियाविधया आदानविवक्षया स्त्रीलिङ्गं, प्रदानविवक्षया पुंल्लिङ्गं, ताटस्थ्यविवक्षया तु नपुंसकलिङ्गम् इति सिद्ध्यति। तन्न; भाष्यविरोधात्। तथाहि अधिकरणसाधनास्त्यायत्यस्यां गर्भ इति स्त्री। कर्तृसाधनश्च पुमान् सूतेः पुमान्। इह पुनरुभयं भावसाधनम्। संस्त्यानम् स्त्रीप्रवृत्तिर्वा पुमान् शब्दादिगुणानां संस्त्यानविवक्षायां स्त्री, तेषामेव प्रवृत्त्यपेक्षायां पुमान्, उभयविवक्षायां नपुंसकमित्येव तु महाभाष्यवचनात् सिद्ध्यति।

अत्र संस्त्यानं तिरोभावरूपोऽपचयः, प्रवृत्तिश्चाविर्भावलक्षण उपचयः। केषां ? गुणानां शब्दस्पर्शादीनां, शब्दादीति सत्त्वादिकार्यमात्रस्योपलक्षणम् ज्ञेयम्।

सर्वाश्च मूर्त्तय एवमात्मिका इति भाष्येणैव तद् ध्वनितम्। मूर्त्तय इति पदार्था ग्राह्याः। आत्मनि प्रकृतौ महति अहङ्कारे च लिङ्गव्यवहारो दृश्यते। न च तत्र शब्दादिगुणोपचयादिकं सम्भवति शब्देऽपि शब्दाद्यभावात्तु नोपपद्यते। आत्मनि परिणामवदन्यतादात्म्याध्यासेन तत्परिणामानुयायित्वेन लिङ्गव्यवहारः। शब्दादिप्रदानापेक्षया पुंस्त्वं शब्दाद्यादानापेक्षया महदादौ पुंस्त्वादिव्यवहारो नोपपद्यत एव महदादिषु शब्दादिसम्बन्धाभावात्। पारम्पर्येण तत्सत्त्वे तूपलक्षणमेवायातम्। कैश्चित्तु सात्विकांशाधिक्येन परिणामे पुमान्, राजसांशाधिक्येन परिणामे स्त्री, तामसांशाधिक्येन नपुंसकम् एतत्त्रितयं व्यक्तिमात्रवृत्तितया केवलान्वयि। वस्तुमात्रस्य क्षणपरिणामितया वृद्धिह्रास-

साम्यानामावश्यकत्वात् । अत एव एकैव व्यक्तिः सात्विकेन धर्मेण कञ्चित् सुखयति, राजसेन धर्मेण कञ्चित् क्लेशयति, तामसेन कञ्चिन्मोहयति । तस्मात् सत्त्वोपचये पुमान्, रजस उपचये स्त्री, तमसस्तथात्वे नपुंसकमिति व्यवहारः । कैश्चितु सकलगुणानामुपचये पुंस्त्वमपचये स्त्रीत्वम् साम्ये नपुंसकत्वम् । अन्यैस्तु अन्यापेक्षयोपचयादौ पुंस्त्वादिकमुच्यते ।

यद्यपि 'स्तनकेशवती नारी लोमशः पुरुषः स्मृत'इति लौकिकमेव पुल्लिङ्गादिलक्षणम् तथापि व्याकरणशास्त्रे तद्रहितखट्वावृक्षादिशब्दानां पुल्लिङ्गत्वादिव्यवहाराय पारिभाषिकोऽयं लिङ्गव्यवहारोऽभ्युपेयते ।

हरिरप्याह—

आविर्भावतिरोभावस्थितिश्चेत्यप्यपायिनः ।
धर्मा मूर्तिषु सर्वासु लिङ्गत्वेन व्यवस्थिताः ॥

हरिरपि वैज्ञानिकं लिङ्गं न जानाति भवांस्तु जानातीति न संभवदुक्तिकमिति ।

तथाहि सति संभवे सामानाधिकारण्यसम्बन्धेन लौकिकपुंस्त्वादिविशिष्टशास्त्रीयलिङ्ग एव पुमादिशब्दानां शक्तिः, न केवले शास्त्रीये, नापि लौकिके, असंभवे तु शास्त्रीय एव । अत एव 'पशुना यजेत' इत्यादौ पशुस्त्रिया कृते यागे वैगुण्यम् । लौकिके पुंस्त्वादि-विशिष्टशास्त्रीयपुंस्त्वस्यैव शब्देन प्रतिपादनात् ।

तस्मान्नादानप्रदानलक्षणयज्ञप्रक्रिययैव स्त्रीत्वं पुंस्त्वञ्च । गीतायां हि—'ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसी'ति शास्त्रविधानेनोक्तमेव कर्म कर्त्तव्यत्वेनोक्तम्, न तु स्वाभाविकानान्तेषामशनपानमैथुनादीनामनुकरणमेव कर्त्तव्यमित्ययुक्तम् । 'द्रव्यं देवता त्यागः, (कात्यायनश्रौतसूत्रे १ अध्यायः) इति सूत्रानुसारेण देवतोद्देश्येन क्रियमाणस्वस्वत्वनिवृत्त्यनुकूलो व्यापार एव यागः । इति १९४ पृष्ठे निरूपितमेव ।

यदुक्तमियमग्नौ सोमाहुतिप्रक्रिया शिवशक्त्युपासनाऽनुकृता शवरूपस्य शिवस्य हृदि विराजमाना आद्या शक्तिः ध्येया मूर्तिष्वपि तदाकारा पूज्यते । तेन ब्रह्मरूपस्य शिवस्य हृदि मध्यकेन्द्रे शक्तिरनवरत

विराजते। शक्तिहीनः शिवः कदापि न भवति। अग्निः शिवः तस्योपरि मध्यभागे शक्तिरूपः सोम आगच्छति। उपर्य्यन्तरिक्षे सर्वत्र सोमो व्याप्तः। स सङ्घीभूयाग्नौ निपतति। सोमः कृष्णवर्णः शक्तिरपि कृष्णवर्णैव। अग्निरूपः शिवस्तूज्ज्वलः। उः शिवस्तस्य माया शक्तिः उमा उमया सहितः शिवः सोमः। तदपि नाभीष्टसाधनम्, ब्रह्मरूपे शिवे शक्तेर्ध्येयत्वेऽपि विहितध्यानस्यैव तत्र पुण्यजनकत्वात्। एवं होमेऽग्न्यादिषु शिवादिबुद्धयोऽपि तन्त्रेषु विहिता एव। तत्रैव बृहज्जाबालोपनिषदो निम्नोक्तानि वचनानि सङ्गतानि।

अग्नीषोमात्मकं विश्वमित्यग्निराचक्षते।
रौद्री घोरा या तैजसी तनुः सोमशक्त्यमृतमयः शक्तिरतितनुः।
"अमृतं या प्रतिष्ठा सा तेजोविद्या कला स्वयम्।
स्थूलसूक्ष्मेषु भूतेषु स एव रसतेजसी।
द्विविधा तेजसो वृत्तिः सूर्यात्मा चानलात्मिका।
तथैव रसशक्तिश्च सोमात्मा चानलात्मिका॥
वैद्युदादिमयं तेजो मधुरादिमयो रसः।
तेजोरसविभेदैस्तु वृत्तमेतच्चराचरम्॥
अग्नेरमृतनिष्पत्तिरमृतेनाग्निरेधते।
अत एव हविः सन्तमग्नीषोमात्मकं जगत्॥
ऊर्ध्वशक्तिमयः सोम अधः शक्तिमयोऽनलः।
ताभ्यां सम्पुटितस्तस्माच्छश्वद्विश्वमिदं जगत्॥
अग्नेरूर्ध्वं भवत्येषा यावत्सौम्यं परामृतम्।
यावदग्न्यात्मके सौम्यममृतं विसृजत्यधः॥
अत एव हि कामाग्निरधस्ताच्छक्तिरूर्ध्वगा।
यावदादहनश्चोर्ध्वमधस्तत्पावनं भवेत्॥
आधारशक्त्यावधृतः कालाग्निरयमूर्ध्वगः।
तथैव निम्नगः सोमः शिवशक्तिपदास्पदः॥
शिवश्चोर्ध्वमयः शक्तिरूर्ध्वशक्तिमयः शिवः।
तदित्थं शिवशक्तिभ्यां नाव्याप्तमिह किञ्चन॥

असकृच्चाग्निनादग्धं जगत्तद्भस्मसात्कृतम् ।
अग्नेर्वीर्य्यमिदं प्राहुस्तद्वीर्य्यं भस्म यत्ततः ॥
यश्चेत्थं भस्मसद्भावं ज्ञात्वाभिश्नाति भस्मना ।
अग्निरित्यादिभिमन्त्रैर्दग्धपापः स उच्यते ॥
अग्नेर्वीर्य्यं च तद्भस्म सोमेनाप्लावितं पुनः ।
अयोगयुक्त्या प्रकृतेरधिकाराय कल्पते ॥
योगयुक्त्या तु तद्भस्म प्लाव्यमानं समन्ततः ।
शाक्तेनामृतवर्षेण ह्यधिकारान्निवर्तते ॥
अतो मृत्युञ्जयायेत्थममृतप्लावनं सताम् ।
शिव शक्त्यमृतस्पर्शो लब्ध एव कुतो मृतिः ॥
यो वेद गहनं गुह्यं पावनञ्च तथोदितम् ।
अग्निषोमपुटं कृत्वा न स भूयोऽभिजायते ।
शिवाग्निना तनुं दग्ध्वा शक्तिसोमामृतेन यः ॥
प्लावयेद्योगमार्गेण सोऽमृतत्वाय कल्पते ॥

अत्र स्पष्टम् भस्मधारणशेषत्वेनैतज्ज्ञानं विहितम् । अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एवं भस्म सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्चेत्युक्तः । नात्र कश्चन प्राकृतो यज्ञो निरूप्यते । यो वेद गहनं गुह्यमिति स्पष्टमेव च जलाक्ते भस्मनि शिव-शक्तिबुद्धिः कार्या वैदिकविज्ञानवादिभिः ।

यदुक्तम्—"जगति जडचेतनात्मकेषु पदार्थेषु गत्यागती प्रवर्तेते । सर्वत्र व्याप्तोऽग्निः प्राणो भूतसहकृतः स्वभावेन प्रतिक्षणं निष्क्राम्यति, तेन जाता क्षतिश्चापरत आगतेन सोमेनाग्निरूपतामाप्तेन प्रपूर्य्यत इति सर्वेषां पदार्थानां जीवनं यज्ञायत्तम् । यत्रागतिरधिकगतिश्चाल्पा तत्पुष्टिर्भवति । यत्र गतिरधिका आगतिश्च क्रमेण विच्छिन्नतयाल्पा तज्जीर्णं भूत्वा नश्यति । इमामेव प्राकृतीं प्रक्रियामवलम्ब्य कृत्रिमा यज्ञाः विहिताः । अनुष्ठीयमानेषु यज्ञेषु सोमो हूयते । सोमयागनाम्ना प्रसिद्धेषु, महत्सु यज्ञेसु लतारूपः सोम एव कण्डनेन रसतामापाद्य हूयते

इष्टयादिषु यत्र सोमाहुतिर्न भवति तत्रापि येषु द्रव्येषु सोमस्य प्राधान्यं तान्येव गव्यघृतदुग्धादीनि तण्डुलादीनि वा हूयन्ते।

यथा च सोमाहुत्यैवाधिदैवतं दिनमासवर्षादिकालपरिच्छेदः तथैव कृत्रिमेषु यज्ञेष्वपि प्रत्यहं सायं प्रातः सन्धिकालेऽग्निहोत्रम्। माससन्धौ च दर्शपौर्णमासौ ऋतुसन्धौ च चातुर्मास्यादीनीति प्राकृतयज्ञानुकृति-सोमयागेष्वप्येकाह्यहीनरात्रिसत्रायनसत्रादि भेदाः प्रवर्तन्ते।

अयं वै लोको गार्हपत्यः। शत० ७।१।१।६
सँवत्सरोऽग्निः। श० ९।३।३।१२

इत्याद्यासु श्रुतिषु लोकयात्रारूपता गार्हपत्याहवनीयदक्षिणाग्नीनां प्रतिपादिता। तेन यथा लोकयात्राधिष्ठितेष्वग्निषु सोमः प्रकृत्या हूयते तथैवात्राप्यग्नित्रये सोमो हूयत इत्यनुकृतिः प्रदर्शिता। तदित्थं सूर्य्योऽधि-दैवतम् प्राणी शरीरेष्वध्यात्मं सर्वेषु पदार्थेष्वधिभूतम् जगति प्रवर्तमा-नाग्नौ सोमाहुतिरूपा स्थूला यज्ञप्रक्रिया संक्षेपेण निदर्शिता" इति।

तदत्रोच्यते—भूतसहकृतः प्राणः कश्चन, स चाग्निः, स च सर्वत्र व्याप्त इत्येव तावद्सिद्धम्, प्राणस्यापि भौतिकत्वात्। प्रकृतेः क्षणपरिणा-मित्वश्रवणेन प्राकृतेषु पदार्थेषु परिणामस्तु सिद्ध्यत्येव, तथैव भावत्त्वेना-पक्षयादिकमपि सिद्ध्यति तथैव जीवोपेतेषु भावेषु तत्सम्बद्धेभ्यः प्राकृतेभ्यः प्रकृतेश्चापूरो भवति। जीवापेतेषु तु कालमहिम्ना शीर्य्यत एव सर्वम्। तदिदं नागतिनिर्मित्तं किमपि घटपटादिषु तथाऽदर्शनात्। वृक्षादीनां स्थितौ वृद्धौ च न केवलं भूम्यग्न्योरेव हेतुत्वं किन्तु पञ्चाना-मपि भूतानां तत्रोपयोगः तावतैव जलाग्न्योर्योगेन यज्ञत्वकल्पना निरा-धारैव। पदार्थजीवनादिकन्तु तत्तत्कारणैः सिद्ध्यत्येव। तत्र यज्ञत्वकल्पना तु अन्यथा सिद्धैव। यदि प्राकृतचेष्टानुकरणमेव यज्ञः स्यात्तदा तथा स परिभाष्येत। प्रकृतिवद्विकृतिः कर्तव्या इत्यतिदेशविधानमपि स्यात्।

किञ्चातिदेशे प्रकृतेः साङ्गवर्णनं स्यात् तद्वदेव च विकृतेरनुष्ठानेन भाव्यम्। न च साङ्गप्रकृतियागवर्णनमुपलभ्यते। न वा सर्वथा तदनु-करणं विकृतिषूपलभ्यते। तद्वैपरीत्येन तु याजमानानामेव यागानां साङ्ग-वर्णनम्। क्वचित्तत्साम्यप्रदर्शनायोपासनार्थम्प्राकृतपदार्थाश्च वर्ण्यन्ते।

नह्यग्नौ यथा कथञ्चित् सोमदधिघृतादिनिक्षेप एव याग इति वक्तुं शक्यते, अनीप्सिततद्दाहादावतच्छब्दप्रयोगात्। सर्वत्र विधेरेव प्राधान्यम्। अत एव "विधिहीनस्य यज्ञस्य सद्यः कर्ता विनश्यतीति" "छिद्रं हि मृगयन्त्येते विद्वांसो ब्रह्मराक्षसा" इत्यादिभिः विधिहीनयज्ञस्य विपरीतफलकत्वमवगम्यते। अत एवाग्निहोत्रदर्शपूर्णमासचातुर्मास्यादीनामङ्गोपाङ्गप्रभेदविधानवन्न प्राकृतयागत्वेनाभिमतेष्वधिदैवतेषु सोमहोमेषु तथाविधप्रभेदवर्णनमुपलभ्यते। निरुक्तादिषु तु भावविकारविवरणे यमेन विच्छिन्नतया अल्पा गतिर्यत्र तज्जीर्णं भूत्वा नश्यति इति वस्तुगत्यां सत्त्यामपि तत्र तदेतन्न चर्चितम्। गार्हपत्याहवनीयदक्षिणाग्निषु लोकत्रयदृष्टिस्तूपासनार्थैव न वस्तुस्थित्यनुरोधेन योषादिष्वग्निदृष्टिवत्।

'अयं वै लोको गार्हपत्यः' इति श्रुत्या न पृथिवीलोकस्य गार्हपत्याग्नित्वं, न च तत्र सोमहोमो बोध्यते तथात्वाश्रुतेः। "अथोषान्निवपति" इति गार्हपत्य ऊषायाः क्षारमृत्तिकाया निवापस्तु विहितः। तस्य प्रशंसार्थं गार्हपत्ये पृथिवीलोकत्वभूपायाश्च पशुत्वमारोप्यते। ऊषरप्रदेशस्य पशुभिरुपजीव्यत्वादूषाणां पशुत्वव्यदेशः। यस्मादूषाणां निवपने न पशवोऽस्मिन् लोके स्थापितास्तस्मादेव इदानीमपि पशवो गवाद्या अस्मिल्लोके समृद्धा उपलभ्यन्ते।तदनुगुणान्येव श्रुत्यक्षराणि "अथोषान्निवपति अयं वै लोको गार्हपत्यः पशवऽऊषा अस्मिल्लोके पशूनुपदधाति तस्मादिमे अस्मिल्लोके पशव इति श्रुतेः (श० ७।१।११) सर्वथाऽपि नानया पृथिव्या गार्हपत्याग्नित्वं प्रबोध्यते। किञ्च नहि यज्ञे गार्हपत्ये दक्षिणाग्नौ वा सोमहोमेन यज्ञपूर्तिः, आहवनीय एव प्रधानहोमविधानात्। तस्माद्यत्किञ्चिदेतत्।

एवं "संवत्सरोऽग्नि" रित्यनेनापि न संवत्सरस्याग्नित्वं बोध्यते किन्तु द्वादशकल्पाञ्जुहोति इति विधाय तत्प्रशंसा क्रियते। कल्पहोमा द्वादश भवन्ति, अग्निश्च द्वादशमासरूपसँव्वत्सरात्मकः। अतस्तत्संमितेनाग्निं प्रीणाति। हिरण्यगर्भस्य सूर्य्यात्मकत्वेनाग्निरूपत्वेन च वर्णनात् संवत्सरव्यवहारस्य सूर्य्यमूलकत्वेनाग्नेः संवत्सररूपत्व-

मौपद्रविकमेव । एवं कथञ्चित् प्रतीकोपादानेन प्राकृतयज्ञसिद्धि दुर्घटैव । विहितयज्ञसादृश्येन क्वचित्प्राकृते व्यवहारे यज्ञकल्पना भवतु तथापि तेन विहितभागस्यैव स्तुत्यादिविवक्षितमिति तद्बोधने तात्पर्य्याभाव एव, 'यत्परः शब्दः स शब्दार्थ' इति न्यायात्।

एतेनाधिदैवताध्यात्मिकाधिभौतिकयागप्रक्रियापि व्याख्यातैव । प्राणाग्निहोत्रादिव्यवस्था तु विहितत्वाद्युक्तैव।

यदप्युक्तम् "सूक्ष्मविचारे त्वग्नीषोमावपि यज्ञेनैवोत्पाद्येते यज्ञेनैव च स्वस्वरूपेऽवतिष्ठेते अन्यानि च देवभूतादीनि तत्त्वानि यज्ञादेवोत्पद्यन्ते तेनैव च पाल्यन्ते चे"त्याद्यपि श्रुतिभ्यः सिध्यति । अग्नौ सोम आयाति सोमं गृह्णन्नग्निश्च स्वात्मरूपतां प्रापयति। अनयैव च दिशा पदार्थेषु गत्यागती । या च देवानां भूतानां द्वयोः सम्बन्धेन रूपान्तरताप्राप्तिः सा सर्वापि यज्ञपदेन तत्र तत्र श्रुतिषु व्याख्यायते । तथाहि— पृथिव्युत्पत्तिस्तावदेवं ब्राह्मणेषु ( श० ६।१।३।२।६ ) आपः फेनः मृत्स्ना सिकता शर्करा अश्मा अयः हिरण्यमित्यष्टावस्थाः क्रमेणोद्भवन्ति । तासां समुदायः पृथ्वीत्याख्यायते । प्रसृतावप्सु सूक्ष्मेऽवकाशे वायुः प्रविशति निष्क्रामति चेति क्रियानवरतं प्रवर्त्तते । यदा वायुनोत्थापितानामपां सूक्ष्मः स्तरो वायुमावृणोति । आवृतश्च वायुर्न निष्क्रमितुं प्रभवति, तदा बुद्बुदो जायते,क्षणानन्तरं जलस्तरं त्रोटयित्वा वायुर्निष्क्राम्यति, बुद्बुदो विलीयते। यदा च वायुनोत्थापितानामपां स्तरो घनीभवति वायुवेगेन सहसा न त्रुट्यति। तदा वायोश्चापाञ्च चिरसंघर्षाद् द्वयोरपि स्वरूपं विलीयते, द्विसंसर्गजञ्च फेनरूपं भवति। सेयं द्वाभ्यामभिनवपदार्थोत्पत्तिरपि यज्ञ एव । एवं फेनेऽपि वाय्वादेस्तत्त्वान्तरस्य संघर्षान्मृत्स्ना जायते । तदनन्तरमश्मा । तत्र सूर्यरश्म्यादिनिष्ठस्याग्नेः प्रभावातिशयादयादयश्च धातवो जायन्ते । सर्वान्ते सुवर्णम् । सर्वतो गुरुभूतं सुवर्णं जायते । ता एता अष्टावस्था अष्टाक्षररूपेण निरूपिताः ।" इयञ्चाष्टाक्षरा गायत्री चयनप्रकरणे व्याख्याता ।

तदपि न समीहितसाधनम् । तात्पर्य्यान्तरस्य विवक्षितत्वात्-तथाहि—यदि द्वाभ्यां जायमानत्वमेव यज्ञत्वं तदा प्रकृतिपुरुषाभ्यां

सर्वस्य जायमानत्वात् सर्वस्य यज्ञत्वं स्पष्टमेवेति पृथक्-पृथक् तत्समर्थनं व्यर्थमेव। यदि तस्यैव यज्ञनामकरणमिष्यते तर्हीष्यताम्। न तावता याज्ञिकप्रसिद्धयज्ञत्वं तत्र सम्भवति, तस्य भवदभ्यूहमात्रत्वात्। तस्मान्न द्वयोः सम्बन्धेन रूपान्तरतापत्तिरेव यज्ञः। द्विसंयोगेषु बहुषु पदार्थेषु यज्ञत्वव्यवहाराभावात्। उद्धृतशतपथप्रमाणेनापि तन्न सिद्ध्यति, तत्र पृथिव्यास्तदवस्थानाञ्च वर्णनेऽपि पृथिव्या यज्ञत्वानुक्तेः। अतएव द्वाभ्याञ्जातानामभिनवपदार्थरूपफेनादीनामपि यज्ञत्वं नाम्नातम्।

वस्तुतस्तु इष्टकाचयनप्रसङ्गे इष्टकायाः केनचित्साम्येन पृथ्वीत्वमुक्तम्। सेयं चतुःस्रक्तिर्दिशो ह्यस्यै स्रक्तयस्तस्माच्चतुःस्रक्तयः इष्टका भवन्तीति। भूमेर्दिग्रूपचतुःस्रक्तियुक्तत्वादिदानीन्तनैः चतुःस्रक्तय इष्टकाः कार्य्या इत्युक्तम्। ततश्चैकेष्टकत्वे पञ्चेष्टकत्वमग्नेः प्रसिद्धिरिति तद्विरोधमाशङ्क्य पञ्चेष्टकाश्चीयन्ते इत्युक्तम्। तत्र भूमिः प्रथमेष्टिका, यत्किञ्चिन्मृन्मयपात्रादिकमुपदध्यात् सा मृण्मयी। पुरुषाश्वादि पञ्च पशुशीर्षोपधानेन पशविष्टका। रुक्मं हिरण्यम्। तत्र पुरुषं स्वर्णनिर्मितमुपदधाति। उपहिता इष्टका स्वर्णसकलैः प्रोक्षति। अतोऽत्र हिरण्यस्पर्शादेषा हिरण्येष्टका। स्रुगाद्युपधानेन वानस्पत्येष्टका वनस्पतिविकारत्वात्स्रुगादीनाम्। पुष्करपर्णाद्युपधानेन अन्नेष्टका। तत्र दधिघृतादीनामन्नत्वात्। पञ्चेष्टकाश्चेतव्याः, मार्तिक्यश्च इष्टकाः पश्वादिसम्बन्धात् पञ्च भवन्ति।

तत्र च पृथिव्याः स्तुतये तस्याः प्रजापतेरुत्पत्तिस्तस्याश्च अष्टावस्थासु अष्टाक्षरत्वसाम्येन गायत्रीत्वञ्चोपपद्यते। तदेतत्सर्वं "प्रजापतिर्वा इदमग्र आसीत्......सोऽश्राम्यत तपोऽतप्यत तस्मादापो जायन्ते आपो अब्रुवन् क्व वयं भवामः ताः फेनमसृजन्त फेनोऽब्रवीत्......मृदेव भवति...... तद्यदसृज्यताक्षरत् तद्यदक्षरत् तस्मादक्षरं यदष्टौ कृत्वाऽक्षरत्सैवाष्टाक्षरा गायत्र्यभवत्। प्रजापतिः अष्टौ कृत्वाऽक्षरत् सैव संख्या साम्यादष्टाक्षरा गायत्री सम्पन्ना। (सा० भा०)। नात्र क्वचिदपि द्विसंयोगजस्याभिनवपदार्थस्य यज्ञत्वमुक्तम्।

यच्चोक्तं "द्वयोः सम्बन्धरूपो यज्ञः सृष्टेरारम्भादेव प्रवृत्तः। द्वयोः सम्बन्धे प्रधानः पुरुषः अग्निरिति चाख्यायते, अप्रधानस्तु योषा सोम इति च परिभाष्यते; अग्नीषोमयोर्यथान्नादरूपो वृष-योषा-रूपश्च सम्बन्धः। द्वयोः सम्बन्धे एकस्य वृषत्वम्; अर्थात् पुरुषत्वम् अपरस्य योषात्वम्। तत्राप्यग्नित्वं सोमत्वञ्चारोप्यते। तयोः सम्बन्धश्च यज्ञशब्देनैव व्यवह्रियते। यथा अनन्तकोटिब्रह्माण्डात्मकस्य जगत एकमेव मूलतत्त्वं सत्पदवाच्यम्, "सदेव सोम्य इदमग्र आसीदेकमेवा-द्वितीय" मित्यादि श्रुतिषूक्तम्। अविकृतं विभु सृष्टिं रचयितुं न शक्नोतीति तत्रैका शक्तिः स्वाभाविका कल्प्यते। "अनीदवातं स्वध-या तदेकम् परास्य शक्तिर्विविधैव श्रूयते।" सोऽयं शक्तेर्ब्रह्मणश्च सम्बन्धः प्रथमो यज्ञः सर्वजगदुत्पादक इति तदपि न प्राकृतयज्ञसाधकम्। एकं ब्रह्मशक्तिसंश्लिष्टं सज्जगद्रचयतीति तु सत्यम्। तयोः सम्बन्धस्तु भवदुक्तरीत्या स्वाभाविक एवेति कुतस्तत् सम्बन्धस्यागन्तुकत्वं यज्ञत्वञ्च? सृज्यमानप्राण्यदृष्टवशात् सम्पन्नसम्बन्धः विशेषस्यागन्तु-कत्वेऽपि यज्ञत्वं तु तस्य कुतस्त्यम्?

प्रधानस्याग्नित्वे योषायासप्रधानभूतायां कुतोऽग्नित्वञ्च? हूयमान-सोमापेक्षया प्राधान्ये तु वस्तुतो योषायामप्राधान्यमवस्थितमेव। पञ्चाग्निविद्यायां तु होमादिकमारोपितमेव केनचित्साम्येन। तथाहि पञ्चाग्निविद्यायां शरीरारम्भणाग्निहोत्रपूर्वपरिणामलक्षणं श्रद्धादि-रूपेण पञ्चधा विभज्य द्युप्रभृतिष्वग्निषु होतव्यत्वेनोपासनमुत्तरमार्गं प्रति साधनत्वेनोच्यते—"असौ वाव लोको गौतमाग्निः" तत्र सायं प्रातरग्निहोत्राहुती हुते पय आदि साधने श्रद्धा पूर्वमाहव-नीयाग्निसमिद्धमार्चिरङ्गारविस्फुलिङ्गभाविते कर्त्रादिकारक-भाविते चान्तरिक्षं क्रमेणोत्क्रम्य द्युलोकं प्रविशन्त्यौ सूक्ष्मभूते द्रव-द्रव्य प्रभृत्यप्सम्बन्धादप्शब्दवाच्ये श्रद्धाहेतुकत्वाच्च श्रद्धा-शब्दवाच्ये तयोरधिकरणमग्निरः। अन्ये च समिद्धमार्चिरङ्गारविस्फुलिङ्गा-रूपकत्वेन निर्दिश्यन्ते "असौ वाव द्युलोको गौतमाग्निः तत्रादित्यः समित् रश्मयो धूमाः अहरर्चिः चन्द्रमा अङ्गारः नक्षत्राणि विस्फुलिङ्गाः।"

तत्राग्नौ देवा यजमानः प्राणा अग्न्यादिरूपा अधिदैवं श्रद्धां जुह्वति ततो वृष्ट्युपकरणाभिमानिनि देवताविशेषे पर्जन्येऽग्नौ देवाः सोमं राजानं जुह्वति। तत्र वायुः समित्, अभ्रं धूमः, विद्युदर्चिः, अशनिरङ्गाराः, गर्जितं विस्फुलिङ्गाः, श्रद्धाख्या आपः, द्युलोकमाहुतित्वेन प्रविश्य चन्द्राकारेण परिणताः सत्यो द्वितीये पर्य्याये पर्जन्याग्नौ हुता वृष्टित्वेन परिणमन्ते। ततस्तृतीये पर्याये पृथिव्यग्नौ श्रद्धा सोम परिणाम-क्रमेणागता आपो वृष्टिरूपेण परिणता देवा जुह्वति तस्या आहुतेरन्नं व्रीहियवादिकं जायते। व्रीह्यादिरूपेण परिणतास्ता आपः पुरुषाग्नौ हूयन्ते। तत्र तासां परिणामो रेतो भवति ततो योषाग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भो भवति। एवं श्रद्धा सोमवर्षान्नरेतोवहनक्रमेण योषाग्निम्प्राप्यापो गर्भाख्या भवन्ति। तदेवोक्तं

"पञ्चम्यामाहुतावापः पुरुष वचसो भवन्ति।"

तथा च तत्र तदुदाहरणेन यज्ञत्वान्वेषणं मुधैव।"

विश्वमूलशक्तिशिवयोः संयोगेऽपि यज्ञत्वकल्पनमपि तथाभूतमेव। वैधस्यैव होमादेर्यज्ञत्वमित्यसकृदुक्तम्। अन्यथा विधिविरुद्धयोषावृष-सम्बन्धे यज्ञत्वापत्त्याऽनायासेनैव स्वर्गादिफलप्राप्तिः स्यात्। तथा च सति यज्ञादिविधायकशास्त्रवैयर्थ्यापातः स्यात्।

यच्च 'शक्तिविशिष्टः पुरुषः प्रजापतिर्भवति। अस्मात् पर ब्रह्मणः परमेश्वराज्जीवाविर्भावोऽपि यज्ञप्रक्रिययैव भवति। व्यापकस्य प्रजापति-पदाभिधेयस्य महेश्वरस्यांशो योगमायायां प्रवर्ग्यभूत एव जीवो भवति महतः कश्चिदंशो यदा तस्मात्पृथग्भूय पृथक् स्वीयं तन्त्रं प्रवर्तयति स्वतंत्र इव भवति। तदा ऋग्वेदपरिभाषायाम् 'प्रवर्ग्य' इति, अथर्व-परिभाषायाम् 'उच्छिष्ट' इत्युच्यते। यथा अग्नीषोमसूर्यकिरणैस्तापः पाषाणादिषु प्रवेश्यते।

अस्तङ्गतेऽपि सूर्ये तत्र सोऽनुभूयते।
सूर्य्यात् केन्द्रादपवृक्तः स इत्यनुमीयते॥

अयं महेश्वरस्य प्रवृक्तोंऽशो भूतात्मेत्युच्यते। प्रवृत्तं स्वतन्त्रं तं भूतात्मानं महानात्मा विज्ञानात्मा च अभिव्याप्य तिष्ठतः।

तदुक्तं मनुना—

तावुभौ भूतसंपृक्तौ महान् क्षेत्रज्ञ एव च।

उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठतः॥ (मनु० १२।१४) इति

तन्न; यज्ञाधिकारिणो यज्ञकर्त्तुः यज्ञकार्यत्वानुपपत्तेः। परस्य ब्रह्मणः सांशत्वानुपपत्तेश्च सौरमण्डलस्य सांशत्वोपपत्त्या प्रस्तरादौ तदपवृक्तांश-संभवेऽपि निरंशस्य परब्रह्मणस्तदनुपपत्तिः। तत एव जीवस्यांशत्वमिवोक्तं नतु वस्तुभूतांशत्वम्। अत एव निरंशस्याकाशस्य घटाद्युपाधिभिः घटाकाशत्वादिकमिव दर्पणाद्युपाधिभिः सूर्य्यप्रतिविम्वत्वाभासत्वा-दिकमिव च जीवस्यापि परमेश्वरांशत्वमिव भवति। यथा वा अविकृतस्यैव कौन्तेयस्याविद्यावशाद्राधापुत्रत्वप्रतीतिस्तथैवाविकृतस्य परेशस्यैवा-विद्यावशाज्जीवत्वप्रतीतिः 'तत्त्वमसि, अहं ब्रह्माऽस्मि, अयमात्मा ब्रह्मेत्यादि श्रुतिशिरोभ्यः अतएव पृथग्भवने स्वतन्त्र प्रवर्त्तनादिकमपि न वस्तुभूतम्।

किञ्च 'प्रकृतिम्पुरुषञ्चैव विद्ध्यनादी उभावपि' इति रीत्या यदि जीवभावोऽनादिरेव तदा कथं ब्रह्मणोऽपवृक्तभागस्य जीवत्वं कुतश्च यज्ञजन्यत्वं तस्य। तं भूतात्मानं महानात्मा विज्ञानात्मा चाभिव्याप्य तिष्ठत इत्यपि न सङ्गतम्। हिरण्यगर्भस्यैव महदात्मरूपत्वात् तस्यैव विज्ञा-नात्मरूपत्वाच्च। मनुवचने तु—भूतात्मशब्देन देहस्यैव विवक्षितत्वम्।

योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते।

यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः॥

अस्य लोकसिद्धस्यात्मोपकारकत्वादात्मनः शरीराख्यस्य यः कर्मसु प्रवर्त्तकः तं क्षेत्रज्ञं प्रचक्षते। यः पुनरेष व्यापारान्करोति स पृथिव्यादि-भूतारब्धत्वाद् भूतात्मोच्यत इति तत्र कुल्लूकभट्टः। महान् आत्मा च ताभ्यामन्यः समष्टिबुद्धिरूपो जीवसंज्ञोऽप्युक्तः।

"जीवसंज्ञोऽन्तरात्मान्यः सहजः सर्वदेहिनाम्।

येन वेदयते सर्वं सुखं दुःखञ्च जन्मसु॥"

जीवशब्दोऽत्र महत्परो येनेति करणविभक्तिनिर्देशात्। तावुभौ भूतसंपृक्तौ महान् क्षेत्रज्ञ एव च इति तच्छब्देन प्रत्यवमर्शाच्छरीर-क्षेत्रज्ञातिरिक्तोऽन्तः शरीरमात्माख्यत्वादात्मा जीवाख्यः सर्वक्षेत्रज्ञानां

सहज आत्मा तत्प्राप्तेस्तैस्तस्य विनियोगात्। येनाहङ्कारेन्द्रियरूपतया-परिणतेन कारणभूतेन क्षेत्रज्ञः प्रतिजन्म सुखं दुःखञ्चानुभवति। अत एव पैङ्गीरहस्योपनिषदि सत्त्वक्षेत्रज्ञावेव द्वौ सखायौ सुपर्णावुक्तौ।

तावुभौ भूतसंपृक्तौ महान् क्षेत्रज्ञ एव च
उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठतः॥

अत्र तौ द्वौ महत् क्षेत्रज्ञौ पृथिव्यादिपञ्चभूतसंपृक्तौ उच्चावचेषु भूतेषु स्थितं तं सर्वलोकवेदस्मृतिपुराणादिप्रसिद्धतया तमिति निर्दिष्टं परमात्मानं व्याप्याश्रित्य तिष्ठतः तस्य परमात्मनः शरीरात् स्वरूपात् असंख्या मूर्तयो जीवरूपा क्षेत्रज्ञशब्देनोक्ताः लिङ्गशरीरावाच्छिन्ना वेदान्तोक्तप्रकारेणाग्नेरिव विस्फुल्लिङ्गा निःसरन्ति या उच्चावचानि चेष्टयन्ति।

एतेन शान्तात्मादि भेदेनाष्टादशात्मप्रभेदवर्णनमपि निरर्थकमेव। सोपाधिकनिरूपाधिकभेदेनात्मद्वैविध्येन तेषामुपक्षीणत्वात्। व्यासे-नापि विश्व-तैजस-प्राज्ञादिभेदः श्रुतिपूक्त एव।

यदुक्तम्—

"इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः।
मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः।
महतः परमव्यक्तमव्यक्तात्पुरुषः परः।

इत्यादिषु श्रुतिषु भूतात्मेन्द्रियात्मादि वर्णनमिति तन्न; तत्र इन्द्रियाद्य-पेक्षया पुरुषात्मनः परत्वस्यैव विवक्षितत्वात्। नात्रात्मभेदवर्णनं संगच्छते।

यदप्युक्तम्—

"यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज् ज्ञान आत्मनि महति नियच्छेत् तद्यच्छेच्छान्त आत्मनि।" इति काठके। तत्र सान्तात्म-शब्देनाव्यक्तमभिधीयते इति तन्न, शान्तात्मशब्देन शुद्धात्मन एव गृहीतत्वात्। न च महतः परमव्यक्तमिति रीत्या अव्यक्तस्य महतः परत्वेन तत्रैव तन्नियमनं युक्तमिति वाच्यम् अव्यक्तस्य महतः परत्वेऽपि तद्ध्यानेन प्रकृतिलयापत्त्या मोक्षहेतुब्रह्म-

निष्ठानुपपत्त्याऽव्यक्तात् परस्मिन् पुरुष एव तन्नियमनस्यौचित्यात्। प्रलये सुषुप्तौ चानुभूयमानादव्यक्ताद्यो परः स एव प्रबोधे बुद्धेः परत्वेन ज्ञायते निदिध्यास्यते च। नहि प्रकृतिलयपर्य्यवसाय्ययं योगोपक्रमः।

यदुक्तम्—"मम योनिर्महद् ब्रह्म तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता" इत्यादौ महद् ब्रह्मपदेन महान् आत्मा वर्णितः। तेनैव सर्वाकार-संपत्तिः। तत्रैवाव्ययपुरुषेण बीजं निधीयते तत्रैवानुस्यूतं चैतन्यमाकृति-महानित्यमिधीयते। स एव सर्वायतनेषु अहं भावं सृजति। अव्यया-त्मरूपः शान्तात्मा तु सूत्ररूपः। तेनैव सर्वायतनानि सूत्र्यन्त इति तदपि निःसारम्। महद् ब्रह्मपदेन तत्र प्रकृतेर्विवक्षितत्वात्। सैव ब्रह्मणो योनिस्तत्रैव ब्रह्मकर्तृकं गर्भाधानम्। ततश्च महदाद्युत्पत्तिः। शान्तात्मनस्तु शुद्धात्मत्वमुक्तमेव व्यक्तस्य संसारबीजत्वेन शान्तात्मनस्तु शुद्धात्मत्वानुपपत्तेः।

यदप्युक्तम्—"चैतन्यानुस्यूतभूतकार्य्यत्वेन शरीराख्यस्य भूतात्मन एककर्मकर्त्तृत्वमिति तदप्यशुद्धम्; शरीरस्य व्यापारवत्वेन कर्तृत्व-प्रतीतावपि सोपाधिकस्यात्मन एव कर्त्तृत्वात्। अन्यथा कर्मफल-भोग-मोक्षयोः वैयधिकरण्यापातात्, शरीरस्य नश्वरत्वेनामुष्मिकफलभो-गानुपपत्तेश्च। अत एवावस्थाभेदेन शरीरभेदेऽपि योऽहं बाल्ये बालो-चितानि कर्माणि संपादितवान् सोऽहं वार्धके जपादिकं करोमीति कर्त्तुः प्रत्यभिज्ञानम्। जाग्रत्स्वप्नयोर्मनुष्यव्याघ्रशरीरभेदेऽपि प्रति-सन्धातुरेकत्वेन न शरीरस्यावस्थात्रितयम्। योऽवस्थात्रयेऽप्यनुस्यूत-स्तस्यैवावस्थात्रितयम्। शरीरस्य जाग्रत्कालमात्रेऽनुस्यूतिर्न स्वप्नादौ कुतस्तस्यावस्थात्रयम्। भागवतादौ तु जाग्रत्स्वप्नसुषुप्त्याख्यवृत्तयो बुद्धिजाः स्मृताः" इति सोपाधिकत्वात्मनो बुद्धिरूपस्योपाधिवृत्ति-विशेषास्तिस्रोऽवस्थाः शक्ताः।

यदपि 'क्षेत्रज्ञस्य विज्ञानात्मत्वं जीवात्मनस्ततोऽपि भिन्नत्वमुक्तं' तदपि न गीतायास्त्रयोदशेऽध्याये जीवात्मन एव क्षेत्रज्ञत्वोक्तिविरोधात्।

तत्र क्षेत्रक्षेत्रज्ञज्ञानेनैव मोक्षावाप्तिरुक्ता, क्षेत्रज्ञस्य परमात्मरूपस्वञ्चोक्तम्—"क्षेत्रज्ञं चापि मां विद्धि।"

"क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा
भूतप्रकृतिमोक्षञ्च ये विदुर्यान्ति ते परम्।"

इत्यादिवचनेभ्यः। मनुवचनार्थस्तूक्त एव।

यदुक्तं 'महत् क्षेत्रज्ञौ भूतात्मसंपृक्तौ उच्चावचेषु भूतेषु स्थितमात्मान व्याप्य तिष्ठतः" इति। तदपि न; तत्र तमित्यस्य वेदादिप्रसिद्धतया तत्पुनर्निर्दिष्टस्य परमात्मन एव ग्रहणात्। तस्यैव शरीरात् स्वरूपाज्जीवानां प्रसरणोक्तिः संगता भविष्यति। तदेतत्सर्वं तमिति जीवात्मग्रहणे नोपपद्यते। तस्यैकस्य सर्वभूतेषु स्थितिरपि नोपपद्यते। क्षेत्रज्ञातिरिक्तश्च जीवात्मा सर्वथा नोपपद्यते 'एतद्यो वेत्ति तम्प्राहुः क्षेत्रज्ञमिति तद्विदः' इत्यादिभिर्वचनैः क्षेत्रज्ञस्यैव जीवत्वोक्तेः। प्रज्ञानात्मप्रायात्मनोर्भूतात्मन्यन्तर्भावः शान्तात्मनस्तु महत्यात्मनि निवेश इत्यादिकमन्यापि निःसारं निष्प्रमाणञ्च। मनुवचनस्यान्यथा व्याख्याततत्वात्।

यच्चोक्तम्—"वैश्वानरस्य शरीरावयवसंघटनरक्षणे कार्य्यम्। स च चेतनाचेतनेषु सर्वत्र पार्थिवेषु, व्याप्तः तेनैव लोष्टपाषाणादिष्वपि तत्सङ्घनं दृश्यते। तैजसस्य वर्धनादिकार्य्यम्। प्राज्ञस्तु ज्ञानेच्छासुखदुःखादीनामाश्रयो भवति। अग्निवायुसूर्य्यांशभूतान्येतेषामायतनानि। प्राज्ञश्च पुनरपि कर्मात्मचिदाभास-चिदात्मभेदेन त्रिविधः। शुभाशुभेषु कार्य्येषु शरीरात्मप्रवर्तकस्य चैतन्यांशस्य कर्मात्मत्वं कर्मजनितसंस्काराश्रयत्वात्। स च कर्मात्मा भूतात्मन एव काचिदवस्था स्वच्छत्वात्तत्र चैतन्यं प्रतिबिम्बते, तेन कार्य्यक्षमता भवति। चैतन्याभासस्यैव चिदाभासत्वम्। स एव व्यावहारिको जीवः। शरीरादिषु चैतन्यसञ्चार एव तत्कार्य्यम् चिदाभासस्योत्पादको बिम्बभूतश्चिदात्मा स चेश्वरांशः। स एव प्रत्यगात्मा। स एव स्वमायया यन्त्रारूढानि भूतानि भ्रमयति। स एवान्तर्यामी। सोऽपि विभूतिमच्छ्रीमदूर्जितेति त्रिधा व्यवस्थिता भवति।" इति। इदमपि निःसारं निष्प्रमाणञ्च। प्रत्युपस्थापितप्रमाणानामन्यार्थत्वात्, माण्डूक्यादिश्रुतिविरोधाच्च। माण्डूक्योपनिषदि 'जागरित-

स्थानो बहिः प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग् वैश्वानरः सोपाधिक आत्मा उक्तः। स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्गः एकोनविंशतिमुखः प्रविविक्तभुक् तैजस उक्तः। यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम्। सुषुप्तस्थानः एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक्चेतोमुखः प्राज्ञस्तृतीयः पादः।

ब्रह्मण एवेमा उपाधिप्रयुक्ता अवस्थाः तस्यैव च समष्टिरूपेणेश्वरत्व-सर्वज्ञत्व-सर्वान्तर्यामित्वादिकं व्यष्टिरूपेण जीवत्वम्। "एष सर्वेश्वरः एष सर्वज्ञः एषोऽन्तर्य्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानामिति" श्रुतेः। तस्यैव सर्वोपाधिरहितस्य नान्तःप्रज्ञं न बहिःप्रज्ञमित्यादिभिस्तुरीयत्वमुक्तम्। एकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते" इति श्रुतेः। स्थावरजङ्गमादिषु जीवस्वरूपावैशेष्येऽपि उपाधिस्वच्छत्वतारम्येनाभिव्यक्तितारतम्यन्त्विष्यत एव। यदा न कञ्चन कामं कामयते प्राज्ञस्तदा कथं तस्येच्छाद्याश्रयत्वं यदा स आनन्दभुगेव भाति तदा कथं दुःखाश्रयत्वम्। छान्दोग्येऽपि—प्रजापतिविद्यायामिन्द्रः विरोचनामुद्दिश्य तिसृणामवस्थानां संसर्गेण त्रयोप्येत आत्मानो बोधिताः शुद्धात्मप्रतिपिपादयिषयैव। य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोक इति शुद्धस्यैवोपक्रान्तत्वात् शुद्ध एव। "य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मा जाग्रदवस्थोपलक्षितत्वेनोपदिष्टः। ताभ्यान्त्वक्षिणि दृश्यत इत्यस्य तात्पर्य्यमनवबुद्धय शरीररूपभूतात्मैव प्रतिपन्नः। "एतदमृतमभयमेतद्ब्रह्मेति" प्रजापतिवाक्यैरादर्शोदशरावादिषु भूषणालङ्कारपरिष्करणादिराहित्यसाहित्याभ्यां देहस्य विकारित्वमवगमय्य अनात्मत्वे बोधितेऽपि विरोचनो देहमेवात्मानमवगतवान्। इन्द्रस्तु पुनः प्रत्यावृत्तः। "एत त्वेव ते भूयोऽनुवक्ष्यामि वसापराणि द्वात्रिंशद्वर्षाणि इति प्रजापतिवाक्येन ब्रह्मचर्यमुषित्वा "य एष स्वप्ने महीयमानश्चरत्येष आत्मा" इति देहादिभिन्नं तैजसं विवेद।

चतसृष्ववस्थासु एक एव आत्मा उपादिष्टः "स एतन्त्वेव ते भूयोऽनुवक्ष्यामीति निर्देशात्। चतुर्थे पर्य्याये तमेवात्मानमिन्द्रो विवेद।

तेन शरीराख्यस्य भूतात्मनो वैश्वानरत्वाद्युक्तिः सर्वथाऽपि प्रमाणविधुरा तद्विरुद्धा च।

यच्च "स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति शुक्र-मादाय पुनरेति स्थानम्। हिरण्मयः पुरुषः एक हंसः प्राणेन रक्षन्नवरं कुलायम् वहिष्कुलायादमृतश्चरित्वा स ईयतेऽमृतो यत्र कामम् हिरण्मयः पुरुष एक हंसः" इति श्रुतिवचनैः सूर्य्यमण्डलात्प्राप्तज्योतिषा विज्ञान-सम्पन्नो भूत्वा हंसात्मा भूतात्मना सहैव तिष्ठति। स च शरीरासृङ्-मांसादिभिरसंस्पृष्टः कर्मसंस्कारैश्चासम्पृक्तः जाग्रदाद्यवस्थातीतः स्वय-मसुप्तः सुप्तान् देहेन्द्रियादीन् पश्यति रक्षति च। स एव भयहेतुषूपस्थितेषु जीवात्मानं प्रबोधयति। संकल्प्य विशेषेण स एव संकल्पिते समये प्रबोधयति। सूर्य्याल्लब्धविज्ञानत्वाद्धिरण्मयः स देहाद्बहिश्चन्द्रादि-मण्डलपर्य्यन्तं गन्तुं प्रभवति परलोकविद्यावेदिभिः स एवाकार्य्यते शरीरे नष्टेऽपि वायुदेहेन, विचरति यथेष्टं रूपञ्च गृह्णाति इत्याद्युक्तम्। तदपि वेदान्तसम्प्रदायाज्ञानविजृम्भितम्। सोपाधिकनिरुपाधिकात्म-व्यतिरिक्तस्य तादृशस्यात्मनोऽप्रसिद्धत्वात्। यदि स कर्मसंस्कारैः सर्वथा असंस्पृष्टस्तदा अवस्थात्रयान्वयिना भूतात्मना सहैव कथं तिष्ठति। किञ्च यदि भूतात्मना सहैव तिष्ठति तर्हि वहिः कथं गच्छति? वहिः जीवात्मानमादाय गच्छति एकल एव वा? एकलश्चेत् कथं तेन सहैव तिष्ठति?

किञ्च स जीवो वा? ईश्वरो वा। जीवश्चेत्कथं कर्मसंस्कारशून्यः? कथञ्च स्वतन्त्रः? ईश्वरश्च कथं भूतात्मनैव सह तिष्ठति? तस्य सर्वव्यापकत्वात्।

किञ्च यदि व्यापकस्तर्हि चन्द्रमडलादिपर्य्यन्तं गमनं कथमुपपाद्यते। परिच्छिन्नस्यैव गमनादिसंभवात्। यथेष्टरूपग्रहणञ्च कर्मवलात् स्वतो वा? प्रथमे कथं कर्मासंस्पृष्टः? स्वतश्चेत्कथन्न सर्वदा तद् गृह्णीयात्?

किञ्च तन्निर्मितं रूपं क्वोपलभ्यते? किञ्च तत्र मानम्? परलोक-विद्यया यदि स एवाकार्य्यते, तदा तस्य तु निर्लेपत्वात् सुखदुःखानुभूति-वर्णनं कथं संगच्छते। तस्य प्रबोधकत्वे कथं सुप्ता एव सर्पादिदष्टाः

जलौघापूरेण वा जना म्रियन्ते ? तस्मात् मुधैव युक्तिवाक्याभासै-रेकात्मवर्णनम् ।

मन्त्रार्थस्तु—श्रीशङ्कराचार्य्यादिभिः स्वप्नद्रष्टृवर्णनपरत्वेन व्याख्यातः । तदेते श्लोका भवन्ति इति वचनान्तरं मन्त्रा एते बृहदारण्यके चतुर्थेऽध्याये उक्ताः । तेन पूर्वोक्तेऽर्थे एते मन्त्रास्तत्समर्थनाय प्रवृत्ताः । पूर्वप्रकृतं तु स्वप्नवर्णनम् । पूर्वस्मिन् प्रसङ्ग आत्मनो जाग्रत्स्वप्नादिप्रसङ्गेन शुद्धत्वम-वस्थादित्रयवतोऽपि वस्तुतस्तद्राहित्यं स्वयंज्योतिष्ट्वञ्च, अलुप्तदृक्स्व-रूपत्वं निरतिशयानन्दस्वाभाव्यमद्वैतत्वं प्रदिदर्शयिषितम् । तत्र जनक-याज्ञवल्क्यसंवादेनात्मनः स्वयंज्योतिष्ट्वसिद्धये आदित्यचन्द्रवागा-दिषु ज्योतिःषु सत्सु प्रबोधकाले तेषां ज्योतिषां साङ्कर्य्यादात्मनः स्वयं ज्योतिष्ट्वं न प्रदर्शयितुं शक्यम् । सुषुप्तौ व्यवहाराभावाज्ज्योतिः कार्या-भावादात्मनो ज्योतिष्ट्वं नावगन्तुं शक्यमिति तदर्थं स्वप्नावस्थोपन्यासः । तत्रादित्यादीनामभावेऽपि व्यवहारो भवति । तत्र व्यवहारहेतुना ज्योति-षा भाव्यमिति स्वाप्निकव्यवहारहेतुत्वेनात्मन असाङ्कर्य्येण स्वयञ्ज्योति-ष्ट्वं बोधयितुं शक्यम् । आदित्यादिज्योतिर्विलक्षणन्तद्भौतिकं ज्योतिः । 'कतम आत्मा' इत्यादिना देहेन्द्रियप्राणमनःसु यस्त्वयोक्तः आत्मा स कः ? सर्वे प्राणा विज्ञानमया इव भवन्ति ! योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि, 'य अयमिति' प्रत्यक्षत्वादात्मनो निर्देशः । स विज्ञानमयः विज्ञानप्रायः बुद्धिविज्ञानोपाधिसंपर्काच्चन्द्रादित्यसम्पृक्तराहुवदुप-लभ्यते । बुद्धिविज्ञानालोकविशिष्टमेव हि सर्वविषयजातमुपलभ्यते, 'सधी'रिति चोत्तरत्र पाठात् । प्राणेषु इत्युक्त्या प्राणेभ्यो व्यतिरिक्तः । यो हि येषु भवति स तेभ्यो व्यतिरिक्तः । यथा पाषाणेषु वृक्षः । तत्रापि हृदि बुद्धौ 'अन्तः' इति ततो व्यतिरिक्तः सूच्यते । यथादित्यप्रकाशस्थो घटो यथा वा मरकतादिमणिः क्षीरद्रव्ये प्रक्षिप्तः परीक्षणायात्मच्छायमेव तत्क्षीरादिद्रव्यं करोति तादृगेतदात्मज्योतिर्बुद्धेरपि सूक्ष्मत्वात् हृद्यन्तः-स्थमपि हृदयादिकार्य्यकरणसंघातञ्चैकीकृत्यात्मच्छायं करोति ।

"यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥"
"तमेव भान्तमनुभाति सर्वम्" इत्यादिश्रुतिस्मृतिभ्यः ।

सोऽयं हृद्यन्तः ज्योतिः पुरुषः निरतिशयश्चास्य स्वयञ्ज्योतिष्ट्वम् सर्वावभासकत्वात् स्वयमनन्यावभास्यत्वाच्च । स एवात्मा करणानुग्राहको जाग्रदवस्थायामपि आदित्यादिज्योतिषामपि स एव भासकः । तथापि सर्वकरणागोचरत्वात् बुद्धयादिबाह्याभ्यन्तरकार्य्यकरणव्यवहारसंनिपातव्याकुलत्वान्मुञ्जादिषीकेव निष्कृष्य दर्शयितुमशक्य इति स्वप्ने दिदर्शयिषितः । स समानः सन् हृच्छब्दवाच्यया बुद्धया सदृशः सन् यथा रक्तमवभासयन्रक्तसदृशो रक्ताकारः प्रकाशो भवति तथा बुद्धिमवभासयन् बुद्धिद्वारेण कृत्स्नं क्षेत्रं प्रकाशयतीति तेन बुद्धिसादृश्येनैव बुद्धिव्यापारमनुसरतीव । स्वतस्तु निर्व्यापारः कूटस्थ एव बुद्धौ ध्यायन्त्यां लेलायन्त्याम् ध्यायतीव लेलायतीव । धिया समानत्वादेव धीर्यद्यद्भवति तत्तदसावपि भवति । धीर्यदा स्वापवृत्तिं प्रतिपद्यते तदायं स्वप्नो भवति । स्वप्नो भूत्वा इमं लोकं जागरितव्यवहारलक्षणं कार्य्यकरणसंघातं सर्वव्यवहारास्पदमतीत्य स्वात्मज्योतिषा स्वप्नात्मिकां धीवृत्तिमवभासयन् स्वयंज्योतिःस्वभावो भवति । धिया समानः सन्नेव स इमञ्चामुं च लोकं सञ्चरति बुद्धितादात्म्यापन्न एव । इदं स्थानं परलोकं च पश्यति स्वप्नस्य सन्ध्यस्थानत्वात् ।

अस्य दृष्टस्य लोकस्य जागरितलक्षणस्य सर्वावतो विषयवेदनासंयुक्तस्य कार्यकारणसंघातस्य मात्रा वासनामादाय दृष्टजन्मवासनावासितः जाग्रत्फलप्रदकर्मोपरमे स्वयमात्मनैव देहं विहत्य पातयित्वा' निःसंबोधमापाद्य आत्मकर्मोपरमकृतत्वाद्देहनिष्ठफलोपभोगोपरमणस्यात्मा तद्विहन्तोच्यते । स्वयं निर्माय मायामयमिव वासनामयं देहं निर्माय निर्माणमपि तत्कर्मापेक्षत्वात् स्वयं कर्तृकमुक्तम्, स्वीयेनात्मीयेन भासामात्रोपादानलक्षणेन भासा दीप्त्या सर्ववासनात्मकेनाऽन्तःकरणवृत्तिप्रकाशेन, इत्थंभावे तृतीया, सर्ववासनामयी वृत्तिस्तत्र विषयभूता सा तत्र स्वप्ने

स्वयम्भा उच्यते। तेन स्वभासा विषयभूतेन स्वेन च ज्योतिषा तद्विषयिणा विविक्तरूपेणाऽलुप्तदृक्स्वभावेन तद्वारूपं वासनात्मकं विषयीकुर्वन् स्वपिति। अत्र बाह्याध्यात्मिकभूतभौतिकज्योतिः संसर्गरहितज्योतिर्भवति। यद्यपि स्वप्नेऽपि जागर इव विषया उपलभ्यन्ते तथापि न ते तत्र सन्ति। तथा च श्रुतिः–न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते। न तत्रानन्दाः मुदः प्रमुदो भवन्त्यथानन्दान् मुदः प्रमुदः सृजते वेशान्तान् पुष्करिणीः स्रवन्तीः सृजते संहितश्च कर्ता।' रथाश्वादयः स्वतन्त्रा न सन्ति किन्तु तदानीमेव तत्र सृजते लोकमात्रां वासनामादाय तदुपलब्धिनिमित्तेन कर्मणा चोद्यमाना रथादिवासनारूपान्तःकरणवृत्तिदृश्यत्वेन व्यवतिष्ठते। न तत्र करणानि तदनुग्राहकाणादित्यादीनि ज्योतींषि तद्वास्या वा रथादयः सन्ति। तद्यस्य ज्योतिषा दृश्यतेऽलुप्तदृशरतदात्मज्योतिः। मोदः प्रमोदः पल्वलाः पुष्करिण्यः स्रवन्त्यो नद्यो वासनारूपाः सृज्यन्ते स्वप्न हेतुभूतकर्मनिमित्ताः न वस्तुतस्तत्रात्मा कर्त्ता, ध्यायतीवेत्युक्तेः। तदेतदेव सर्वं "स्वप्ने न शारीरमभिप्रहत्ये" त्यादिनोक्तम्। स्वप्नेन स्वप्नभावेन शारीरं शरीरमभिप्रहत्य निश्चेष्टमापाद्य असुप्तः स्वयमलुप्तदृगादिशक्तिस्वाभाव्यात् सुप्तान् वासनाकारोद्भुतान्तःकरणवृत्त्याश्रयान् बाह्यानाध्यात्मिकान् सर्वानेव भावान् स्वेन रूपेण प्रत्यस्तमितान् अभिचाकशीति अलुप्तयात्मदृष्टया पश्यति अवभासयति।

शुक्रं शुद्धं ज्योतिष्मदिन्द्रियमात्रारूपमादाय गृहीत्वा पुनः कर्मणे जागरितस्थानमेत्यागच्छति। हिरण्मय इव चैतन्यज्योतिस्वभावः पुरुष एक एव जाग्रत् स्वप्ने इहलोकपरलोकादीन् गच्छति। प्राणेन पञ्चवृत्तिना रक्षन् परिपालयन्नन्यथा मृतभ्रान्तिः स्यात्। अवरं निकृष्टमनेकाशुचिसंघातत्वादत्यन्तबीभत्सं कुलायं नीडं स्वयं बहिश्चरित्वा यद्यपि शरीरस्थ एव स्वप्नं पश्यति तथापि तत्सम्बन्धाभावात् बहिश्चरित्वेत्युच्यते। अमृतः स्वयममरणधर्मा ईयते गच्छति यत्र कामं विषयेषूद्भूतवृत्तिर्भवति तं तं कामं वासनारूपेणोद्भूतं गच्छति।

अत एव वक्ष्यति "स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि उतेव स्त्रीभिः सह मोदमानो जक्षदुते वापि भयानि पश्यन्। तेन नात्र कश्चन जीवव्यतिरिक्तो हंसाख्योऽन्य आत्मा कल्पयितव्यः निष्प्रमाणत्वात् प्रकरणविरोधाच्च। अत्रायं पुरुषः स्वयं ज्योतिर्भवति।" इत्युपसंहाराच्च। ब्रह्मसूत्रेऽपि अयमर्थो विचारितः। जीवात्मन एव स्वप्नावस्थायां स्वयंज्योतिष्ट्वं प्रदर्शितम्। तस्यैव चैकहंसत्वमुक्तम्। तस्य शरीर एव स्वप्नदर्शनं न वहिर्गमनम्। रथादि तत्कामादि स्रष्टृत्वन्तु न वस्तुभूतं किन्त्वौपचारिकमेव।

सन्ध्ये सृष्टिराह हि ( ब्र० सू० ३।२।१ ) इति सूत्रे भगवत्पादैरुच्यते। अतिक्रान्ते पादे पञ्चाग्निविद्यामुदाहृत्य जीवस्य संसारगतिभेदः प्रपञ्चितः। इदानीं तु तस्यैवावस्थाभेदः प्रपञ्च्यते। स यत्र प्रस्वपितीत्युपक्रम्य न तत्र रथान् रथयोगान् पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते इति श्रूयते। तत्र सन्ध्ये स्वप्नस्थाने 'सन्ध्यं तृतीयं स्वप्नस्थानमिति ( बृ० ४।३।९ ) श्रुतेः। तत्र द्वयोर्लोकस्थानयोः प्रबोधसम्प्रसादस्थानयोर्वा सन्धौ भवतीति सन्ध्यम् रथादिकामसृष्टिः पारमार्थिकी। य एव सुप्ते जागर्ति कामं कामं पुरुषो निर्मिमाण इति श्रुतेः। 'अन्यत्र धर्मादन्यत्राधर्मात्' (कठ० २।१४) इति प्राज्ञस्य प्राकरणिकत्वात् 'तदेव शुक्रं तदेतद् ब्रह्म तदेवामृतमुच्यते तस्मिल्लोकाः श्रिताः सर्वे तदुनात्येति कश्चन (क० ५।८) इति वाक्यशेषाच्च' प्राज्ञकर्तृका सा सृष्टिरिति पूर्वपक्षं कृत्वा 'मायामात्रमि'त्यादिना मायामयी सा सृष्टिरिति सिद्धान्तितम्। मायैव सन्ध्ये सृष्टिर्न तत्र परमार्थगन्धोऽपि देशकालनिमित्ताबाधासम्भवात्। नहि संवृते देहनाडीषु रथादयः सम्भवन्ति।

ननु देशान्तरितद्रव्यग्रहणेन देहाद्बहिरेव स्वप्नदर्शनम्। 'बहिष्कुलायादमृतश्चरित्वा स ईयतेऽमृतो यत्र काम'मिति वचनात् स्थितिगतिप्रत्ययैश्चैवमेवोपपद्यत इति चेन्न तदसम्भवात्। नहि सुप्तस्य क्षणमात्रेण योजनशतान्तरितदेशं पर्य्येतुं विपर्य्येतुं सामर्थ्यं सम्भाव्यते कचिच्च प्रत्यागमनवर्जितः स्वप्नो भवति। देहाद् गत्वा चेदन्यत्र स्वप्नं पश्येत्तदा तत्रैव प्रतिबुद्ध्येत। न चैवं भवति यत्र

सुप्तस्तत्रैव तु प्रति बुद्धयते। येन देहेन देशान्तरमश्नुवानो मन्यते तं पार्श्वस्थाः शयनदेश एव पश्यन्ति। न च देशान्तराणि यथावदेव पश्यति। परिधावँश्चेत् पश्येत्तदा वस्तुभूतमर्थमाकलयेत्। अतः बहिरिव कुलायादिति गौणार्थ एव तच्छ्रुतेरर्थः, स्वे शरीरे यथा कामं परिवर्त्तते (बृह० २।१।१८) इति श्रुतिविरोधात्। उक्तोपपत्तिविरोधाच्च। यो हि शरीरे वसन्नपि तेन प्रयोजनेन करोति स बहिरिव कालविसंवादोऽपि स्वप्ने भवति। रजन्या सुप्तो वासरं भारते वर्षे मन्यते। मुहूर्तमात्रवर्तिनि स्वप्ने कदाचिद्वर्षपूगानतिवाहयति।

निमित्तान्यपि न सम्भवन्ति करणोपसंहारान्नास्य रथादिग्रहणाय चक्षुरादीनि सन्ति। निमेषमात्रेण रथनिर्वर्त्तने दारुनिर्माणेऽपि नास्य सामर्थ्यम्। बाध्यन्ते च स्वप्नदृष्टा रथादयः। स्वप्ने चैते बाध्यन्ते, क्षणान्तरेऽन्यथादर्शनात्। क्षणेन रथो क्षणेन वृक्षश्च दृश्यते। अतएव न तत्र रथा न रथयोगा न पन्थानो भवन्तीत्युक्तम्। क्वचित्स्वप्न-सत्यसूचकत्वे सूचकस्य वैतथ्ये बाधाभावात् निमित्तमात्रत्वात् सुप्तो रथादीन् सृजत इत्युक्तिः। निमित्तत्वञ्चास्य रथादिप्रतिभाननिमित्त-मोदत्रासादिदर्शनात्तन्निमित्तभूतयोः सुकृतदुष्कृतयोः कर्तृत्वेन ज्ञातव्यम्।

किञ्चात्मनः स्वयंज्योतिष्ट्‌निर्णयाय जागरिते विषयेन्द्रियसंयोगादा-दित्यादिज्योतिर्व्यतिकराच्च तद्विवेचनं दुष्कर मत्वा तु स्वप्नो-पन्यासः। यदि तत्रापि रथादिसृष्टिर्वस्तुभूता भवेत्तदा तन्न निर्णीति स्यात्। स्वयं विहत्य स्वयं विनिर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति (बृ० ४।३।९) इति जीवव्यापारश्रवणात्। नात्र प्राज्ञस्य निर्मातृत्वम्। तस्यैव जीवस्य वाक्यशेषेण जीवभावं व्यावर्त्य ब्रह्मभावोपदेशाभिप्रायेण तु तदेव ब्रह्मेत्यादि वाक्यशेषः संगच्छते। प्राज्ञस्य सर्वेश्वरत्वात् सर्वावस्थास्वधिष्ठातृत्वं तु न विरुद्धयते।

यदपि "महतात्मनोत्पादितेभ्य इन्द्रियेभ्यः सम्पन्नतमो भूत्वाऽयं स्वतन्त्र पृथक् प्रवर्त्तयति स एव जीवात्मोच्यते। स एव प्रजापतिर्यज्ञ-रूप एवाख्यातः। तदपवृक्तश्च भूतात्माऽपि यज्ञ एव, 'यज्ञो वै प्रजापतिः (कौषीतिकी) 'सर्वेषां देवानामात्मा यत् यज्ञः' (श० १४।३।२।१) स एष

यज्ञ एव जीवभावजनकस्तद्रक्षकश्च। जनकः प्रारम्भिकयज्ञरक्षकस्तूत्तर-यज्ञः प्रथमेनास्य शरीरेन्द्रियसम्बन्धो द्वितीयेन तत्पालनम्", तदपि न जीवस्वातन्त्र्यस्य परमात्मतन्त्रायत्तत्वावगमात्, 'य आत्मनि तिष्ठन् आत्मनोऽन्तरः आत्मा यं न वेद आत्मा यस्य शरीरम् एष ते आत्मा अन्तर्याम्यमृतः, इति श्रुतेः। पतिस्तु यज्ञैरिज्यत्वाद्यज्ञपदव्यपदेश्यः 'यज्ञेन यज्ञमयजन्त' 'यज्ञो वै विष्णुः' इत्यादि श्रुतिभ्यः। जीवानां यज्ञत्वं तु यज्ञां (ईश्वरां) शत्वात् यज्ञफलभोक्तृत्वेन तद्विशिष्टत्वाच्च। जीवानां जन्मान्तरीययज्ञादिकर्तृत्वेनैव तत्फलोपभोगतदुपयोगिदेहेन्द्रियादि-प्राप्तिः तेनैव च जीवनोपकरणादिप्राप्त्या तद्रक्षणञ्च लब्धदेहादिकृतै-र्यज्ञैस्तु प्रायेण जन्मान्तरेष्वेव फलप्राप्तिः, जीवानां यज्ञफलत्वे यज्ञफल-वदेव हि नश्वरत्वापत्तिश्च। 'अजो नित्यः शाश्वतोऽयं पुराण' इति नित्यत्वाजत्वश्रवणव्याकोपश्च।

वस्तुतस्तु सर्वेषां वा एष भूतानां सर्वेषां देवानामात्मा यज्ञस्तस्य समृद्धिमनु यजमानः प्रजया पशुभिर्ऋध्यते यस्य घर्मोविदीयते तत्र प्राय-श्चित्तिः ( श० १४।२।२।६।२ ) । नानेन जीवानां यज्ञरूपत्वमुच्यते किन्तु यस्य यजमानस्य यज्ञे घर्मः महावीरो विदीर्य्यते एष यजमानोऽङ्ग वैकल्येन समृध्यभावात् स्वयमपि प्रजापश्वादिभिर्व्यृद्ध्यते, ऋद्धे र्विहीनो भवति । तेन तत्प्रायश्चित्तमपेक्षितम्। विकलस्य समाधान-लक्षणं प्रायश्चित्ताख्यं वक्ष्यमाणं कर्म कुर्यात्। तदुपोद्घातत्वेनेदमाह योऽयं यज्ञः स सर्वेषां भूतजातानां मनुष्यपश्वादीनां प्राणिनां सर्वे-षाञ्च देवानामिन्द्रादीनाञ्च आत्मा स्वरूपम् ( आत्मा अत्र स्वरूपं विवक्षितं नात्मतत्त्वम् ) यज्ञक्रियापरिणामरूपत्वात्तेषाम्।

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।

आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः।' (मनु ३।७६)इति स्मृतेः।

तस्य तथाविधस्य यज्ञस्य समृद्धो भवत्यतः प्रायश्चित्तमवश्यं कर्तव्यम्। एवमेव यज्ञो वै होता यज्ञो यजमानः इत्यादिषु ( १४।२।२।६ ) यज्ञकर्तुस्तत्प्राधान्येन यजमानस्य तत्फलस्वामित्वेन यज्ञत्वमुक्तम्। नह्येवं विधैर्वचनैर्यज्ञस्वरूपं निर्धारयितुं शक्यम्।

यदुक्तम् 'उभयोर्यज्ञयोः सप्ताहुतयो भवन्ति। शुक्राहुतिः महदाहुतिः प्राजापत्याहुतिः वैश्वदेव्याहुतिः ब्राह्मज्योतिराहुतिः श्रीलक्ष्म्याहुतिश्चेति यावदेता आहुतयोऽविच्छिन्नाः प्रवर्त्तन्ते तावदेव मनुष्यस्य जीवनम्।

केनचित्प्रतिबन्धेन विच्छिन्नासु त्वाहुतिषु यज्ञविच्छेदः, जीवस्य तत्रोच्छेदरूपं मरणं च स्यात्। स्वभावतश्चायं षट्त्रिंशत् सहस्राहः सत्रयज्ञ इति तद्रीत्या शतवर्षमितं मनुष्यजीवनं मध्य एव कारणतो यज्ञविच्छेदत्वमल्पायुष्ट्वम्। ता एता आहुतयः यजुर्वेदस्योत्तरनारायण—सूक्तेन षडर्चेन व्याख्याता' इति तन्न, वस्तुतो जीवस्य नित्यत्वेऽपि देहादि-विशिष्टस्य जीवस्योत्पत्तिं मत्वा तत्र पञ्चाग्निविद्याक्रमेण तदुत्पत्तौ केषुचित् कर्मसूपासनार्था आहुतिकल्पनाश्छान्दोग्यबृहदारण्यककौषीतक्यादौ च दृश्यन्ते। न तावता जीवानां हेतुभूतास्ता आहुतयः, किञ्चात्र मनुष्योत्पत्तौ हेतुत्वेनैता उक्ताः। न च मनुष्या एव जीवा तेषामनेकभेद-भिन्नत्वात्। पञ्चाग्निविद्यायामपि मुख्याग्नौ मुख्याहुतिषु च अग्न्याहुतिशब्दौ मुख्यया वृत्त्या प्रयुज्येते। अन्यत्र द्यु-पर्जन्यपृथ्वीपुरुषयोषित्सु सोमजलान्नशुक्रसम्बन्धेषु, गौण्या वृत्त्यैव तत्तच्छब्दप्रयोगः। परमेषां शरीरोत्पत्तावेव हेतुत्वम्। शरीरस्थितौ न हेतु-त्वम्। शरीरस्थितौ त्वन्नपानादीनामेवादृष्टसहकृतानाम् हेतुत्वम् तत्रापि उपासनार्थं यज्ञत्वकल्पनैव न मुख्यं यज्ञत्वम्। पुरुषजीवनस्य तत्तदंशेषु तत्तद्यज्ञाङ्गत्वारोपः।

यदप्युक्तम् 'अद्भ्यः संभृतः इत्यादिषूत्तरनारायणसूक्तेषु एता आहुतयो व्याख्याताः। अद्भ्यः इत्यनेन प्रथमा शुक्राहुतिः व्याख्याता। अत्र शुक्रं कथमुत्पद्यते इत्यस्य वैज्ञानिकं तत्त्वमाख्यातम्। अद्भ्यः पृथिवी रसात् विश्वकर्मरसाच्चेति त्रिभ्यो द्रव्येभ्यः समुदितेभ्यः संभूय शुक्रोत्पत्तिः। तत्र सोमः वायुराप इत्येकस्यैव द्रव्यस्य सूक्ष्मस्थूलताक्रमेण तिस्रोऽवस्थाः एभिस्त्रिभिः क्रमेण शुक्रं संभ्रियते। पञ्चभूतात्मिकायाः पृथिव्याः रसेन संमिलितः स्थितिमापद्यते। अनन्तरञ्च विश्वकर्म-रसेन पूर्णो भवति लोकत्रयाधिष्ठातारस्त्रयो देवा अग्निवाय्वादित्याः विश्वमेषां कर्मेति विश्वकर्माण उच्यन्ते। तेषां त्रयाणामपि रसोऽत्र

सम्भृतो भवति। पूर्वोक्तो भूतात्मा चैतन्यरूपेण सन्निधत्त इति द्वादशरसेयं शुक्राहुतिः पूर्वार्धेनोक्ता। देवानां भूतानाञ्च समष्टिरूपमिदं शुक्रमिति फलितम्। तस्य संभृतस्य रसस्य शुक्रस्य त्वष्टारूपं कल्पयति कललबुद्बुदादिक्रमेण शरीराकारतां नयति। द्वादशानामादित्याना-मन्यतमस्त्वष्टा, सूर्य्यरश्मित एव मनुष्यशरीरस्याङ्गप्रत्यङ्गनिर्वर्तनात्। तत्रापि चादित्यप्राणविशेषस्त्वष्टैव मुख्यतया भागं गृह्णाति। त्वष्टा वै रेतः सिक्तं विकरोति। तदेतेन मर्त्यस्य जडस्य रेतसो देवत्वं देवनिवासयोग्यत्वमुपजायते। ये लोकान्तरगता आजानदेवास्तेऽप्यत्र मनुष्यशरीरे सन्निदधते, इत्याजानपदेन सूचितम्। अग्रे चतुर्थे मंत्रे च पुनर्विक्रियेत इति तत्रोच्यते, उत्तरनारायणसूक्ते नादित्यो-पस्थानं क्रियत उत्तरेषु मंत्रेषु तस्यैव वर्णनात्। अत्र शुक्रस्य तदाहुतेश्च चर्चाऽपि न विद्यते।

वेदाहमेतमिति तत्रैच्छद्वनिर्दिष्टः पूर्वप्रकृत एव। न च शुक्रस्य तमसः परत्वम्, तद्वेदनेन मृत्युतरणञ्च संभवति। सूर्य्यस्य तु तत्सर्वं संभवत्येव। मर्त्यस्य देवत्वमपि शुक्रपक्षे न संभवति। अतएव देवत्वमित्यस्य देव-निवासयोग्यत्वमित्यर्थकरणेन गौणत्वमेव देवत्वमुक्तं स्यात्। आजान-मिति पदन्तु कथञ्चिल्लोकान्तराजानदेवसम्बन्धमात्रे पर्य्यवसितम्। सूर्य्यपक्षे तु पूर्वकल्पे मर्त्यस्य सत उपासनाबलात् आजानदेवत्वप्राप्ति-रित्यर्थः संश्लिष्यते। तेन महीधरादिवर्णित एवात्राऽपि सूक्तार्थो युज्यते। आदित्ये मण्डलदृष्ट्या अद्भ्यः पृथिव्याः, विश्वकर्मणो रसाच्च संभृतत्वं प्रजापतिरूपविश्वकर्मणश्च सर्वकारणत्वात्तद्रसात्तत्प्रीतेः सूर्य्यस्य निर्मित-रूपत्वं तदभिमानिनो देवस्याजानदेवत्वम्। त्वष्टा सर्वस्यैव रूपनिर्माता। सूर्य्यस्य च विशेषतः। संज्ञायाः पित्रा त्वष्ट्रा शाणमारोप्य सूर्य्यस्य तेजः शातनेन रूपं कृतमति पुराणप्रसिद्धिः। तस्यैव च कल्पान्तरायोपासक-रूपेणामर्त्यत्वम् संगच्छते। तस्यैव चादित्यस्य मण्डलान्तर्गतव्याहृत्य-वयवात्मना हिरण्यगर्भरूपप्रजापतित्वं तस्यैव च हिरण्यश्मश्रु-हिरण्य-केशादिविशिष्टहिरण्मयपुरुषरूपेण परमेश्वरत्वम्, सर्वविशेषातीत-परमात्मरूपेण वेदान्तवेद्यत्वमुक्तोपसृप्यत्वादिकञ्च संगच्छते।

तेन सूर्य्ये सर्वस्यैव सूक्तस्य संगतिः । न शुक्रे तदाहुतिषु वा । हिरण्यगर्भ-हिरण्मयान्तर्याम्युपासनस्य क्रममुक्तिहेतुत्वेन मृत्युतरणसाधनत्वम्, तस्यैवान्तर्यामिणः सर्वविशेषसाहित्येनोपासने तु सद्योमुक्तिहेतुत्वेन साक्षान् मृत्युतरणहेतुत्वं च सङ्गच्छते । पुरुषसूक्तात्पूर्वं ब्रह्मणे ब्राह्मणमालभेतेत्यादिनियुक्तान् ब्रह्माभिष्टौति । तदाह कात्यायनः-नियुक्तान् ब्रह्माभिष्टौति होतृवदनुवाकेन सहस्रशीर्षेति (का० २१।१।११) होतृवदिति त्रिः प्रथमां त्रिरुत्तमामित्याद्युक्तप्रकारेणेत्यर्थः । 'त्रैधातव्यन्ते समारोह्यात्मन्नग्नीन् सूर्य्यमुपस्थायाद्भ्यः संभृत इत्यनुवाकेनानपेक्षमाणोऽरण्यं गत्वा न प्रत्येयात्'(का०श्रौ०सू० २१।१।१७)'ग्रामे वा विवत्सन्नरण्योः' (का० श्रौ० सू० २१।१।१८) त्रैधातवी उदवसानीयेष्टिः तदन्ते 'अयन्ते योनिरित्यग्नीन् आत्मनि समारोह्य तदुष्माणमास्ये प्रवेश्याद्भ्यः संभृतः इति षड्र्चेनानुवाकेन सूर्य्यमुपस्थाय पश्चादपश्यन् वनं गत्वा ग्रामं नागच्छेत् । वानप्रस्थो भवेदित्यर्थः ।

यद्वा ग्रामे वस्तुमिच्छन् अरण्योरग्नीत् । समारोप्यार्कोपस्थानान्तरं ग्रामे गत्वा यज्ञान् कुर्याद् इति सूत्रार्थः । इत्थमुत्तरनारायणसूक्तमादित्यदैवत्यं सूर्य्योपस्थाने विनियुक्तम् । तदनुगुणान्येव सूक्ताक्षराणि च । तत्रापि पूर्वकल्पे पुरुषमेधयाजी आदित्यभावं प्राप्तः प्रथमेन मंत्रेण स्तूयते अद्भ्यः जलात् ( नात्र वाच्यार्थातिरिक्तः सोमवायुजलादिरूपोऽर्थो गृह्यते निष्प्रमाणत्वात् ) पृथिव्याः सकाशाच्च पृथिव्यपां ग्रहणम् भूतपञ्चकोपलक्षकम् । तथा च भूतपञ्चकात् यो रसः संभृतः पुष्टः बृहदारण्यके सत्त्यत् पदार्थयोः मूर्त्तामूर्त्तयोः साररूपत्वमादित्यतदन्तर्गतपुरुषयोरुक्तम् । मूर्त्तस्यैव तस्य मर्त्यस्य सत एष रसो य एष तपति सतो ह्येष रसः तदेतन्मूर्त्तं यद्वायोश्चान्तरिक्षाच्चान्यत् । अथामूर्त्तं वायुश्चान्तरिक्षञ्च एतस्य मत्यस्यैष रसो य एष मण्डले पुरुषः ( बृ० २।३।२।३ ) विश्वं कर्म यस्य तस्य कालस्य ब्रह्मणो वा रसात् प्रीतेर्यो रसोऽग्रे समवर्त्तत । भूतपञ्चकस्य कालस्य च सर्वं प्रति कारणत्वात् पुरुषमेधयाजिनो लिङ्गशरीरे पञ्चभूतानि तुष्टानि कालश्च ततस्तुष्टेभ्यः कश्चिद्रसविशेषफलरूप उत्तमजन्मप्रद उत्पन्न इत्यर्थः । तस्य रसस्य रूपं विदधत् धारयन् त्वष्टा आदित्य एति प्रत्यहम् उदयं करोति ।

यद्वा त्वष्टा देवः विशेषत आदित्यस्य रूपं शाणोल्लेखादिना विदधत् कृतवान्। 'त्वष्ट्रेव यन्त्रोल्लिखितो विभाति' इति रघुवंशेऽपि। एवं भूतः स विशिष्ट एति उदेति। अग्रे मर्त्यस्य मनुष्यस्य सतः तस्य पुरुषमेधयाजिन आजानदेवत्वं मुख्यदेवत्वं सूर्य्यरूपेण कर्मणा उत्कृष्टेन देवत्वं प्राप्ताः कर्मदेवाः सृष्ट्यादावुत्पन्ना आजानदेवास्ते कर्मदेवेभ्यः श्रेष्ठाः। 'ये शतं कर्म देवानामानन्दा स एक आजान देवानामानन्दः' (बृ० ४।१।३५) श्रुतेः। मर्त्यस्य मरणशीलस्य मनुष्यस्येत्येवार्थः संगतो भवति, न तु मर्त्यस्य जडस्य रेतसो देवत्वं देवनिवासयोग्यत्वमित्यर्थः। सर्वस्यैव तथात्वेन स्तुत्यनुपपत्तेः। रेतसो जडत्वेऽपि मर्त्यत्वानुपपत्तेश्च। न च मर्त्यस्य जडस्य देवत्वं चेति त्रित्वमित्यर्थः। उभयोरपि पदयोर्गौणार्थत्वानुपपत्तेः। वस्तुतस्तु यथा शरीरस्य चैतन्याभिव्यक्तिस्थानत्वेन चेतनत्वं तथैव पञ्चाग्निविद्यानुसारेण रेतसोऽप्यनुशयिसंश्लिष्टस्यैव योषायां गर्भत्वोक्तेः।

यदुक्तं कौषीतक्युपनिषदि 'ये वै केचनास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति। तत्र चन्द्रमास्तं पृच्छति कोऽसीति तं प्रतिब्रूयात् विचक्षणादृतवो रेत आभृतम् पञ्चदशात् प्रसूतात्पित्र्यवतस्तन्मा पुंसि कर्त्तर्य्येरयध्वन् पुंसा कर्त्रा मातरि मां निषिञ्च स जायमान उपजायमानो द्वादशत्रयोदश उपमासो द्वादश त्रयोदशेन पित्रा संतद्विदे प्रतितद्विदेऽहम् क्रतुरस्मि आर्तवोऽस्मि आकाशाद्योनेः संभृता भार्य्या एतत्संवत्सरस्य तेजोभूतस्यात्मा त्वमात्मासि यस्त्वमसि सोहमस्मि' १।२-६

अस्य प्रश्नोत्तरस्येदं तात्पर्य्यं—सोमप्रधानाच्चन्द्रमण्डात् रेतो जायते। ततः एव जीवशरीरं निर्वर्त्तते। तस्माच्चन्द्रस्यांश एव जीवशरीररूपेण परिणत इति। यस्त्वमसि सोहमस्मि इत्यादिना स्वस्मिश्चन्द्राभेद एव पुरुषेण ख्याप्यते। रेतः शब्दश्चायं तत्तदुत्पादके सर्वत्रैव व्यवहृतः। यथा हिरण्यरेता अग्नि अग्नेः सारभूतादंशाद्धिरण्यं जायते कृशानुरेता रुद्रः। अथातो रेतसः सृष्टिः प्रजापते रेतो देवा देवानां रेतो वर्षः वर्षस्य रेतो ओषधयः ओषधीनां रेतो अन्नम् अन्नस्य रेतो रेतः रेतसां रेतः प्रजाः प्रजानां रेतो हृदयम् हृदयस्य रेतो मनः मनसो रेतो वाक् सर्वत्रसारभूतं यज्जन्यं तत्तद्रेत उक्तम्। ऋतूनां चन्द्रजन्यत्वाच्चन्द्ररेतस्त्व-

मुक्तम्" तदपि न प्राकृतयज्ञसाधकम्। बृहदारण्यके छान्दोग्ये कौषीतक्याञ्च पञ्चाग्निविद्यादिक्रमेण विशिष्टानां जीवदेहानां सोममयत्वं सोमजन्यत्वमुक्तमिष्यते च। सोमजन्यत्वमिष्टमेव। तत्राहुतित्वादिकन्त्वारोपितमित्यप्युक्तमेव पञ्चाग्निविवरणे। रेतः शब्दः शुक्रे प्रसिद्धोऽपि गौण्यावृत्त्या तत्सारतज्जन्यवस्तुषु प्रवर्त्तते। अतएव अन्नस्य रेत रेत एवेत्युक्तम्।

न सर्वे चन्द्रमसं गच्छन्ति। भोगायैव चन्द्रारोहणं। न निष्प्रयोजनम्, न वा प्रत्यवरोहाय। पुष्पफलोपादानाय वृक्षमारोहति न निष्प्रयोजनम् नापि पतनायैव। नानिष्टकारिणां चन्द्रमसि भोगो भवति। तस्मादिष्टिकारिण एव चन्द्रमसमारोहन्ति, नेतरे। ते तु संयमनं यमालयमवगाह्य स्वदुष्कृतानुरूपा यामीयातना अनुभूय पुनरेवेमं लोकं प्रत्यवरोहन्ति। एवं तेषामारोहावरोहौ भवतः। 'न साम्परायः प्रतिभाति वालं... पुनः पुनर्वशमापद्यते मे' 'वैवस्वतं संगमनं जनानामि'ति वचनेभ्यः। संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् (ब्र० सू० ३।१।१३) 'स्मरन्ति च' १४। मनुव्यासप्रभृतयः शिष्टाः। संयमने यमायत्तं कपूयकर्मविपाकं स्मरन्ति। 'अपि च सप्त' १५। रौरवप्रमुखाः सप्तनरकाश्च स्मर्य्यन्तेताननिष्टकारिणः प्राप्नुवन्ति। यमप्रयुक्ताश्चित्रगुप्तादयस्तत्राधिष्ठातारः। 'अविद्याकर्मणोरिति तु प्रकृतत्वात्' १७। अथैतयोः पथोर्न कतरेण च तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि। जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न संपूर्य्यते। विद्या कर्मणी देवयानपितृयानपथोः प्रतिपत्तौ प्रकृते तद्य इत्थं विदुः इति विद्या तया प्रतिपत्तव्यः देवयानपन्था इष्टापूर्ते दत्तम् ( छा०।५।१०।१-३ ) इति कर्म तेन पितृयाणः पन्थाः।

तस्मान्नानिष्टकारिणां चन्द्रलोकारोहणम्। सर्वेषां तत्र गमने 'नेत्थ यथासौ लोको न संपूर्य्यते' इत्युक्तिरपार्था स्यात्। यद्यप्यनारोहणेनापि तदुत्तरं संभवति श्रुतिस्तु तृतीयस्थानसंकीर्तनेनासंपूरणं दर्शयति। 'एतत्तृतीयस्थानं तेनासौ लोको न संपूर्य्यते' (छा० ५।१०।८) अतः शाखान्तरानुरोधेन कौषीतक्यां सर्वशब्दः अधिकृतापेक्ष एव प्रतिपत्तव्यः।

तृतीयस्थाने ऐड्लाभाय पञ्चम्यामाहुतावापः पुरुष वचसो भवन्तीति पञ्चसंख्यादरो नावश्यकः। तृतीयस्थानप्राप्तौ तदनपेक्षणात्। तेन मनुष्यशरीरहेतुत्वेनैवाहुतिसंख्या नियमः, न कीटपतङ्गादिहेतुत्वेन। तेनान्येषां विनैवाहुतिसंख्यया भूतान्तरोपसृष्टाभिरद्भिर्देह आरभ्यते। 'स्मर्यतेऽपि च लोके' १९। द्रोणधृष्टद्युम्नप्रभृतीनां सीताद्रौपदीप्रभृतीनाञ्चायोनिजत्वं स्मर्य्यते भारतादौ। द्रोणादीनां योषिद्विषयाहुतिर्नासीत्। धृष्टद्युम्नादीनां योषित्पुरुषविषये द्वे आहुती न स्तः। बलाकाऽपि रेतः सेकमन्तरेण गर्भं धत्ते इति लोकप्रसिद्धिः।

यदप्युक्तम् "महदात्मनोऽत्र सम्बन्धं बोधयितुं द्वितीयमन्त्रेण महानात्मास्तूयते। 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय।' महानात्मा श्रुतिषु बहुधा स्फुटीकृतः। सूर्य्यमण्डलादुपरि वर्तमानस्य परमेष्ठिमण्डलस्यायं रसः

इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः।
महतः परमव्यक्तमव्यक्तात्पुरुषः परः
पुरुषान्नापरं किञ्चित् सा काष्ठा सा परा गतिः।'
'मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
संभवः सर्वभूतानां ततो भवति भारत।'
'सर्वभूतेषु कौन्तेय मूर्त्तयः सम्भवन्ति याः।
तासां ब्रह्म महद्योनिरहं, बीजप्रदः पिता।'

प्रकृतिरूपे महति विज्ञानात्मा गर्भं दधाति। ततः सर्वभूतसंभवः आकृतिमहान्; प्रकृतिमहान् अहङ्कृतिमहान् अपकृतिमहान् इति त्रिविधा भूतानामाकृतिरनेन विधीयते। सर्वेषु शरीरनिष्ठेषु मन आदिष्वहंभावोऽप्यनेनैव क्रियते। सोऽयं महानुक्ते मंत्रे श्रुतः। तमसः परस्तादित्यनेन सूर्य्यमण्डलात्परत्वमस्य स्फुटम्। मृत्योर्व्याप्तिश्च त्रिलोक्याम्। तं विदित्वालब्ध्वा मृत्युमतिक्रामति। सोऽयं महान् सर्वत्र भूतात्मना सम्बद्धो भवतीवि द्वितीयमंत्रेण सूचितम्। अयमेव महान् सह इति श्रद्धा इति

चोच्यते। परमेष्ठिमण्डलादेष चन्द्रेऽवतरति चन्द्राच्च पृथ्वीस्थैर्जीवैः प्राप्यते। श्रद्धा शब्दस्यायमर्थो यदात्मा श्रयते यदाश्रित्यात्माश्रयते यदाश्रित्यायमात्मा प्रतितिष्ठति तत् सत्यं श्रत्। श्रतो धानं श्रद्धा। एकात्मप्रतिष्ठाहेतोः सत्यस्य यत्र क्वचिदन्यस्मिन्नात्मनि प्रवाहमर्यादया परिस्थितिस्तत्रैव सत्यवशादयमात्मा प्रेमबन्धनेन प्रतितिष्ठति। स तत्रात्मना श्रद्धत्ते तस्मात्तत्रायमात्मानुरज्यते। अनुरञ्जनमद्भिः सम्पद्यते। तस्मादापः श्रद्धा। तदेवं महत आत्मनः सम्बन्धरूपा द्वितीया महदाहुतिर्द्वितीयेन मंत्रेण व्याख्याते" ति तन्न, मंत्रे महच्छब्दस्य महेश्वरादिशब्दगतस्येव निरतिशयबृहत्त्वबोधकत्वेन महत्तत्त्वप्रबोधकत्वाभावात्।

मन्त्रार्थस्तु—'एतं महान्तम् सर्वोत्कृष्टं देशकालाद्यवच्छेदरहितम् पुरुषं सूर्यमण्डलस्थमहं वेद जानामि' इति मंत्रद्रष्टुर्वचनम्। आदित्यवर्णं आदित्यस्येव वर्णो यस्य तं उपमान्तराभावात् गगनोपममितिवत्स्वोपमम्। आदित्यवत्स्वप्रकाशम्। तथा तमस अविद्याया परस्तादूरतरम् अविद्यातत्कार्यरूपतमोरहितम् तमेव तत्पदलक्ष्यार्थकार्य्यकारणतीतं शुद्धं निरतिशयं महान्तं परमात्मानं त्वंपदलक्ष्यार्थप्रत्यगभेदेन साक्षात्कृत्य मृत्युमतिक्रामति परं ब्रह्म गच्छति परब्रह्मरूपो भवतीत्यर्थः। नान्यः पन्था मार्गः तस्यायनाय आश्रयाय गमनाय वा। अयमात्मा सर्वापेक्षया महान् सर्वस्यैव रसो न परमेष्ठिमण्डलस्यैव। नात्र परमात्मभिन्नं महत्तत्त्वादिकं विवक्षितम्। तज्ज्ञानस्य मृत्युतरणाप्रयोजकत्वात्। 'सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति' ब्रह्मविदा प्नोति परम्' 'ब्रह्मविद् ब्रह्मैव भवति।' इति ब्रह्मज्ञानस्यैवामृतत्वप्रयोजकत्वश्रवणात्। 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादौ तु व्यष्टिबुद्ध्यपेक्षया समष्टिबुद्धरूपस्य हिरण्यगर्भाख्यस्य महतः प्रथमप्रकृतिविकाररूपस्य महत्तत्त्वस्य वर्णनं संगच्छते। तदपेक्षयापि परस्योत्कृष्टस्याव्यक्तस्य प्रकृतेः प्रकृतिविशिष्टस्याव्याकृतस्य वर्णनम्। अव्यक्तापेक्षयाऽपि परः पुरुषः। शुद्धब्रह्मरूप उत्तमः पुरुषः। स एव निरतिशयः परः। स एव काष्ठा परा गतिरूपत्वात्। स एवेह मंत्रे महेश्वरो महापुरुषः

स्वप्रकाशः महान्तं पुरुषमित्यादिभिर्बोधितः। मम योनिर्महद्‌ब्रह्म इत्यादावपि न महत्तत्त्वं महानात्मा वा भवदभिमतो गृहीतः तत्र ब्रह्मपर-महच्छब्दस्य ब्रह्मशक्तिरूपमायाबोधकत्वात्। तस्यैव ब्रह्मगर्भाधिकरण-त्वात्। महदात्मनस्तु कार्य्यत्वमेव न सर्वभूतकारणत्वम्। सर्वमूर्तिषु महतोऽपि समाविष्टत्वेन सर्वमूर्तियोनित्वं प्रकृतेरेव, सर्वसंमतम्। भगवच्छक्तिरूपायां मायायामेव बीजप्रदो भगवान् बीजप्रदानेन सर्व-जनको भवति। सा च सर्वजननीति प्रसिद्धमेव। यदि प्रकृतिरूप एव महानात्मा उच्यते तदाऽव्यक्तस्य महत्परत्वोक्तिर्व्याहन्येत। तत्राकृति महान्, प्रकृतिमहान्, अहङ्कृतिमहान् इत्यादि भेदोऽपि निर्मूल एव। प्रकृति-महदहङ्कारशब्दैरेव तद्‌बोधसंभवेन महत्पदप्रयोगस्य वैयर्थ्यात्। महत्त्वाभिप्रायेण तत्प्रयोगश्चेत्तदा महद्‌ब्रह्मपदेन ब्रह्मणोऽपि बोधः प्रसज्येत, तस्यैव सर्वमहत्त्वात्। न चेष्यत एव, बीजप्रदातुः परमेश्वरस्य तदन्यत्वोक्तेः। महद्‌ब्रह्मपदेन प्रकृतिबोध एव तु विवक्षितः। तत्रैव ब्रह्मकर्तृकगर्भाधानोपपत्तेः। कार्य्याणामाकृतयस्तु कारणादेव निष्पद्यन्ते। अतएवाकृतिमहानित्यादिभेदो निर्मूल एव। शरीरनिष्ठेषु मन आदिषु अहम्भावोऽप्यन्योन्याध्यासमूलको नाहम्मूलकः भूतानां मंत्राणां वा उपादानभूतोऽहङ्कारस्तु ततोऽन्यः। स च राजस-तामस-वैकारिक-(सात्त्विक) भेदेन भूतप्राणेन्द्रियमनोदेवोपादानत्वेन त्रिविधः। 'महा-भूतान्यहङ्कारो बुद्धिरव्यक्तमेव च' त्यादि गीतावचनात्।

समष्ट्यहम्मूलकान्तःकरणस्यावस्थाविशेषो व्यष्ट्यहङ्कारः। स एव साभासः साधिष्ठानोऽहमर्थभूतः सोपाधिको जीवोऽपि। देहादिकस्त्वहं शब्दस्य गौणोऽर्थः। शुद्ध आत्मा तु अहं पदस्य लक्ष्यार्थ इत्यन्यत्र विस्तरः।

परं वेदाहमेतं पुरुषं महान्तमित्यादिषु महत्तत्वरूपो हिरण्य-गर्भरूपो वा महानात्मासर्वथाऽपि न वर्णितः। गीतास्थलेष्वपि नायं वर्णितः। 'बुद्धेरात्मा महान् पर' इत्यत्र तु समष्टिबुद्धिर्महानात्मा वर्णितः। मंत्रे परमात्मज्ञानेन मृत्युतरणरूपामृतत्वप्राप्तिरुक्ता। सा च न त्रिलोक्या बहिः परमेष्ठिलोकप्राप्त्या 'न तस्य प्राणा उत्क्रामन्ति इहैव

समवनीयन्ते' इति श्रुतिविरोधात् । हिरण्यगर्भाद्युपासनसाध्यक्रम-मुक्तिस्तु ब्रह्मलोकप्राप्त्या सिद्ध्यति, महाप्रलये तु हिरण्यगर्भस्य मरण-श्रवणात् ब्रह्मस्वरूपसाक्षात्कारेण ततोऽपि ब्रह्मणा सह तल्लोकनिवासिनां निरुपाधिब्रह्मतादात्म्यावाप्तिरेव मुक्तिः । न केवलं परमेष्ठिलोकस्येदृशी-गतिः, स्वयम्भूलोकस्यापि प्रतिसंचरे (प्रलये) तथात्वोपपत्तेः ।

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ।'

सोऽयं महान् सर्वत्र व्याप्तो भूतात्मना सम्बद्धो भवतीति मंत्रे उक्त इति न संगतम्, तथाभूतस्यार्थस्य मन्त्रादनवगतेः । परमेष्ठिमण्डला-च्चन्द्रमण्डले ततो भूमिष्ठेषु जीवेस्ववततार इत्यपि कल्पनामात्रम्, व्यापकस्यावतारासंगतेः । अहंकारादिकारणस्य महतः स्वकार्य्यानुस्यूत-त्वेनाप्यवतारासंगतिः । न च व्यष्टिबुद्धिविशेषरूपेणावतरणं संगत-मिति वाच्यम्, तथापि त्रिलोकीबहिष्ठस्य तदननुपपत्तेः श्रद्धाशब्द-निरुक्तिस्तु न प्रत्याख्यायते तथापि सत्त्वानुरूपत्वेन श्रद्धाया न सर्वत्र तया सत्यधारणं संभवति । अतः श्रतो विश्वासस्यैव धानं श्रद्धेति तु युज्यते, विश्वासस्य सत्त्वानुरूपत्वोपपत्तेः । श्रद्धापूर्वकत्वात् कर्मणामग्निहोत्रा-दीनां घृतसोमादिषु तत्समवेतासु अप्सु तद्बहुलेषु दुग्धदधिसोमादिषु अप्पदप्रयोगः, श्रद्धापूर्वकत्वादप्स्वपि श्रद्धापदप्रयोगः । 'श्रद्धा वा आप' इति वचनात् । महदाहुतेश्च चर्चाऽपि मंत्रे नास्ति स्वाभ्यूह एव ।

यदुक्तम्—"प्रजापतिश्चरति गर्भेऽन्तरजायमानो बहुधा विजायते । तस्य योनिं परिपश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वा । ३१।१९ इति मंत्रेण क्षेत्रात्मसम्बन्धो बोध्यते । अयमेव विज्ञानात्मेत्युच्यते । शरीर-स्थानां सर्वासां प्रजानामयमधिपतिः प्रजापतिशब्देनोक्तः । अयं हृदि केन्द्रे तिष्ठतीति गर्भेऽन्तश्चरतीत्युक्तम् । केन्द्रशक्तिरभितः प्रसृता पिण्ड-मुत्पादयतीति बहुधा विजायते इत्युक्तम् । केन्द्रशक्त्याधारेणैव सर्वं वस्तु तिष्ठति । केन्द्रस्थानञ्च दुर्ज्ञेयम् । सैषा तृतीया प्रजापत्याहुतिरि"ति तदेतत्सर्वं निष्प्रमाणमेव, मंत्रस्य तथार्थानवगमात्, प्राचीनभाष्यकारैश्चान्यथा व्याख्यातत्वात् ।

क्षेत्रज्ञचर्चाऽप्यत्र नास्ति । निरुपचरितः प्रजापतिस्तु सर्वात्मैव । प्रजापतिः अन्तः हृदि स्थितः सन् गर्भे गर्भमध्ये प्रविशति । यश्चाजायमानोऽनुत्पद्यमानो नित्यः सन् बहुधा कार्यकारणरूपेण विजायते मायया प्रपञ्चरूपेणोत्पद्यते । धीरा ब्रह्मविदः तस्य प्रजापतेः योनिं स्थानं स्वरूपं वा पश्यन्ति । अहं ब्रह्मास्मीति जानन्ति । विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि तस्मिन्नेव ब्रह्मणि तस्थुः स्थितानि । सर्वं तदात्मकमेवेत्यर्थः । स्पष्टमिह सूर्योपलक्षितं परमात्मप्रकरणं लक्ष्यते । अतस्तज्ज्ञानेन मृत्युतरणमपि संभवति । पिण्डोत्पादिनी केन्द्रशक्तिरभितः प्रसृता पिण्डमुत्पादयतीति कथमनेन मंत्रेण सिद्ध्यतीति सुधियो विदाङ्कुर्वन्तु । गीतायान्तु—

'इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः ॥
महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः ॥
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥
यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥'

इत्यादिभिः महदादिदृश्यस्य क्षेत्रत्वं तत्प्रकाशकस्य द्रष्टुः क्षेत्रज्ञत्वमुक्तम् । तस्यैव च क्षेत्रज्ञञ्चापि मां विद्धीति परमात्माभेदोऽप्युक्तः । परमात्मैव बुद्ध्युपाधिकत्वेन विज्ञानात्माऽपि वक्तुं शक्यते । तथापि प्रजापतिः अन्तः गर्भे चरति तैः शब्दैः क्षेत्रज्ञात्मसम्बन्धस्तदाहुतिश्च न सिद्ध्यति मंत्राक्षराननुगुण्यात् । सर्वभुवनाधिष्ठाने परमात्मन्येवाञ्जस्येन मंत्राक्षराणां समन्वयात् । सर्वान्तर्य्याम्यपि गर्भेऽन्तश्चरति । नहि तावतैव तस्य बुद्ध्यवच्छिन्नचैतन्यरूपत्वम् ।

यच्च बुद्धेर्द्वैविध्यं विद्याविद्यादिरूपत्वम् । धर्मज्ञानवैराग्यैश्वर्याणां विद्यारूपत्वम्, अधर्माज्ञानावैराग्यानैश्वर्य्याणाञ्चाविद्यारूपत्वम् । विद्यया मुच्यतेऽविद्यया बद्ध्यते । तत्र यद्यपि न विरोधस्तथापि बुद्धि-

सम्बन्धस्तृतीयेन मंत्रेणोच्यत" इत्यादिकथनं निष्प्रमाणमेव। भुवनाधिष्ठानस्य भुवनसम्बन्धस्य कण्ठत उक्तत्वात्। विद्याविद्यास्वरूपबन्धमोक्षसाधनत्वादिवर्णनन्तु मंत्रार्थो न भवत्येव। धर्मादीनान्तु विद्योपकारकत्वेन विद्यात्वेऽपि मुख्यविद्यात्वाभाव एव। वेदान्तमहावाक्यादिजन्यब्रह्मापरोक्षसाक्षात्कारस्य मुक्तिहेतुत्वेन विद्यात्वात्। यथाकथञ्चिद्विद्यात्वन्तु ज्ञानमात्रस्यैव वक्तुं शक्यम्।

यदुक्तम्—"यो देवेभ्य आतपति यो देवानां पुरोहितः पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये (३१।२०) इति चतुर्थेनेन्द्रियसम्बन्धो मनः सम्बन्धश्चोच्यते। देवा एवेन्द्रियरूपेण प्रविशन्तीति सूचितम्। प्रथमे मंत्रेऽन्यत्राऽपि बहुत्र श्रुतिषु देवा इन्द्रियाण्युच्यन्ते। देवेभ्यो य आतपति देवानां यो पुरोहितः इति मनः सूचितम्। अनेनैव मनसा ब्राह्मीरुक् भवति। स्मृतिष्वप्युक्तं 'मन एव मनुष्याणां कारणं बन्धमोक्षयो"रिति तदपि कल्पनामात्रम्। द्योतनात्मकत्वेनेन्द्रियाणां क्वचिद्देवत्वेऽप्यत्र देवानां मुख्यार्थग्रहणे बाधाभावात्तदनुपपत्तेः। मनसश्चातपकत्वपुरोहितत्वाप्रसिद्धेश्च। एवं ब्राह्मीरुक् यदि ब्रह्म प्रकाशरूपो ब्रह्मसाक्षात्कार उच्यते तदा न दोषः। अन्या काचिद्रुक् तदा सा निर्वक्तव्या। तथाप्यत्र सूर्योपस्थानरूपे मंत्रे नैतत् श्लिष्यते। मंत्रार्थस्तु यः प्रजापतिरादित्यरूपः देवेभ्योऽर्थाय आतपति द्योतते। यः देवानां पुरः हितः स्थितः, सर्वकार्येषु अग्रे नीतः। यः देवेभ्यः सकाशात् पूर्वं प्रथमम्रुत्पन्नः। तस्मै आदित्याय नमः। कीदृशाय रुचाय रोचते इति रुचः तस्मै रुचाय दीप्यमानाय। तेजसे ब्राह्मये ब्रह्मणोपत्यं ब्राह्मिस्तस्मै ब्रह्मावयवभूताय वेति सूर्यसम्बन्धे सर्वाणि मंत्राक्षराण्याञ्जस्येन सङ्गतानि भवन्ति। देवा इन्द्रियाणि मन आतपति, पुरोहितमनसा काचिद् ब्राह्मीरुग् जायत इत्यादि अक्षरबाह्यक्लिष्टकल्पना निराधारा। रुचं ब्राह्मं जनयन्त देवा इति मंत्रेऽपि देवाः प्राणाः रुचं शोभनं ब्राह्मम् ब्रह्मणोऽपत्यमादित्यं जनयन्तः उत्पादयन्तः अग्रे तत् वचो अब्रुवन्। अस्मिन् मंत्रे देवा अन्ये पूर्वस्मिन्नन्ये। अस्मिन्मंत्रे आदित्यं

जनयन्तस्ते पूर्वतः स्थिताः पूर्वस्मिन्मंत्रे तु देवेभ्यः पूर्वमादित्यस्योत्पत्तिरुक्ता । अतएवास्मिन्मंत्रे प्राणरूपा देवा उक्ताः ।

यदप्युक्तम् "एवं स्थूलसूक्ष्मशरीरयोः सम्पत्तौ मनुष्यशरीराकारे पूर्णा पञ्चमी ब्रह्मज्योतिराहुतिर्भवति । अर्थात् यस्यायमपवृक्तोंशः पृथक् तन्त्रं प्रवर्त्तयितुमात्मनि विजातस्तत्र व्यापकं ब्रह्म प्रविशति । 'तत् सृष्ट्वा तदनुप्राविश'दिति श्रुतेः । ब्रह्म हि सर्वत्र व्याप्तम् । तद्विनाकृतम् किमपि न तिष्ठति । सम्पन्ने पृथक् तंत्रे तस्य व्याप्तिरेव प्रवेशः । अयमेव देहे चिदात्मा परमात्मेति चाख्यायते । तदेतत् 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति (श्वेता०४।६)इत्याद्यासु श्रुतिषु स्पष्टः । भोक्ता चिदाभास, अनश्नन् केवलं द्रष्टा तु चिदात्मा सेयं ब्रह्मज्योतिराहुतिः पञ्चमेनोक्ता । रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन् यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे (३१।२१) देवैः ब्राह्मीरुक् या मनोरूपेण सम्भृता तस्यामेव चिदात्मनो विकासो जायते । अस्यैव परमात्मनोविज्ञानेनेन्द्रियाणां वशीकारो मुक्तिश्च सम्पद्यत इति मंत्रोत्तरार्धेनोक्त"मिति तन्न, मन्त्राक्षराननुगुण्यात् ।

वस्तुतस्तु मंत्रानुसारेण कल्पना युक्ता, न कल्पनानुसारेण मंत्रा नेतव्या । इन्द्रियमनः सम्बन्धार्थं देवशब्दस्येन्द्रियाण्यर्थः, पुरोहितपदस्य मनोऽर्थ इति कल्पितम् । एवं ब्रह्मज्योतिराहुतिरपि काल्पनिक्येव, तत्र यज्ञत्वभावनादिविधाने सति कल्पनायाः सार्थक्येऽपि तदभावात्तु व्यर्थैव सा कल्पना । व्यापकस्य ब्रह्मणः प्रवेशस्तु न संभवत्येव, परिच्छिन्नस्यैव प्रवेशोपपत्तेः । नहि श्रुतिबलादपि तत्सम्भवति शब्दस्य ज्ञापकत्वेऽनाकारत्वात् । तस्मात्प्रतिविम्बाभासादिरूपेणैव तत्प्रवेशकल्पना युज्यते, नान्यथा । तौ विम्बप्रतिविम्बरूपावेव द्वा सुपर्णा इत्यादिसूक्तौ । तयोरेवचिच्चिदाभासयोरीशजीवत्वोपपत्तेः । अतएव जीवरूपेणैवेश्वरस्य सृष्टेषु प्रवेशो न परेशरूपेण, तस्य व्यापकत्वात्तदनुपपत्तेः । अतएव छान्दोग्ये जैवेन रूपेणैव परमात्मप्रवेश उक्तः । 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य

नामरूपे व्याकरवाणी'ति श्रुतेः। शरीरे तदभिव्यक्तिरेव प्रवेशश्चेत्प्रत्यगात्मव्यतिरेकेण देहे तदभिव्यक्तेरप्रसिद्धेः। अतएव यत्साक्षादपरोक्षाद्ब्रह्मेति प्रत्यगात्मन एवापरोक्षत्ववर्णनम्। तदभेदेनैव ब्रह्मणोऽपरोक्षत्वाभिगमात्। अन्यथा प्रमाणपारम्पर्येण परोक्षे घटादावपि संशयाद्यभावे साक्षादपरोक्षे ब्रह्मणि कुतः संशयादिविषयत्वं कुतस्तराम्प्रमाणसापेक्षत्वम्? न च तन्नास्त्येवेति वाच्यम् 'तं त्वौपनिषदं पुरुषं पृच्छामि। 'नावेदविन्मनुते तम्बृहन्तम्' शास्त्रयोनित्वादित्यादिशास्त्रविरोधात्। शुक्रानुप्रविष्टचिद्धातुरेव न चिदाभासः, व्रीह्यादिसंश्लिष्टस्यापि चिदाभासत्वोपपत्तेः। तेन ब्रह्म ज्योतिराहुतिस्त्वसिद्धैव।

'तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्। (ब्र० सू० ३।१।१) इत्यादौ देहवीजैर्भूतसूक्ष्मैः सम्परिष्वक्तो जीवो देहान्तरप्रतिपत्तये रंहतीत्युक्तम्। तेन शुक्रानुप्रवेशात् पूर्वमपि साधिष्ठानचिदाभासरूपो जीवो व्रीह्यादिष्वपि संश्लिष्ट एव। परन्तु योनौ रेतः सेकात्प्राक् व्रीह्यादिषु संश्लेषे सत्यपि तत्र तस्य भोक्तृत्वं न भवति। अन्याधिष्ठितेष्वेव तत् संश्लेषात्। 'योनेः शरीरम् (३।१।२७ ब्र०) योनौ निषिक्ते रेतसि योनेरधिशरीरमनुशयिनां मनुशयफलभोगाय जायते इत्याह शास्त्रम्। 'तद् य इह रमणीचरणा' (चा० ५।१०।७) द्वा सुपर्णा' इत्यादि मंत्रे जीवपरमात्मानौ ग्रहीतुं शक्येते, अध्यात्माधिकारात्। नात्र सुपर्णौ गदितौ। पिप्पलं स्वाद्वत्तीत्यदनलिङ्गेन विज्ञानात्मा अनश्नन्नित्यनशनाभिप्रकाशाभ्यां परमात्मा अनन्तरे मंत्रे तावेव द्रष्टृद्रष्टव्यत्वेनोक्तौ।

'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः।

जुष्टं यदा पश्यत्यन्यमी शमस्य महिमानमिति वीतशोकः' (मु० ३।१।२।)

कैश्चित्तु तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वमनश्नन्नन्योऽभिपश्यतीति ज्ञस्तावेतौ सत्त्वक्षेत्रज्ञौ इति पैङ्गिरहस्यब्राह्मणानुसारेण सत्त्वक्षेत्रज्ञावेवेह विवक्षितौ, न जीवपरमात्मानौ।

न च सत्त्वशब्दो जीवपरः क्षेत्रज्ञ शब्दवाच्यः परमात्मेति वाच्यम्, तयोरन्तःकरणशरीरपरतया प्रसिद्धत्वात्। तत्रैव च

व्याख्यातत्वात्। तदेतत्सत्त्वं येन स्वप्नं पश्यति अथ योऽयं शरीर उपद्रष्टा स क्षेत्रज्ञस्तावेतौ सत्त्वक्षेत्रज्ञाविति सर्वमेतच्छांकरभाष्ये समुद्धृतमिति तत्रैव कणेहत्यालोचनीयम्। रुचं ब्राह्ममित्यादिमंत्रस्य त्वयमर्थः—देवा दीप्यमानाः प्राणाः योगिनो वा रुचं शोभनं देदीप्यमानं वा ब्राह्मं ब्रह्मण उत्पन्नमादित्यं जनयन्तः सृष्ट्यर्थं अग्रे प्रथमं तत् वचो अब्रुवन् तत्किमत आह—यो ब्राह्मणः हे आदित्य त्वां त्वामेवमुक्तविधिना उत्पन्नं विद्यात् जानीयात् तस्य ब्राह्मणस्य देवा वशे असन् वश्या भवन्ति। आदित्योपासिता जगत्पूज्यो भवतीत्यर्थः। यत्तु 'तस्य देवा असन् वशे' इत्यनेनेन्द्रियरूपाणां देवानां वशीकारो मनोरूपेण सम्भृताया ब्राह्म्याविज्ञानेन महति'त्युच्यते तन्न तस्यार्थस्य मन्त्रार्थबाह्यत्वात्। ब्रह्मणोऽपत्यभूतस्यादित्यस्यैव ब्राह्मरुक्त्वोक्तेः। नहीन्द्रियलक्षणैर्देवैर्मनोरूपेण काचिद् ब्राह्मीरुक् प्रसिद्धा, यस्यां चिदात्मनो विकासो भवेत्। किञ्च विकासो नामाभिव्यक्तिरुत्पत्तिर्वा? नान्त्यः चिदात्मनो नित्यत्वान्निर्विकारत्वाच्च। नाद्यः चिदात्मनो मनस्यभिव्यक्तेरङ्गीकारेऽपि मनस इन्द्रियरूपैर्देवैः संभृतत्वाभावात् तस्माद्यथोक्त एव मन्त्रार्थः।

यच्चोक्तम्—चिदात्मनः परमात्मनः सम्बन्धे च श्रीश्च लक्ष्मीश्च जीवे प्रादुर्भवत इति षष्ठी सप्तमी च श्रिया लक्ष्म्याश्चाहुती षष्ठेन मंत्रेणाम्नायेते—

'श्रीश्च लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्।
इष्णन्निषाण। मुं म इषाण। सर्वलोकम्म इषाण। ३१।२२ इति।

ताभ्यामाहुतिभ्यां श्रीमदूर्जितञ्च जीवात्मनः स्वरूपं सम्पद्यते। अनयोरेवोत्कर्षे विभूतिरूपता अंशावतारता च तेषां व्याख्याता।

'यद् यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम्॥'

इत्थं सप्तभिराहुतिभिर्जीवसम्पत्तिरुक्ता।" इति तदपि न, मंत्रेऽस्मिन्नाहुतेरवर्णनात्। चिदात्मनः परमात्मनः सबन्धे श्रिया लक्ष्म्या जीवे प्रादुर्भाव इत्यस्य मंत्रार्थत्वाभावात्। महीधररीत्यात्वयं मन्त्रार्थः—'ऋषिरादित्यं श्रुत्वा प्रार्थयते हे आदित्य

श्रीश्च लक्ष्मीश्च ते जायास्थानीये त्वद्वश्ये, यया सर्वजनाश्रयणीयो भवति सा श्रीः। श्रीयतेऽनया श्रीः संपदित्यर्थः। यया लक्ष्यते दृश्यते जनैः सा लक्ष्मीः सौन्दर्यमित्यर्थः। आदित्यवश्यत्वादुभे भार्या स्थानीये तस्य। यद्वा सवितृमण्डलमध्यवर्तिनः सरसिजासनसंनिविष्टस्य नारायणस्य द्वे अपि ते पत्न्यौ, पुराणादिषु तत्पोषकप्रमाणस्य वाहुल्योपलब्धेः। नक्षत्राणि गगनतारास्तव रूपम्। तवैव तेजसा भासमानत्वात्। 'तेजसो गोलकः सूर्य्यः, नक्षत्राण्यम्बुगोलकाः' इति ज्योतिःशास्त्रोक्तेः। अश्विनौ द्यावापृथिव्यौ तव व्यात्तं विकसितमुखस्थानीये। अश्नुवात व्यप्नुतस्तौ अश्विनौ द्यावा पृथिव्यौ 'इमे ही तैः सवमश्नुवाताम्' इति श्रुतेः। य ईदृशस्तं त्वां याचे। इष्णन् कर्मफलमिच्छन् सन्। इषाण इच्छ किमेषणीयं तत्राह- अमुं परलोकं मे मम इषाण मम परलोकः समीचीनोऽस्त्वितीच्छ। अमोघेच्छत्वादिष्टं भवतीत्यर्थः। सर्वं मे मम इषाण सर्वलोकात्मकोऽहं भवेयमितीच्छेत्यर्थः। मुक्तो भवेयमित्यर्थः। 'सर्वं खल्विदं ब्रह्मे'ति श्रुतेः।

यदुक्तम् "सृष्ट्यादौ पुरुषत्रयप्रादुर्भावः संसारमूलभूतानां मनः प्राणवाचां परस्परमुत्तरोत्तरीभावश्च सर्व एव यज्ञकृतः तत्र तत्र व्याख्यायते। क्षरपुरुषकलानाञ्च प्राणवागन्नान्नानां परस्परं पञ्चीकरणं पुरुषसूक्ते सर्वहुद्यज्ञनाम्ना विवृतम्। आदौ च सामग्र्यभावे पुरुषावयवैरेव यज्ञः सम्पाद्यत इत्यपि तत्रोक्तम्। देवा यद्यज्ञं तन्वाना अवध्नन् पुरुषं पशुमिति"। तत्रोच्यते यद्यपि यज्ञस्य प्रपञ्चहेतुत्वमुपपद्यते तथापि वेदविहितयज्ञस्यैव मानसत्वादि भेदेन तत्तद्धेतुत्वोपपत्तेः। पुरुषमेधाख्यो यज्ञोऽपि तादृश एव। सर्वहुदाख्यो यज्ञोऽपि तादृश एव। निरुक्तपरिशिष्टानुसारेणानृषेरतपसस्तेमन्त्रार्थज्ञानं दुष्करमिति श्रेयोऽविघातकामैर्ऋषिनिर्दिष्टरीत्यैव मन्त्रार्थः कर्तव्य इति श्रौतसूत्रकारैरनुक्रमणीकारैरेषां मंत्राणां नारायणदृष्टयोर्द्वयोस्त्रिंशैकत्रिंशयोरध्याययोः पुरुषमेधयज्ञ उक्तः, तस्य निर्वचनम्। अथ यस्मात् पुरुषमेधो नानेमे वै लोकाः पूरणमेव पुरुषः योऽयं पवते सोऽस्यां पुरि शेते तस्मात्पुरुषः तस्य यदेषु लोकेष्वन्नं मेधः तस्मात्पुरुषमेधः। 'नारायणपुरुषदृष्टा जगद्बीजपुरुषदैवत्या षोडश

ऋचः। इति महीधरः। पूर्वाध्याये ब्रह्मणे ब्राह्मणमित्याद्याः पुरुषमेधरूपस्य परमात्मनोऽवयवा उक्ताः। तेषामवयवी पुरुषोऽत्र स्तूयते। अव्यक्त-महदादिलक्षणश्चेतनो यः पुरुषः स एव 'पुरुषान्न परं किञ्चित्सा काष्ठा सा परागति' रित्यादि श्रुतिषूपदिष्टः। स एव सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराड् भवति। तस्य च सोपाधिकं निरुपाधिकञ्च रूपं सहस्र-शीर्षा इत्यनेनोक्तम। यान्यनन्तानि प्राणिनां शिरांसि तथैवानन्तान्यक्षीणि पादादीनि बाह्यान्यान्तराणि च करणानि तानि सर्वाणि समष्टिभूतस्या-वयविनोऽस्यैव शिर आदीनि तेनास्य सहस्रशीर्षत्वादिकम्। शिरः पादाक्षिग्रहणं सर्वावयवसर्वज्ञानकर्मेन्द्रियमन आद्युपलक्षणार्थम्। एवं प्रपञ्चोपाधिरूपस्य पुरुषस्य प्रपञ्चाद्बहिरपि निरुपाधिकं रूपं विद्यते। 'अत्यतिष्ठद्दशाङ्गुलम्' इति मन्त्रवर्णात्। दशाङ्गुलमिति नाभ्यपेक्षया हृदयस्य दशाङ्गुलत्वाद्दशाङ्गुलमतिक्रम्य हृदि निरुपाधिकस्य ब्रह्मण उपलभ्यमानत्वात्। 'सोऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योति' रिति श्रुतेः। स भूमिं ब्रह्माण्डरूपां सर्वप्रपञ्चरूपां वा सर्वतः तिर्य्यगूर्ध्वमधश्च स्पृत्वा व्याप्य दशाङ्गुलमतिक्रम्य प्रपञ्चाद्बहिरपि स्थितः। दशाङ्गुलमुपलक्षणार्थम्। 'विकारावर्त्ति च' इति ब्रह्मसूत्रानुसारेण विकाराद् बहिरपि स विद्यते तस्यैकांशेनैव सर्वजगत् स्थितम्। सर्वमपि जगदस्य-महिमा सामर्थ्यविशेषो विभूतिरेव, न तस्य वास्तवं रूपम्। स्वतस्त्वस्मा-ज्जगज्जालात् अतिशयेनाधिकः। 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति श्रुतेः। सर्वाणि भूतानि पादः चतुर्थांशः अवशिष्टं त्रिपात् अमृतं दिवि स्वरूपेऽवतिष्ठते। 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति श्रुतेः। इदं वर्त्तमानं यदतीतं यच्च भाव्यं भविष्यं जगत् तत्सर्वं पुरुष एव। तथा अमृतत्वस्य स एवेशानः। यद्यस्मात्कारणात् अन्नेन प्राणिनां भोग्येनान्नेन फलेन निमित्तभूतेन अतिरोहति स्वीयां कारणावस्थामतिक्रम्य परिदृश्यमानां-जगदवस्थां प्राप्नोति। तस्मात्पुरुष एव प्राणिनां कर्मफलभोगाय जगदवस्थां स्वीकरोति नेदं तस्य वास्तवं रूपम, तस्यैव मोक्षेश्वरत्वान्न तत्र विकारः। सोऽयं त्रिपात् पुरुषः अज्ञानकार्य्यात् प्रपञ्चादूर्ध्वं उदैत् तत्रत्यैर्गुणदोषैश्चासंस्पृष्ट उत्कर्षेण स्थितवान्। तस्य पादो लेशः जगद्रूपः इह मायाया-

मभवत्। पुनःपुनः सृष्टिसंहाराभ्यां पुनः पुनरागच्छति। सर्वस्यैव जगतः परमात्मलेशत्वं गीतायामप्युक्तम्—

'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्।'

ततो मायायामागमनानन्तरम्। विष्वङ् विदुः सर्वत्राञ्चतीति देवतिर्य्यङ्नरादिरूपेण विविधः सन् व्यक्रामत व्याप्तवान्।

किं कृत्वा अशनेन सह वर्तमानं साशनम् अशनादिव्यवहारोपेतं चेतनप्राणिजातं अनशनं तद्रहितं गिरिनद्यादिकं ते साशनानशने अभिलक्ष्य स्वयमेव विविधो भूत्वा व्याप्तवान्। अथवा साशनं स्वर्गं अनशनं मोक्षं अभि सर्वतः व्याप्तवान्। विष्वङ्व्यक्रामदिति यदुक्तं तदेव प्रपञ्च्यते। ततस्तस्मादादिपुरुषात् समष्टिस्थूलप्रपञ्चरूपः विराड् ब्रह्माण्डदेहो वा अजायत। विविधं राजन्ते वस्तून्यत्रेति विराट्। तस्माद्विराजोऽधि विराड्देहस्योपरि तमेवाधारीकृत्य पुरुषस्तद्देहाभिमानी एक एव पुमानजायत। परमात्मा स्वमायया सर्वस्थूलप्रपञ्चमयं विराड्देहं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवत्। 'स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वाऽत्र प्रविष्ट इव विहरति' (नृ० ता०) श्रुतेः। स जातो अत्यरिच्यत स जातो विराड्पुरुषः अतिरिक्तो देवतिर्य्यङ्नरादिरूपो जातः। ततः पश्चात् भूमिं स्थूलां पृथिवीं ससर्ज। अपञ्चीकृताया भूमेस्ततः प्रागेवोत्पन्नत्वात् विराट्शरीरस्यापि भौतिकत्वाभ्युपगमात्। अथोऽनन्तरं पुरः पूर्य्यन्ते सप्तभिर्धातुभिरिति शरीराणि पुरः देवनरादिशरीराणि स्थूलपृथिव्या अनन्तरं सृष्टानि।

'तस्माद्यज्ञात् सर्वहुतः सम्भृतं पृषदाज्यम्।
पशूंस्तांश्चक्रे वायव्यानारण्या ग्राम्याश्च ये।'

सर्वं हूयते यस्मिन् स सर्वहुत् पुरुषमेधाख्यो यज्ञस्तस्माद्यज्ञात् पृषदाज्यं दधिमिश्रमाज्यं तदुपलक्षितं सर्वं भोग्यजातं संभृतं सम्पादितं तेनैव पुरुषेण। स एव च पुरुषः वायव्यान् वायुदेवताकान् प्रसिद्धान् पशून् ये चारण्ये भवा हरिणादयो ये च ग्रामे भवा गवाश्वादयस्तान् सर्वान् चक्रे कृतवान्। 'अन्तरिक्षदेवत्याः खलु

पशवः' इति श्रुत्या पशूनामन्तरिक्षदैवत्यं विज्ञायते । पुरुषमेधाख्यो यज्ञ एव सर्वहुद् यज्ञः । स च सर्वपुरुषावयविपरमात्मरूप एव । अतएव तस्मादेव सर्वहुतो यज्ञात् ऋचः समानि जज्ञिरे गायत्र्यादीनि छन्दांसि च तस्माद्यजुरप्यजायत तेषां यज्ञनिर्वर्तकत्वात् । 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः'...'यज्ञो वै विष्णुः' 'यस्मादृचोऽपातक्षन् 'यजुर्यस्मादपाकषन् । सामानि यस्य लोमानि अथर्वाङ्गिरसो मुखमित्याद्येकवाक्यत्वसिद्धेः । तस्मादेव अश्वा अन्ये चोर्ध्वाधोदन्तयुक्ता गर्दभाश्वतरादयो अजायन्त ह स्फुटम् । तस्माद्यज्ञात् अजा अवयश्च । तं यज्ञपुरुषं यज्ञसाधनभूतं यज्ञं पुरुषं इज्यतेऽनेन यज्ञस्तं पुरुषं पशुत्वमाभाव्य यूपे बद्धं बर्हिषि मानसे यज्ञे प्रौक्षन् प्रोक्षितवन्तः । प्रोक्षणादिसंस्कारैः संस्कृतवन्तः । कीदृशं पुरुषं अग्रतो जातं विराजोऽधिपुरुषः इत्याद्युक्तरीत्या तेन पुरुषेण पशुना देवा अयजन्त मानसयज्ञं कृतवन्तः के ते देवा साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः, ये च तदनुकूला ऋषयः मन्त्रद्रष्टारः ते सर्वेऽपि तेनैव मानसं यज्ञं कृतवन्तः ।

ब्रह्मवादिनां प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिरुक्ता । प्रजापतेः प्राणभूता देवा यदा यदा पुरुषं व्यदधुः उत्पादितवन्तस्तदा कतिधा कतिभिः प्रकारैः विविधं कल्पितवन्तः । अस्य पुरुषस्य मुखं किमासीत् बाहू ऊरू तथा पादौ किमुच्येते तदुत्तरञ्च ब्राह्मणो ब्राह्मणत्वजातिविशिष्टः पुरुषोऽस्य मुखमासीद् ब्राह्मणोऽस्य मुखादुत्पन्न इत्यर्थः । तज्जत्वादत्र सामानाधिकरण्यम् । पद्भ्यां शूद्रोऽजायत । चन्द्रमा मनसो जात इत्याद्युत्तरवाक्यस्वारस्यानुरोधात् । राजन्यः क्षत्रियत्वजातिविशिष्टः पुरुषोऽस्य बाहू बाहुभ्यामुत्पन्न इत्यर्थः । तत्तदानीमस्य प्रजापतेरीश्वरस्य प्रकृतस्य पुरुषावयविनः ऊरू वैश्यः सम्पन्नः । ऊरूभ्यां वैश्य उत्पन्नः तथास्य पद्भ्यां शूद्र उत्पन्नः ।

एवं दध्यादि द्रव्याणि गवादयः पशवः ऋगादिवेदाः ब्राह्मणादयो मनुष्याः यथा सर्वमेधाख्यात् यज्ञपुरुषात् प्रादुर्भूताः, तथैव चन्द्रादयो देवा अपि तस्मादेवोत्पन्नाः । तस्य मनसश्चन्द्रमा चक्षुषः सकाशात् सूर्य्योऽजायत वायुः प्राणश्च श्रोत्रात् कर्णात् अजायत । अग्निरस्य

मुखादजायत। नाभेरन्तरिक्षम् शीर्ष्णो द्यौः पद्भ्यां भूमिरुत्पन्ना श्रोत्राद्दिश उत्पन्नाः। तेन भूरादीन् लोकान् तस्यावयवभूतानवयवान् अकल्पयन् विद्वांसः।

'यत्पुरुषेण हविषा देवा यज्ञमतन्वत।
वसन्तोस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः॥'

यद्यदा पूर्वोक्तक्रमेण देवशरीरेषु सत्सु देवा उत्तरसृष्टिसिद्ध्यर्थं बाह्यद्रव्यानुत्पन्नत्वेन पुरुषस्वरूपमेव मनसा हविष्ट्वेन संकल्प्य पुरुषाख्येन हविषा मानसं यज्ञमतन्वत तदानीमस्य यज्ञस्य वसन्त ऋतु राज्यमासीत्। आज्यत्वेन संकल्पितवन्तः। एवं ग्रीष्म इध्मः शरद् हविः पूर्वं पुरुषस्य हविः सामान्यरूपत्वेन संकल्पः, अनन्तरं वसन्तादीनामाज्यादिविशेषत्वेन संकल्पः। यत् यदा देवा प्रजापतिप्राणेन्द्रियरूपा यज्ञं तन्वाना पुरुषं पशुमबध्नन् विराट्पुरुषमेव पशुत्वेन भावितवन्तः, तस्य यज्ञस्य गायत्र्यादीनि सप्त छन्दांसि परिधयः आसन्। ऐष्टिकस्याहवनीयस्य त्रयः परिधयः औत्तरवेदिकास्त्रयः आदित्यः सप्तमः प्रतिनिर्धिरूपः। 'गुप्त्यै वा अभितः परिधयः भवन्त्यथैतत्सूर्य्यमेव पुरस्ताद्गोप्तारं करोति' इति श्रुतेः। त्रिःसप्त त्रिगुणाः सप्त एकविंशतिसंख्याकाः समिधःकृताः। द्वादशमासा पञ्चर्त्तवस्त्रय इमे लोका असावादित्यः एते एकविंशतिदारुयुक्तेन्धनत्वेन भाविताः। अथवा सप्तसमुद्रा क्षीरोदादयोऽस्य यज्ञस्य परिधयः भारतस्यैव यज्ञभूमित्वात् समुद्राणां परिधित्वम्। त्रिगुणाश्छन्दो वर्गाः समिधः कृतः।

एवं देवा यथोक्तेन यज्ञेन यज्ञस्वरूपम् प्रजापतिम् अयजन्त पूजितवन्तः। तस्मात्तान्येव प्रसिद्धानि धर्माण्यासन्। जगद्रूपविकारधारकत्वाद्धर्माणि। यत्र विराट् प्राप्तिरूपे नाके पूर्वे साध्याः पुरातना विराडुपाधिसाधकाः देवाः सन्ति तं नाकं स्वर्गं ह एव ते महिमानः तदुपासका महिमानः सचन्त सचन्ते समवयन्ति प्राप्नुवन्ति। 'सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इत्यादि श्रुतेः। तदेवं पुरुषसूक्तस्य निष्कृष्टोऽर्थः नात्र भवत्कल्पनानां प्रसरः।

यदपि चोक्तम्—"अन्ये सर्वेऽपि यज्ञा अग्नौ सोमाहुतिरूपाः, चयन-

यज्ञस्वग्नावग्नेराहुतिरित्यग्नेरेव चितिस्तत्र सम्पाद्यते । "अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः । स्वाहा कृत्य ब्रह्मणा ते जुहोमि मा देवानाम् मिथुया कर्भागधेयम् ।" (तै० सं० १।३।७। शु० यजु० ५।४ अथर्ववेदे ४।३९।९) इहाग्नावेवाग्नेराहुतिः प्रतिपादिता ।

अत्राग्निर्द्विविधः चित्यः चितेनिधेयश्च । यस्मिन् हूयते स चित्यः । यस्तु हूयते स चितेनिधेयः । चितेनाग्निनैवाधिदैवमधिभूतमध्यात्मञ्च देवा भूतानि चोत्पाद्यन्ते । देवा इन्द्रियाणीत्युक्तम् प्राक् पुनराहितेन चितेनिधेयेनाग्निना यदा चित्योऽग्निर्बलवान् सम्पद्यते तदा जीर्णानि पत्राणीव देवाश्च भूतानि ततो विस्रंसन्ति । तेन पृथिव्याश्चेन्द्रस्य चाकर्षणाद्विमुक्तो यजमानस्यात्मा शुद्धाग्निमयेनाधिदैवं सूर्य्येणैव सह सम्पद्यते । सूर्यमण्डलमुत्तीर्णस्य च नात्र त्रिलोक्यां पुनरावृत्तिरिति मुक्त एव स भवति । सेयं चयनयज्ञेन क्रममुक्तिराख्यायते । सोमाहुतिरूपेण यज्ञेन तु देवेषु गतिर्भवति । तत्राग्न्याधानेन पूर्वं शरीराग्निरूप आत्मा संस्क्रियते ।

अग्निहोत्रदर्शपूर्णमासचातुर्मास्यादिभिश्च प्राक्सौमिकपदवाच्यैर्यज्ञैस्तत्र तत्र बलमुपचीयते । अनन्तरं सोमयागेनाधिदैवतं व्याप्तो योऽग्निस्तेन सम्बन्धः स्थाप्यते । तेन च शरीरबन्धनिवृत्तावधिदैवेनाग्निना समाकृष्टोऽयं तत्रैव प्रकृतिनियमेन गच्छति । तदित्थं यज्ञसंसक्तस्य देवात्मनो यज्ञात्मापरपर्य्यायस्य देवभावप्राप्तिर्वैज्ञानिकसिद्धान्तसिद्धा । व्याख्याते यज्ञस्य द्वे फले-जगच्चक्रपरिपालनम् आत्मनः स्वर्गगतिलाभश्च । आद्यो निष्कामानां गीतायां विवृतः—

"एवं प्रवर्त्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ।।"

तैः कर्मभिरात्मा न बध्यते ।

"यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचार ।।"

द्वितीयं तु फलं सकामानाम् स्वर्गे लोके गत्वा तत्र दिव्योपभोगादीनि श्रुत्यादिषु स्पष्टानि । श्रुतिषु कथं यजमानं स्वर्गलोकं प्रापयिष्यसीति ऋत्विजां प्रश्नोत्तरयोः स्वर्गप्राप्तेर्वैज्ञानिकी प्रक्रियाऽपि स्पष्टमनेकत्र

वक्तृता दृश्यते । यस्या एकदेशः स्वैदायनाख्यायिकायामुक्तः ।"
तत्रोच्यते–नाग्नौ सोमनिक्षेप एव यागः, किन्तु वेदविहितस्यैव तस्य तत्त्वम् । चयनयागेऽपि सोमादीनामेवाहुतिः ।

नहि चयनयज्ञेऽग्नावग्नेरेवाहुतिः चित्याग्नावाहित आहवनीयाग्नौ तत्तद्देवताकानां हविषां होमविधानात् । पञ्चभिश्चितिभिश्चिते चयनयागक्षेत्ररूपेऽग्नौ चितेनिधेयस्याहवनीयाग्नेः संस्थापनात्तत्र होमस्योपचार एव ।

अग्नावग्निरिति मन्त्रस्तु सोम गतः ।

तस्य त्वयमभिप्रायः-अग्नावग्निरिति जुहोति स्थाल्याः स्रुवेणेति (का० ५।२।६) अग्निर्मथ्यमानोऽग्नावाहवनीये प्रविष्टः सन् चरति हविर्मथयति । किं भूतोऽग्निः ऋषीणां पुत्रः वेदविदो ऋषयः तैरुत्पादित्वात्तेषां पुत्रवत्पुत्रः । पुनः कीदृशः, अभिशस्तिपावा, अभिशस्तिर्वैकल्यनिमित्तोऽभिशापस्तस्मात् पाति रक्षतीत्यभिशस्तिपावा । आतो मनिन् इति वनिप्प्रत्ययः । स एवं भूतस्त्वं हे अग्ने ? न स्योनः सुखरूपः सन् सुयजा शोभनयागेन इह स्थाने देवेभ्यः इन्द्रादिभ्यः हव्यं सोमादिरूपं यज देहि । अस्मद्दत्तां हविर्देवान् प्रापयेत्यर्थः । किं कुर्वन् सदं सदा अप्रयुच्छन् अप्रमाद्यन् । युच्छ प्रमादे इतिधातुः । स्वाहा इदमाज्यं तुभ्यं हुतमस्तु । अथवा सोऽग्निर्नो हविर्देवेभ्यो यज यजतु ददातु इति पुरुषव्यत्ययेन योजना । शुक्लयजुःसंहितायाश्चतुर्थाध्यायमारभ्याष्टमस्य द्वात्रिंशत्कण्डिकापर्य्यन्तमग्निष्टोममन्त्रा उक्ताः । अत्र मंत्रे मथिताग्नेरग्नावाहवनीये स्थापनमुक्तम् । नात्राग्नावग्न्याहुतिरूपो मुख्यो यज्ञः । यज्ञस्त्वत्र सोम एव प्रवृत्तः । चयनयागसम्बन्धिमंत्रास्तु एकादशाध्यायमारभ्याष्टादशाध्यायपर्य्यन्तमुक्ताः । सोऽग्निःपञ्चचितियुक्तः तत्र चयने पञ्चभिश्चितिभिश्चित्योऽग्निश्चयनयागक्षेत्ररूप एवोक्तः । तत्र चितेनिधेयोग्निर्हविर्दानाधिकरणतया निधीयते । तत्राग्निशब्देनाहवनीयाधिकरणं सप्तपुरुषाद्येकशतपुरुषपरिमितं चितं क्षेत्रमभिधीयते' इति सायणभाष्यम् । 'इष्टकाभिरग्निं चिनोति' 'अग्निमारोहति' 'अग्निं प्रोक्षति' इति श्रुतिभ्यः । तस्यैवचित्याग्नेः परिषेकादिकं कात्यायनेन सूचितम् । चित्यं परिषिञ्चत्यभीत्

दक्षिणेऽद्रिं कृत्वाश्मन्नूर्जमित्यद्रेरधि (१८।२।१) यज्ञस्यापरसंधिः कक्षस्तस्य समीपं निकक्षं दक्षिणयज्ञापरसन्धिसमीपं आत्मभागेऽश्मानं निधायोद-कुम्भमादायाद्रेराभ्य सपक्षपुच्छमग्निं प्रदक्षिणं जलधारया समन्तादग्नीत् सिञ्चतीति सूत्रार्थः। अग्निरहस्यरूपे शतपथस्य दशमे काण्डे चीयमा-नाग्नेः संवत्सरप्रजापत्युभयरूपत्वमुक्तम्। तत्र यावत्य इष्टकाः यजुर्मन्त्रैरु-पहितास्तावत्य एव प्रजापत्यवयवात्मना प्रतिसंहिता इत्यप्युक्तम्। विस्र-स्तस्य विश्लिष्टावयवस्य प्रजापतेः रस अग्रम् ऊर्ध्वलोकमगच्छत्।

तद्रसो महदुक्थमभवत् इत्यादिनोक्थादि प्रशंसनं तत्रैव चित्याग्ने-र्मिथुनरूपेण प्रशंसनम् सर्वमेतद्ध्यानार्थमुक्तम्। यदेव विद्यया करोति तदेव वीर्य्यवत्तरं भवति। ब्रह्मज्ञानातिरिक्तानां सर्वेषामेव वैदिक-ज्ञानानां पराङ्गत्वमेव भट्टपादैर्निरणायि

"सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते।
पराङ्गञ्चात्मविज्ञानादन्यत्रेत्यवधारये'ति ॥"

तद्वचनात्। तत्र चितेनाग्निनैवाधिदैवमध्यात्ममधिभूतम् देवा भूतानी-न्द्रियाणि चोत्पद्यन्ते इति यदुक्तं तत्तु निष्प्रमाणमेव। प्रजापतिना हेतुना यद्यपि सर्वे देवादय उत्पद्यन्ते चित्याग्नेस्तु तदभेदो भावनार्थ एवोक्तः। तेन-यथा विष्णोर्जगत्कारणत्वेऽपि तद्भेदभावितानां मूर्तीनामौपचारिकमेव कारणत्वं न वस्तुभूतं, यथा वा भावनार्थम् योषादावग्नित्वेऽपि नाग्नि-कार्य्यनिर्वाहकत्वं योषादौ तद्वदेवेहापि बोध्यम्।

यदुक्तम् चितेनिधेयेनाग्निना चित्यस्याग्नेर्बलवत्त्वमिति तदपि न चित्याग्नेस्तच्छेषत्वात्। चितेनिधेयस्याग्नेर्हविष्प्रापकत्वेनावश्यं देवाना-म्बलवर्धकत्वम्। चित्याग्नेस्तु सर्वदेवाद्यात्मकप्रजापतिरूपत्वभावनाया चितेनिधेयाग्नेरेव संस्कारकत्वम्।

यदपि "जीर्णानि पत्राणीव देवा भूतानि च ततो विस्रंसन्ति। तेन पृथिव्याश्चन्द्रस्य चाकर्षणाद्विमुक्तो यजमानस्यात्मा शुद्धाग्नि-मयेनाधिदैवं सूर्येण सम्बद्ध्यते" इति तदपि न किञ्चिद्विरोधात्।

चित्यनिधेयस्याग्नेर्देवानां हविष्प्रापकत्वेन बलवत्त्वापादकत्वमेव न विशरणपतनहेतुत्वं संभवति। पृथिव्याश्चन्द्रस्याकर्षणाद्विमुक्तिरपि

कर्मोपासनसमुच्चयेन ब्रह्मलोकप्राप्त्याऽन्यथासिद्धैव। अग्निरहस्योपासनमहिम्नैव क्रममुक्तिर्न चयनयागमात्रेण 'कर्मणा पितृलोको विद्यया देवलोक' इति श्रुतिभ्यः। अतएवाधानेनात्मा संस्क्रियते अग्निहोत्रदर्शपूर्णमासचातुर्मास्यादिभिः प्राक्सौमिकपदवाच्यैः यज्ञैस्तद्बलमुपचीयते। अनन्तरमाधिदैवेनाग्निना सम्बन्धं स्थाप्य तेन शरीरसम्बन्धान्निवृत्तावग्निना समाकृष्टोऽयं तत्रैव नियतं प्रकृतिनियमेन गच्छति इत्यपि यत्किञ्चित्। 'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुरि'ति रीत्या सर्वेषामेव यज्ञानामात्मसंस्कारकत्वाभ्युपगमात्। यज्ञतुष्टैर्देवैः सर्वदेवात्मकेनेश्वरेण च यज्ञफलोपभोगाय यजमानस्तत्र तत्र लोके नीयते इत्यस्यैव प्रमाणसिद्धत्वात्। गमि भुजि क्रियाणां फलापवर्गिणीनां प्रकृतिनियमेन फलप्रापकत्वेऽपि सेवादिक्रियाणामिव यागादिक्रियाणां स्वामिनामिवेश्वरप्रसादद्वारैव तत्फलसिद्धिः।

पूर्वमीमांसकरीत्या तु कर्मजन्यसूक्ष्मापूर्वादि द्वारा फलसिद्धिश्च यज्ञेन देवभावप्राप्तिरपि यज्ञाराध्यपरमेश्वरप्रसादद्वारैव युक्ता। यज्ञफलस्य विज्ञानसिद्धत्वे वेदैकसमधिगम्यत्वासिद्धेर्वेदस्य निष्प्रयोजनत्वापत्तेश्च। गीतायामपि भगवदधीनैव कर्मफलप्राप्तिरुक्ता।

लभते च ततः कामान् मयैव विहितान् हितान्।' (७।२२) इति भगवदुक्तेः।

"यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर॥"

इत्यत्र तु "यज्ञो वै विष्णुः" इति श्रुतेर्यज्ञ ईश्वरः तदर्थं यत्क्रियते तस्माद्यज्ञार्थात् कर्मबन्धनः कर्मबन्धनं यस्य स कर्मबन्धनः। किञ्च न यज्ञात् साक्षाद्भूतादिजगदुद्भवः गीतादिबचनविरोधात्। जगच्चक्रहेतुर्हि कर्म कथमुच्यते इत्याह भगवान्—

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः॥

अन्नाद्भुक्ताल्लोहितरेतः परिणतात्प्राणिनो भवन्ति। 'पर्जन्यादन्न संभवः, यज्ञाद्भवति पर्जन्यः'

'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायतेवृष्टिर्वृष्टेरन्नं ततः प्रजाः ।'

इति मनुवचनमप्यत्रानुकूलम् ।

अत्र यज्ञोऽपूर्वरूप उक्तः । स च यज्ञः कर्मसमुद्भवः ऋत्विग्यजमान-व्यापाररूपकर्मसाध्यः । यज्ञस्य साक्षात्तत्तद्धेतुत्वे पारम्पर्य्योक्तिः स्पष्टं विरुद्धयते । भगवद्दृष्टया नादानप्रदानलक्षणो न वा कथञ्चिदग्नौ सोमप्रक्षेपरूपो यज्ञः ।

एतेन योषासु रेतो निक्षेपरूपेण यज्ञेन प्राणिन उत्पद्यन्ते । भूमौ वृष्टिरूपसोमाहुतिरूपेण यज्ञेन तृणवृक्षाद्युत्पत्तिः । क्षेत्रेषु बीजाहुतिभियैव गोधूमादय उत्पद्यन्ते इत्याद्यप्यपास्तम् पारम्पर्य्योक्तिविरोधात् ।

गीतायां भगवता यज्ञस्य प्रभूतं माहात्म्यमुक्तम्—

"सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्ट कामधुक् ॥
देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥"

यज्ञः कथं कुतः संभवति किञ्च तस्य फलमित्याकाङ्क्षायामुक्तं भगवता—पर्जन्याद्युत्पादकोऽदृष्टरूपो यज्ञः कर्मसमुद्भवः । कर्माऽपि न सर्वं किन्तु ब्रह्मसमुद्भवम् । ब्रह्मपदेनानादिमन्त्रब्राह्मणात्मको वेदराशि-र्विवक्षितः । तथा च वेदबोधिताग्निहोत्रदर्शपूर्णमासचातुर्मास्य-ज्योतिष्टोमादिलक्षणं कर्मैव यज्ञस्य कारणम् । ब्रह्म चाक्षरसमुद्भवम् । अक्षरमत्र परमेश्वरस्तत एव वेदस्य प्रादुर्भावः । 'एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्य्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादावक्षरपदेन सर्वप्रशास-कस्य परमेश्वरस्यैव ग्रहणात् । वेदो महतो भूतस्य निःश्वसितरूप इत्यपि श्रुतिषु स्फुटम् । अनेन वैदिकविज्ञानवादिनां वेदबोधित कर्म तज्जन्यादृष्टभिन्नेषु प्राकृतादिघटनात्मकेषु यज्ञत्वव्यवहारः, वेदस्य मनुष्यनिर्मितत्वादिकं च खण्डितं भवति । वेदबोधितकर्तव्यताकस्यास्यैव मुख्ययज्ञस्यारोपाज्जपसंयमप्राणायामस्वाध्यायब्रह्मज्ञानादिष्वपि यज्ञत्व-व्यवहारः । तदुक्तम्—

"एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे।
कर्मजान् विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे। (शा. भा.)

यदपि—"अग्निर्वृषा आपो योषा गार्हपत्यं गृहं प्रतिष्ठा अपां प्रणेता वज्रप्रयोक्ता तेन लब्धप्रतिष्ठेन भाव्यमाहवनीयस्योत्तरेण प्रतिष्ठा। यद्यपि अत्र मिथुनेन यज्ञः प्रजायते, मध्ये गमने र मिथुनविच्छेदः, तस्मान्न गन्तव्यम्, तयोरवस्थितिर्नातिदूरे, नाति समीपे, सामीप्ये शत्रुत्वापत्तिस्तदुपस्पर्शनेन ऋत्विक्षु तद्भावावेशो दूरस्थापने मिथुनानुपपत्तिः प्राणोऽध्वर्य्युस्तेनैव तत्प्रेरणया मनो ब्रह्मकर्मसम्पत्तिः। 'ब्रह्मन्नपः प्रणेष्यामि' 'यजमानवाचं यच्छ' 'प्रणय यज्ञं' 'देवता वर्धयध्वं' नाकस्य पृष्ठे यजमानोऽस्तु ··· प्रणय, अध्वर्य्युराहवनीयस्योत्तरं गत्वा कस्त्वा युनक्ति स त्वा युनक्ति निदधाति पूर्वम्, अपां प्रणयनेन अतो अपां नियमनेन संवत्सररूपो यज्ञो भवति। अत एव प्राकृतयज्ञे पूर्वत्र परत्र च जलं भवति। 'यज्ञो वा आप' इति श्रुतिः। परा प्रकृतिरक्षरः, अपरा प्रकृतिः क्षरः, अव्ययश्चात्मा। सर्वेऽपि पञ्च पञ्च कलाः। तदेतत् त्रयं सदेकः। अयमात्मा। आत्मा एकः सन्नेतत् त्रयम्। 'तदेतदमृतं सत्येन छन्नम्' स षोडशी। तत्र क्षरभागस्योपादानत्वाद्विश्वमात्मोपादानमुच्यते। अक्षरात्मना निमित्तव्यपदेशरूपेणाधिष्ठानत्वम्। आत्मैवेदं सर्वं क्षराक्षरयोस्तात्स्थ्यात्ताच्छब्द्यम् न्यायेन पुरुषत्वमुभयत्र। क्षरस्य प्राण आप वाक् अन्नं अन्नादेति पञ्च कलाः। अन्नान्नादयोरेकत्वात्तस्य चतुर्मुखत्वम्। अक्षररूपो ब्रह्माक्षररूपैश्चतुर्मुखैः सृष्टिं करोति प्राणेन वेदम्, आपो मुखेन लोकम्, वाङ्मुखेन देवान्, अन्नान्नादमुखेन भूतसृष्टिः, अथवा वाङ्मुखेन प्रजासृष्टिः, तेन क्रमेण वेदलोकप्रजाधर्माणामुत्पत्तिः। प्राणश्च रूप-रस-गन्ध-स्पर्श-शब्द शून्यमधामच्छब्दम् नीरूपतत्त्वविशेषः। सचानन्तः ऋषिरसच्छब्दवाच्यम्। प्राणोऽसङ्गः सृष्टिश्च सङ्गमूलिका ग्रन्थिबन्धनयुक्तसंसर्गः सृष्टिः" तदपि न किञ्चित् सायणादिभिरप्युपपत्त्यंशस्य स्वभाष्ये वर्णनात्। परं प्राकृतो यज्ञः तस्यानुकृतिर्वैधो यज्ञ इत्यस्य निष्प्रमाणकत्वमुक्तमेव। अद्भ्यः पृथिवी इति श्रुत्या

पृथिव्या अप्कार्य्यत्वश्रवणेन पृथिव्या जलाश्रयत्वं जलमयत्वञ्च न विरुद्ध्यते। क्षराक्षराव्ययादिकल्पना तु गीतादिविरुद्धा। गीतायां तु

'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥'

अपरेयमित्यव्यक्तादिभूम्यन्ता अपरा प्रकृतिरुक्ता। इतस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूतां महाबाहो ययेदं धार्यते जगदिति जीवानां परप्रकृतित्वमुक्तम्। उपादानत्वनिमित्तत्वव्यवस्थाऽपि क्षराक्षरयोश्चिन्तनीया। 'क्षरस्य प्राणादयः कलाः, ता एव चतुर्मुखस्य चत्वारि मुखानि, तैरेव वेदलोकादीनां निर्माणम, वेदोऽपि लोकादिवद्-वाङ्मयभूतं तत्त्वान्तरमेव।' तदेतत्सर्वमप्रामाणिकमेव ब्रह्ममुखैर्लोक-वेदादिसृष्टेरश्रवणात्। एवं प्राणस्याधामच्छदनीरूपत वविशेषरूपत्व-मपि निष्प्रमाणकमेव। प्रश्नोपनिषदादिषु ब्रह्मसूत्रेषु च प्राणस्वरूपस्य वायुविशेषरूपत्ववर्णनादिहापि तत् स्पष्टं वर्णितमेव। तत्रापि ज्येष्ठ-श्रेष्ठभूतस्य प्राणस्यानन्तत्वेऽपि अधिदैवं तदेकत्वम्। प्राणापानादयश्च तद्वृत्तिविशेषा एव। वागादयस्तु तदनुग्राह्या इन्द्रियरूपा एव। एवं वाङ्मयेनार्थस्य सृष्टिरपि निष्प्रमाणिका। वाचः सृष्टेरुपादानत्वासम्भवेन निमित्तत्वस्यैव तत्र तत्रोक्तत्वात्। एवं 'ग्रन्थिबन्धनमेवसृष्टिः' इत्यपि निर्मूलम्। असङ्गाकाशादीनामपि सृष्टिश्रवणात्। 'स प्राणमसृजत्' इति प्राणसृष्टिश्रवणाच्च।

यदप्युक्तम् "सामान्ये सामान्याभावो यथा तथैव प्राणे प्राणाभावः प्राणेन सर्वः सत्तावान् प्राणाः स्वयमसन्। ग्रन्थिबन्धनप्रयुक्तः संसर्गः सृष्टिः। प्राणेषु सहचरसम्बन्ध एव भवति न ग्रन्थिबन्धनम तेनैव तस्य निःश्वसितरूपत्वम्। वेदः प्राणसृष्टिरेव। तेनैवापौरुषेयत्वं विश्वातीतत्वञ्च स्वयंभूमण्डलस्थस्यास्य प्राणस्य यत् इति नाम स्वयम्भूमण्डले ऋक्सामयजुषां सत्ता। तत्रत्य-वेदत्र्यां यद्यजुस्तत्रत्यस्य 'यत्' इति शब्दस्य प्राण एवार्थः, जूभागस्य वाक्। प्राण एवाकाशवायू। प्रतिसञ्चरक्रमे ब्रह्मरूपे वेदे आकाशवायू शिष्येते। तयोर्नाशो न भवति। तेनैव 'शेषे यजुः शब्द' इति। मनोऽन्तरा

तत्सर्वं नोपपद्यते। मनसा इच्छया आकाशरूप आधारे ब्रह्माग्निरूपे वायौ क्षोभो जायते। तेन वायौ संघर्षो भवति। ततः प्राणाग्निजलं भवति तेनैव दुःखाग्निनाश्रुपातः। तेनैव प्रेमाश्रूण्यपि त्राटकेन जलपातः। ग्रोष्मानन्तरं वर्षणम्। पूर्वमसङ्गस्य सतः पश्चात् विजातीयप्राणसंसर्गेणापामुत्पत्तिः। तन्मध्ये सूर्य्यः।" तदपि न, प्राणस्य सत्त्वाप्रयोजकत्वेन सामान्ये सामान्याभावस्येव प्राणे प्राणाभावात् प्राणस्यासत्त्वानुपपत्तेः। अप्राणस्य ब्रह्मणः सद्रूपत्ववर्णनाच्च। 'अप्राणो ह्यमनाः शुभ्र' इति श्रुतेः।

वस्तुतस्तु सद्रूपस्य ब्रह्मणः सर्वोपादानत्वात्तत्सत्तयैव प्राणादीनामपि सत्त्वव्यवहारः। सामान्ये सामान्याभावस्तु तदेकत्वनिबन्धन एव सामान्यस्यानेकवृत्तित्वनियमात्। प्राणेऽसत्त्वव्यवहारस्तु सूक्ष्मत्वेन व्यवहारानर्हत्वादेव। 'असद्वा इदमग्र आसीत्' इति कारणरूपेऽव्याकृते ब्रह्मण्यपि तदभिप्रायेणैवासत्पदव्यपदेशः। ग्रन्थिबन्धनस्य सृष्टित्वासिद्ध्या स प्राणमसृजदिति प्राणसृष्टिश्रवणाच्च। न प्राणस्य सृष्ट्यभावो वक्तुं शक्यः। तेनैव वेदस्य प्राणरूपत्वं तेनैव च वेदस्य निःश्वसितरूपत्वविश्वातीतत्वोक्तिरप्यपार्थैव।

एवं प्राणस्य स्वयंभूमण्डलत्वम्, तद्रूपायां त्रय्यां वाय्वाकाशयोर्यजुः संज्ञा। प्रतिसञ्चरक्रमे तयोः शिष्यमाणत्वात्तेनैव च शेषे यजुः शब्द इत्युक्तिस्तु शब्दसाम्यमूलिका भ्रान्तिरेव। तत्रोपासनार्थं वाय्वाकाशयोः केनचित्साम्येन यजुर्दृष्टिविधानात्। 'शेषे यजुःशब्द' इति जैमिनिसूत्रस्य तु शाबरोक्त एवार्थो युक्तः। तत्र 'नियताक्षरपादावसाना ऋक्। सा ऋक् यथार्थवशेन पादव्यवस्था, गीतिषु सामाख्या शेषे वेदे यजुः शब्दः' तथैव व्यवहारदर्शनात्। न च वाय्वाकाशयोरपि शिष्यमाणत्वम्, तयोरपि अहं महदव्यक्तक्रमेण सत्येव विलयवर्णनात्। आकाशवाय्वोः संघर्षेणाग्निस्तेन जलमित्यादिकन्तु सिद्धान्तेऽपीष्यत एव। एवं जलेऽण्डोत्पत्तिस्ततो मार्तण्डोत्पत्यादिकमपीष्टमेव।

यदपि चोक्तम् "स समुद्रः सरस्वानपि भृग्वङ्गिरोमयोऽपि स एव ससमुद्रो यज्ञमयः यज्ञप्रवर्तकश्च, अम्भः आक्सीजनवायुरूपः, पवमानसोमः हाइड्रोजनरूपः, तयोः संसर्गेण स्थूलजलोत्पत्ति"रिति

तदपि भौतिकविज्ञानानुकरणमेव । अपश्चीकृतं सूक्ष्मजलन्तु स्थूल-जलापेक्षयाऽत्यन्तं विलक्षणमित्यत्र तु न विप्रतिपत्तिः । यज्ञमयत्वयज्ञ-प्रवर्तकत्वादिकन्तु काल्पनिकमेव । भृग्वङ्गिरोमयत्वमपि भाक्तमेव ।

यदपि च "अनिरुक्तः कः सः कस्मै तस्मै इत्यादि शब्दैः प्रजापति-रीश्वरो बोध्यते । राजतन्त्रे यद्वस्तु न कस्यचित्तद्राजकीयं भवति तद्वत् । कः प्रजापतेर्व्याहृतिः । अव्ययादि नामानि निरुक्तानि, क इत्यादीनि अनिरुक्तानि, कस्त्वा युनक्ति इति प्रजापतिव्याहृतिः, प्रजापतेरनन्तानि रूपाणि, अनिरुक्त उद्गीथः । 'सर्व' इति रूपत्रये तान्यन्तर्भवन्ति तत्राप्यनिरुक्तप्रजापतिरेव मुख्यं वस्तु, स एवोद्गीथप्रजापतिः, स एव च सर्वप्रजापतिः, प्रत्येकं वस्तुनः केन्द्रेऽक्षरं ब्रह्म भवति, तदेव अनिरुक्तप्रजापतिहृदयमेव तद्रूपम् । विन्दुरपि न हृदयस्य निर्वचनं, यतो विन्दोरपि केन्द्रो भवति । केन्द्रस्थप्रजापतेरेवाग्नीषोमाभ्यां वस्तु-पिण्डनिर्मितिः । तत एव महिममण्डलनिर्मिति"रित्यादिकमपि न, सर्वकारणपरमेश्वरस्यैवानिरुक्तप्रजापतिरूपत्वे बाधकाभावात् । महिम-मण्डलनिर्माणन्तु निष्प्रमाणमेव ।

यदप्युक्तम्—"मण्डलस्यैव प्रत्यक्षता, पिण्डस्य तु दर्शनं न भवति, स्पर्शनमेव भवति । सर्वोऽपि पिण्डः सोमगर्भिताग्निमयः । अग्निश्च मर्त्त्यामृतचित्यचितेनिधेयभेदेन द्विविधः । चित्येन वस्तुपिण्डः, चितेनि-धेयेन महिमनिर्मितिः । यतो विन्दुमात्रं वस्तु दृश्यते, केन्द्रमारभ्य तावद्दूरं परितो मण्डलं महिममण्डलं । तावत्पर्य्यन्तमहिम्ना वस्तु व्याप्नोति । तदेव बहिर्मण्डलमपि" तदपि निर्मूलम्, यदेव दृश्यते तदेव स्पृश्यत इति प्रत्यभिज्ञया दृष्टस्पृष्टयोरेकत्वात्सर्वस्यैव जगतोऽग्नीषोमात्मकत्वेन सर्वपिण्डानां तदात्मकत्वं तु न विरुद्ध्यते । चित्यचितेनिधेयशब्दाभ्यां चयनक्षेत्राहवनीययोरेव ग्रहणम् । सर्वपिण्डोपादानस्य चित्यरूपत्वे महिमोपादानस्य चितेनिधेयत्वे प्रमाणाभावात् ।

यदपि 'यज्ञ एव संसारः अग्नीसोमात्मकः । तत्समन्वय एव यागः । अनिरुक्तप्रजापतिरेवाग्नीषोमद्वारा विश्वं भूत्वा निरुच्यते । क स इत्यादिना । तदपि निर्विचाररमणीयम् । सर्वेषामप्यन्तर्य्यामिसूत्रवैश्वा-

नरेष्वन्तर्भावात्। पिण्डाद्युपाधिभेदेन तेषामप्यौपाधिकभेदसंभवात्। यागत्वमपि काल्पनिकमेव । द्रव्यदेवतालक्षणस्य यागरूपस्यैव विधि-वाक्यैर्बोधनात् । अन्यत्त्विष्टमेव ।

यदपि च "अपां प्रणयनात्पूर्वं वेदेर्दक्षिणभागे ब्रह्मा प्रतिष्ठतो भवति । मूलेऽनिरुक्तस्तूले सर्वप्रजापतिः । यज्ञप्रारंभे मूलप्रजापतेरनि-रुक्तप्रजापतेरनिरुक्तव्याहृतिभिरापः प्रणीयन्ते । प्रजापतिर्यज्ञोपादानम्। तेनाभेदाभिप्रायेण यज्ञः प्रजापतिः । ब्रह्म वै सर्वस्य प्रतिष्ठेति प्रजापनि-मंत्रोच्चारणाभावेऽप्रतिष्ठित एव यज्ञो भविष्यति । प्रजापतिमेवैतद्यज्ञं युनक्ति' इति तद्भवतु, अविरुद्धाया उपपत्तेर्ग्रहणे बाधाभावात् ।

यदपि "विश्वमद्भिर्व्याप्तम्, सर्वमापोमयम्, अत्र ऋतमेवापः तदेवापोमयस्य परमेष्ठिनो मनोता। तदेव भृग्वङ्गिरोमयम्। भृगोर्घन-तरलविरलावस्था अब्वायुसोमाः। आपोऽपि वायुरेव। स्थूलजलारम्भ-कत्वादप्पदव्यपदेश्यता, सूर्य्यस्योपरिष्टाद्भावित्वात्तदम्भःपदव्यपदेश्यता च। पुराणेषु सूर्य्याण्ड एव ब्रह्माण्ड उच्यते। तदम्भो ब्रह्माण्डं भित्त्वा पृथिवीलोकमागच्छद् गङ्गाजलमुच्यते। तत्र बाहुल्यमंस्ये"ति तदपि न भृग्वङ्गिरसोरब्वाय्वादिहेतुत्वे वायोः पूर्वमाकाशादिवत्तयोः सृष्टेर्वक्तव्य-त्वापातात्। तेनावान्तरवाय्वादिसम्बन्ध एव तयोर्हेतुत्वम्।

यच्च आपोमयपरमेष्ठिविष्णुस्थानम्; तत एवागतत्वाद्विष्णुपाद-प्रभवत्वम् गङ्गाजलस्य, तत्रत्येनाम्भसा पवमानवायुना च संयुक्तेन जल-मुत्पद्यते। तदेतद्द्वयं हाइड्रोजन-आक्सीजन इत्युच्यते। अम्भः समुद्र एव परमेष्ठिरसमयत्वात् परमेष्ठीसरस्वान्। तत्सम्बन्धिनी वाक् सरस्वती" इत्यादि, तदपि न, तादृक्परमेष्ठिनो गङ्गैव निःसृतेति कल्पनामात्रमेव। यदि पुराणवचनानुसारेण सा कल्पना। तदा तु पुराणानुसारी विष्णुरपि परमेश्वर एव ग्राह्यः । एकस्मादेवस्थानाद् गङ्गावदन्या अपि नद्यः प्रभवन्ति, तत्र तासु गङ्गाया एव वैशेष्यस्य युक्त्यानया साधयितुम-शक्यत्वात् एकस्यामेव नद्यामृतस्य बाहुल्यं नान्यत्रेति विनिगमनाभावात्।

किञ्च अन्यत्र भृगोः प्राणरूपत्वमुक्तम्, प्राणस्य चानवरोधकत्वरूपत्व-

मुक्तम्, तच्च सावयवत्वे नोपपद्यते निरवयवत्वे च घन-तरल-विरला-दस्था नोपद्यन्ते तासाम् सावयवधर्मत्वात्।

यदपि च "ऋतवत्सत्यमपि तत्रैव तिष्ठति, सकेन्द्रः सशरीरपदार्थ एव सत्यपदार्थः, परमेष्ठिनैव तदपि निर्मीयते, सत्यमृतेनावृतं भवति, स्वयम्भू सत्यमपि तदृतावृतं भवति, ऋतं मूलकारणम्,

'ऋतमेव परमेष्ठी ऋतं नात्येति किञ्चन।
ऋते समुद्र आहिते ऋते भूमिरियं श्रिता॥'
'ऋतञ्च सत्यञ्चभीद्धात्तपसोऽध्यजायत।'

पिण्डाद् वहिर्यद्रिक्तं स्थानं तत्र प्राणरूपो भृगुर्भवति। वायुरापः सोमश्च भृगुरूपा एव। वायुः सर्वत्र वियत एव, अतः सर्वमृतपरिवृतमिति प्रत्यक्षमेव। सर्वमपि वस्तुरिक्तस्थानेनैव निर्मीयते। प्रतिपिण्डं तत्सम्बन्धी वायवीयस्तरो भवति। पृथिवीपिण्डपारिपार्श्विको वायुर्भूवायुराख्यायते। स एव भूवराहपृथ्वीपिण्डोऽग्निगोलोऽग्निश्च विशकलनधर्मा भूवायुना विशरणाद्रक्ष्यते। तेनैवाग्निवलं शिथिलं भवति। तस्मादेव वराहेण पृथिव्या उद्धारः।

एवमेव प्रतिपिण्डं प्रातिस्विको वायुस्तरः। स च भार्गवो वायुः शिव उच्यते। रुद्रवायुना शिववायुर्नश्यति। तस्मादृत नाशस्ततः सत्ययाशः" इत्यादिकमपि निर्मूलमभ्यूहमात्रम्। सायणादिभिर्ऋतसत्ययोरन्यार्थवर्णनात्!

ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत।
ततो रात्र्यजायत ततः समुद्रोऽर्णवः। (१० म० अ० १२)

ऋतं मानसं यथार्थसंकल्पनम्। सत्यं वाचिकं यथार्थभाषणम्। चकाराभ्यामन्यच्छास्त्रीयधर्मजातं समुच्चीयते। तत्सर्वमभीद्धात् अभि-वृद्धाद् ब्रह्मणा पुरा सृष्ट्यर्थं कृतात्तपसोऽधि उपर्य्यजायत उदपद्यत तपस्तप्त्वेदमसृजत् (तै० आ० २।६) स्रष्टव्यपर्य्यालोचनं तपः। 'यस्य ज्ञानमयं तपः' (मु० उ०) तस्मिन्नेव ऋते पृथ्वीश्रिता। तद् ऋतं कश्च-नापि नात्येति।

ऋत-सत्य-शब्दाभ्यां मूलकारणतूलभूतसकेन्द्रसशरीरवस्तुग्रहणे

प्रमाणाभावात् । अक्षरब्रह्मणोऽव्याकृतात् महदादिक्रमेण भूरादिसप्त-लोकसृष्टिः, लोकान्तर्गतप्राणिसृष्टेरपि कारणमाप एव । अत एव 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति श्रद्धा - सोम - वर्षा - अन्न - रेत आदीनां द्यु-पर्जन्य - पृथ्वी - पुरुष - योषासु होमो भवति । श्रद्धापि आप एव ( तै० सं० १।६।८ )

यत्तु "अत्र पुरुषपदं प्राणिमात्रोपलक्षकम् । शरीरे पृथिव्याश्च जलबाहुल्यम् । तेनैव पृथ्वी पुष्करपर्णमुच्यते ( श० ७ का ४।१।८ ) आप्नोतेरप् शब्दः । तेनैव यज्ञे अपां प्रणयनम् । अद्भिर्वा इदं व्याप्तम् । तत्प्रथमेनैवैतत्कर्मणा सर्वमाप्नोति ।" तदपि न, अपां लोककारणत्वेऽपि तासां चतुर्मुखस्य मुखरूपत्वासिद्धेः । कर्म-समवायिन्यो दुग्धदधिघृतसोमादिरूपाः कर्मादृष्टरूपेण परिणता एवापः पुरुषवचसो भवन्ति, न केवला आपः, न वा सर्वे प्राणिनः पञ्चाहुतिसापेक्षाः । द्रौपदीधृष्टद्युम्नादीनां त्रिभिरेवाग्निभिरुत्पत्तिश्रवणात् । 'जायस्व म्रियस्वे' ति ( छा० ) वर्णितकीटमत्कुणादीनां पञ्चाग्नि-सम्बन्धनैरपेक्ष्येणैव जन्मश्रवणात् । ये प्रवृत्तिमार्गानुसारेणाग्नि-होत्रादिनिष्ठाः स्वर्गं गच्छन्ति तेषामेव पञ्चाग्निक्रमेणावरोहः । 'यानीमानि क्षुद्राणि असकृदावर्तीनि तानि न कतरेण च ने' ति श्रुतेः ।

यदपि चोक्तम् "मनः प्राणवाङ्मयोऽव्ययः सर्वसृष्टेर्बीजम् । अव्ययस्य मनसा सृष्टिचिकीर्षा । प्राणेन तपः । वाग्भागेन तपोऽनुकूलः श्रमः । एवं कामतपःश्रमाणां योगेन सृष्टिर्भवति । 'स ऐक्षत स तपोऽतप्यत, सोऽश्राम्यत, मनः ज्ञानशक्तिरूपम , प्राणः क्रियाशक्तिरूपः, वागर्थशक्ति-रूपा, एवं सर्वज्ञः सर्वशक्तिः अक्षरैः क्षरैश्च ब्रह्मशुक्रावुत्पाद्य ब्रह्मद्वारा शुक्रेण विश्वं निर्माति । ज्ञानमयं मनो निष्क्रियमर्थरूपा वागपि निष्क्रिया प्राण एव सक्रियः । सृष्टिप्रवर्तकस्तपोमयः प्राण एव । तपसा प्रजापति-र्विसस्तो भवति । स एव सूक्ष्मावस्थापन्नो मनो भवति, स्थूलावस्थायां वाग्भवति; सर्वः तपस्तपति, स प्राणं परस्मै प्रयच्छति । एतद्वैतप इत्याहुर्यत् स्वयं ददाति । भृगूणामङ्गिरसां तपसा तप्यध्वम् ।" इति तदपि न, स्रष्टुः परमेश्वरस्याप्राणत्वादमनस्त्वाच्च । 'अप्राणो ह्यमनाः

शुभ्रः अक्षरात्परतः परः' इति श्रुतेः । ज्ञानशक्तिमयस्य मनस्त्वेत्वस्य सत्त्वेऽन्तर्भावः । क्रियाशक्तिमयस्य प्राणत्वे तस्य रजस्यन्तर्भावः । प्राणस्याम्मयत्वं मनसोऽन्नमयत्वञ्च श्रुतिषु श्रुतम् । ज्ञानादिशक्तीन-मनस्त्वादौ प्रमाणाभावात्तद्विरुद्धश्रवणाच्च ब्रह्मशुक्रादिभेदकल्पनमपि निर्मूलम् । अकायमव्रणमस्थविरं शुक्रमपापविद्धमिति ब्रह्मण एव शुक्र-पदव्यपदिष्टत्वात् ब्रह्मणश्च नित्यत्वेनानुत्पाद्यत्वात् ।

यदपि च "प्रजापतिस्तपसा ब्रह्मत्रयीं निर्मितवान्, पश्चादथर्व-वेदरूपं सुब्रह्म निर्मितवान् । त्रयीब्रह्म वाङ्मयम्, अथर्ववेद आपोमयः, त्रयीरूपे ब्रह्मणि ऋक्सामे छन्दसी वयोनाधरूपे आयतनमात्रे सृष्टौ सहचारिणी । तृतीयं यजुरेव सृष्टिकारणम् । 'ऋक्सामे यजुरपीतः' स्थितिगती यजुः । यत् जू प्रत्येकं वस्तु चलमचलञ्च निर्माणनिर्वाणरूपञ्च परस्परविरुद्धस्वभावम् । तदेव संभूतिञ्च विनाशञ्च यस्तद्वेद । यजुरग्नि-रूपं तस्यैतस्याग्नेर्वागेवोपनिषत् । तदेव प्रथमशुक्रम् । 'वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ।' इदमेव ब्रह्मनिःश्वसितम् ।" इति तदपि निःसारम्, त्रय्या अथर्वणश्च वाङ्मयत्वाविशेषेणाथर्वण आपोम-यत्वासिद्धेः । वागपि शब्दमय्येव । तस्या अर्थमयत्वे प्रमाणाभावात् । 'वाचारम्भणं विकारो नामधेयमित्यस्य तु न विकारस्य वाग्रूपत्व-बोधने तात्पर्य्यम्, वाग्व्यतिरिक्तार्थाभावरूपमिथ्यात्वप्रतिपादने एव तात्पर्य्यनिर्णयात् । कारणस्यैव सत्यत्वनिर्धारणात् । 'सदेव' सत्यमिति श्रुतेः । ऋक्सामे यजूरपीत इति श्रुतेरर्थान्तरन्तूक्तमेव । यजुरित्यत्र तु यत्जूशब्दाभ्यां वाय्वाकाशयोर्ग्रहणम् उपासनार्थमन्यत्र स्पष्टम् । सम्भूतिञ्च विनाशञ्चेत्यत्र तु असम्भूतिशब्देन प्रकृतिरुपास्यत्वेनोक्ता । विनाशशब्देन च धर्मत्वेन विनाशधर्मको हिरण्यगर्भ उक्तः । तदनु-गुणमेव विनाशेन मृत्युं तीर्त्वा सम्भूत्यामृतमश्नुत इति फलश्रवणम् । अत एव वेदशब्देभ्यः प्रपञ्चनिर्माणमित्यत्र शब्दस्य निमित्तत्व-मेवोक्तं नोपादानत्वम्, ब्रह्मण एव सर्वोपादानत्वश्रवणात् ।

यच्चोक्तम् 'स्नेहतत्त्वं भृगुः, तेजस्तत्त्वमङ्गिराः, आपो भृग्वङ्गिरो-रूपम् तदेवाथर्ववेदः सत्यमृतमग्निःसोमः वाक् आपः प्राणो रयिः

वृषा योषा आदिद्वन्द्वरूपेण तस्यैव प्रादुर्भावः" इति तदपि न अपां तपस उत्पन्नत्वेन तपोमयत्वं भृग्वङ्गिरसोस्तु तपस्वित्वात्तपोमयत्वमिति साम्येनोपासनार्थं तथोपदेशात् ।

यच्च "तपोमूर्त्तेः प्रजापतेस्तपसा सत्येन रूपेण सुब्रह्म जन्म। अनन्तरं ब्रह्मणा मातरिश्वना द्वारेण सुब्रह्माहुतिः। तेन विश्वोत्पत्तिः। तृतीयः शुक्रोऽग्निः स एवापोमये मण्डलेऽवतीर्णो रूपान्तरं धारयति। अन्तरे ते त्रयो वेदाः भृगूनङ्गिरसः। अयं वेदाग्निरेव ब्रह्म निःश्वसितम्। वेदाग्निरेव गायत्रीमातृको वेद।" तदपि निर्मूलम्, सर्वस्य कल्पनामूलत्वात् ।

यदुक्तम् "सूर्य आगत्य चिदात्मा विद्याविद्याभ्यां युज्यते," तदपि न, यतो जीवानामनाद्यविद्यावशादेव सूक्ष्मशरीरयोगात् ज्ञानकर्ममयत्वमुपपद्यते। "सौरभागेन बुद्धिर्निर्मीयते" इत्यपि चिन्त्यम्, बुद्धेरपञ्चीकृतसात्त्विकसमष्टिपञ्चभूतकार्य्यत्वात्। सूर्य्योपासनाबलात् सत्त्वोद्रेकाद् बुद्धिवैशद्यन्तु सूर्य्यात् संभवति। तावतैव सूर्य्यात्मनो धियः प्रचोदकत्वोपपत्तिः। 'धर्मज्ञानादिभिरव्ययविद्या भागोपकारः' इत्यपि न सङ्गतम्, नित्यसिद्धायामव्ययीयविद्यायामुपकारासिद्धेः। एतेनाविद्याभागे कर्मभागोपकारोऽपि प्रत्याख्यातः

यदपि—प्रकृतियज्ञे अग्निवाय्वादित्या अधिष्ठातारः। देवाश्च प्राणरूपा एव सूक्ष्मतमाश्च। तत्सम्पन्नो यज्ञोऽपि सूक्ष्मतम एव। भौमस्वर्गवासिभिरियं यज्ञविद्या-प्रवर्तिता भारतीयैस्तेभ्यः इयं प्राप्ता। वैधयज्ञः प्राकृतयज्ञप्रतिकृतिः। 'यद्वै देवा अकुर्वंस्तत्करवाणि' तेन तत्पद्धत्यनुसरणमावश्यकम्। तेन यज्ञविधि-विच्छेदेन तन्निर्मितदिव्यपुरुषस्वरूपविच्छेदो भवति। तेनैवापां प्रणयनम्। तेनास्मययज्ञधरातले कृते यज्ञे त्रुटयः समाहिताः भवन्ति। यदेवास्यात्र होता वा अध्वर्युर्वा तदेवास्यैतेनाप्तं भवति" तदपि न, प्राकृतेषु पदार्थेषु केनचित्साम्येन यज्ञारोपसंभवेऽपि वस्तुभूतयज्ञत्वाभावात्। विहितस्यैव यज्ञस्य पुरुषार्थत्वेन तस्यान्यथासिद्धत्वात्।

यच्च "अग्नौ सोमाहुतिर्यज्ञः। सूर्य्योऽग्नीन्द्रमयः। तेनैवोष्णप्रकाशस्वभावः। इन्द्रस्य प्रकाशो धर्मः।

वस्तुतस्तु सोमः प्रकाशाधिष्ठाता, परमग्निगर्भितेन्द्रस्यान्नं भूत्वा अतएव रूपं रूपं मघवा बोभवीति। इन्द्रो रूपाणि कनिक्रदत्! तथैव तापोऽग्नेधर्मः। अत एव चन्द्रमसि प्रकाश एव न तापः। उष्णे जले ताप एव न प्रकाशः। चन्द्रमसि प्रकाशाधिष्ठाता इन्द्र एव विद्यते, नाग्निः। उष्णे जले प्रकाशो नास्त्येव। इन्द्रवरुणयोर्विरोधात् तदुपपद्यते। प्राची, प्रतीची, विरुद्धदिगधिष्ठातृत्वञ्च। आद्यः प्राणो वरुणः। स च नवनवति (९९) विधः। वरुणोऽसुरराडपि। प्रकाशितः प्राणस्येन्द्र इति नाम। तस्य त्रयस्त्रिंशद् ३३ भेदाः" इति, तदपि कल्पनामात्रम्, यथाकथञ्चिदग्नौ सोमप्रक्षेपस्य यज्ञत्वेऽतिप्रसङ्गात्। औष्ण्यप्रकाशयोश्चाग्निधर्मत्वोपपत्तौ प्रकाशस्येन्द्रधर्मत्वकल्पनायां मानाभावात्। अग्निवदिन्द्रपदार्थस्याप्रसिद्धत्वात्। अविन्धनविद्युदादेरप्यग्नित्वाविशेषात्। न च चन्द्रमसि प्रकाशस्य सत्त्वेऽप्यौष्णाभावात्तस्य सोमधर्मत्वमिति वाच्यम्। सूर्य्यप्रकाशप्रतिविम्वेनैव चन्द्रप्रकाशोपपत्तौ तत्रातिरिक्तप्रकाशाभावात्। चन्द्रस्य शैत्येन तच्छीतत्वोपपत्तेः। उष्णे जले तु प्रकाशव्यञ्जकत्वाभावान्न प्रकाशः। विद्युद्रूपेण तु जलादपि प्रकाशाभिव्यक्तिर्भवत्येव।

यदपि "ऋषितत्त्वं येषां हृदये परमेश्वरकृपया प्रादुर्भूतं ते मनुष्या अपि ऋषय उच्यन्ते। अजान् ह वै पृश्नीन् तप्यमानान् ब्रह्मस्वयम्भु अभ्यनार्षत त ऋषयोऽभवन् तद् ऋषीणामृषित्वमित्यादिश्रुतिषु तेऽपि ऋषिपदेन निरुक्ताः।

एते बृहद्देवतायां सर्वानुक्रमणीसूत्रादिषु च विस्तरेण विवृताः। एत एव मंत्राणामर्थनिर्वचनवक्तृत्वेनानुसंधेया भवन्तीति निरुक्तादिषु स्पष्ट"मित्यादि तन्न, ऋषिदर्शनादिति मंत्रदर्शनादेवर्षित्वोक्त्या ऋषिप्रादुर्भावनिमित्तत्वानुपपत्तेः। प्राणादय ऋषयस्तु भवदुक्तरीत्या कारणानाः। तेषां सर्वकार्य्येषु सत्त्वमेवेति कुतस्तदभिव्यक्तेरपेक्षा? तदभिव्यक्तावपि मंत्रसाक्षात्कारेण कः तैः सम्बन्धः? वेदस्यापौरुषेयत्व-

नित्यत्वाभ्यां मन्त्राणां मुख्यो वक्ता कोऽपि नास्ति। तत्तद्रूपधारिणी श्रुतिरेव तु वक्त्री। काल्पनिकन्तु वक्तृत्वं तेषां तेषां वक्तृविशेषाणामिव ऋषीणामपि संभवत्येव। 'अग्निर्वाग्भूत्वा मुखं प्राविशत् वायुः प्राणो-भूत्वा नासिके प्राविशत्। आदित्यश्चक्षुर्भूत्वा चक्षुषी प्राविशत्' (ऐ० ब्रा० २।४) इत्याद्या श्रुतिस्तु नेन्द्रियाणां देवत्वं वक्ति किन्त्वग्न्यादयो देवा वागाद्यनुग्राहकत्वेन मुखादीन् प्रविष्टाः। 'नैनद्देवा आप्नुवन् पूर्वमर्शत्' इत्यादिषु तु द्योतनस्वभावत्वादिन्द्रियाण्येव देवपदव्यपदेश्यानि भवन्ति। सात्त्विकवृत्तयोऽपि द्योतनादेव देवा उच्यन्ते। सूर्य्यस्य तु देव-मधुत्वात्तदुपभोक्तृत्वेन देवास्तत्र संनिधीयन्ते। एवं चन्द्रतारादयोऽपि तत्तत्कार्य्यानुकूलदेवशक्तित्वाद्देवा भवन्ति। वस्तुतस्तु हिरण्यगर्भप्राणा-नामेव पूर्वोक्तरीत्या कयाचिद्व्यपेक्षया ऋषित्वं कयाचिद्व्यपेक्षया च देव-त्वम्। तत्रापि वागादीनामृषित्वं मध्यप्राणस्येन्द्रत्वमुक्तमेव।

यदुक्तम् "अन्वाख्याने त्वदुत्पद्यते इतिहासे त्वत् (श० ११।१।६।९) श्रुतौ उत्पत्त्याख्याने सृष्टिप्रक्रियायां देवा अन्ये भवन्ति इतिहासे त्वन्य इति स्फुटमुक्तम्। इतिहासस्य सम्बन्धः प्राणिरूपैर्देवैरिति 'सत्रस्य ऋद्धिः' 'अगन्म ज्योतिरमृता अभूम'दिवं पृथिव्या अध्यास्हामा विदाम देवान् स्वर्ज्योतिरिति मंत्रेऽपि संकेतितम्। एतेन द्युलोके प्राणिभूता देवा निव-सन्तीति संकेत्यते। देवानामनेकभेदाभ्युपगमे दोषाभावेऽपि शतपथे अन्वाख्याने इतिहासे च देवभेदस्याप्रतिपिपादयिषितत्वात्। तथाहि— ससहस्रायुर्यज्ञे (११।१।६।१६) इत्यादिना सहस्रायुः प्रजापतिर्ध्यान-लक्षणेन तपसा आस्येन देवानसृजत्। दिवमवष्टभ्य देवा असृज्यन्त। तद्द्युसम्बन्धादेव देवानां देवत्वम्। प्रजापतये सहसृष्टिर्दिवेव प्रकाश इव बभूव। अथ योऽयमवाङ्प्राणस्तेनासुरानसृजत्। ते पृथिवीमभि-पद्यसृष्टास्तेन सा सृष्टिः तम इवाबभूव सोऽवेत् पाप्मानं सृष्टवानस्मि। स तान् तमोरूपेण पाप्मनाऽविद्ध्यत्। ततस्ते पराभवं प्राप्ताः प्रजापति-निराकृतत्वादभिज्ञा आहुः। नैतदस्ति दैवासुरं यदिदमन्वाख्याने, त्वद्युत इतिहासे त्वत्ततोह्येव प्रजापतिः पाप्मना विद्ध्यत्ते तत एव पराभवन्निति। अर्थात् देवांश्चासुरांश्चाधिकृत्य प्रवृत्तं युद्धादिकं यदस्ति तन्नैवास्ति।

कुत्र तर्हि दैवासुरव्यापारस्य प्रतिपादनमिति अन्वाख्याने सृष्ट्यनुक्रम-कथनरूपे ब्राह्मणे यदि देवैः सार्धमसुरसृष्टिप्रतिपादनं त्वत् एकमत्र प्रवृत्ते इतिहासे यत्प्रतिपादनं त्वदेकम् तदुभयं नास्ति, सृष्टिसमय एव पाप्मवेधेन तेषां पराभूतत्वात्। यदि सृष्ट्यन्वाख्यानगता देवा अन्ये ऐतिहासिका-श्चान्ये तदा सृष्टिसमयपराभूतत्वात् सृष्ट्यन्वाख्यानगतानामेव पराभूत-त्वात्तेषामेवासत्त्वकथनं युक्तं स्यान्नैतिहासिकानाम्। इह पराभवमात्रे-णैवात्रासत्त्वोक्तिः। एतदभिप्रायेणैव मंत्रेऽप्युक्तम् 'न त्वं युयुत्से कतमच्च नाहर्न्नतेऽमत्रो मघवन् कश्चनास्ति। मायेत्सा यानि युद्धान्याहुः, नाद्य शत्रुहन्नु पुरा युयुत्स इति त्वत्प्रतिभटानामसुराणामभावात् न त्वं युद्धं कृतवान् मायामात्रमेव सर्वं न पारमार्थिकमित्यर्थः।

किञ्च येषां सृष्टिर्जाता तेषां कुतो नैतिहासिकत्वमिति नोक्तवचनेन भेदसिद्धिः। कर्मस्वरूपनिर्वाहकाः कर्माङ्गदेवा अन्ये, तानिष्ट्वा देवलोक-गन्तारश्चान्ये देवा इति मंत्रे सूचितमेव। सर्वे दीक्षिताः सत्रर्द्धिसंज्ञकं साम गायन्ति। हे साम सत्रस्य ऋद्धिः समृद्धिरसि। अतो वयं यजमाना ज्योतिरादित्यलक्षणमगन्म प्राप्ताः। अतो अमृता अभूम। पृथिव्याः सकाशाद्दि वमध्यारुहाम्। द्युलोकमारूढाः। तत इन्द्रादीन् देवान् पश्यामः। ज्योतीरूपं स्वर्गं वा विदामेति मंत्रार्थः। अत एव निरुक्ते 'पुरुषविधा अपुरुषविधा इति-विचार्य्य अपि च उभयविधे'ति सम्यगेवोक्तम्। 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्या'मिति सूत्रानुसारेण मृदब्रवीत् आपोऽब्रुवन्, इत्यादिश्रु-तयः संगच्छन्ते। प्राणानां स्वश्रेष्ठत्वख्यापनाय विवादस्तु गुणवाद्याख्यान-रूपोऽर्थवाद एव एकैकस्यैकैकवर्षप्रवासः पुनश्च प्रत्यागमनमित्यादिकं तु प्राणश्रेष्ठत्व एव पर्य्यवस्यति। यथा श्रुतस्यार्थस्य प्रमाणान्तरविरुद्धत्वात्। इन्द्रः विरोचनादीनां प्रजापतिसविधे ब्रह्मविद्याग्रहणाय समुपस्थानन्तु दैवानां विग्रहवत्त्वसाधनेन ब्रह्मविद्याधिकाराभ्युपगमात्। ब्रह्मविद्यास्तुति-पर्य्यवसायित्वेऽपि प्रमाणान्तरविरोधात् भूतार्थवाद रूपमेव।

यदपि वेदे विकासससिद्धान्तप्रदर्शनायोक्तम् "वैदिकदृष्ट्या पार्थिवेषु प्राणिषु सूर्य्याकर्षणं यावद्वर्धते तदेव प्राणिनां विकाशः। प्राणेषु वृद्धिः सौरप्राणेभ्य एव वर्द्धते। गायत्रीमंत्रेण चैतत्सिद्ध्यति। यावदधिकं

यस्मिन्प्राणिनि सूर्य्याभिमुखमाकर्षणं तावदेव स पृथिव्या आकर्षणाद्वि-मुच्यते। बुद्धौ च तस्य प्रागल्भ्यं बधते। प्रथमं वृक्षलतादय उत्पद्यन्ते पृथिव्याकर्षणमतिदृढम्, तेन ते स्वस्थानान्न किञ्चिदपि चलितुं शक्नु-वन्ति। एतावदेवाकर्षणं यत्ते क्रमेण वर्धन्ते। बुद्धिविकासश्चानुद्भूतप्राय एव। 'अन्तःसंज्ञा भवन्त्येव सुखदुःखसमन्विता, इति मनुनोक्तम्। परं तादृशमनुभवं प्रकाशयितुं न क्षमन्ते। इतः परं सरीसृपसृष्टिः ते पृथिव्याकर्षणेन किञ्चिद्विमुक्ताः यतस्ते चलितुं पारयन्ति। किन्तु सर्वाङ्ग-संलग्ना एव। तेष्वेव केचित् सर्पादयः पृथिव्यां फणाटोपमुत्थापयन्ति। एतेष्वेव केषुचित्पादा निःसरन्ति। सूर्य्याकर्षणेन किञ्चिद् भूमेरुत्थिताः तत्रापि केचित् शतपदाः। अत्यल्पं तेषां शरीरोत्थानमधिकेन भागेन ते पृथिव्यैव संबद्धाः क्रमेण विकासे सूर्य्याकर्षणबहुत्वे पादा ह्रसन्ति। क्रमेण विकासे चतुष्पदा भवन्ति। ते पशुषु मृगेषु च गण्यन्ते। तेषां पृथिव्या अतिसूक्ष्मांसेन सम्बन्धः। ते बहुदूरं धावन्ति। बुद्धिरपि स्था-वराद्यपेक्षया बहुप्रवृद्धा। अनुमानेन शब्देन च ते व्यवहरन्ति। ततः परं विकासे मनुष्यत्वलाभः। मनुष्यो हि द्वाभ्यां पादाभ्यां पृथिवीं स्पृशति शेषं सर्वमप्यङ्गमुत्थापयितुं प्रभवति। सूर्य्याकर्षणवशादेवास्य शिर उन्नतं भवति। शिरस एव सूर्य्येण सम्बन्धाद्बुद्धेरपि तदेवाय-तनम्। बुद्धिश्चेतरप्राण्यपेक्षया मनुष्येष्वधिका। इतः परमपि विकासे पृथिव्या आकर्षणाभावेन पृथिवीस्पर्शाभावः तत्र प्रसज्येतेति युक्ति-युक्तम्। तत एव दैवसर्गप्राणिनः पृथिवीं न स्पृशन्ति। तेष्वपि अष्ट-विधेषु क्रमेणाधिकाधिकः सूर्य्यसन्निकर्षः। विकासश्च पुरुषं नातिक्राम-तीति नेश्वरेणाज्ञप्तम्। तस्मान्मनुष्यादप्युपरितनाः प्राणिनः सन्त्येव। यदा शिक्षिताः पश्वादयः मनुष्या अपि शिक्षिताः उपर्य्यन्तरिक्षे कञ्चित्कालं स्थातुं शक्नुवन्ति। देवास्तु पृथिव्याकर्षणात्सर्वथैव विमुक्ता इति तेऽन्तरिक्षे दिवि च विचरन्ति। तेषां शरीरस्य सूक्ष्मतया विद्याप्रभावेणान्तर्धान-शीलतया च न सर्वप्रत्यक्षा भवन्ति इति। तदपि न विचारचारु विकासवादिनां विकासस्यान्यादृशत्वात्। तथाहि डार्विनस्पेन्सरादयः अमीवा हाइड्रादीनामेव क्रमेण मनुष्यादिरूपेण विकासमङ्गीकुर्वन्ति। तत्र

कर्मणामीश्वरस्य च नापेक्षा भवति । वैदिकानां तु सर्वत्रेश्वरस्य कर्मणाञ्चापेक्षा चेति महान् भेदः । विकासवादिनां मतरीत्या अमीबादय एव तेन तेन रूपेण विकसन्ति । वैदिकानां मते तु अमीबादिशरीरेभ्यो विलक्षणा निरवयवा निराकाराः सूक्ष्मा जीवा एवानादिशरीराणि गृह्णन्ति । वैदिकानां दृष्टौ 'जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, विनश्यति, इति यास्कोक्तरीत्या विकासह्रासपारम्पर्य्यमेव वक्तुं शक्यते । वर्षासु तृणान्युत्पद्यन्ते । क्रमेण सन्तो वर्धन्ते । विपरिणमन्ते । अपक्षीयन्ते । विनश्यन्ति च ग्रीष्मे । युगदृष्ट्या तु विकासवादिनां विकासो जायते । वैदिकानां रीत्या तु ह्रास एव वक्तुं शक्यते । 'ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयतामि'ति न्यायाचार्य्योक्तेः । विकासवादिनां दृष्ट्या पूर्वजेषु बुद्धिबलादिह्रास एवासीत् । वैदिकानां रीत्या तु पूर्वजेषु बुद्धिबलादीनामाधिक्यमेवासीत् । अतएव वैदिकानां 'पूर्वे पूर्वेभ्यो वच एतदूचुः' इति रीत्या पूर्वजानां प्रामाण्यम् । विकासवादिनां तूत्तरेषां ज्ञानशक्तिविकासातिशयात्तेषामेव प्रामाण्यम् । किञ्च सूर्य्याकर्षणाधिक्यं क्वचिद्भवति क्वचिन्न भवतीत्यत्र कर्मवैचित्र्यमन्तरा को हेतुः ? कर्मणामभ्युदयहेतुत्वमवसितं चेत् किं सूर्य्याकर्षणेन, सूर्य्याकर्षणेन पृथिव्याकर्षणविमुक्तिः क्रमेण विकासे बुद्धिविकासश्चेत्यपि न शोभनम् । मशकपतङ्गादीनां खद्योतादीनां क्षुद्राणामपि पृथिव्याकर्षणविमोकदर्शनात् । पिपीलिका मधुकरादीनां पश्वाद्यपेक्षयाऽपि विकासवादिभिर्बुद्धिवैशद्याभ्युपगमात् । देवा अपि मोक्षाकाङ्क्षया मनुष्यत्वमाकाङ्क्षन्ते । तेनसूर्य्याकर्षणविशेषेण पृथिव्याकर्षणविमुक्तिरिति यत्किञ्चित् । विस्तरस्तु 'मार्क्सवाद रामराज्य' पुस्तके द्रष्टव्य इति नेह प्रतन्यते ।

यदप्युक्तम् "द्वया वै देवा अहैव देवा अथ ये ब्राह्मणाः सुश्रुवांसोऽनूचानास्ते मनुष्यदेवा इत्यादिश्रुत्यनुसारेण पृथिवीस्था देवा अपि" तत्सत्यम् ।

यदुक्तम् "पृथिवीस्थेष्वपि देवेषु द्वैविध्यम् । उत्तरस्यां दिशि शर्य्यणावतः पर्वतस्योत्तरभागे प्रकृतिरचितां देवसंस्थामुपजीव्य

पुरा पृथिव्यामपि देवसंस्था प्रकल्पते स्म। देवविशः कल्पयितव्यास्ता अनुमनुष्यविशः कल्प्यन्ते (ए० ब्रा० २।३२) तत्संकेतः। मन्त्रेष्वपि बहवो देवासुरयुद्धाद्याः परस्परं संघर्षाः परस्परं संमेलनानि चैतेषां देवानां निरूपितानि। 'सहस्राश्वीन वा इतः स्वर्गलोकः' इत्यैतरेयश्रुत्यादिष्वस्यैव स्वर्गलोकस्य सकेतः कृतः (ऐ० ब्रा० १२।१७) पुराणेषु त्वस्य स्वर्गलोकस्य विवरणमुपलभ्यते। दशरथादीनां भारतीयानां राज्ञां देवसाहाय्यार्थं देवासुरयुद्धे गमनम्। महाभारते तीर्थयात्रां कुर्वतां युधिष्ठिरादीनां पाण्डवानां स्वर्गदर्शनम्, कुवेरेण समागमः, अर्जुनस्येन्द्रसमीपेऽध्ययनम्, बहुकालपर्य्यन्तं स्वर्गे निवासः, निवातकवचादीनां हननम्, द्वैतवने युधिष्ठिरादीनां गन्धर्वैर्युद्धमित्यादि सर्वमेतानेव स्वर्गदेवादीनधिकृत्य सुसंगतं भवति। एवं भारते विशिष्टा विद्वाँसो महाराजाश्च मनुष्यदेवपदेन व्यपदिश्यन्ते। सा भूलोकनिवासिनां देवानां द्वितीया विधा। तदेवं मुख्या प्राणरूपा देवाः १। तेषामध्यात्मं रूपम् २। अधिदैवतं तारामण्डलादिरूपम् ३। अधिभूतमग्न्यादि ४। लोकान्तरस्थाः प्राणिनो देवाः ५। भूमण्डलस्थाः सुमेरुप्रान्तनिवासिनो देवाः ६। भारतस्य विशिष्टा विद्वांसो वीराश्च देवाः ७। एतेषां परस्परं कः सम्बन्धः? कुतश्चैकस्यैव देवशब्दस्य तद्विशेषवाचकानामिन्द्रवरुणादिशब्दानाञ्च विभिन्नेषु प्रवृत्तिरिति वैदिकरहस्यम्, तदेवावगन्तुं ब्राह्मणा ब्रह्मचर्य्यं चरन्ति स्म। अवगत्य च यज्ञादिविधानेन स्वां देवरूपेण परिणमयन्ति स्म। तदेव भारतीयानां सर्वस्वभूतरहस्यम्। वेदविरोधिनां प्रबलैराक्रमणैर्विलुप्तप्रायम्। एतद्रहस्यज्ञानाधीनैव वैदिकी यज्ञप्रक्रिया विलुप्तप्राया।" इत्यादिकम्।

तदपि न, समीचीनम् धर्मब्रह्मणोरेव वेदतात्पर्य्यविषयतया सर्वत्रप्रतिपादितत्वेन तत्पारम्पर्य्याविच्छेदस्याद्यापि सत्त्वात्। वेदे तावत्परापरभेदेन देवद्वैविध्यं दृश्यते। परो देवः परमेश्वर एव। 'एको देवः सर्वभूतेषु गूढः' इत्यादि श्रुतेः। तस्यैव शिवविष्णुरामकृष्ण त्रिपुरादिरूपेण सर्वकारणत्वादिकमपि श्रूयते। अपरश्च प्राणरूपो देवः। तस्यैव च विस्तारस्त्रयस्त्रिंशदादयः अध्यात्ममधिदैवञ्च। तेषां

रूपं तदनतिरिक्तमेव। तेष्वेवाधिभौतिकं रूपमन्तर्हितं भवति। भूर्भुवः-स्वर्लोकानामपि तत्र गणितत्वात्। त एव देवा विग्रहवन्तोऽपि सन्तो लोकान्तरनिवासिनो भवन्ति। तेषामेव सुमेर्वादिषु यदा कदाचिदवतरणम्। तेषु तीर्थेषु मन्दिरादिषु च तेषामेवांशतोऽवतरणम्। कर्मोपासनादिभिस्तु तेषामेव सायुज्यसारूप्यादि प्राप्तिर्भवतीतरेषां जीवानाम्। हिरण्यगर्भादौ तु समष्टिसूक्ष्मप्रपञ्चान्तर्यामिरूपेणेश्वरत्वमभिमानिरूपेण जीवत्वमपि। कल्पान्तरीयविशिष्टकर्मसमुच्चितोपासनादिभिः कस्यश्चिद्विशिष्टस्य जीवस्यैव हिरण्यगर्भपदप्राप्तिश्रवणात्। अतएव पुरा औषत् तेन पुरुष उक्तः। उष दाहे अन्यान् हिरण्यगर्भपदप्राप्त्युत्सुकानाशावतः उपासकान् कर्मोपासनादिभिरतिशयं प्राप्य तत्पदप्राप्त्या औषत् अदहत् निराशान् कृतवान् तेन स पुरुष उच्यते। स वै शरीरी प्रथमः, स वै पुरुष उच्यते।' इत्यादि स्मरणाच्च।

यदुक्तम् "यज्ञशब्दो यजधातोर्निष्पन्नः। तस्य च देवपूजासंगतिकरणदानान्यर्थः। अन्यस्य तत्त्वस्य तत्त्वान्तरता यज्ञेन संपाद्यते। मिथश्च पदार्थान् यज्ञ एव संगमयति। दानशब्देन दा धातोर्निष्पन्नेन स्वस्वत्वनिवृत्तिः, दोऽवखण्डने इति धातोर्निष्पन्नेनावयुत्यात्मनोऽन्यत्र समर्पणमभिधीयते प्रवर्ग्यश्चे'ति तदेतदपि यज्ञपदार्थे संगमनीयम्। स च प्राकृतः कृत्रिमश्च। 'द्रव्य देवता त्यागो याग' इति कृत्रिमस्यैव लक्षणम्। कथमेतत् सर्वमुपपद्यते। तदेतत्सर्वं प्राकृतयज्ञविज्ञानेन विज्ञातुं शक्यते। प्रकृतौ निरंतरं यज्ञः प्रचलति। तदाधारेणैव कथञ्चिदस्मत्प्रतिकूलमपि प्रकृतियज्ञमनुकूलयितुमस्मभ्यं यज्ञः शिक्ष्यते। तस्मात्प्राकृत यज्ञ एव कृत्रिमस्य मूलम्। तदत्रैव शतपथे एकादशकाण्डस्य चतुर्थाध्याये स्वैदायनोद्दालकसंवादः संगच्छते।

स वै गौतमस्य पुत्र जनं धावयेत् यो दर्शपूर्णमासयोरष्टौ पुरस्तादाज्यभागान् विद्यात्। पञ्च मध्यतो हविर्भागान् षट् प्राजापत्यान् उपरिष्ठादाज्यभागान् ........। यस्तद्दर्शपूर्णमासयोर्विद्याद् यस्मादिमाः प्रजा अदन्तका जायन्ते यस्मादासां जायन्ते यस्मादासां प्रभिद्यन्ते यस्मादासां सन्तिष्ठन्ते यस्मादासां पुनरुत्तमे वयसि सर्वा एव

प्रभिद्यन्ते यस्मादधर एवाग्रे जायन्तेऽथोत्तरे यस्मादणीयांस एवाधरे प्रथीयांस उत्तरे यस्माद्द्रंष्ट्रा वर्षीयांसो यस्मात्समा एव जम्भ्याः... ।
यस्तद्दर्शपूर्णमासयोर्विद्यात् यस्मादिमाः प्रजा लोमशा जायन्ते यस्मादासां पुनरिव श्मश्रूण्योपपक्ष्माणि दुर्वीरणानि जायन्ते यस्माच्छीर्षण्येवाग्रे पलितो भवति । अथ पुनरुत्तमे वयसि सर्व एव पलितो भवति ।
यस्तद्दर्शपूर्णमासयोर्विद्यात् यस्मात् कुमारस्य रेतः सिक्तं न संभवति यस्मादस्य मध्यमे वयसि संभवति यस्मादस्य पुनरुत्तमे वयसि न संभवति । यो गायत्रीं हरिणीं ज्योतिष्पक्षां यजमानं स्वर्गं लोकं वहन्तीं विद्यादिति ( श० प० ११।४ ) तत्रैव तदुत्तरम् ।

अथ यदपुरोऽनुवाक्यकाः प्रयाजा भवन्ति तस्मादिमाः प्रजा अदन्तका जायन्तेऽथ यत्पुरोऽनुवाक्यवन्ति हवींषि भवन्ति तस्मादासां जायन्ते । अथ यदपुरो वाक्यका अनुयाजा भवन्ति तस्मादासां प्रभिद्यन्तेऽथ यत्पुरोनुवाक्यवन्तः पत्नी संयाजा भवन्ति तस्मादासां संतिष्ठन्ते । अथ यदपुरोऽनुवाक्यकं समष्टिः यजुर्भवति । तस्मादासां पुनरुत्तमे वयसि सर्व एव प्रभिद्यन्ते । अथ यदनुवाक्यामनूच्य याज्यया यजति तस्मादधर एवाग्रे जायन्तेऽथाधरेऽथ यद्गायत्रीमनूच्य त्रिष्टुभा यजति तस्मादणीयांस एवाधरे प्रथीयांस उत्तरे अथ यत्प्राञ्चावाघारावाघारयति तस्माद्द्वा वर्षीयांसोऽथ यत्सच्छन्दसावेव संयाज्ये भवतस्तस्मात्समा एव जम्भ्याः । अथ यद् बर्हिस्तृणाति तस्मादिमाः प्रजा लोमशा जायन्ते । अथ यत्पुनरिव प्रस्तरं स्तृणाति तस्मादासां पुनरिव श्मश्रूण्यौपपक्ष्माणि दुर्वीरणानि जायन्ते । अथ यत्केवलमेवाग्रे प्रस्तरमनुप्रहरति तस्माच्छीर्षण्येवाग्रे पलितो भवति । अथ यत्सर्वमेव बर्हिरनुप्रहरति तस्मात्पुनरुत्तमे वयसि सर्व एव पलितो भवति । अथ यदाज्यहविषः प्रयाजा भवन्ति तस्मात्कुमारस्य रेतः सिक्तं न संभवति । उदकमिवैव भवत्युदकमिव ह्याज्यमयन-मध्ये यज्ञस्य दध्ना पुरोडाशेनेति चरन्ति । तस्मादस्य मध्यमे वयसि संभवति द्राप्सीवैव भवति द्राप्सीबहिरेतोऽथ यदाज्यहविष एवानुयाजा भवन्ति तस्मादस्य पुनरुत्तमे वयसि न संभवत्युदकमिवैव भवत्युदकमिव ह्याज्यम् वेदिरेव गायत्री तस्यै येऽष्टौ पुरस्तादाज्यभागाः स दक्षिणः पक्षो येऽष्टौ

उपरिष्टादाज्यभागाः स यजमानं स्वर्गलोकमभिवहति य एवमेतद्वेद। अनया आख्यायिकया स्पष्टमिदं सिद्धयति यद्दर्शपूर्णमासभूता अध्यात्मं याः क्रियास्ता एव दन्तलोमाहुत्यादिकास्तत्र परिवर्तनादिकारिण्यश्च भवन्ति। ये तु दर्शपूर्णमासादिष्वनुष्ठीयमानाः क्रिया एव दन्तमूलाद्युत्पादिकाः इत्यागृह्णीरन् ते सर्वेषु प्राणिषु दन्तलोमाद्युत्पत्तिं तत्परिवर्तनानि च न समाधातुमीशते।

येऽपि द्विजातिरिक्ता म्लेच्छादिका दर्शपूर्णमासादिकं नानुतिष्ठन्ति तेषामपि दन्तलोमादिर्जायते परिवर्त्तते च तस्मान्मूलतया प्राणादिक्रिययैव तात्पर्य्यं नेयं स्यात्। अधिदैवञ्च या गायत्री सैव यजमानं स्वर्गे लोके प्रापयतीति च।

तदित्थं मूलभूतं प्राकृतं यज्ञमेवावलम्ब्य कृत्रिमा यज्ञा वेदेषु विहिताः। ताश्च मूलभूताः क्रिया अपि तत्तत्कर्मोपपादनार्थं ब्राह्मणेषु बहुत्र निर्दिष्टाः। परं ता अर्थवादरूपेण प्रख्याप्यमीमांसकैरुपेक्षिताः। तेन कर्मोपपत्तिविषये आन्ध्यं प्रसृत" मिति तदेतदपि निःसारम्। श्रुतहान्यश्रुतकल्पने मानाभावात्। श्रुतं त्विदं यत् यस्मात्पुरोनुवाक्या रहिता केवलं याज्यावन्तः प्रयाजा भवन्ति तस्मादिमाः प्रजा अदन्तका भवन्ति। यस्माद्धवींषि आग्नेयादीनि अनुवाक्योपेतानि भवन्ति तस्मादासां प्रजानां दन्ता जायन्ते। पुनरनुयाजा अनुवाक्यरहिता भवन्तीति तस्मादुत्पन्ना दन्ताः प्रभिद्यन्ते। पुनः पत्नी संयाजा अनुवाक्योपेता भवन्ति तस्मादासां जायन्ते पुनरुत्पन्ना दन्ता संतिष्ठन्ते। अथ समष्टियजुराख्यं कर्म पुरोनुवाक्या रहितं भवति तस्मात्पुनरुत्तमे वयसि सर्वे दन्ताः प्रभिद्यन्ते। एवमेव पूर्वमनुवाक्या वचनमधरदन्तानां प्रथमोत्पत्तौ निमित्तम्, अनुवाक्याया गायत्रीरूपं न्यूनछन्दस्त्वं तदणीयस्त्वनिमित्तम्, याज्यानां पश्चात्प्रयोगः उपरितनदन्तानां पश्चादुत्पत्तौ कारणम्। याज्यानां त्रिष्टुप् छन्दस्कत्वेनाप्येकादशाक्षरत्वं तत्प्रथीयस्त्वनिमित्तम्। यद्यस्मात्कारणात् आघाराख्यौ होमौ प्राञ्चौ यागवर्गौ दीर्घधारया आघारयति तस्मात्कारणाद् दंष्ट्राख्या दन्ताः द्राघीयांसः यस्माच्च संयाज्ये स्विष्टकृतो याज्यानुवाके सच्छन्दसौ समानछन्दस्कौ

भवतः। ते च पिप्रीहि देवान् अग्ने यदद्य विशः इत्यादौ ते त्रिष्टुभौ यस्मात्तस्मात्कारणाद्दन्ता जम्भ्याः समा भवन्ति समानाकृतयो भवन्ति। यस्माच्च वेद्यां बर्हिः स्तृणीहि इति स्तीर्य्यमाणं बर्हिर्लोमस्थानीयं लोमानि बर्हिर्वेदः शिखा तैरिति आरण्केऽन्तिमेऽनुवाके। यस्माच्च स्तीर्णे बर्हिषि पुनरपि प्रस्तराख्यं दर्भमुष्टिं स्तृणाति तस्मात् कारणात् आसां प्रजानां पुनर्यौवने वयसि श्मश्रूप्रभृतीन्युत्पद्यन्ते यस्मादग्रे बर्हिषः प्रहरणात् पूर्वं केवलं प्रस्तरमेवानुप्रहरति अनूच्यमाने सूक्तवाक्ये अग्नौ प्रक्षिपति, तस्माच्छीर्षण्येवाग्रे पलितो भवति। यस्माच्च समष्टियजुर्होमकाले सर्वमेव स्तीर्णं बर्हिः अग्नावनुप्रहरति तस्मात्पुनरुत्तमे वयसि सर्व एव पलितो भवति। यस्मात्प्रयाजाः आज्यहविष्का भवन्ति तस्मात्कुमारस्य रेतः सिक्तं न संभवति। उदकात्मना स्रवति न देहरूपेण घनीभवति। यस्माद्यज्ञस्य दर्शपूर्णमासाख्यस्य मध्ये आज्यभागे दध्ना सान्नाय्येनाग्नेयादिपुरोडाशेन च चरन्ति यजन्ति तस्मान्मध्यमे वयसि संभवति। आग्नेयादि पुरोडाशे तदध्यादि हविः द्राप्सीव घनीभूता इव भवन्ति विन्दवः तस्मात्सिक्तं रेतः द्राप्सीव भवति। यस्मादेवमनयोः साम्यं तस्मान्मध्यगतदध्यादियोगेन मध्यमवयस्कस्य रेतः द्रासयुक्तं सर्वशरीराकारेण घनीभवति। प्रधानयाज्यानन्तरम् यस्मादाज्यहविष्का एवानुयाजा भवन्ति तस्मादस्य पुनरन्तिमे वयसि न संभवत्युदकमिवैव भवति उदकमिवैव ह्याज्यं भवति। ज्योतिष्पक्षरूपा गायत्री या पूर्वं पृष्टा सा वेदिरेव। येऽष्टौ पुरस्तादाज्यभागानुक्रान्ताः तस्याः स दक्षिणः पक्षः। उपरिष्टादाज्यभागानुयागादयो येऽष्टावनुक्रान्ताः स उत्तरः पक्षः। सा एषा वेदिरूपा गायत्री हरिणी अभितो दीप्यमानैरग्निभिर्हरितवर्णा ज्योतिष्पक्षा ज्योतिर्मयाहुत्यात्मपक्षोपेता सती यजमानं स्वर्गं लोकं नयति। एवमुक्तमर्थजातं यो वेद उपास्ते तमेवोपासकं गायत्री स्वर्गं वहति। एवं ब्राह्मणाक्षरैः प्रतीयमानमर्थं श्रुतमपहाय दर्शपूर्णमासमूलभूता अध्यात्मं याः क्रियाः ता दन्तलोमाद्युत्पादिकाः। तत्र परिवर्तनकारिण्यश्चेति गौणार्थं

स्वीकुर्वन्तो ब्राह्मणवचनान्युपेक्षन्ते, तदक्षरानुसारेण मुख्यार्थमूरीकुर्वन्तः सायणादयो वोपेक्षन्ते इति सुधियो विदाङ्कुर्वन्तु।

यदुक्तम् "म्लेच्छादयस्तु दर्शपूर्णमासादिकं नानुतिष्ठन्ति कुतस्तेषां दन्ताद्युत्पत्तिर्भवति परिवर्त्तते च तस्मान्मूलभूतया प्राणादिक्रिययैवात्र तात्पर्य्यं नेयमिति" तदतीव मन्दम्। पर्जन्यादन्न संभवः। यज्ञाद्भवति पर्जन्यः यज्ञः कर्मसमुद्भवः। कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्। अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिरित्यादिषु सर्वत्रैव मुख्यार्थत्यागेन गौणार्थस्वीकारापत्तेः। यागादयस्तु सीमितप्रदेशे एव सीमितैरेव जनैः क्रियन्ते वृष्ट्यन्नादयस्तु सर्वत्रैव भवन्ति। यदि च शास्त्रविधिनिरपेक्षाभिः काभिश्चित्प्राकृताभिरेव क्रियाभिस्तत्सर्वं सम्पद्यते। तदा तदुल्लेखेन यज्ञादिप्रशंसनं व्यर्थमेव भवेत्। यदि तु वेदानां नित्यत्ववत् वैदिककर्मानुष्ठानपारम्पर्य्यस्याविच्छेदाभ्युपगमेन तेषां तेषामाधिकारिकाणां महर्षीणामनुष्ठानैरेव सर्वत्र वृष्ट्यन्नादयो भवन्ति तदा तद्वदेव तेषां तेषां विशिष्टानां दर्शपूर्णमासादिभिरेव सर्वेषामपि दन्तकेशाद्युत्पत्तिपरिवर्तनादीनि संभवन्त्येव।

वस्तुतस्तु 'य एवं वेदे'त्युक्त्यात्रोपासनमेव विहितम्। तच्च कथञ्चित्साम्यसम्पादनेनैव संभवति। तेन न तत्र मुख्यः कार्य्यकारणभावो विवक्षितः। तेन यथा वैदिकैरेव शब्दैर्विश्वस्योत्पत्तिर्भवति तथैव दर्शपूर्णमासादिकर्मानुरोधिन्य एव दन्ताद्युत्पत्तयः तदुपासनञ्च कर्मणां साद्गुण्ये कारणं भवति। 'यदेव विद्यया करोति तदेव वीर्य्यवत्तरं भवती'ति श्रुतेः। किञ्च यदि प्राकृतयज्ञस्यानुकरणं वैदिकयज्ञादिकर्म तदा साङ्गोपाङ्गं प्राकृतं यज्ञं निरूप्य प्राकृतयागवत् ऋत्विग्भिर्लौकिको यागः कार्य्य इति 'प्रकृतिवद्विकृतिः कर्तव्या' इतिवदतिदेशो वक्तव्यः। न च तथोपलभ्यते साङ्गोपाङ्गं कर्म प्राकृते तथोक्ते यागे दृश्यते। दर्शपूर्णमासयागस्यापि सर्वाङ्गसम्पत्तिस्तत्र सम्पादयितुमशक्यैव।

यदुक्तम्—"स्वर्लोकस्थे सूर्य्ये जनलोकमयात्सोमलोकादनवरतमनन्तकोटिगुणितः सोमः प्रतिक्षणं हूयते । तमेव सोममग्निरूपतामासाद्य सूर्य्योऽभितः प्रकाशमौष्ण्यञ्च प्रसारयति । 'आहुत्याऽऽप्यायते सूर्य्यः' इत्यादिनाऽनवरतं जायमाना सोमाहुतिः संकेतिता । तेनैव चानन्तमौष्ण्यं प्रकाशञ्चोद्वमन्नपि सविता न क्षीयते" इत्यादि तदपि मन्दम्, प्राकृतानाम् यदार्थानाम्प्रकृत्याऽपूर्वत्वेनाक्षोयमाणत्वोपपत्तेः । तत्रैवाग्नौ काष्ठतैलघृतादीनामिव सूर्ये सोमादीनामुद्दीपकत्वोपपत्तेश्च । मन्वादिस्मृतिषु तु अग्नौ प्रास्ताहुतीनामेवादित्याप्यायकत्वमुक्तम् । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते' इति स्मृतेः । अन्यत्र च यज्ञगुणारोपेण गौण एव यज्ञहोमादिव्यवहार उपासनादावुपयुज्यते । तेनैव पञ्चाग्निविद्यायां द्युलोकाग्नौ घृतदुग्धसोमाद्यब्बहुलकर्मसमवायिनां पुरुषाणां होमः । ततश्च सोमात्मदेहविशिष्टानां तेषामेव पर्जन्याग्नौ होमः । ततश्च जलविशिष्टानां तेषां पृथिव्यग्नौ होमः । ततः समुत्पन्नव्रीहियवाद्यात्मकानां पुरुषाणां पुरुषाग्नौ होमः । ततः समुत्पन्नशुक्रस्य योषाग्नौ होमः । तत्रापि शास्त्रविहितोपासनाङ्गत्वेनैव यज्ञादिकल्पनम् । अविहितानां तु रागप्राप्तानां प्रत्यवायरूपत्वमपि भवति । अतएव यत्र क्वापि योषायां शुक्रनिक्षेपे दोषश्रवणम् । पृथिवीरूपेषु क्षेत्रेषु व्रीहियवादि निक्षेपः । ब्रह्माग्निः, ब्रह्मैव होता, ब्रह्मेव हविरित्यादि कल्पनम् । तेनैव प्राणायामसंयमादिषु क्वचित्क्वचिदर्पणमात्रेऽपि विहितत्वादेव यज्ञत्वव्यवहारः । ज्ञानयज्ञेऽपि यज्ञत्वस्यारोप एव । यथा असिंहेऽपि देवदत्ते शौर्य्यक्रौर्य्यादि गुणेन सिंहत्वारोपः । यथाचानग्नावपि माणवके तेजस्वित्वादिनाऽग्नित्वारोपस्तथैव ब्रह्मज्ञाने ब्रह्मैव स्रुक्स्रुवादात्यारोपः । विध्यभावेऽग्नौ घृतादिनिक्षेपः लौकिककर्मण्येव परिगण्यते । विधानेनैव भोजनादीनामपि यज्ञत्वं सम्पद्यते । अन्यथा सर्वेषामपि भोजनमैथुनादिभिरपि यज्ञफलसंपत्त्यापत्तेः । प्रदीपे ज्योतीरूपतामापद्य क्षीयमाणं तैलं पुनः

प्रकाशार्थिभिः प्रपूर्य्यते । विद्युत्प्रकाशे च प्रतिक्षीयमाणा शक्तिर्विद्युत्कोष-गृहादागत्य तां क्षतिं प्रपूरयति । तथैव सूर्य्योऽपि औष्ण्यप्रकाशोद्गमनात् क्षीयमाणः सोमेन तस्यापि मूलभूतया प्रकृत्या वा प्रपूर्य्यते इति सत्यम् । परमौष्ण्यप्रकाशमूलभूतोऽग्निरभितो बहिर्गतः पुनः सोमरूपतामापद्यते इति साम्प्रतमपि साधनीयमेव । अग्नेरापः, अद्भ्यः पृथिवी अद्भ्यश्चा-बिन्धनं विद्युदादिकम् । पार्थिवात्काष्ठादेरग्निरिति विज्ञानं न नवीनम् । एवमेव चितोऽचित्प्रपञ्चो जन्यते । तत्रैव ह्यन्तःकरणे च चिद-भिव्यज्यते इत्यपीष्टमेव । परं न तावता अन्योऽन्यात्मकता वस्तुभूता तै-र्निदर्शनैः सिद्ध्यति । श्रुतिस्मृतिषु विहितकर्मणां जगदुत्पत्त्यादिकं प्रति हेतुत्वमुक्तम्, नतु तथाकथितस्य । तस्माद्वेदादिशास्त्रप्रसिद्धा यज्ञा वैधाग्निहोमदर्शपौर्णमासचातुर्मास्यज्योतिष्टोमादय एव न प्राकृता इति सर्वमनवद्यम् ।

---

# वेदप्रामाण्यविमर्शः

अपूर्वः कोऽपि वेदेषु चमत्कारः। यत्र यत्र दृष्टिर्निक्षिप्यते, तत्र तत्र विस्मयः समुल्लसति। वाक्यत्वेऽपि तेषामपौरुषेयत्वम्, आनन्त्येऽपि-सुश्लिष्टत्वम्, आपाततः पौनरुक्त्यबाधादिषु सत्स्वपि स्वतःप्रामाण्यम्, ग्रन्थरूपत्वेऽपि पारमेश्वरनिःश्वासलीलायितत्वम्, अनादित्वेऽपि-प्राचीनतमत्वेऽपि प्रागैतिहासिकत्वेऽपि यथास्थितानुपूर्वीणां स्वरमात्रादि-श्रुतिविपर्ययाभावः, स्मृतयः, पुराणानि दर्शनानि, वैज्ञानिकतत्त्वानि, सृष्टि-प्रक्रिया, सामाजिकरहस्यानि, किंबहुना सर्वमेव वाङ्मयमित एव निस्सृतम्। अनन्ताभिश्शाखाभिः समुपबृंहितो महान्तं विस्तारं लम्भितः, पवित्रेऽस्मिन् भारते वर्षे गुरुशिष्यपरम्परया चिरन्तनसमयादध्ययना-ध्यापनघण्टापथमवतारितोऽविच्छेदेन प्रचलति। धर्मस्य सर्वस्वमेवेदम्। मन्त्रब्राह्मणाभ्यां विभिन्नोऽपि एक एव। अत्र यद्यपि चार्वाकैर्भूयो भूयः कुतर्कितम्, दिगम्बरैः सपराक्रममाक्षिप्तम्, ताथागतैः बंहीयो विरुद्धमा-चरितम्, आधुनिकानामपि अध्ययन इव प्रवृत्तानामैतिहासिकानां दृशोऽवलम्ब्य विश्लिष्टो विक्षोभ एव समुत्तोल्यमानः निभालितः। यद्यपि सर्व एव प्राक्तनाः प्रतिक्षेपाः श्रीमद्भिः श्रीशबरस्वामिभट्टपाद-प्रभाकरप्रभृतिभिर्मीमांसकधुरीणैः, विद्वन्मतङ्गजैर्मौननीयैर्वात्स्यायनोद्यो-तकरोदयनाचार्यप्रमुखैर्नैयायिककण्ठीरवैः, षड्दर्शनीपण्डितप्रकाण्डैर्म-नसाऽपि दुष्प्रधर्षैस्तत्रभवद्भिर्वाचस्पतिमिश्रैः सम्यक्समाहिताः यथा। सर्व एव प्रतिवादिनः प्रतिहतोत्साहाः कुण्ठीकृता मौनमेव समालम्बिषत, न पुनर्विरुद्धायां दिशि लेखनीं समचारयन्। तथापि आधुनिकानां केषाञ्चन विद्वत्प्रतिभटानामाक्षेपप्रतिक्षेपसंरम्भकोलाहलो जागरित इव दृश्यते, उद्ग्रीव इव विलोक्यते, जनतामास्तिकीं विरुद्धां दिशं नयन् संलक्ष्यते स प्रशमनीयः। किञ्च ताननुसरन्तः प्राक्तना अपि पूर्वपक्षिण उत्तिष्ठमाना अवश्यं समाधातव्याः, सद्धार्मिकसमाजः समुत्साहनीय

इति मया प्राक्तनान् सन्दर्भान् यथावन्निभाल्य स्वयञ्च युक्तिमुक्ता आकलय्य प्रयत्नोऽयमारब्धः। सोऽयं प्रस्तूयते।

यद्यपि सजातीयविजातीयस्वगतभेदशून्यमपरिच्छिन्नमनन्तमपारं सर्वव्यवहारातीतमनाद्यनन्तं ब्रह्मैव परमं तत्त्वम् सर्वप्राणिपरप्रेमास्पदं सर्वात्मभूतं, तथाप्यनधिगतं सत्तदकिञ्चित्करमेव। 'नैनमविदितो देवो भुनक्ती'ति श्रुतेः। तत एवाचिन्त्यानिर्वाच्ययाऽघटितघटनापटीयस्या स्वशक्त्यैव स्वाधिगमाय स्वयमेव तद्वाच्यवाचकलक्ष्यलक्षकाद्यात्मना सप्रपञ्चमिवापद्यते। तत्रापि वाच्यलक्ष्यसदानन्दापेक्षयापि संविदानन्दात्मकमोमित्यभिधानमेवातिशेते, प्रकाश्यविषयापेक्षया प्रकाशकविषयिमहात्म्यातिशयस्य सर्वजनीनत्वात्। अचिन्त्यानन्तसच्चिदानन्दसुधामहाम्भोधावभिधानाभिधेयात्मकप्रपञ्चोत्पादनानुकूलशक्त्यवच्छिन्नब्रह्मविवर्त्तभूत एवाभिधानाभिधेयात्मकः प्रपञ्चोऽपि तेनैव तदभिन्नाभिन्नस्य तदभिन्नत्वनियमात् अभिधानात्मकप्रपञ्चोत्पत्त्यनुकूलशक्त्यवच्छिन्नसदानन्दविवर्तभूतानामभिधेयानाञ्चाभेद एव पर्य्यवस्यति। तत्रापि पादविभूतिगतमायाशक्त्या तदन्तर्गताभिधानाभिधेयभेदविजृम्भणेन जीवब्रह्मणोरिवाभेदतिरोधानम्। तेनैवाग्निमोदकाद्युच्चारणेनापि न मुखदाहपाटनपूरणादिकम्। त्रिपादविभूतौ त्वभेद एव जागर्ति। तत एव 'ओमितीदं सर्वं' 'ब्रह्मवेदं सर्वं'मित्युपास्यते प्रतिपद्यते च समाहितैः पारदृश्वभिः। सर्वत्र वाच्यप्रपञ्चापेक्षया वाचकस्य शब्दस्य श्रैष्ठ्यम् प्राकृताद्यपभ्रंशमयशब्दापेक्षया च तत्प्रकृतिभूतसाधुसंस्कृतशब्दानां कोऽपि विलक्षणो माहात्म्यातिशयः, येषामधिकारिकर्त्तृकोच्चारणेनापि पुण्यजनिः। तत्रापि शब्दसामान्यापेक्षयापि दोषबाधविधुरस्य शब्दविशेषस्य कोऽपि माहात्म्यातिशयः सुख्यात एव। तदभ्यासेन वाचां क्रियाफलाश्रयत्वं सम्पद्यते। लौकिकानामृषीणां वागर्थमनुधावति विशिष्टानां तादृशानान्तु वाचमर्थोऽनुधावति। तेनैव कस्यचित् तपोधनस्य वाचैव नहुषोऽजगरत्वं, वाचैव च कस्यचित्सत्यव्रतस्य नन्दिनस्तेनैव देहेन देवत्वं सम्पन्नमिति पौराणिकाः।'

'नास्ति सत्यसमं तपः'

'अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् ।
अश्वमेधसहस्राच्च सत्यमेकं विशिष्यते ॥'

इति तन्माहात्म्योक्तिः सुस्फुटैव । मृषावादिनामपि सत्योक्तिराद्रियते, किमुत सत्यवादिनां तथोक्तयः; सत्यव्रतानामृषीणां सुसिद्धानामृतसत्यनिष्ठानां देवानां देवदेवानामीश्वरस्य चोक्तयो दोषबाधवैधुर्यतारतम्येनोत्तरोत्तरं विशिष्यन्ते । तदपेक्षयाऽपि स्वप्रकाशपरब्रह्मनिःश्वसितप्रायाणां पुरुषमात्रबुद्धिप्रयत्ननिरपेक्षाणामपास्तसमस्तपुन्दोषशङ्काकलङ्कपङ्कानां तदीयनित्यानन्तज्ञानानुविद्धाकृत्रिमनित्यानन्तापौरुषेयशब्दराश्यात्मकमन्त्रब्राह्मणात्मकानां वेदानां सर्वातिशायी माहात्म्यातिशयस्तु सर्वत्र जागर्तितमाम् । येषामनुग्रहादेव धर्मब्रह्मादयोऽतीन्द्रिया अपि पदार्थाः करतलगतामलकायन्ते । तत एव स्वात्मावबोधनाय करुणावरुणालयस्याकारणकरुणस्य सर्वेश्वरस्यैव वेदात्मना विशिष्यावतरणं मन्यन्ते वैदिकाः ।

'वेदो नारायणः साक्षात् स्वयम्भूरिति शुश्रुम ।'
'वेदस्य चेश्वरात्मत्वात्तत्र मुह्यन्ति सूरयः' इत्यादि व्यासोक्तेः ।

तन्त्रागमपुराणन्यायसांख्ययोगमीमांसाधर्मशास्त्राङ्गोपबृंहितविविधानवद्यविद्योद्गमस्थानभूतानां वेदानां सर्वार्थावद्योतित्वं निरुपचरितमेव । 'वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे' 'शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्' 'शास्त्रयोनित्वादि' ति रीत्या विश्वस्रष्टृतत्सृष्टिप्रकाशकत्वेन वेदानामनितरसाधारणम् माहात्म्यम् । 'मन्त्रब्राह्मणयोर्वेदनामधेय' मित्यापस्तम्वादिभिस्तत्स्वरूपावबोधकं लक्षणं विहितम् । अनुपलभ्यमानमूलान्तरत्वे सति महाजनपरिगृहीतवाक्यत्वं वेदत्वमित्युदयनाचार्येणापि तल्लक्षितम् ।

शब्दातिरिक्तं शब्दोपजीविप्रमाणातिरिक्तञ्च यत्प्रमाणं तज्जन्यप्रमितिविषयानतिरिक्तार्थको यो यस्तदन्यत्वे सति आमुष्मिकसुखजनकोच्चारणकत्वे सति जन्यज्ञानाजन्यो यो प्रमाणशब्दस्तत्त्वं वेदत्वमिति च प्राचीनैस्तल्लक्षणमुक्तम् । अत्र व्यासादिचाक्षुषादिप्रत्यक्षजन्ये दृष्टार्थके भारतायुर्वेदादिभागेऽतिव्याप्तिवारणाय प्रथमसत्यन्तम् । इत्थञ्च तदुभयातिरिक्तं प्रमाणं चक्षुरादिरेव तज्जन्यप्रमितिविषयार्थकतया तयोर्नाति-

व्याप्तिः । न च दृष्टार्थकवेदभागस्यापि लक्ष्यतया कथं तत्र लक्षणसमन्वय इति वाच्यम्, अत्रार्थपदस्य मुख्यतात्पर्यविषयपरत्वात् मीमांसकनये विध्यर्थ एव मुख्यतात्पर्यविषयः । न्यायनयेऽपि 'स्वार्थद्वारैव तात्पर्यं तस्य स्वर्गादिवद्विधौ ।' इति रीत्या विध्यर्थ एव तेषां मुख्यं तात्पर्यम्, अत एव सत्यन्तेऽनतिरिक्तेति । तथा च तेषां दृष्टार्थकत्वेऽपि नाव्याप्तिः । प्रमित्यविषयार्थकत्वमात्रोक्तावसम्भव इति जन्यान्तं प्रमितिविशेषणम् । शब्दोपजीव्यतिरिक्तेन प्रमाणेन वेदात्मकशब्देन वेदार्थस्य प्रमापणात् शब्दातिरिक्तपदस्य प्रमाणविशेषणतया निवेशः । मन्त्रावयवभूतवाक्येऽतिव्याप्तिवारणाय द्वितीयसत्यन्तम् । एवं स्तोभेऽतिव्याप्तिवारणाय प्रमाणशब्दनिवेशः । मन्वादिस्मृतिभारताद्यदृष्टार्थकभागेष्वतिव्याप्तिवारणायाजन्य इत्यन्तम् । यद्यपि 'अनन्ता वै वेदाः' इति श्रुत्यनुसारेण वेदा अनन्ता एव तथापि त्रयस्त्रिंशदधिकशतोत्तरसहस्रशाखोपबृंहितो मन्त्रब्राह्मणात्मकोऽविच्छिन्नपारम्पर्येणाधीयमानोऽपौरुषेयः शब्दराशिरेव मानवबुद्धिगम्यो वेदः । गुरोर्मुखादनुश्रूयमाणत्वादेवान्वर्थकानुश्रवत्वमपि तस्य ।

कैश्चित्तु—'विद् ज्ञाने' 'विद् सत्तायाम्' 'विदॢ लाभे' 'विद् विचारणे' इति धातुभ्यो वेदशब्दं निष्पाद्यानेके वैज्ञानिकार्था वेदशब्दार्थत्वेन गृह्यन्ते । 'सर्वे सर्वार्थवाचका' इति रीत्या शब्दानां कामदोग्धृत्वात्कामं गृह्यन्तामनेकेऽर्थाः; तथापि रूढिर्योगमपहरतीति न्यायेन पूर्वोक्तरीत्या अपौरुषेयशब्दराशावेव योगरूढोऽयं वेदशब्दः । अन्यत्र तु 'वेदं कृत्वा वेदिं करोति' इत्यादौ कुशमुष्टौ वेदशब्दप्रयोग इष्यत एव ।

केचित्तु वेदानां कीदृशं स्वरूपं, कश्च तदापरोक्ष्योपायः, किं वा तत्फलमिति प्रश्नत्रयमुत्थाप्य प्रसिद्धेभ्यो वेदेभ्योऽन्यदेव किञ्चित्तारकज्ञानमन्त्रं परावागात्मकं वेदतत्त्वमिति वर्णयन्ति । तत्र यद्यप्यपौरुषेयमन्त्रब्राह्मणात्मकः शब्दराशिरेव वेदः, अविच्छिन्नपारम्पर्य्येण तदभ्यासजन्यसंस्कारसध्रीचीनमनःसहकृतश्रोत्रेन्द्रियमेव तदापरोक्ष्योपायः, तदर्थज्ञानानुष्ठानसापेक्षस्य तदपरोक्षज्ञानस्य चतुर्वर्गप्राप्तिरेव फलमिति प्रसिद्धमेवोत्तरम् । तथापि तेषां प्रसिद्धवेदविलक्षणमेव किमपि प्रतिपित्सितं

प्रतिपिपिपादयिषितञ्च। अत एवोक्तं निखिलमिदं वाङ्मयं कण्ठे धारय-तोऽपि वेदार्थमर्मग्रहणे तादृशमेवासामर्थ्यं यादृशं छायासु वस्तुत्वमारोपयतां छायाभ्यो वस्तुतत्त्वनिरूपणपराणां वस्तुस्वरूपविषये परिदृश्यते। प्रतिबिम्बितफलेभ्यो यथा वास्तविकफलास्वादनजा तृप्तिः क्षुन्निवृत्तिश्च न संभवति तथा वैखरीवागात्मकेभ्य ऋगादिमन्त्रेभ्यो वेदत्वेन लोक-प्रसिद्धेभ्योऽपि साक्षादेव दैवीवाक्संराधनजममृतत्वं सर्वज्ञत्वादिकञ्च नोपलभ्यते, परं नैतत् समीचीनमनुक्तोपालम्भात्। नहि कण्ठे धारण-मात्रादमृतत्वसर्वज्ञत्वादिकं कुत्रचिच्छ्रुतम् वेदार्थग्रहणानुष्ठानसापेक्षस्यैव कण्ठे धृतस्य वेदस्यैवामृतत्वादितत्तत्पुरुषार्थहेतुत्वावधारणात्।

यत्तु अध्ययनमात्रेण घृतकुल्यादिफलश्रवणमश्वमेधाध्ययनमात्रेण तत्फलप्राप्तिश्रवणं च, तत्तु धर्मज्ञानानुष्ठानाश्वमेधोपासनफलपरमिति सायणीयऋग्वेदीयोपोद्घातभाष्ये स्पष्टमेव।

प्रमाणानां प्रामाण्यादेव हि प्रमेयसिद्धिरिति नियमात् प्रथमन्तावत् प्रामाण्यस्वतस्त्वपरतस्त्वविचार एव आरभ्यते। दार्शनिकेषु मीमांसक-धुरीणाः प्रामाण्यस्वतस्त्वमङ्गीकुर्वन्ति। तत्रार्थान्यथात्वमयथार्थत्वं वाऽप्रामाण्यम्, तद्विपरीतमर्थतथात्वं यथार्थत्वं वा प्रामाण्यम्। प्रथम-मन्यसापेक्षमितरत्तु स्वत एव। तत्र तत्त्वप्रदीपिकाकर्तॄणां चित्सुखाचार्या-णामिदमभिमतम्—"विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तहेत्वजन्य-त्वमेव प्रमायाः स्वतस्त्वम्। न चेश्वरज्ञानेऽव्याप्तिस्तस्याजन्यत्वादिति वाच्यम्; तत्र विज्ञानसामग्रीजन्यत्वविशिष्टतदतिरिक्तसामग्रीजन्यत्वा-भाववत्त्वस्य सत्त्वात्। अप्रमासु विज्ञानसामग्रीजन्यत्वे सति तदतिरि-क्तसामग्रीजन्यत्वं भवति, तदत्यन्ताभाववत्त्वं प्रमासु भवत्यत एव नातिव्याप्तिरपि।

अप्रमातिरिक्तत्वेन हेतुना पटादाविव प्रमायामपि विज्ञानसामग्री-जन्यत्वे सत्यतिरिक्तजन्यत्वाभावस्य साधयितुं शक्यत्वेन न तदप्रामाणि-कत्वमपि। न चात्र ज्ञातत्वानधिकरणत्वस्योपाधित्वम्, ईश्वरज्ञाने साध्याव्याप्तेः। नापि ज्ञानसामग्र्यजन्यत्वस्योपाधित्वम्, यज्ज्ञानसाम-ग्रीजन्यं तत्तत्त्वे (ज्ञानसामग्रीजन्यत्वे) सत्यतिरिक्तजन्यमप्रमाणवदिति

व्यतिरेकव्याप्तावप्रमात्वस्यैवोपाधित्वात्। विज्ञानसामग्रीमात्रादेव प्रमोत्पत्तिसम्भवेन तदतिरिक्तस्य गुणस्य दोषाभावस्य वा हेतुत्वे गौरवप्रसङ्गो विपक्षे बाधकस्तर्कः। न च प्रमा, विज्ञानहेत्वतिरिक्तहेत्वधीना, कार्यत्वात्पटवदिति परतस्त्वप्रयोगोऽपि सम्भवत्येवेति वाच्यम्। प्रमा दोषव्यतिरिक्तज्ञानहेत्वतिरिक्तजन्या न भवति, ज्ञानत्वादप्रमावदिति सत्प्रतिपक्षसम्भवात्। न चाप्रमाज्ञाने तत्प्रसक्तिः; प्रयोजकाभावात्। दोषासहकृतज्ञानसामग्र्याः प्रमाप्रयोजकत्वेनाप्रमायां दोषसहकृततज्जन्यत्वेन तदसम्भवात्। न च तर्हि दोषाभावस्य प्रमात्वप्रयोजकत्वमिति वाच्यम्; अन्वयव्यतिरेकयोर्विरोध्यप्रमाप्रतिबन्धकत्वेनैवोपक्षीणत्वात्। न च संस्कारस्यानुभवनाशकत्वस्मृतिहेतुत्वयोर्दर्शनेन दोषाभावस्याप्यप्रमाप्रतिबन्धकत्वं प्रमाहेतुत्वञ्च किं न स्यादिति वाच्यम्। तत्र स्मृतेः कारणान्तरासम्भवेन तत्त्वेऽपि प्रकृते प्रमासामग्रीसत्त्वेन वैषम्यात्।

एवं प्रमाज्ञप्तिरपि विज्ञानज्ञापकसामग्रीत एव। नन्वेवं सति विज्ञानग्राहिसाक्षिमात्रग्राह्यत्वेन विज्ञान इव प्रमाणमप्रमाणं वेति संशयो न स्यादिति चेन्न। तादृक्प्रसंगस्य नैयायिकमतेऽपि तुल्यत्वात्। तथाहि—सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्यय इति रीत्या धर्मिज्ञानस्य तत्तज्ज्ञानसमयस्फुरणस्यानुव्यवसायज्ञानस्य च नैयायिकैः स्वतःप्रामाण्यमभ्युपेयते। तत्र धर्मिज्ञानेऽनुव्यवसाये च तन्मतरीत्या स्फुरत्यपि बौद्धानामप्रमाणमेवेति विपर्यासो दृश्यते। एवं स्वतःप्रमाणत्वेनोरीकृताऽनुमित्यादौ लौकायतिकानां विप्रतिपत्तिर्दृश्यते। तत्र प्रतिभासपुष्कलकारणे सत्यपि प्रतिबन्धकादिसमवधानेन यथोपपत्तिस्तथैव प्रकृतेऽपि समाधानं सम्भवत्येव। न च तर्हि शुक्तिरजतादिबुद्धिष्वपि प्रामाण्यग्रहणप्रसंगः, तथा प्रसङ्गेऽपि कारणदोषावगमबाधबोधाभ्यां तदपनयनात्। न च तर्हि अत्रापि दोषबाधाभावज्ञानस्य हेतुत्वापत्त्या परतः प्रामाण्यमेवेति वाच्यम्। दोषबाधबोधयोरनुदयमात्रे प्रामाण्यस्फुरणाङ्गीकारेण तददोषात्। तदभावावगमस्यापि प्रामाण्यस्फुरणहेतुत्वे तस्यापि प्रामाण्यावगमाय तत्तदभावावगमान्तराणामप्यपेक्षणीयत्वेनानवस्था।

प्रामाण्यपरतस्त्वानुमानमपि स्वप्रकाशत्वेनाभिमतेषु धर्मिज्ञानानुव्यवसायादिषु व्यभिचारित्वादकिञ्चित्करतरम्। न चैतत्सर्वमनभ्युपगमपराहतम्; वार्तिकतात्पर्ये प्रमाणतोऽर्थप्रतिपत्ताविति भाष्यव्याख्यानावसरे वाचस्पतिमिश्रैरुक्तत्वात्। तथाहि-विमतं ज्ञानमर्थाव्यभिचारि, समर्थप्रवृत्त्युत्पादकत्वात्। यदि पुनरेवं नाभविष्यन्नसमर्थां प्रवृत्तिमकरिष्यत्; यथा प्रमाणाभासमिति व्यतिरेकि, अन्वयव्यतिरेकि वा, अनुमानस्य स्वतःप्रमाणतयाऽन्वयस्यापि सम्भवात्। तथाचानुमानस्य तु परितो निरस्तसमस्तविभ्रमाशङ्कस्य स्वत एव प्रामाण्यम्, अनुमेयाव्यभिचारिलिङ्गसमत्वात्, सत्प्रतिपक्षबाधनत्वाच्च। तथाहि—प्रमात्वं विज्ञानग्राहकसामग्रीमात्रग्राह्यम् अप्रमामात्रवृत्तित्वानधिकरणत्वे सति ज्ञानैकवृत्तिजातित्वात्, ज्ञानत्ववत्। एतेनोपमानमपि व्याख्यातम्।

ननु प्रमात्वं न जातिः सम्भवति, साक्षात्कारित्वेन तस्य परापरभावासम्भवात्। प्रमात्वस्य साक्षात्कारित्वव्याप्यत्वे तद्रहितेषु परोक्षेषु अनुमानादिषु प्रमात्वाभावप्रसंगः। यदि च साक्षात्कारित्वं प्रमात्वान्तरजतिभेदस्तर्हि प्रमात्वरहितेषु विभ्रमेषु साक्षात्कारित्वं न स्यात्। तदेव प्रमात्वस्य स्वतस्त्वं सम्भवति। न चापरोक्षभ्रमेषु साक्षात्कारित्वं नास्ति। तस्मात्परापरभावशून्ययोरेकत्र वृत्तौ साङ्कर्येण प्रमात्वं न जातिः। प्रमात्वं यदि जातिस्तदा सर्वज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्यय इति परिभाषैव परिलुप्येत। इदं रजतमित्येकस्यैव ज्ञानस्य धर्मिणि प्रमात्वमितरांशेऽप्रमात्वमिति जातिसाङ्कर्यप्रसंग इति चेन्मैवम्। साक्षात्कारित्वस्य रजतादिविभ्रमावृत्तित्वात्। न च कथं तर्हि साक्षात्कारित्वव्यवहारः इन्द्रियसम्प्रयोगजन्यतोपाधिमात्रेण तद्व्यवहारोपपत्तेः। धर्म्यंशे प्रमात्वव्यवहारोऽप्यबाधितानुभूतित्वोपाधिनिबन्धनतयाऽप्युपपद्यते। न चैवं तर्हि सर्वत्रैवोपाधिहेतुक एवास्तु प्रमात्वव्यवहारः, किं जातिकल्पनयेति वाच्यम्। गौर्गौरिति व्यवहारस्येव प्रमा प्रमेत्यबाधितव्यवहारस्य जातिमन्तरानुपपत्तेः। उपाधिमादाय जातिप्रत्याख्यानस्य गोत्वादिष्वपि तुल्यत्वात्। तस्माद्यत्र जातिबाधको न प्रसरति तत्र जातिरन्यत्रोपाधिरित्येव विभागो युक्तः। तस्मान्न पूर्वोक्तहेतोर्विशेष्यासिद्धिः। विपक्षे चानवस्थाप्रसंग-

बाधकस्तर्कः। न च निलीनस्यैव प्रमाणस्यार्थेऽव्यवहारजनकत्वोपपत्त्या नानवस्थेति वाच्यम् । तथात्वनिश्चायकप्रमाणानुदये तदस्तित्वस्यैव निश्चेतुमशक्यत्वात् । ननु ज्ञानस्य स्वतः स्फुरणं भवतु, तत्प्रामाण्यं तद्गतगुणत्वादिवदन्यत एवावगम्यतामिति चेन्न। तस्यादित एव प्रमाणत्वेनास्फुरणे तद्विषये निःशङ्कप्रवृत्त्यनुपपत्तेः । नहि ज्ञानमात्रेण प्रवृत्तिः संभवति, मरुमरीचिकादौ सत्यपि विज्ञाने तदप्रामाण्यनिश्चये प्रवृत्त्यदर्शनात्।

न चाप्रामाण्यास्फुरणे प्रामाण्यप्रत्ययमन्तराऽपि ज्ञानमात्रात्कुतो न प्रवृत्तिरिति वाच्यम् । प्रामाण्याप्रामाण्ययोरुभयोरस्फुरणे संशयात्प्रवृत्त्यनुपपत्तेः। अस्ति चानभ्यासदशायां नवघनस्थलीस्थितेषु फलितसहकारादिषु तत्फलप्रेप्सोर्निःशङ्कप्रवृत्तिः। पारलौकिकफलसाधनेषु निःशङ्कप्रवृत्तिर्नैयायिकादिभिः प्रामाण्यनिश्चयपरतन्त्रैवोपेयते। न च कृष्यादौ संशयेऽपि प्रवृत्तिर्भवतीति वाच्यम; तत्र निःशङ्कप्रवृत्तेरभावात्। तस्मात् प्रामाण्यनिश्चयाधीनैव प्रवृत्तिरुपेतव्या, अन्यथा प्रामाण्यानिश्चयान्निवृत्तिरपि सम्भवत्येव । तस्मात्पूर्वोक्तप्रवृत्तिसिद्धये स्वत एव प्रामाण्यं प्रमाणानामनिच्छताप्यङ्गीकार्यम् । अत एव फलेऽपि स्वतस्त्वमेव ज्ञेयाभिव्यक्तिलक्षणस्य फलस्य ज्ञानमात्रादेव सिद्धेः।

न्यायकणिकायां वाचस्पतिमिश्रास्तु—"ननु बाधकारणदोषाभ्यामप्रामाण्यज्ञानात् तदभावग्रहापेक्षप्रामाण्यनिश्चयेन न स्वतः प्रामाण्यमिति चेन्न। एकहेतुत्वकल्पनायां कार्योत्पत्तावनेकहेतुत्वकल्पनानुपपत्तेः। बाधस्य कारणदोषग्रहणस्य चाप्रामाण्यनिश्चयहेतुभावमात्रेण प्रामाण्योपहन्तृत्वेन तदभावे बोधमात्रादेव प्रामाण्योपपत्तौ न तदभावोऽपेक्षणीयः। स च सत्यामाशङ्कायाम्। सा च यादृशे विषये दृष्टचरी तादृशे एव न सर्वत्र! तस्मात्स्वत एव प्रमाणानां प्रामाण्यम्, वह्नेर्दहनसामर्थ्यवत् । तदेव चोक्तम् भट्टपादैः—

'स्वतः सर्वप्रमाणानां प्रामाण्यमिति गृह्यताम्।'

इत्यादिना ।

नन्वव्यभिचाराग्रहे ज्ञानमात्रादनाश्वासप्रसंग इति चेत्; कोऽयमनाश्वासो नाम? संशयः, आहोस्विद् अज्ञानम्? न चरमः बोधस्यैव जातत्वात्। न प्रथमः विशेषस्मृत्यपेक्षविमर्शं त्रिकारणं पञ्चकारणं वा संशयं रोचयन्ते 'समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्धिव्यवस्थातश्च विशेषापेक्षो विमर्शः संशय' इति तद्विशेषज्ञाः! न चागृहीते विशेषे न स्मरणसंभवः, न वा संशयात्मैतद्ग्रहणं स्मृतिहेतुः, स्मृतौ सत्यां तदभावात्, तस्मिंश्च स्मृत्युपपत्तेरन्योग्याश्रयप्रसंगात्। संस्कारजत्वेऽपि प्रसंगतादवस्थ्यात्। अनादितायाश्च गत्यन्तरसम्भवेऽनाश्रयणात्। तस्मान्नाव्यभिचारनिश्चयो ज्ञानस्य स्वार्थनिश्चयनिमित्तम्, तस्योत्पत्तौ तदपेक्षत्वात्। यत्स्वरूपोपत्तौ यदपेक्ष्यते, न तत्तस्य हेतुः, यथाऽनुमेयविज्ञानं लिङ्गविज्ञानस्य। न चासिद्धताहेतुः, स्वार्थनिश्चयापेक्षम् तदव्यभिचारविज्ञानमिति कार्यात्प्राग्भावित्वे कारणत्वं व्याप्तम्, तद्विपक्षविरुद्धोपलब्ध्या वर्तमानं कारणत्वमपि व्यावर्तयति इति प्रतिबन्धसिद्धिः। अर्थप्रापणशक्तिरपि तस्यार्थप्रदर्शनान् नान्या। नहि ज्ञानमात्मीयहस्ते वस्तूपनयति, अपि तु तत्र प्रवर्तयति ज्ञातारम्। प्रवर्तनमपि तस्य न वस्तुतत्त्वोपदर्शनादन्यत्। अर्थस्य वस्तुतत्त्वमपि न स्वरूपादन्यत्। तच्चास्य रूपमनुभवः स्वभावत एवानुभवति न पुनरव्यभिचाराद्यपेक्षते। तदिदमेवानुभवस्याऽर्थे स्वतःप्रामाण्यम्।

यदनुभूयमानाद्रूपात् अर्थस्यान्यथात्वं न तदनुभवत्यनुभवो रजतभ्रमेण तदन्यथात्वग्रहणे रजतार्थिनस्तत्राप्रवृत्तेर्बाधकानुपपत्तेश्च। ततश्च ज्ञानान्तरावसेयमन्यथात्वं तेन तत्रान्यदपेक्षत इति तदेवास्य परतोऽप्रामाण्यम्। यत्पुनरस्य तत्त्वावबोधरूपत्वं विज्ञानस्य तदपि तद्ग्राहिणः प्रत्ययान्तरान्मानसादानुमानिकाद्वावगम्यमानं स्वत इत्युच्यते, तत्स्वरूपग्राहिणः प्रत्ययात्प्रत्ययान्तरानपेक्षणात्। न चास्य बाधकाशङ्कायामप्रामाण्यमाशङ्कनीयम्, बाधानर्हे तदाशङ्कानुपपत्तेः।

नैयायिकादयस्तु—ज्ञानञ्च स्वविषयोचितव्यवहारप्रवर्तनेऽव्यभिचारितामपेक्षते। न हि विज्ञानं विज्ञानमित्येव व्यवहारं प्रवर्तयति, मिथ्या-

ज्ञानादपि तत्प्रसङ्गात् । तस्मान्मिथ्याज्ञानव्यावृत्तमस्य संवादकत्वमर्थक्रियाप्रापणसामर्थ्यमव्यभिचारितालक्षणं प्रेक्षावत्प्रवृत्त्यङ्गमिति निगदन्ति ।

तच्च द्विविधम्—प्रत्यक्षज्ञानमर्थक्रियासाधननिभासकं प्रमाणमभ्यासदशापन्नं तद्विपरीतञ्च । तत्र विपरीतस्यार्थक्रियानिर्माणविज्ञानात्प्रामाण्यमभ्युपगन्तव्यम् । तदर्थनान्तरीयकार्थान्तरदर्शनादभ्यासदशापन्नात् यथाराद्वह्निर्विज्ञानस्य, वह्निकिंशुकनिचयसंशयेन तिरोहितप्रामाण्यस्य, धूमादिदर्शनात् प्रामाण्यनिश्चयः अर्थक्रियानिभासस्य, ज्ञानस्यागृहीतप्रामाण्यस्य न प्रवर्तकविज्ञानप्रामाण्यनिश्चायकत्वम् । गृहीतप्रामाण्यस्य वा तन्निश्चायकत्वेऽनवस्थाप्रसङ्ग इति चेन्न । अर्थक्रियानिर्भासस्य ज्ञानस्य स्वरूपेणेष्यमाणतया फलत्वेनाप्रवर्तकतया प्रमाणलक्षणायोगितया व्यभिचारनिश्चयस्यानुपयोगात्, तद्रूपस्य स्वसंवेदनसिद्धस्य शङ्काऽनास्पदत्वात् । तदाहुः—

> "अर्थक्रियासुखाद्यात्मज्ञानमेव तथाविधम् ।
> प्रमाणलक्षणायोगि स्वतोऽधिगतशक्तिकम् ॥"

न च यद्यर्थक्रियानिर्भासाद् विज्ञानाद् व्यभिचारनिश्चयो निश्चिताव्यभिचारात् प्रवर्तकविज्ञानाच्चार्थक्रियानिर्भासविज्ञानमित्यन्योन्याश्रयतेति वाच्यम्; प्रेक्षावत्प्रवृत्तिद्वैविध्येन तददोषात् । प्रथमा प्रवर्तकविज्ञानपरीक्षार्था, अपरा परीक्षितेन साधननिभासस्य विज्ञानस्य तज्जातीयाद्विज्ञानादर्थक्रियाप्राप्त्यर्था । यथा कृषीवलस्य कर्परस्थितायां मृत्तिकायां कृषिपरिकर्मितायां बीजावपनलक्षणा प्रवृत्तिराद्या बीजपरीक्षार्था, स तु तत्राङ्कुरोत्पादादवगतबीजतत्त्वः सस्याधिगमकाम्यया तज्जातीयबीजावपनस्वरूपाम् द्वितीयां प्रवृत्तिमारभते परिकर्मितायां भुवि, तथेयमपि प्रवृत्तिद्वयीति नान्योन्याश्रयः । न चात्र प्रेक्षावत्त्वव्याघातः; परीक्षोपाये प्रवर्तमानस्यानुपाये संदिग्धोपाये वाऽप्रवृत्तेः । प्रवर्ततां वोपायसंदेहादपि तथापि न प्रेक्षावत्त्वव्याघातः, अर्थसंशयस्य प्रेक्षावत्प्रवृत्त्यङ्गत्वादनर्थसंशयस्य चाप्रवृत्त्यङ्गत्वात् ।

अभ्यासदशापन्नस्य तु प्रत्यक्षस्य प्रापितार्थक्रियाज्ञानसाधर्म्यादनुमानात् प्रामाण्यविनिश्चयः। अनुमानस्य तु नान्तरीयकार्थदर्शनजन्यतया निश्चिताव्यभिचारस्य स्वत एव प्रामाण्यनिश्चयः। प्रामाण्यपरतत्त्वसमर्थने वार्तिकतात्पर्ये—'अर्थप्रतीत्यधीना तु प्रवृत्तिर्नार्थावधारणाधीना, अर्थसन्देहादपि प्रेक्षावतां प्रवृत्तिः।' नो खलूपायताविनिश्चयेनापि प्रवर्त्तमानाऽनागतफले न संदिहते। तदमी संदिहाना अपि प्रवर्तमाना प्रवृत्तिसामर्थ्यात् प्रमाणस्य सामर्थ्यं निश्चित्य तज्जातीयत्वेन लिङ्गेन प्रामाण्यावधारणादर्थविनिश्चयेन प्रवर्तन्ते। एवञ्च दृष्टार्थमंत्रायुर्वेदप्रामाण्यं प्रवृत्तिसामर्थ्येनावधार्यं तज्जातीयस्यादृष्टार्थस्य वेदस्य विनापि प्रवृत्तिसामर्थ्यं प्रामाण्यावधारणमाप्तत्वेन निवेदयिष्यते।

फलज्ञानं न परीक्ष्यते, पिपासोस्तोयज्ञानेन तत्र प्रवृत्तिर्भवति, १ प्रवृत्तस्य तदाप्तिः, आप्तस्य पानम्, पानेन पिपासोपशान्तिः। तावतैव तुष्टो भवति पिपासुः, न पिपासोपशान्तिं परीक्षते, तस्य यादृशतादृशस्यापीष्टत्वादिति।

वाचस्पतिमिश्रास्तु—'फलज्ञानमपि अभ्यासदशापन्नतया तज्जातीयत्वेन लिङ्गेनावधारिताव्यभिचारमेव, एवं तत्पूर्वं तत्पूर्वतरं तत्पूर्वतमम्। न च सम्प्रतिपन्नस्य फलज्ञानस्य प्रामाण्यावधारणायेदानीमेव पूर्वस्य फलज्ञानस्य प्रामाण्यावधारणे सति अनवस्थेति वाच्यम्; पूर्वतरसाधारण्येन पूर्वतरस्य पूर्वमेवावधृतप्रमाण एव पूर्वतमत्वात् साधर्म्येण पूर्वतरस्य, तत्पूर्वसाधर्म्येण पूर्वतमस्य इत्येतावतैव परिहारः:" तदेतदसङ्गतम्; अर्थक्रियानिर्भासस्य एव विज्ञानस्य विज्ञातस्यार्थाव्यभिचारस्य स्वार्थे विनिश्चायकत्वस्य दुर्धरत्वात्। तदेतदपि मीमांसकमतरीत्या वाचस्पतिमिश्रैः न्यायकणिकायां प्रपञ्चितम्। तथाहि—स्वप्ने कामुकस्य स्वोचितार्थं कामिनीविज्ञानं तदनन्तरं प्रवृत्तिविज्ञानमथ संभोगविज्ञानमनन्तरं सुखं चरमधातुविसर्गश्च। तत्राद्यस्य कामिनीविज्ञानस्यास्तु प्रामाण्यम्, तत्रार्थक्रियानिर्भासस्य विज्ञानस्य सत्त्वात्। ततः परं तस्य भावात्, जागरे च तदर्थक्रियाकारिणः कामिनीरूपस्य बाधात्, सुखचरमधातुविसर्गयोश्च मनोमात्रयोनितया कामिन्या-

मसत्यामपि तज्ज्ञानमात्रादुत्पादनाज्जागरेऽनुवृत्तेरविरोधात् । अन्यथा कामिनीवस्तुसाध्याधरपल्लवादिनखक्षतादिवद्व्यावृत्तिप्रसङ्गादयमदोष इति चेन्न । प्रकृतेऽर्थक्रियानिर्भासस्य ज्ञानस्याव्यभिचारित्वाग्रहेणार्थक्रियाया अनिश्चयेन प्रवर्तकस्य ज्ञानस्यार्थक्रियासमर्थवस्तुपरिप्रापणलक्षणप्रामाण्यानिश्चये स्वप्नविज्ञानसाम्यात् । न चार्थक्रियानिर्भासं ज्ञानं स्वतःप्रमाणमर्थक्रियानिश्चयात्मकत्वात् । न च स्वप्नादौ प्रसङ्गः, तत्रावस्थान्तरे पुरुषान्तरे कालान्तरे वा बाधकोत्पादादप्रामाण्यादिति तत्प्रवर्तकेष्वपि ज्ञानेषु समत्वादन्यत्राभिनिवेशात् । अव्यभिचारित्वं नाम ज्ञानस्यार्थेन सह नियतः सम्बन्धः । न च तदर्थग्रहणादृते शक्याध्यवसानम् । न खल्वगृहीतवह्निः धूमस्य तदव्यभिचारमवधारयितुमर्हति । न खल्वप्रामाण्येन गृहीतप्रामाण्येन वा प्रमाणेन विषयीकृतो धूमकेतुर्धूमाव्यभिचारग्रहणाय कल्पते । तस्मादव्यभिचारग्रहणमन्तरेण नार्थग्रहणम्, नचार्थग्रहणमन्तरेणाव्यभिचारग्रहणमिति परस्पराश्रयता । तथा दृष्टसामर्थ्यसाम्यानुमानेनाऽभ्यासदशापन्नप्रत्यक्षज्ञानानां स्वार्थाव्यभिचारग्रहणमपास्तम् ।

यदपि चानुमानस्य स्वतःप्रामाण्यमुक्तम्, तस्मिन् दर्शने प्रत्यक्षस्य स्वार्थाव्यभिचारग्रहणादुक्तेन क्रमेण तत्पूर्वकत्वानुमानस्योदय एव दुर्घटः, कुतोऽस्य प्रामाण्यं, कुतश्च स्वतस्त्वम् ? परतस्त्वसाधकानुमानानां व्यभिचारश्च स्वतस्त्वाभिमतेषु प्रमाणेषु तथैवान्येषामपि स्वतस्त्वं किं न स्यादिति पर्यनुयोगापत्तेश्च । तस्मात्प्रमाणानां स्वत एव प्रमाणताऽभ्युपेतव्या । कानिचिद्विज्ञानानि स्वस्थेन्द्रियस्वान्तस्य पुंसः स्फीतालोकमध्यवर्तिप्रमेयविषयाणि, यत्र न मनागपि बाधा दृष्टचरी, कथं तत्र बाधाहेता प्रयत्नेनानुसरन्नपि नापादयत्यन्यबाधां, तदौत्सर्गिकमस्य प्रामाण्यमविहितमनपेक्षमवतिष्ठते, यदि पश्येत्ततस्तदपोहितमिति नान्यत्र तदुत्प्रेक्षितव्यम् । यदा यत्र निपुणेन प्रतिपत्रा प्रयत्नवताऽपि नापाद्यते कारणदोषबाधादिकम्, तदा तत्र स्वाभाविकप्रामाण्यमविहितमनपेक्षमेवावतिष्ठते । यद्यपलभ्येत बाधादिकं तदा तदपोहितमिति नान्यत्र तदुत्प्रेक्षितव्यम् । तस्माद् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।

"अर्थान्यथात्वहेतूत्थदोषज्ञानादपोह्यते ।
द्वावेव निन्दितौ लोके निराशङ्कातिशङ्किनौ ॥
एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः ।
अर्थ्यते तावदेकं यः स्वतःप्रामाण्यमश्नुते ॥
उत्प्रेक्ष्यते हि यो मोहादज्ञातमपि बाधकम् ।
स सर्वव्यवहारेषु संशयात्मा क्षयं व्रजेत् ॥"

अत्रेदमाकूतम्—नैयायिकादयस्तु वेदस्येश्वरप्रणीतत्वेनेश्वरस्य चाप्तत्वेन प्रामाण्यमभ्युपयान्ति । परमन्यैस्तु स्वातन्त्र्याद् वेदे प्रामाण्यमेव नास्तीत्युच्यते । प्रत्यक्षाद्यगतार्थत्वात् स्वर्गयागादिसम्बन्धविषया चोदना बुद्धादिवाक्यवन्मृषा, आप्ताप्रणीतत्वेन बालोन्मत्तादिवाक्यवच्चाप्रामाण्यं वेदस्योच्यते । वाक्यत्वेनापि हेतुना पुरुषोक्तिवत् नराधीनप्रामाण्यायाश्चोदनाया अपि वक्तृगुणाधीनत्वेन प्रामाण्यं पुरुषदोषेण चाप्रामाण्यम् । प्रत्ययोत्पादकत्वेऽपि यथा बुद्धादिवाक्यानां प्रामाण्यं नास्ति, तथैव वेदवाक्यस्यापि प्रामाण्यं नास्तीति ।

स्वतोऽसतामसाध्यत्वेन द्वयमपि स्वत एवेति साङ्ख्याः । नैयायिकादयस्तु प्रामाण्याप्रामाण्ययोर्ज्ञानं साधारण्यान्न किञ्चित् निर्धारयितुं शक्नोतीति गुणवता दोषवता च कारणेनोत्पन्नस्य यथार्थस्वरूपं प्रामाण्यमयथार्थस्वरूपमप्रामाण्यञ्च निर्णीयते । प्रामाण्यमप्रामाण्यञ्च स्वत एवेति पक्षो न क्षोदक्षमः, विरोधात् । ज्ञानोत्पत्तिवेलायामेव प्रामाण्यमप्रामाण्यञ्च निर्णेतव्यम् । तच्चाशक्यम्; तद्द्वयमपि परत इत्यपि न सम्भवति; ज्ञानस्य स्वतो निःस्वभावत्वापत्तेः । अतः यथैकस्य ज्ञानस्य स्वतो निःस्वभावत्वापत्तेः । अतः यथैकस्य ज्ञानस्य कारणान्तरानपेक्षस्य स्वत एव प्रामाण्यमप्रामाण्यञ्चात्यन्तविपरीतत्वात् न सम्भवति, तथैव ज्ञानस्य निःस्वभावत्वापत्त्या तद्द्वयमपि परत इति नोपपद्यते । एकस्य हि विरुद्धरूपासम्भवात् । विज्ञानव्यक्तिभेदेन प्रामाण्यमप्रामाण्यञ्च स्यात् तदा त्वविरोध एव । तथापि यदि ज्ञानत्वातिरिक्तं किञ्चिच्चिह्नं भवेत् तदा त्वीदृशं प्रमाणमीदृशमप्रमाणमिति व्यवस्था सम्भवति, न तदभावेऽपि । तदधीननिरूपणत्वे तु प्रामाण्याप्रामाण्ये परतस्त्वमेव न स्वतस्त्वम् ।

अतो बौद्धैः प्रमाणानां स्वाभाविकमप्रमाणत्वं, परापेक्षञ्च प्रमाणत्वमुपेयते । अप्रामाण्यमवस्तुत्वात् न कारणदोषादिकमपेक्षते । प्रामाण्यन्तु वस्तुत्वात् कारणगुणादिकमपेक्षत एव । यदि प्रामाण्यं स्वाभाविकमप्रामाण्यमेव परापेक्षं भवेत्, तदा तु स्वप्नादिबोधेऽपि प्रामाण्यमापत्स्यते । बौद्धपक्षे तु कारणाभावात् स्वप्नादिज्ञानस्य नास्ति प्रामाण्यम् । पक्षेऽस्मिन्न वस्तुनोऽप्रामाण्यस्य हेतुमत्त्वप्रसङ्गोऽपि न भविष्यति इन्द्रियादिगुणा प्रामाण्यस्य कारणम् । तदभावादप्रामाण्यम् । गुणाभावस्तु द्विधा भवति । शुक्तिरजतादिसंवेदने सत्त्वेऽपीन्द्रियाणां दुष्टत्वाद् दोषनिराकृतत्वात् गुणानामभावः । स्वप्नादिज्ञानहेतूनामिन्द्रियादीनामन्यतरस्याप्यभावाद् आश्रयाभावाद् गुणाभावः । दोषनिराकृतगुणत्वेन शुक्तिरजतादिज्ञानस्याप्रामाण्यदर्शनात् दोषस्याप्रामाण्यकारणत्वभ्रम एव । विद्यमानेनार्थेनेन्द्रियाणां सन्निकर्षात् पुरुषस्य प्रत्यक्षबुद्धिर्जायते । धर्मस्य च भाव्यत्वेनाविद्यमानत्वात् विद्यमानोपलम्भनस्य प्रत्यक्षस्य धर्मे न प्रामाण्यम् । चोदनायाः शब्दात्मकत्वात्, शब्दस्य चात्यन्तासत्यप्यर्थेअतीतानागनादौ ज्ञानजनकत्वेन प्रामाण्यादविद्यमानेऽपि धर्मे शब्दस्य प्रामाण्यमव्याहतम् । द्रव्यगुणक्रियादीनां धर्मत्वं यद्यपि संस्थापितमेव, तथापि श्रेयःसाधनत्वेन रूपेण द्रव्यगुणादीनां धर्मता । तस्मान्नेन्द्रियगोचरो धर्मः । लोके प्रमाणान्तरदृष्टमेवार्थं शब्दो बोधयति । तथा चाधिगतगन्तृत्वेन स्मृतिवदप्रामाण्यमेव तस्य । यथा च सत्यपि ज्ञाने प्रतिभादेर्यथा प्रामाण्यं नास्ति, तथैवासम्भावितप्रमाणान्तरमूलकत्वेन वेदस्य नास्त्येव प्रामाण्यम् ।

वस्तुतो दोषाद् गुणाभावो विज्ञायते । गुणाभावाच्च प्रामाण्यमनवगम्यमानं स्वाभाविकस्याप्रामाण्यस्य नापवादकं भवति । तथा चानपोहिताप्रमाणतैवावतिष्ठते । तस्माद्धेतुशुद्धिरेव ज्ञानप्रामाण्यकारणम् । हेतुशुद्धिविरहेण स्वाभाविकमप्रामाण्यम् । अन्वयव्यतिरेकाभ्यां दोषस्याप्रामाण्यकारणत्वं नास्ति । कारणाभावहेतुकेऽज्ञानेऽप्रामाण्यस्य दोषानधीनत्वात्, संशयाज्ञानविपर्ययैरप्रामाण्यस्य त्रैविध्याभ्युपगमात् ।

एवं ज्ञानस्य गुणापेक्षत्वेन प्रामाण्ये पुरुषशुद्ध्यधीनमेव शब्दस्य प्रामाण्यमायाति। वेदस्यापौरुषेयत्वे निराश्रयत्वेन शुद्ध्यभावः। पौरुषेयत्वे चातीन्द्रियार्थे पुरुषस्य शुद्ध्यसम्भवः। ततो वेदस्याप्रामाण्यमेव। स्वतो द्वयमित्यस्य पक्षस्य साङ्कर्यादेव प्रामाण्यानिर्णयादप्रामाण्यमेव। परतो द्वयमित्यत्रापि गुणाभावादेवाप्रामाण्यम्।

मीमांसकास्तु—सर्वप्रमाणानां स्वत एव प्रामाण्यमभ्युपगच्छन्ति। 'नासतो विद्यते भावः' इति रीत्या स्वतोऽसतः साधनसहस्रैरपि सत्त्वासम्भवात्। तथा च यदि ज्ञानस्य स्वविषयतथात्वावबोधने शक्तिर्न भवेत्तदा नान्येनापि तत्संभवः। तथात्वे च कस्यचिदर्थावधारणसम्भवेन जगदान्ध्यप्रसङ्गः। यदुच्यते गुणावधारणात्प्रामाण्यावधारणमिति तन्न; गुणावधारणस्यापि अन्यायत्तत्वात्, तदनुपलम्भाच्च। न च वैमल्यमेव गुण इति वाच्यम्; तस्य दोषाभावरूपत्वात्, तस्य चापौरुषेये वेदेऽपि सम्भवाच्च। तथा च गुणाधीनेऽपि प्रामाण्ये न क्षतिः।

ननु गुणनिमित्तमेव ज्ञानस्य यथार्थविषयत्वमिति कारणभूतगुणावगमेन विषयस्य तथात्वमवगम्यते। ज्ञानस्य विषयतथात्वमेव हि प्रामाण्यमिति चेन्न। गुणनिमित्तस्य यथार्थत्वे गुणरहिताद्दोषसहिताच्च चक्षुरादेः पीतशङ्खादिज्ञाने उपजाते शङ्खांशेऽपि अयथार्थत्वापातात्। न चेष्टापत्तिः; शङ्खांशे बाधाभावेन यथार्थत्वाभ्युपगमात्। यदि च स्वकारणनिमित्तमेव ज्ञानस्य यथार्थत्वं तद्दोषनिमित्तञ्च ज्ञानस्यायथार्थत्वम्; तदा तु पीतशङ्खादिज्ञानस्य स्वकारणतः सत्यविषयत्वम्, तद्दोषतश्चासत्यविषयत्वमित्यदोषः।

वस्तुतस्तु सर्वेऽपि भावाः स्वरूपप्राप्त्यै स्वहेतुमपेक्षन्ते। घटो मृच्चक्रादिकं स्वरूपावाप्त्या एवापेक्षते, नोदकाहरणादौ। तथैव ज्ञानमपि स्वोद्भूत्यै एव गुणवदितरद्वा हेतुमपेक्षते, न तु स्वकार्यविषयतथात्वावधारणे। यदि ज्ञानमुपजातमपि स्वविषयतथात्वनिर्धारणाय गुणावधारणमपेक्षेत, तदा तस्यापि प्रमाणान्तरापेक्षापातः। गुणावधारणस्य प्रामाण्येऽनिर्धारिते संदिग्धप्रामाण्यस्य तस्यासत्समत्वात्। तत्प्रामाण्यनिर्धारकस्य ज्ञानस्याप्येवं स्वप्रामाण्याय प्रमाणान्तरापेक्षेत्य-

नवस्थैव स्यात् । स्वतःप्रमाणत्वे नैवं दोषः । न च स्वतःप्रामाण्यपक्षेऽप्य-पवादकदोषाभावग्रहणे भविष्यत्येवानवस्थेति वाच्यम् । ज्ञायमानानामेव दोषाणां प्रामाण्यविघातकत्वेन तदज्ञानादेव प्रामाण्यापवादकस्य मिथ्यात्वस्य निवृत्त्या तदर्थं दोषाभावस्यानपेक्षणात् तदज्ञानस्य चायत्नसिद्धत्वाद् बाधकज्ञानादिभिरवगतेनाप्रमाण्येन तदपोह्येत । तदुक्तम्—

'तस्माद् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोह्यते ॥"

ननु अप्रामाण्यमवस्तुत्वान्न दोषजन्यमिति चेन्न । संशयविपर्ययाज्ञानभेदेनाप्रामाण्यस्य त्रैविध्येनाद्ययोर्द्वयोरपि वस्तुरूपत्वात् । तथा च दोषान्वयव्यतिरेकानुविधानात् दोषनिमित्तमेव ज्ञानस्यायथार्थत्वम् । अर्थान्यथात्वज्ञानेन दोषेण वा तथात्वावबोधकत्वरूपं ज्ञानस्य स्वतः प्राप्तं प्रामाण्यमपोह्यते । अज्ञाने तु दोषाणां व्यापारो नापेक्षितः । ज्ञानकारणाभावादेव बौद्धानामिवास्माकमपि तत्सिद्धेः ।

ननु प्रामाण्यवदप्रामाण्यस्यापि परतस्त्वे कथं नानवस्थेति चेन्न । गुणज्ञानवत् दोषेषु तदप्रसङ्गात् । न परायत्तत्वमात्रेणानवस्था भवति, सजातीयापेक्षायामेव तत्प्रसङ्गात् । यदि प्रमाणान्तरायत्तप्रामाण्यवत् अप्रमाणान्तरायत्तमप्रामाण्यं स्यात्, तदा स्यादेवानवस्था । न चाप्रामाण्यमप्रमाणान्तरापेक्षं प्रमाणे भूतार्थान्यथात्वदोषज्ञानाधीनत्वात् । तस्य प्रामाण्यञ्च स्वत एवेति क्वाऽनवस्था ? यत्र शुक्तिरजतादौ नेदं रजतमित्यर्थान्यथात्वज्ञानं जायते, तत्र त्वर्थान्यथात्वरूपाऽप्रमाणता शीघ्रगम्यैवेति नानवस्थाशङ्काऽपि, तदपवादात्मनस्तस्य तद्बाधमन्तरानुत्पत्तेः । पूर्वं तु परस्याजातत्वात्तदबाधित्वैव जायते । तदुक्तम्—

"पूर्वं परमजातत्वादबाधित्वेन जायते ।
परस्यानन्यथोत्पादान्न त्वबाधेन सम्भवः ॥"

एतेन रजतज्ञानस्य ज्यायसः कनीयसा नेदं रजतमिति ज्ञानेन कथं बाधः, ज्यायसा कनीयस एव बाधौचित्यादित्यपास्तम् ।

अनपेक्षितस्य ज्यायस्त्वं बाध्यत्वे हेतुर्न बाधकत्वे इत्युक्तमेव ।

"पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम् ।
अन्योऽन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ।"

ततश्चात्र पूर्वस्य निरपेक्षत्वेऽपि पूर्वाबाधेनोत्पत्तिमेवानासादयतोत्तरेणेत्युक्तावस्थायामेवार्थान्यथात्वरूपाप्रामाण्यबोधनात् लाघवमेव।

नन्वेवं समानविषयेणार्थान्यथात्वज्ञानेन पूर्वस्य बाधेऽपि दोषज्ञानेन तु भिन्नविषयेण कथं पीतशङ्खज्ञानं बाध्यते ? यतोऽत्र पीतशङ्खज्ञानं शङ्खे पीतिमानमवगमयति, दोषज्ञानन्तु नेत्रे पित्तदोषमिति वाच्यम्। दुष्टकारणबोधे विषयभेदेन तादृशलाघवाभावेऽपि कारणदोषावगमप्रणाल्याऽऽर्थिकतुल्यताप्राप्त्या गोदोहनेन चमसस्येव बाधोपपत्तेः। यथा 'गोदोहनेन पशुकामस्य प्रणयेत्' इति पुरुषार्थेनापि गोदोहने क्रत्वर्थस्यापि चमसस्यार्थिकतुल्यविषयतया भवति बाधा, द्वयोरपि प्रणयनद्वारत्वात्। गोदोहनेन तत्साधने चमसस्यार्थान्निवृत्तिर्भवति, एवमत्राऽपि।

यद्यपि पित्तज्ञानं पित्तं गृह्णाति, पित्तञ्च श्वेते पीतभ्रमस्य कारणतयाऽवगते चक्षुषि दृश्यमानं स्वकार्यस्य पीतज्ञानस्य भ्रान्तत्वमवगमयति। भ्रान्तत्वेन चार्थान्यथात्वमिति बाधसिद्धिः। तथापि नाऽयमुत्सर्गो यदाऽऽद्यस्य द्वितीयेन बाधः। किन्तु द्वितीये बाधज्ञाने यदि तृतीयं बाधकज्ञानं दोषान्तरज्ञानञ्च न भवेत्, तदैवैषा गतिः। तदुद्भवे तु द्वितीयस्य मिथ्यात्वादाद्यस्यैव तद्बाधकत्वेन प्रामाण्यम्।

न चैवं तृतीयज्ञानाधीनमाद्यस्य प्रामाण्यमिति परायत्तमेव प्रामाण्यमिति वाच्यम्। तस्योत्पत्तित एवार्थमवबोधयतः स्वत एव प्रामाण्यात्। द्वितीयेन दोषज्ञानेन तदपवादः प्रसक्तः। तृतीयेन द्वितीये बाधिते सति अज्ञातदोषत्वात् अनपवाद एव।

ननु यथाऽऽद्यस्य द्वितीयेन दोषोऽवगतस्तस्यापि तृतीयेन, तथा तृतीयस्याप्यन्येन दोषाऽवगमसंभवान्न क्वचिदाश्वास इति चेन्न। भावानवबोधात्। तथाहि—यदा जाग्रद्दशायां स्वस्थेन्द्रियमनस्कस्य स्फीतप्रकाशमध्यवर्तिसन्निहितघटज्ञाने लोकप्रसिद्धमिथ्यात्वहेतवो दोषा नानुभूयन्ते, तदा दोषाशङ्काया अभावाद् अप्रामाण्यशङ्काऽपि न भवत्येव। यादृग्विधेषु हि अप्रामाण्यसंभवः, तत्रैव दोषाशङ्का, न सर्वत्र।

न हि ज्ञानत्वमात्रेण संशयः, तस्य साधारणधर्मादिनिश्चयाधीनत्वात्। तस्मात् अवश्यं कानिचित् ज्ञानानि अप्रमाणान्येवोत्पद्यन्ते, यत्र दूरत्वादिदोषसम्भवादप्रामाण्यशङ्का, तत्रापि प्रत्यासत्तिगमनादिनाऽन्यतरपदार्थनिर्णयात् नातिदूरगमनम्। तृतीयज्ञाने यदि दोषो न संभावितः, ततस्तदवधिरेव निर्णयः। यदि सम्भावितस्ततस्तन्निराकरणप्रयत्नेन चतुर्थज्ञानावसानो निर्णयः, नाधिकज्ञानापेक्षा।

तृतीयेन चतुर्थेन वा द्वितीयस्य तृतीयस्य वा बाधे आद्यस्य द्वितीयस्य वा यस्यैव प्रामाण्यं समर्थ्यते, तस्य स्वाभाविकं प्रामाण्यमनपोहितं भवति। इतरदपवादादप्रमाणमिति नानवस्था। तदुक्तम्—

"एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः।
प्रार्थ्यते तावतैवैकं स्वतःप्रामाण्यमश्नुते॥"

तत्र शब्दे वक्त्रधीन एव दोषोद्भवः, क्वचिद् गुणवद्वक्तृकत्वेन दोषाभावश्च। वेदस्य चापौरुषेयत्वात् पुरुषाभावेन निराश्रयत्वात् दोषाभावेनाऽनपोहितं स्वतः प्रामाण्यमेव।

न च वक्तृगुणान्वयव्यतिरेकानुविधायित्वात् शब्दस्य गुणाधीनमेव प्रामाण्यमिति तदभावेन वेदस्याप्रामाण्यमेवेति वाच्यम्। प्रमाणानां परायत्तप्रामाण्यस्य निराकृतत्वेन प्रामाण्यस्वतस्त्वसाधनात्, अन्वयव्यतिरेकयोश्च दोषाभावेन गतार्थत्वाच्च प्रमाणभूतपौरुषेयवचस्सु न केवलं गुणा दृष्टाः किन्तु दोषाभावोऽपि दृष्टः। दोषाभावनिबन्धनत्वेन प्रामाण्यस्य वेदेऽपि सुलभत्वात्।

न चैवमपि प्रामाण्यपरतस्त्वमेवायातम्, तस्यापवादाभाव एवोपयोगित्वात्। गुणेभ्यो दोषाभावादप्रामाण्यद्वयाभावः, ततश्चानपोहितं स्वतःप्रामाण्यमेव तिष्ठति। यत्र साक्षाद्विपरीतबोधकज्ञानादर्थान्यथात्वमवगम्यते, यत्र च दोषज्ञानेनोभयत्रापि ज्ञानस्यायथार्थत्वे दोषा एव कारणम्, दोषाभावेन तद्द्वयासत्त्वेनोत्सर्गस्यानपवाद एव सिद्ध्यति। अपवादाभावे प्रत्ययोत्पत्तिहेतुत्वात् प्रत्यक्षादिवत् पौरुषेयवाक्यस्यापि प्रामाण्यं प्राप्तम्, तन्नापनीयते। एवं पौरुषेयवाक्यस्यापि स्वतःप्रामाण्ये सिद्धेऽपौरुषेये वेदे तु सुतरां स्वतःप्रामाण्यम्।

ननु दोषाभावस्य गुणाधीनत्वे पुनरपि सैव स्थितिरिति चेन्न। प्रामाण्यावधारणे गुणानां ज्ञायमानत्वेन कारणत्वेऽनवस्थासम्भवेऽपि दोषाभावस्य सत्तामात्रेणापकारित्वेन तदसम्भवात्। गुणनिराकृतदोषा औत्सर्गिकं प्रामाण्यं नोपघ्नन्तीति क्वानवस्थावकाशः? वेदे तु वक्त्रभावादपवादनिर्मुक्तिस्ततोऽपि लघीयसी, तेन तत्रापवादशङ्काऽपि नोदेति।

एवं लोकेऽपि शब्दप्रामाण्यस्य वक्त्रपेक्षाभावेन वेदप्रामाण्यसिद्ध्यर्थं कर्तृकल्पनमनावश्यकम्। शाक्यादिवत् अप्रामाण्ये कल्पयितव्ये एव कर्तृकल्पना युक्ता। यच्चोक्तमाप्तप्रणीतत्वेन, बालोन्मत्तादिवाक्यवदप्रामाण्यमेवेति चेन्न। प्रामाण्यस्वतस्त्वसिद्धेः। न च तर्हि पौरुषेयेऽपि वाक्ये प्रमाणान्तरापेक्षाऽनपेक्षणीयेति वाच्यम्; तथात्वेऽप्रमाणमूलतया दुष्टमूलत्वेन प्रामाण्यापवादापातात्। वेदे त्वपौरुषेयत्वेनाप्रमाणमूलत्वाशङ्काया अभावेन तदयोगात्। वेदे प्रमाणान्तरमूलाभावो भूषणमेव, न दूषणम्। प्रमाणान्तरविषयत्वेनानधिगतगन्तृत्वाभावेनानुवादकत्वापत्तेः।

ननु प्रत्यक्षादीनां पौरुषेयवाक्यानाञ्च प्रमाणान्तरसंवादनिबन्धनमेव प्रामाण्यम्; अतो वेदस्यापि तथात्वमेवेति चेन्न। प्रमाणान्तरसंगतिरूपसंवादस्य प्रामाण्यविरोधित्वेन तद्धेतुत्वानुपपत्तेः। यत्रैकस्मिन्नर्थेऽनेकप्रमाणसन्निपातस्तत्र तेषामन्योन्यनिरपेक्षार्थावबोधहेतुत्वेन तुल्यानामेव प्रामाण्यम्, न समुच्चितानाम्। अतः प्रमाणान्तरमूलत्वेनानुवादत्वापत्त्या नो संवादाधीनं प्रामाण्यम्।

ननु चैकमेव वस्तु दूरात् दृष्ट्वाऽपि पुनः प्रमित्सयैव प्रत्यासीदन्तो दृश्यन्ते। तदेतत्पूर्वस्य नैरपेक्ष्ये नोपपद्यते। अतः संवादापेक्षमेव प्रामाण्यमिति चेन्न। अप्रमितिविशेषप्रमित्सयैव प्रत्यासत्त्युपपत्तेः। तदुक्तम्—

"यत्रापि स्यात्परिच्छेदः प्रमाणैरुत्तरैः पुनः।
नूनं तत्रापि पूर्वेण सोऽर्थो नावधृतस्तथा॥"

यदि हि उत्तरोत्तरप्रमाणसंवादेन पूर्वपूर्वप्रमाणानां प्रामाण्यं भवेत्, तदानवस्थानात् न क्वचिद् व्यवस्था स्यात्।

ननु च विषयज्ञानस्यार्थक्रियाज्ञानाधीनं प्रामाण्यम्; तच्च स्वत एवेति नानवस्था। तदुक्तं धर्मकीर्तिना--

"प्रमाणमविसंवादिज्ञानमर्थक्रियास्थितिः ।"

नैयायिकैरप्युक्तम्--'प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणम्।" फलज्ञानं न परीक्ष्यते, पिपासोस्तोयज्ञानेन प्रवृत्तिः, ततस्तोयप्राप्तिः, प्राप्तस्य पानम्, पानेन पिपासोपशान्तिः। सा च न परीक्ष्यते, अपरीक्षितस्यापि फलस्येष्टत्वादिति चेन्न। विषयज्ञानार्थक्रियाज्ञानयोर्विशेषाभावात्। तथा च यद्येकस्य स्वतःप्रामाण्यं तर्हि विषयज्ञानस्य स्वतः प्रामाण्ये कः प्रद्वेषः ? किञ्च यदि संवादाधीनं प्रामाण्यं भवेत्, तदा श्रोत्रजन्यबुद्धेरप्रामाण्यमेव स्यात्, प्रमाणान्तरासङ्गतेः। यद्यन्येन श्रोत्रजन्यज्ञानेन संवादसिद्धिः, तर्हि तादृशसंवादस्तु वेदेऽपि सम्भवत्येव, शतकृत्वः समुच्चारणजन्यनानाज्ञानानां संवादसंभवात् साधनान्तरजन्यबुद्धिसंवादाभावस्तूभयत्र समान एव। तथा च गुणसंवादार्थक्रियाज्ञानादीनामपेक्षाभावात् स्वत एव प्रामाण्यं ज्ञानस्य।

यत्तूक्तं क्वचिदाप्तप्रणीतस्य वाक्यस्य प्रामाण्यं न दृष्टमिति वेदस्यापि तत्कथमिति। तन्न; अनुमानसाध्ये विषय एव दृष्टान्तापेक्षत्वेऽपि प्रामाण्यस्यानुमानानपेक्षत्वेन दृष्टान्तानपेक्षणात्। प्रामाण्यस्यानुमानापेक्षत्वे तस्याप्येवं तस्याऽप्येवमित्यनवस्था प्रसज्येत। प्रामाण्यस्यानुमानसाध्यत्वे सर्वेषामपि प्रमाणानां प्रामाण्यस्य तथात्वापत्तेश्च।

ननु प्रामाण्यस्यान्यानपेक्षत्वे स्वतस्त्वे च प्रत्यक्षादिप्रमाणमुत्पद्यमानमेव प्रमाणमित्येव गृह्येत। न च तत्तदाऽऽत्मानं गृह्णाति। न चागृहीतप्रामाण्येन व्यवहारसिद्धिरिति चेन्न। आत्मग्रहणमन्तरैव सत्तामात्रेण स्वकार्यक्षमत्वात्, प्रमाणेनार्थप्रतिपत्तावन्यानपेक्षणात्। तन्मात्रनिबन्धनस्य व्यवहारस्यापि तत एव निष्पत्तेश्च। नैरपेक्ष्येण कृतकार्यस्य त्वसत्यां जिज्ञासायां पश्चात् प्रत्ययान्तरैरवबोधात्। ज्ञानस्य ज्ञायमानत्वं न तत्प्रामाण्योपयोगि। कथं तदज्ञाने तत्प्रामाण्यग्रहणमिति चेद् इत्थम्—नहि ज्ञानसंबंधित्वेन प्रामाण्यं गृह्यते किन्तु विषये तथात्वमेव तद्विज्ञानस्य प्रामाण्यम्। विषयतथात्वनिबन्धनात् ज्ञाने प्रमा-

णबुद्धिशब्दयोः । तच्चाज्ञातादेव ज्ञानात् स्वत एव गृहीतमित्यनर्थकं प्रमाणान्तरम् । अप्रमाणं तु न स्वीयमप्रामाण्यं स्वतो गमयति, तस्यापि स्वरूपेणैव स्वानुरूपार्थग्राहकत्वात् । रजतज्ञानं हि शुक्तिशकलं रजतमित्येव गृह्णाति । न पुनर्नेदं रजतमिति, तेनाप्रमाणज्ञानमपि स्वतःप्रमाण्यमेवात्मनोऽविद्यमानमपि गृह्णत्तन्निबन्धनं तद्व्यवहारमपि प्रवर्तयति । अत एव तत्राप्रामाण्यग्रहणाय व्यवहारनिवृत्तये च परापेक्षाऽस्त्येव । यतोऽर्थान्यथात्वरूपमप्रामाण्यं ज्ञानस्यार्थतथात्ववत् न स्वतो गृह्यते ।

नन्वेवं वेदस्यापि परत एव प्रामाण्यमनुमानादिभिरर्थान्यथात्वबोधसम्भवादिति चेन्न । अर्थान्यथात्वकारणदोषबुद्धेरेवाप्रामाण्यकारणत्वेन तदतिरिक्तानुमानादीनामनपेक्षणात् । न च तद्बुद्धेःप्रामाण्याय कारणान्तरापेक्षा, बुद्धेः प्रामाण्यस्वतस्त्वप्रतिपादितत्वात् । यत्रापि ज्ञानमिथ्यात्वं परेभ्योऽवगम्यते, तत्र पूर्वोक्तकारणद्वयमेव वक्तव्यम् । न यत्किञ्चित्साधर्म्यमात्रम् । न चानुमानेन चोदनादिवेदार्थान्यथाभावः परिकल्पयितुं शक्यते । अनुमानस्यागमविरुद्धत्वेनाभासमानयोगक्षेमत्वात् । न चानुमानेन बाधादागमस्यैव मिथ्यात्वमिति वाच्यम्; अन्योन्याश्रयदोषप्रसङ्गात् । तथाहि—सिद्धे मिथ्यात्वेऽनुमानम्, तस्मिंश्च सति बाधात् मिथ्यात्वमित्यन्योन्याश्रयः । न च यथाऽनुमानादन्यद्बाधकं नास्ति, तथैवागमादन्यत् साधकमपि आगमार्थस्य नास्तीति कथं वेदार्थसद्भावोऽपीति वाच्यम्; भावानवबोधात् । नानुमानसद्भावमङ्गीकृत्यैव बाधकान्तराभावादागमार्थमिथ्यात्वासिद्धिरुच्यते, किन्त्वनुमानमेव नोदेतीत्युच्यते । साधकस्त्वागमो विद्यत एव ।

न चैकेन मानेन गृहीतस्यान्यैरगृहीतत्वेनाभावो भवति । तथात्वे जिह्वादिगृहीतानां नेत्राद्यगृहीतत्वे रसादीनामभावापत्तेः । तदुक्तम्—

"न चाऽन्यैरग्रहेऽर्थस्य स्यादभावो रसादिवत् ।
तेषां जिह्वादिभिर्यस्मान्नियमो ग्रहणेऽस्ति हि ॥"

ननु चोदनाप्रामाण्यमसिद्धमिति कुतस्त्योऽनुमानबाध इति । तन्न; त्वन्मते चोदनाप्रामाण्यासिद्धावपि वैदिकानां तत्सिद्धेर्निष्प्रत्यूहत्वात् ।

तत्रापि वेदादसंदिग्धाविपर्यस्तार्थबुद्धेर्निष्पन्नत्वेन प्रामाण्यासिद्धेरभावाच्च। द्वेषादसिद्धयुक्त्याऽपि न तदप्रामाण्यम्। न चात्मेच्छाद्वेषादिभिरप्रामाण्यं वक्तुं युक्तम्; अग्निदाहादिदुःखप्रत्यक्षस्याप्रामाण्यापादनासंभवात्। अभिलषितस्य ज्ञानस्याभिलाषविषयत्वमात्रे प्रामाण्यानुपपत्तेश्च। तस्मादालोकवत् वेदेन सर्वसाधारण्येन संदिग्धाविपर्यस्तार्थावबोधजननात् स्वाभाविकमेव प्रामाण्यम्।

यदुक्तम् 'वेदार्थो दुर्बोधः लोके प्रमाणान्तरपरिच्छेद्यत्वाद्वाक्यार्थस्य तदवगमोपायत्वं शब्दानां योजयितुं शक्यते। वेदार्थस्त्वतीन्द्रियः। न च रागादिमतां तद्दर्शनकौशलमस्ति। अत एव तद्दर्शिनां वृद्धव्यवहारादिना व्युत्पत्तिरपि न सम्भवति। न च वेदे 'वृद्धिरादैजि'ति पाणिनिरिव हस्तः, करः, पाणिरिति, अभिधानमालाकार इव एषोऽस्य मामकस्य शब्दस्यार्थ इत्युपदेशोऽस्ति। तदुक्तं धर्मकीर्तिना—

'स्वयं रागादिमानर्थं वेत्ति चेत्तस्य नान्यतः।
न वेदयति वेदोऽपि वेदार्थस्य कुतो गतिः?'

यदि निगम-निरुक्तव्याकरणवशेन तदर्थकल्पना क्रियते तर्हि नानामतित्वादुपदेश्यानामनेकार्थत्वाच्च नाम्नामुपसर्गनिपातानाञ्च न नियतः कश्चनार्थः, अन्यथा तत्कल्पनासम्भवाच्च। तदप्युक्तं तेनैव 'तेनाग्निहोत्रं जुहुयात्स्वर्गकाम' इति श्रुतौ खादेच्छ्वमांसमित्येष नार्थ इत्यत्र का प्रमा।' इति, तदपि तुच्छम्, य एव लौकिकाः शब्दास्तदर्थाश्च त एव वैदिकाः शब्दास्तदर्थाश्चेति सिद्धान्तानभिज्ञानात्। तथाहि नाभिनवाः केचन वैदिकाः शब्दाः वाक्यरचनामात्रं तु वेदे भिद्यते। वेदश्च तदर्थाश्च तदवगमश्च तदुपायश्च तदनुष्ठानञ्च नाद्यत्वे प्रवृत्तानि किन्तु मीमांसकानां मते तान्यनादीनि, नैयायिकादीनां मते तु सर्गात्प्रभृति प्रवृत्तानि, कस्तेष्वद्य पर्यनुयोगावसरः? तेन पूर्वोक्तपारम्पर्यसहकृतेषु निरुक्तव्याकरणमीमांसादिशास्त्रेषु सत्सु कुतो वेदार्थावगमे विप्रतिपत्तिरपि।

रागादिमानपि 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इति वाक्यादग्निहोत्राख्यं कर्म स्वर्गसाधनमिति जानात्येव। द्वेषादपि नान्यथार्थं प्रत्येतं कश्चनापि शक्नोति। धर्मकीर्तिना तु 'खादेच्छ्वमांस' मित्याद्यपभाषणेन

वेदनिन्दैव कृता। तत्पातकेनैव चीनादिदेशीयेषु बौद्धेषु श्वमांसाशित्वं जातमिति। तस्मात्—

"शक्तिग्रहादिभिस्तैस्तैर्बोधोपायैः सुनिश्चितैः।
लोके यथा तथा वेदे शब्दार्थावगतिः सदा॥
रागादिमानपि प्राज्ञः शब्दार्थं वेद निश्चितम्।
द्वेषादपि विरुद्धार्थं न कर्तुं प्रभवेत्ततः॥
पारम्पर्यसमायातमर्थं त्यक्त्वा प्रमादतः।
वेदनिन्दा कृता तेन बौद्धास्ते कुक्कुरादिनः॥
पारम्पर्यसमुच्छित्त्या ह्यन्यथार्थप्रसाधनम्।
यदीष्टं प्रभवेत्तेषां बुद्धमन्तोऽपि गालिदः॥'

यदपि च 'यदि रागादिराहित्येन जैमिन्यादीनां वेदार्थज्ञता तदा बुद्धादीनां रागादिराहित्येन सर्वज्ञता किं न स्यात्? यदि बुद्धादिषु रागादिराहित्यं न सम्भवति तदा जैमिन्यादिषु तत्कथं सम्भाव्येत?' तदपि न रागादिसत्त्वेऽपि वेदार्थज्ञत्वसम्भवात्। नहि रागादयः कम्बलादिवदावरका विज्ञानस्य, किन्तु तदाक्षिप्तमना विविधविषय-तृष्णापरिप्लुतो न शक्नोति भावयितुमिति भावनादरमात्र एव रागादि-विरहोपयोगः। वेदार्थज्ञानस्य वेदप्रमाणमूलत्वेन सम्भवेऽपि सर्वज्ञानस्य प्रमाणाभावान्न सम्भवः। शब्दार्थज्ञानाय शब्द एवापेक्षितो न भावनादिः, अन्यथा भावनाविधिज्ञानायापि भावनापेक्षायामन्योन्योन्याश्रयादयो दोषा अपरिहार्या एव स्युः। तेन रागादिमतोऽतीन्द्रियेऽर्थे प्रत्यक्षास-म्भवेपि वाक्यार्थज्ञाने बाधासम्भवात्।

नन्वेवं बौद्धवाक्यादपि ज्ञानोत्पत्तेः तस्यापि वेदवत् प्रामाण्य-मिति चेन्न। अतीन्द्रियेऽर्थे पुरुषस्य दर्शनाशक्त्या भ्रान्तिविप्रलम्भ-मूलतया तद्वाक्यस्य दुष्टत्वेनौत्सर्गिकस्यापि प्रामाण्यस्य तत्रा-पवादात्। वेदस्य त्वपौरुषेयत्वात् तत्राप्रामाण्यशङ्काऽपि नोदेति। न च वेदस्य किमिति कर्त्ता नाङ्गक्रियत इति वाच्यम्; कल्पना-गौरवात्। तथाहि—सम्यक्त्ववादिनो वेदानां प्रामाण्याय महाजन-

परिग्रहं वर्णयन्ति । अन्ये स्वागमानाम् । तदिदं सर्वमप्रमाणमेव । नैतत्सर्वं मीमांसकैः कल्प्यते वेद प्रामाण्याय ।

"दृष्टादधिकं न किञ्चिददृष्टं परिकल्प्यते ।"

अपौरुषेयत्वेन नित्यनिर्दोषस्यासंदिग्धाविपर्यस्ताबाधितज्ञान-जनकस्य वेदस्याप्रामाण्यशङ्काया नास्त्यवकाशः । दोषसंशयात् प्रामाण्य-संशयः, दोषनिश्चयाच्चाप्रामाण्यनिश्चयः । यथा चक्षुरादीनां प्रमाजनकत्वं स्वाभाविकम्, यथैव शब्दस्यापि स्वाभाविकमेव तत् । अत एव 'स्वर्गकामो यजेत' इति वेदवाक्येन विदितपदतदर्थ-शाब्दन्यायसतत्त्वस्य यागात् स्वर्गो भवतीत्यसंदिग्धमेव गम्यते । भवति स्वर्गो न वा ?, न भवत्येवेति संशयविपर्ययादिकमनेन न भवत्येव । तदुक्तं शबरस्वामिना – "यो हि जनित्वा प्रध्वंसते नैतदेवमिति स मिथ्याप्रत्ययः । न चैष कालान्तरे पुरुषान्तरेऽवस्थान्तरे देशान्तरे वा विपर्येति ।"

ननु तर्हि बुद्धादिवाक्यस्यापि प्रमाजनकत्वस्वाभाव्याद् भवतु प्रामाण्यमिति चेन्न । तस्य पुरुषबुद्धिप्रभवत्वेन पुरुषाश्रित-भ्रमविप्रलम्भादिदोषसङ्घासम्भवेन अलौकिकेऽर्थेऽप्रामाण्यात् । आप्तवचनस्य सम्भवत्प्रमाणमूलकस्य च वाक्यस्य प्रामाण्येऽपि अतथाभूतस्याप्रामाण्यनिश्चयात् ।

नन्वेवं सम्यङ्मूलसापेक्षत्वेन प्रामाण्यस्य गुणापेक्षत्वमेवेति न प्रामाण्यस्वतस्त्वसिद्धिरिति चेन्न । अपवादभूताप्रामाण्यनिवृत्त्यर्थमेव गुणद्वारा दोषाभाववर्णनात् । अनाप्तेऽनृतवादिनि शक्येऽर्थे यद्यपि प्रमातृत्वशक्तिर्भवति, तथाप्यनाश्वासात् तत्राप्रामाण्यबुद्धिर्भवति । एवं सत्यवादिन्यपि अशक्येऽर्थे प्रमातुं शक्तिर्नास्तीति हेतोर-प्रामाण्यम् । अप्रामाण्यञ्चात्र मूलदोषादेव । न ह्यतीन्द्रियेऽर्थेऽपौरुषेय-वैदिकवाक्यमन्तरेणावगतिः सम्भवति । तथा च 'स्वर्गकामश्चैत्यं वन्देत', सर्वं शून्यम्' इत्यादीनि बौद्धवाक्यान्यसम्भवन्मूलकत्वेना-प्रमाणान्येव । यच्चोपदेष्टृत्वेन मन्वादिवत् वक्तव्यार्थज्ञानवत्त्वं बुद्धादिष्वपि कल्पनीयमित्युक्तम् तन्न; बालोन्मत्तादीनामपि

तद्दर्शनेन, व्यामोहमूलकत्वेनाप्युपदेष्टृत्वसम्भवेन बुद्धोक्तेः प्रामाण्यायोगात् । मन्वादीनां वेदमनुसृत्यातीन्द्रियार्थोपदेष्टृत्वसम्भवेऽपि वेदमपलपतो बुद्धादेस्तदसम्भवात् ।

यत्तु बुद्धादेः सर्वज्ञत्वेन अतीन्द्रियार्थोपदेष्टृत्वं सम्भवतीत्युक्तम् । तदप्यकिञ्चित्करम्; षड्भिः प्रमाणैःसर्वज्ञश्चेन्न विरोधः । यज्जातीयैः प्रमाणैर्यज्जातीयार्थदर्शनं भवति, तद्भवत्येव । एकेन तु प्रमाणेन सर्वज्ञतासमर्थने चक्षुषा रसादिप्रतिपत्तिरपि प्रसज्येत ।

यत्तु योगजसामर्थ्येन साम्प्रतिकयन्त्रादिसाचिव्येन च सर्वज्ञता समर्थ्यते । तदपि तुच्छम्; सामर्थ्यातिशयस्य स्वविषय एव कार्यातिशयकरत्वेनाविषये तदयोगात् । तदुक्तं भट्टपादैः—

"यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् ।

दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता ॥"—इति ।

योगजादिसामर्थ्यैरपि न रूपे श्रोत्रप्रवृत्तिर्भवति, किन्तु व्यवहितविप्रकृष्टदेशस्य शब्दादेः श्रवणं सम्भवति, चक्षुषा च दूरस्थसूक्ष्मरूपादिदर्शनं सम्पद्यते । अत एवाद्यत्वेऽपि प्रमातृभेदेन सातिशयं प्रत्यक्षमुपलभ्यते । केचिदतिदूरमतिसूक्ष्मञ्च पश्यन्ति । ज्ञानमपि लौकिकं शास्त्रीयं च सातिशयं दृश्यते । एतेन कस्यचिद् बुद्धादेर्ज्ञानमत्यन्तातिशयितं सर्वविषयकमपि कथं न भवेदित्यपास्तम् । स्वविषये दूरसूक्ष्मादिदर्शन एव सामर्थ्यातिशय उपयुज्यते, न तदतिलङ्घनेन । न ह्यतिशयितमपि श्रोत्रं रूपे प्रवर्तते, नेत्रादयो वा शब्दे प्रवर्तन्त इति पार्थसारथिमिश्राः ।

यत्तूक्तं प्रत्यक्षस्य न विषयनियमोऽस्ति, रूपवतां घटादीनामरूपवतां रूपादीनां दूरसूक्ष्माणाञ्च प्रत्यक्षदर्शनादिति बुद्धादेः सर्वविषयज्ञानवत्त्वं कुतो न स्यादिति तन्न; प्रत्यक्षस्य वर्तमानविषयत्वनियमात् । ततश्च भविष्यति धर्मे प्रत्यक्षस्य न प्रवृत्तिर्नितरां सर्वविषयेषु । ज्ञानस्याप्यस्ति विषयनियमः, यत्रास्य कारणं सम्भवति, तत्रैव प्रवर्तते, नान्यत्र । ज्ञानकारणमिन्द्रियलिङ्गादि, इन्द्रियं वर्तमानविषयमिति तज्जन्यं ज्ञानमपि वर्तमानविषयमेव । न धर्माधर्मेषु नापि सर्वार्थेषु प्रवर्तते । लिङ्गादिर-

हिततयाऽनुमानमपि न प्रवर्तते । अतो नानुमानादिभिरपि सर्वस-त्त्वसिद्धिः ।

लौकायतिकैस्तु—सर्वज्ञत्वकल्पनावदेव अपौरुषेयत्वकल्पनाऽपि निष्प्रामाणिकैवोच्यते । तेनैवोच्यते—

"सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः ।
निराकरणवच्छक्त्या न चासीदिति कल्पना ॥"
'अतीतः कालः सर्वज्ञशून्यः, कालत्वादद्यत्ववत् ।'

न वाऽऽगमो बुद्धादिसर्वज्ञत्वसिद्धौ प्रमाणम् । सिद्धे सर्वज्ञे तदाग-मस्य प्रामाण्यम्, तत्प्रामाण्ये च सर्वज्ञत्वसिद्धिरित्यन्योन्याश्रयात् । पुरुषान्तरप्रणीतस्य तु मूलान्तरासम्भवात् न सर्वज्ञसद्भावे प्रामाण्यम् ।

यत्तूक्तम्—"नित्यागमगम्यः सर्वज्ञः" इति तन्न; तदभावात् । न च 'यः सर्वज्ञः स सर्ववित्' इति नित्यागमोऽस्त्येवेति वाच्यम्; तस्या-र्थवादरूपत्वेन तत्र तात्पर्याभावात् । बुद्धादिसर्वज्ञत्वबोधपरत्वेऽनि-त्यबोधकत्वेनागमस्याप्यनित्यत्वापत्तेः । किञ्च यद्यागमनित्यत्वमिष्यते, तर्हि सर्वज्ञकल्पना व्यर्थैव । येन नित्येनागमेन सर्वज्ञो बोद्ध्यते तेनैव धर्माधर्मबोधो भवतु, किं सर्वज्ञकल्पनया ? यतः सर्वज्ञत्वेनाभिमता बुद्धादयोऽधर्ममेव प्रतिपादयन्ति । कैश्चित्तु इन्द्रियार्थसंबंधविषये सर्वं क्षणिकं संस्कृतमित्यादि सत्यवचनं दृष्ट्वा श्रद्धेयेऽर्थे धर्मे चैत्यवन्दना-दिवाक्यमपि तद्वचनात्प्रमाणमूलमित्युच्यते । तदुक्तम्—

"कीटसंख्यापरिज्ञानं तस्य नः क्वोपयुज्यते ।
दूरं पश्यतु मा वाऽसौ तत्त्वमिष्टं तु पश्यति ॥'—इति ।

तदप्यपेशलम्; क्षणिकादिवाक्यस्यापि बाधसिद्ध्या चैत्यवन्दनादि वाक्यस्य सुतरां बाधोपपत्तेः । वस्तुतस्तु चैत्यवन्दनादिबुद्धवाक्यम्, अप्रमाणम्, अलौकिकार्थत्वे सति पुंवाक्यत्वात्, उन्मत्तवाक्यवत् इत्यनुमानेन बुद्ध वाक्यानां प्रामाण्याभावः सिद्ध्यति ।

यत्तूक्तं बुद्धेनैव सर्वज्ञोऽस्मीत्युक्तमिति । तदप्यसत्; बुद्धोऽसर्वज्ञ इत्यन्यैरुक्तत्वात् । वस्तुतस्तु एवमनृतमुद्धतञ्च बुद्धो वदतीति न सम्भाव्येत । यत्तु बुद्धः सर्वज्ञ इत्यस्ति लौकिकानामविच्छिन्ना स्मृतिः,

तेन तदानीन्तनैर्बुद्धस्य सर्वज्ञत्वं प्रमितमिति कल्प्यत इति। तदपि तुच्छम्; विप्रलिप्सया बुद्धेनागमः प्रणीत इति पुराणादिस्मृतिविगानात्। सर्वज्ञत्वस्मरणस्य चासम्भवन्मूलत्वात् शिष्टैरपरिग्रहाच्च। न च बुद्धस्य सर्वज्ञत्वे किञ्चित् प्रमाणमस्ति। सर्वविषयज्ञानरहितैस्तस्य ज्ञातुमशक्यत्वात्। यदि तु बुद्धस्य सर्वज्ञत्वज्ञानार्थमन्योऽपि सर्वज्ञः कल्प्यते, ततस्तेनैव प्रकारेणान्यान्यसर्वज्ञकल्पनायामनवस्थापातः। तदुक्तम्—

"य एव स्यादसर्वज्ञः स सर्वज्ञं न बुद्ध्यते।
सर्वज्ञोऽनवबुद्धश्च येनैव स्यान्न तं प्रति।
तद्वाक्यानां प्रमाणत्वं मूलाज्ञानेन वाक्यवत्॥"

किञ्च—रागद्वेषादिरहितो निर्व्यापारः शून्यनिष्ठो बुद्ध आसीदिति बुद्धैरभिप्रेयते। तादृशस्य प्रक्षीणरागद्वेषस्य बुद्धस्य लाभपूजाख्यातिरागनिमित्तं स्वयूथ्यस्य निमित्तं वा न सम्भवत्यागमप्रणयनम्! निर्व्यापारस्य च तस्य निर्विकल्पेन प्रत्यक्षेण विश्वं प्रत्यक्षयतः विकल्पमूलिका देशनाऽपि न सम्भवत्येवेति तदन्यप्रणीत एव बौद्धागमः।

यत्तु तत्सान्निध्यमात्रतश्चिन्तामणेरेव कुड्यादिभ्योऽपि देशना निःसरन्तीति। तत्तु श्रद्धाजडस्यैव शोभते। कुड्यादिनिःसृतासु देशनासु बुद्धप्रणीतत्वानिर्णयेन प्रामाण्यासम्भवात्। विप्रलम्भकैः पिशाचादिभिरपि विप्रलम्भार्थं तादृक् देशनाप्रकाशसम्भवात्।

यत्तूक्तम् 'स्वभावादेव तत्तदिन्द्रियाद्यनपेक्षमेव पुरुषः सर्वं वेत्ति। देहावृतस्तु इन्द्रियादिद्वारेण किञ्चिदेव जानाति। विगलितदेहस्य तु स्वाभाविकं सार्वज्ञमभिव्यज्यते" इति। तदप्यपेशलम्; इन्द्रियाद्यनपेक्षस्य जीवस्य सूक्ष्मातीतादिसर्वविषयं ज्ञानं भवतीत्यत्र तदागममन्तराऽन्यस्य प्रमाणस्यासत्त्वात्। तदागमस्य प्रमाणत्वे सर्वज्ञत्वसिद्धिः। सर्वज्ञत्वसिद्धौ तदागमप्रामाण्यमित्यन्योन्याश्रयः। अपि च विगलितशरीरस्याशरीरस्य ताल्वादिरहितस्य कथमागमप्रणयनम्? सशरीरस्यासर्वज्ञत्वेन तत्प्रणीतागमस्य च कथं

प्रामाण्यम् ? यदि तादृक् कश्चन मुक्तः सर्वज्ञोऽद्यत्वे दृश्येत, ततोऽन्योऽपि सम्भाव्येत । एवमेव प्रजापतेः प्रथममार्षज्ञानेनैव वेदोऽवबुद्धो भवतीत्यपि न विचारसहम्; अनुच्चरितशब्दज्ञानमपि सर्वज्ञज्ञानवत् धर्माधर्मविज्ञानवच्च कारणमेव; तत्रापि तेन कृतो वा नित्यसिद्ध एव प्राप्तो वेत्यनाश्वासस्यैवाप्रामाण्यकारणत्वसम्भवात् । न च तद्वचनात् विश्रम्भसम्भवः; अद्यत्ववत् तदानीमपि पुरुषाणामनृतवादित्वसम्भवात् ।

अयमागमप्रतिभासः स्वप्नादिवत् आकस्मिको निर्निमित्तश्चाप्रमाणश्च भवतीत्यविश्रम्भ एव । अस्मिन् पक्षे बहून्यदृष्टानि कल्पनीयानि । अनुच्चारितशब्दग्रहणसामर्थ्यवतोऽसाधारणपुरुषस्य कल्पनम् । तथैवागमनित्यतां कल्पयित्वा जन्मान्तरानुभवनिबन्धनं तत्स्मरणकल्पनं गौरवास्पदम् । कथं हि द्विपरार्द्धपरिमितं प्रलयकालमतीत्य एतावान् ग्रन्थराशिः मात्रयाऽपि अन्यूनानतिरिक्तः स्मर्तुं शक्येतापि ? यदि चैवं नित्यागमस्य जन्मान्तरानुभवजन्यस्मरणविषयत्वं सम्भवति, तर्हि बुद्धादेर्धर्मविषयस्मृत्यभ्युपगमे को विरोधः ? यद्यनुच्चरितशब्द ग्रहणं सम्भवति, तर्हि धर्माधर्माद्यर्थग्रहणे का बाधा ?

यत्तूच्यते शब्दस्यैन्द्रियकत्वाद् ग्राह्यत्वाद् ग्राह्यत्वम्, धर्माधर्मादेस्त्वतीन्द्रियत्वात् अग्राह्यत्वमिति तन्न; अनुच्चरितशब्दस्यापि अतीन्द्रियत्वात् । अपि च धर्माधर्मादिग्रहणवादिनां नये पुमान् स्वतन्त्र एवाभिप्रेतः । अतः तत्प्रत्ययात् अर्थनिश्चयो युक्तः । नित्यागमग्रहणवादिनां तु प्रजापत्यादिपुरुषाः धर्माधर्मग्रहणेऽपि वेदपरतन्त्राः । स्वरूपसिद्धयेऽपि तत्परतन्त्रः इति न कस्यचित्स्वातन्त्र्यम् । न च पूर्वमीमांसकनयेऽपि पूर्वपूर्वपुरुषाधीनमुत्तरोत्तरपुरुषाणां वेदस्वरूपनिर्द्धारणमिति समानमेव पारतन्त्र्यमिति वाच्यम्; भावानवबोधात् । तथाहि—एकपुरुषाधीनत्वे कृतकत्वाशङ्कया यथावद् दृष्टो विप्लवो वा जात इति संशयात् न स्वातन्त्र्येणागमस्य प्रामाण्यं सम्भवति । अनेकपुरुषस्थले तु नैष दोषः; जन्मान्तरानुभूतस्य दीर्घकालव्यवहितत्वेन स्मर्तुमशक्यत्वेन-

कृत्वैव वेदं श्रद्धार्थं स्मृतमुपदिशतीति शङ्कया तत्राविश्रम्भः। एकस्मिन्नेव जन्मनि बहुशोऽनुभूय स्मर्यमाणे तु नायमपि दोष इति न स्वातन्त्र्यहानिः। एकस्य प्रतिभाने तु कृतकत्वाशङ्कया सम्भवत्येव पारतन्त्र्यम्। अत एव सम्प्रदाये बहवः पुमांसोऽभिप्रेयन्ते। ततो- यथा वेदानां कर्ता कश्चन नास्ति, तथैवैकः कश्चन सम्प्रदायप्रवर्तकोऽपि नास्ति; तथात्वे कृतकत्वसंशयापत्तेः। तत्तादन्यकुरानबाइबिलादिग्रन्थानुयायिभिरपि ग्रन्थकर्तुः सम्प्रदायप्रवर्तकत्वमेवोच्यत इति तद्वैलक्षण्यमेव वेदस्य स्यात्। बहुषु पुरुषेषु सम्प्रदायस्याद्यत्ववत् पूर्वकालेऽपि विद्यमानत्वेन न शङ्कावकाशः। यथाऽद्यत्वे सर्वे पूर्वपूर्वपुरुषेभ्यो वेदमधीयाना दृश्यन्ते, न कर्तारः, कालान्तरेऽपि तथात्वाङ्गीकारेण न दृष्टहानिर्न वाऽदृष्टकल्पना, कर्तुस्तद्दोषाणां चासत्त्वात् स्वाभाविकमेव वेदानां प्रामाण्यम्। तत एवानुमानिकबाधोऽपि आभाससमानयोगक्षेम एव।

यत्तूपदेशित्वान्यथानुपपत्त्या मन्वादिवत् बुद्धादेरपि ज्ञानवत्त्वोपपत्तिरिति। तदप्यकिञ्चित्करम्; बालोन्मत्तादौ व्यभिचारात्। वेदान् ज्ञात्वोपदेशश्चेत्; सिद्धसाधनमेव, मन्वादेस्तथात्वाभ्युपगमात्। बुद्धोपदेशस्य च वेदासिद्धत्वान्न तत्र वेदजन्यज्ञानवत्त्वमप्यभ्युपगन्तुं शक्यते। पुरुषवचनादर्थनिश्चये जातेऽपि प्रत्यक्षादिनिश्चयवत् मूलदोषावगमे बाध्यत एवेति तदप्रामाण्यम्। वेदस्यानपेक्षितत्वेन स्वत एव प्रामाण्यम्। पुरुषस्तु अन्यथा संविदानोऽप्यन्यथा विवक्षति, अत एव पौरुषेयवचनात् तन्मूलप्रत्ययो नावधारयितुं शक्यः।

वाक्यरचनायां ज्ञानापेक्षया विवक्षा प्रत्यासन्ना भवति। भ्रान्तस्य त्वन्यविवक्षायामन्यद्वाक्यं दृश्यते। तथा च यदि वाक्यानुरूपविवक्षाऽपि निश्चेतुं न पार्यते तदा वाक्यानुरूपं ज्ञानकल्पनं तु दूरापास्तम्। ततो यथाविवक्षं यथाज्ञानं वाक्यं प्रवर्तत इति वक्तुं न शक्यते, तथाप्याप्तवाक्येषु वक्तृज्ञानपूर्वकत्वं निश्चेतुं शक्यते। ततोऽन्यत्र भ्रमविप्लवादिसम्भवः। तथा च

पौरुषेयवाक्यानां सामान्येन मूलज्ञानावधारणशक्तिर्भवति, अनाप्त-वाक्यानां तदशक्तिश्च । तत एव केषाञ्चित्प्रामाण्यमप्रामाण्यञ्चान्येषाम् ।

ननु तर्हि कथं वाचकत्वविरहिताद् वाक्यात् तज्ज्ञानमवगम्यत इति चेन्न । ज्ञानावधारणस्यानुमानिकत्वेन बाधाभावात् । पदपदार्थ-रचनाधीनाहि वाक्यार्थप्रत्ययाः । उक्तरचना च विवक्षाधीना । सा च ज्ञानाधीनाऽन्वयव्यतिरेकाभ्यामेतदवगम्येत ।

यद्यपि पौरुषेयवाक्यादर्थनिश्चयो भवति, तथापि तत्प्रामाण्यं वक्तृज्ञानमुखेनैव भवति । तत एवाप्तोक्तकारी पर्यनुयुक्तः सन् आप्तमेव निर्दिशति । न चैवमर्थमनवबोधयतः शब्दस्य वाचकत्व-मेव न स्यात् । न चानवगतबोधकत्वानां लोके वेदे वा बोधकत्वं सम्भवति, ततो वेदप्रामाण्यमपि दुर्घटमिति वाच्यम्; वक्तृज्ञाना-न्तरितत्वेन शब्दानामुदासीनत्वात् । वक्तृज्ञानस्यैव तत्र प्रामाण्य-प्रयोजकत्वात् । वाक्यात्पूर्वमर्थप्रतीतौ सत्यामपि तत्प्रतिष्ठाया वक्तृज्ञानान्तरितत्वात् यावत्तन्नावगतं भवेत्, तावदुत्पन्नस्यापि निश्चयस्यासत्समत्वात् शब्दा उदासीना इव भवन्ति । वक्तृज्ञाने-ऽवधारिते तु शब्दैः पूर्वसञ्जातमपि अर्थे प्रामाण्यं पुनः प्रतिष्ठाप्यते । वाक्यस्य पुरुषबुद्धिप्रभवत्वेन तद्दोषेण दोषसम्भवात् संशयो जायते । मूलज्ञानस्य सम्यक्त्वे तु संशयनिवृत्तौ निश्चयः प्रतिष्ठितो भवति । यद्यपि वक्तृज्ञानमर्थज्ञानगम्यमेवेत्यर्थज्ञानं वक्तृज्ञानात्पूर्वमेव भवति, तथापि तत्प्रामाण्यनिर्णये वक्तृज्ञानस्यैव पूर्वभावत्वम् । एवं पौरुषेयेषु वाक्येषु पुरुषबुद्धिनिमित्तत्वात् अप्रामाण्यं युज्यते । वेदे तु वक्तुरभावात् वक्तृबुद्ध्यनपेक्षत्वात् स्वत एव प्रामाण्यम् ।

यत्तु अनाप्तवचनवत् वचनत्वेन वेदस्याप्यप्रामाण्यं शङ्क्येत । तदपि न क्षोदक्षमम्; लौकिकवाक्यस्याप्रामाण्यं दोषनिमित्तं न वाक्यत्वहेतु-कत्वम् । प्रत्यक्षस्य भूतार्थविषयकत्वेन भव्यस्य धर्मादेर्न तद्विषयत्व-

सम्भवः । इन्द्रियाद्यगम्यभूतभविष्यदाद्यर्थबोधकत्वं शब्दस्यैव सम्भवति । तदुक्तम्—

'अत्यन्तासत्यपि ह्यर्थे शब्दो ज्ञानं करोति हि ।' इति ।

ननु वेदो यदि पौरुषेयस्तर्हि प्रत्यक्षाद्यनवगतधर्मादिबोधकत्वेनासम्भवन्मूलकत्वेन बुद्धादिवाक्यवत् तस्याप्यप्रामाण्यमेव । अपौरुषेयश्चेत् प्रामाण्यहेतुभूताप्तोच्चरितत्वाभावेन सुतरां तस्याप्रामाण्यमिति चेन्न । ज्ञानस्य प्रामाण्यस्वतस्त्वाभ्युपगमेन प्रामाण्यकारणानपेक्षत्वेनापौरुषेयत्वे दोषाभावात् । अप्रमाण्यं तु कारणाधीनम् । तच्च ज्ञानानुत्पत्तिः, उत्पन्नस्य ज्ञानस्य संशयाद्यात्मकता, उत्तरकाले बाधकप्रत्ययान्तरोत्पत्तिः, करणे दोषवत्त्वाज्ञानञ्च । प्रकृते वेदस्य कर्तृस्मरणाभावादियुक्तिभिरपौरुषेयत्वसिद्ध्या न कारणदोषज्ञानं शक्यशङ्कम्; "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादिवाक्यैरग्निहोत्रहोमात् स्वर्गो भवति इति ज्ञानमुत्पद्यत एव । न चैभिः संशयाद्यात्मकं ज्ञानमुत्पद्यते । अग्निहोत्रहोमात् स्वर्गो न भवतीति बाधकज्ञानमपि कस्यापि न भवत्येव । अग्निहोत्रहोमात् स्वर्गो न भवतीति न हि केनापि प्रमातुं शक्यते । येन प्रमाणेन लौकिकसाध्यसाधनभावो ज्ञायते, तेनैव तदभावोऽपि । नहि चक्षुरन्तरा रूपाभावो ज्ञायते । तथा चाप्रामाण्यकारणत्वेन सम्भावितेष्विह कस्यापि अनुपलम्भादप्रामाण्यशङ्काया दूरापास्तत्वात् स्वतःसिद्धं प्रामाण्यमनपोहितमेव स्थितं भवति ।

ननु यथा चक्षुषो रूपोपलम्भहेतुत्वं रूपोपलम्भेन कार्येण सिद्ध्यति, एवं मनुबुद्धादेरुपदेशित्वरूपकार्येण वेदमन्तरापि धर्माधर्मज्ञानवत्त्वसिद्धिरिति चेन्न । वैदुष्योपदेशित्वयोः व्याप्त्यसिद्धेः । तथाहि—बालोन्मत्तादिष्वनवगतार्थेष्वप्युपदेशित्वं दृश्यत इति व्यभिचारः । मन्वादिवैदिकानान्तु वैदिकार्थज्ञानपूर्वकत्वमेवोपदेष्टृत्वमिति सिद्धसाधनम् ।

यत्तु सामान्यतो दृष्टं वितथमुपलभ्य वाक्यत्वसाम्येन वेदस्यापि वैतथ्यं शङ्क्यते । तदज्ञानविजृम्भितम्; वाक्यत्वस्याप्रामाण्याप्रयोजकत्वात् । पौरुषेयवाक्यस्य तु पुरुषाश्रितदोषादिभिरेवाप्रामाण्यम्,

न वाक्यत्वप्रयुक्तम् । वेदे तु संशयविपर्ययाजनकत्वात् बोधकत्वात् बाधकाभावाच्चानधिगतासंदिग्धाबाधितार्थविषयज्ञानजनकत्वदर्शनेन अप्रामाण्यकारणाभावात् स्वाभाविकं प्रामाण्यमेव ।

ननु 'वेदाः पौरुषेया वाक्यकदम्बरूपत्वात्, महाभारतादिवत्' इत्याद्यनुमानैर्वेदानां पौरुषेयत्वमेवेति चेन्न । स्मर्यमाणकर्तृकत्वस्योपाधित्वात्। पौरुषेयमहाभारतादिवाक्यं स्मर्यमाणकर्तृकमेव। न च तथा वेदे तत्साधयितुं शक्यते ।

नन्ववश्यं वाक्यानि केनचित्प्रणीतानि, तथैव शब्दानामर्थैः सम्बन्धोऽपि सकर्तृक एवाभ्युपेय इति चेन्न। कर्तुरनुपलम्भात्। यदि स्यात् कर्ता, प्रत्यक्षादिप्रमाणैरुपलभ्येत । यद्दर्शनयोग्यमुपलम्भसामग्रीसत्त्वेऽपि नोपलभ्यते, तन्नास्त्येवेति मन्तव्यम्; यथा—शशशृंगादिकम्। न च चिरवृत्तत्वात्कर्ता नोपलभ्यते, नासत्त्वादिति वाच्यम्; तथात्वेऽपि तत्स्मरणस्यावश्यकत्वात्। न हि चिरवृत्तोऽपि न स्मर्यते। तथा च वेदकर्तुः स्मरणाभावात् नास्त्येव कश्चिद्वेदकर्तेति प्रतीयते ।

ननु क्वचिदरण्यादिप्रदेशेषु कूपारामादीनां मुक्तकश्लोकानाञ्च सन्तोऽपि कर्तारो न स्मर्यन्ते, तथेहापि समयव्यवहारयोः कर्त्रस्मरणमुपपन्नमिति । तदसारम्; देशोत्साद-कुलोत्साद-सम्प्रदायविच्छेदादिभिः पूर्वोक्तकर्तॄणामस्मरणोपपत्तावप्यध्ययनाध्यापनतदर्थानुष्ठानशब्दार्थव्यवहारपारम्पर्यस्याविच्छेदेऽपि कर्तृविस्मरणानुपपत्तेः । अत एव प्रयोगः—"वेदाः अपौरुषेयाः, सम्प्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वादात्मवत्, व्यतिरेके भारतवत् ।"

न च घटकर्तृकुलालस्मरणवत् वेदतत्पदार्थसम्बन्धकर्तृस्मरणे व्यवहर्तॄणां निष्प्रयोजनमिति कर्तृविस्मरणमुपपद्यत एवेति वाच्यम्। वैषम्यात्;। तथाहि—निष्प्रयोजनत्वात् कुलालविस्मरणमुपपद्यते, न तु तथा वेदकर्त्रादिस्मरणं निष्प्रयोजनं व्यवहाराणां तदधीनत्वात्। नहि पाणिनेर्विस्मरणे आदैचां वृद्धिशब्देन व्यवहारः सम्भवति। तथा च यः पदपदार्थसम्बन्धं करोति, यश्च वेदं निर्माय तदध्ययनाध्यापनतदर्थयागोपासनज्ञानादिव्यवहारं प्रवर्तयति, न तस्य विस्मरणे व्यवहारः

सम्भवति। वाक्यादर्थप्रतिपत्तिः तदर्थानुष्ठानञ्च वाक्यकर्तुः तदाप्तत्वस्य च स्मरणमन्तरा न सम्भवतः, अनाप्तवाक्यात्तददर्शनात्। यागादेः स्वर्गादिसाधनतायाः प्रमाणान्तरागोचरत्वात्। कर्तरि विश्रम्भादेव सर्वे वेदार्थयागाद्यनुष्ठाने प्रवर्तेरन्निति कथं कर्ता विस्मर्येत? तेनावश्यस्मर्तव्यत्वे सत्यस्मर्यमाणः स्वस्याभावमेवावगमयिष्यति। पाणिनिभिन्नस्य पाणिनिमताननुसारिणो वा वृद्धिशब्दव्यवहारतो न केचिदादैचोऽवगच्छन्ति। यथा वाऽपिङ्गलस्य पिङ्गलाननुसारिणो वा मकारव्यवहारतो न केचित् सर्वगुरुत्रिकं प्रतिपद्यन्ते। किन्तु वृद्धिरादैजिति वृद्धिसंज्ञाकर्तुः पाणिनेः वृद्धिर्यस्याचामादिस्तद्वृद्धमिति व्यवहारतो वृद्धिशब्देनादैचो जानन्ति। एवमेव 'सर्वगुरुर्मः' इति मगणसम्बन्धकर्तुः पिङ्गलाचार्यस्य व्यवहारतः सर्वगुरुत्रिकं प्रतिपद्यन्ते। तथैव वेदवाक्यादर्थप्रतिपत्तृभिरवश्यं पदपदार्थसम्बन्धकर्ता तादृशपदकदम्बात्मकवेदवाक्यकर्ता चैक एव, स चाप्त इति स्मर्त्तव्याः, न च स्मर्यन्ते।

समयव्यवहारयोरेककर्तृकत्वविस्मरणे च नार्थनिश्चयः। प्रकृते च विनापि कर्तृस्मरणं, वेदवाक्यादर्थनिश्चयस्य प्रसिद्धत्वान्न कश्चिद् वदकर्ता सिद्धयति। यदि कथञ्चिद् विस्मरणमुपपद्येतापि, तथापि प्रमाणमन्तरेण न कर्तृनिर्णयः कर्तुं शक्यः। केवलस्यानुपलम्भस्य वस्त्वभावासाधकत्वेऽपि प्रमाणाभावसहकृतस्य शशविषाणादिवत् तथात्वे बाधकाभावात्। ये पौरुषेयतां समर्थयन्ते, तेऽपि परम्परया कर्तृविशेषस्मरणं वक्तुं न शक्नुवन्ति। सामान्यतो दृष्टेन कर्तारमनुमाय स्वाभिमतं कञ्चन कर्तारं साधयन्ति। केचिदीश्वरम्, अन्ये हिरण्यगर्भम्, केचिद् प्रजापतिं, अपरे अग्न्यादीन् देवान्। मन्वादिवत् स्मर्यमाणे वेदकर्तरि नैतादृशी विप्रतिपत्तिर्युज्यते।

स्मर्तव्यत्वे सति अस्मरणात् कर्त्रभाव एवाध्यवसीयते। "ब्रह्म स्वयम्भु", "वाचा विरूपनित्यया", "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा", "अत एव नित्यत्वम्" इत्यादिश्रुतिस्मृत्यनुसारेण वेदानां नित्यत्वावगमाच्च कर्त्रभावोऽध्यवसीयते। अत एव 'तस्माद् यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे', 'अग्नेर्ऋग्वेद' इत्यादिवचनानां तु सम्प्रदाय-

प्रवर्तकबोधपरत्वमेव, नतु कर्तृबोधकत्वम्। 'यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति श्रुत्यनुरोधात् चतुर्मुखस्य विधातापीश्वरो न वेदान् विदधाति, किन्तु विद्यमानानेव ब्रह्मणो हृदि प्रहिणोति।

अपि च—को वेदकर्ता भवेत्? कश्चिन्मनुष्यो वा, योगी वा, ईश्वरो वा? नाद्यः; मनुष्येषु धर्मादिज्ञानस्य वेदजन्यत्वादेव तत्कर्तृत्वासम्भवात्। न द्वितीयः; धर्माधर्मादिज्ञानं योगिनो बाह्येन्द्रियजन्यं, मनोजन्यं वा? नाद्यः; धर्माधर्मादेर्बाह्येन्द्रियायोग्यत्वात्। न द्वितीयोऽपि, आत्मनस्तद्योग्यगुणातिरिक्तज्ञानजनने मनसोऽसामर्थ्यात्। धर्माधर्मयोरात्मगुणत्वेऽपि अयोग्यत्वान्न मनोविषयत्वं सम्भवति। अपि च योगिनो योगज सामर्थ्यमपि निर्हेतुकं, सहेतुकं वा? तत्र न प्रथमः; सर्वेषामपि तथात्वापातात्। नाप्यन्त्यः; योगादिलक्षणधर्मस्य हेतुत्वे ततः प्राक् तज्ज्ञानमावश्यकमेवेति तद्धेतोर्वेदस्य प्राक्तनसिद्धत्वस्याभ्युपेयत्वात्। नापि तृतीयः, वेदादीश्वरसिद्धिः, ईश्वरश्च वेदानां प्रणेता इत्यन्योन्याश्रयात्। बौद्धादयस्तु बुद्धादीनां सर्वज्ञत्वं प्रसाध्य तदभिप्रायानुसारीणि बौद्धाद्यागम-वाक्यान्येव धर्ममूलत्वेनाभ्युपयन्ति।

नच सर्वज्ञो नास्ति। यथाहि—तदभावव्यवहारो बाधकप्रमाणसद्भावाद् वा साधकप्रमाणासद्भावाद् वा। न तावद् बाधकप्रमाणसद्भावः। न खलु प्रत्यक्षं तस्य बाधकम्, रजतस्येव समारोपितस्य शुक्तितत्त्वविषयः सम्भवति, तद्विरुद्धोपस्थानासम्भवात्। सर्वज्ञताया अत्यन्तपरोक्षायाः केनचिदपि सह प्रत्यक्षप्रतीतेन विरोधानवगतेः। नाप्यनुमानमस्य बाधकम्, तद्धि विधिनिषेधसाधनतया द्विविधम्। तत्र विधिसाधनं स्वभावहेतुककार्यहेतुकं वा न निषेधे साध्ये प्रवर्तते, अन्यसाधनत्वेऽन्यसाधनस्याप्रसङ्गात्। अनुपलब्धिलिङ्गं प्रति साधनं भवेत्। तच्च स्वभावानुपलम्भसाधनादन्यदिह सर्वज्ञविरुद्धार्थविधानेन वा तत्कारणव्यापकनिषेधेन वा सर्वविदभावं साधयेत्। न तावत्स्वभावविप्रकर्षिणा सर्वविदा सह कस्यचिदपि प्रतीयमानस्य विरोधो दृष्टपूर्वः, विरोधिप्रतिपत्तिनान्तरीयकतया विरोधावगतेः। विरोधिप्रतिपत्तौ वा नात्यन्ताय तन्निषेधः। न च

प्रत्यक्षानुपलम्भसाधनं कार्यकारणभावः स्वभावप्रकर्षवति सर्वविदि शक्यावगमः। अत एव व्यापकत्वमपि कस्यचिद् दुरवसेयमेव सर्वविदि। नापि विपक्षे बाधके प्रमाणप्रवृत्तिः, क्षणिकत्वस्येव सत्त्वे सर्वविद्व्यव्यापकाभावागमनिबन्धनं तदभावात्। भावे वा निषेधो नास्ति अत्यन्ताय तस्य, न खलु खपुष्पं कस्यचिद् व्याप्यं सम्भवति, व्यापकं वा। न चान्यनिवृत्तावन्यस्य निवृत्तिरतिप्रसङ्गात्। तदुक्तम्—

"अन्यस्यैव निवृत्त्यान्यनिवृत्तिस्तु कथं भवेत्।
नाश्ववानिति मर्त्येन न भाव्यं गोमतापि किम्॥"

न च सत्त्वज्ञेयत्वादयः सर्वज्ञतासहभुवः सहस्रश उपलब्धा व्याप्ता विमतस्य पुरुषधौरेयस्य विरुद्धोपस्थानेन सर्वज्ञतां प्रतिक्षिपन्तीति साम्प्रतं सत्त्वादेरसर्वविद्व्याप्त्यसिद्धेः। न खलु दर्शनादर्शनमात्रनिबन्धनं व्याप्तिज्ञानं, मा भूच्च चैत्रः श्यामो मैत्रीतनयत्वाद् दृश्यमानमैत्रीतनयस्तोमवदित्यनुमानम्। तत्तनयताया अश्यामताविरोधाभावेन सन्दिग्धव्यतिरेकित्वान्नानुमानमिति चेन्न। इहापि समानत्वात्। नहि सर्ववित्तया सह सत्त्वादेः कश्चिद्विरोधो येनासौ न सन्दिग्धव्यतिरेकः स्यात्। द्वयी हि विरोधावगतिः, सहानवस्थाने छायातपवत्, परस्परपरिहारो वा भावाभाववत्। न तावदविकलकारणस्य सर्वज्ञत्वस्यालोकस्येवाभावः सत्त्वादेः सन्तमसस्येव भावेऽभावः, यतः सहानवस्थितिरूपविरोधसङ्गतिः स्यात्। तथा च भावे वा नात्यन्ताभावः सर्वज्ञताया इत्युक्तम्। नाप्युत्तरो, न खलु सर्वज्ञता सत्त्वादिपरिहारेण सत्त्वादयो वा तत्परिहारेण तेषां व्याप्तिरस्तीत्युक्तम्। न चोपदेशप्रणयनमेव बाधकं तत्त्वदर्शनस्य। तथाहि—उपदेशो विकल्पविज्ञानयोनिः तथा विकल्पश्च समारोपितगोचरतया मिथ्येति न तथागतविज्ञानं भवितुमर्हति। तदयमुपदेशो निषेध्यसर्वविषयतत्त्वविज्ञानविरुद्धसमारोपितगोचरविकल्पविज्ञानकार्यं इति विरुद्धकार्योपलब्ध्या बुद्धादीनां सर्वज्ञत्वाभावसाधनम्। उपदेशाभावे वा वृथा तत्साधनम्, तत्सन्निधानमात्राद् वा चैत्यवन्दनादिचोदनानाम्

निःसृतत्वाभ्युपगमेऽनाश्वास इति, तन्न; विकल्पस्य सर्व-विज्ञानत्वाविरोधात्। द्विविधो हि विकल्पः, विपर्यासपूर्वकः अतत्पूर्वकश्च। विपर्यासपूर्वकः सर्वसाधारणस्य अतत्पूर्वकस्तत्रभवतः सर्ववेदिनः। न खल्वसौ भ्रान्तो विकल्पवानपि, किन्तु विदित-समस्तवस्तुतत्त्वविस्तारः, करुणापराधीनमानसो दुःखिन उपदेष्टु-कामः। न च वचनमन्तरेण तत्सम्भवः विकल्पं विना वचन-मप्यसम्भवीति, तस्यास्तात्त्विकत्वं विद्वानपि समाहरति। यथा नैरात्म्यतत्त्वं विद्वानपि विकल्प्यसमारोपितमात्मानं निषेधति नास्त्यात्मेति, यथा वा वैयाकरणो गाव्यादिशब्दानसाधून् जानानो-ऽपि पृथग्जनप्रतिपिपादयिषया प्रयुञ्जानोऽपि नापशब्दकारी। तदिदमाहार्यमस्य रूपं न तात्त्विकमिति तत्त्वविदो नोपदेश-विरोधः। न चैषां रागादिमत्ता न खलु कृपा रागपक्षे वर्तते।

नन्वियं परदुःखप्रहाणेच्छापि राग एव। मैवम्; न हीच्छामात्रं रागोऽपि तु चित्तमलमात्मनो दर्शनावरणसम्भूतगुणाभिनन्दनं राग-माचक्षते। न ह्यसति नित्यात्मदर्शने स्वार्थतृष्णापरिप्लुतः कश्चित् परिस्पन्दते। यथाहि चैत्रः स्वतो भिन्नं मैत्रमुदीक्षमाणः स्वगत-सुखतृष्णापरिप्लुतो न मैत्र सुखाय घटते, तथा पूर्वापरक्षण-विविक्तविज्ञानमात्रमात्मानं साक्षादीक्षमाणः सन्ततिपतिततद्वि-परीतक्षणान्तरोपकारकर्मणि प्रवर्तते, प्रवर्तते च स्वार्थतृष्णा-परिप्लुतः, तेनावगच्छामोऽवगच्छति नूनमयमहमिति विभिन्नानपि स्वचित्तक्षणानेकतया। तदिदं सहजमात्मदर्शनं निदानं रागादीनाम्। न च सर्वविदः करुणाद्दमुपकुर्यां परानित्येवमाकारोपि सत्त्वदर्शनावयवा यस्मान्नात्मगामी फलाभिलाषोऽयमपितु स्वार्थ-मनपेक्ष्य परदुःखप्रहाणेच्छेत्युक्तमेव। तस्मादुपदेशतत्त्वज्ञान-योरविरोधात् सन्दिग्धव्यतिरेकित्वाद्वचनमपि न सर्वज्ञताबाधक-मिति न बाधकप्रमाणसद्भावस्तदभावव्यवहारसाधनम्। नापि साधक-प्रमाणाभावः। तथाहि—प्रत्यक्षाभावो वा सकलप्रमाणाभावो वा स्यात्? प्रत्यक्षाभावोऽपि आत्मनः, सर्वेषां वा? सदात्मनस्तदापि

दृश्यताविशेषणो निर्विशेषणो वा ? न तावदात्मप्रत्यक्षाभावो दृश्यताविशेषणः सर्वज्ञताभावसाधनम्, तस्य स्वभावविप्रकर्षिण-स्तत्त्वानुपपत्तेः प्रसिद्धत्वान्निर्विशेषणस्य च व्यभिचारात् समस्त-प्रत्यक्षनिवृत्तेश्च असिद्धत्वात्। न खलु अर्वाग्दृशः सकलप्रत्यक्ष-निवृत्तिरसिद्धत्वात्। न च प्रमाणं प्रमेयस्य व्यापकं कारणं वा येन तन्निवर्तेत, तस्मान्न तदभावसिद्धिर्नापि तद्भावसन्देहस्तत्साधनेन तत्सद्भा-वस्य निवेदितत्वात्। तस्मादनुविधेयपुरुषधौरेयनियोगादेव प्रवृत्तिनिवृत्ती इति साम्प्रतम्।

तदेतन्मीमांसका न क्षमन्ते, यद्यप्यात्मप्रत्यक्षनिवृत्ति-र्विप्रकर्षवतां त्रिविधेन कालदेशस्वभावविप्रकर्षेण तद्वतां रामगिरि-सुमेरु-परमाण्वादीनामभावं व्यभिचरति, सर्वप्रत्यक्षनिवृत्तिरसिद्धा। असर्वदृशोऽस्मदादेः सकलप्रमाणनिवृत्त्या नार्थाभावसिद्धिर-व्यापकनिवृत्तावव्याप्यनिवृत्तेरनियमात्। अव्यापकत्वञ्चाहेतुत्वात्तन्मात्र-प्रतिबन्धाभावाच्च। हेतुधर्ममात्रानुबन्धे हि साध्यधर्मेऽस्य व्यापकः। यथा वृक्षत्वं शिंशपात्वस्य। न च प्रमेयमात्रानुबन्धि-प्रमाणम्। तस्माद-न्यथा प्रमेयानुबधित्वे प्रमाणस्यास्मदादेः सर्वस्य सर्ववित्त्वप्रसङ्गः। प्रमेयमात्रानुबन्धिप्रमाणशालिनो हि सर्वज्ञता। तथा सत्यविशेषोऽस्म-दादीनां भवदभिमतेन सर्वविदा।

वचनादयश्च यद्यप्यनिवर्तकाः सर्वार्थतत्त्वविदो विपश्चितश्चाविरोधस्त-यासह वचने सत्त्वादीनां तथापि कारणनिवृत्त्या कार्यनिवृत्तिप्रतीतिः। नह्यस्ति सम्भवो नास्ति धूमकेतनोऽस्ति च धूम इति। प्रमाणञ्च करणं प्रमायाः, प्रमाणानुपपत्त्या तत्कार्यायाः सर्वार्थसंविदोऽभावनुमिमीमहे। तथा हि न प्रत्यक्षं चक्षुरादिजन्यसर्वार्थविषयं सम्भवति, चक्षुरादीनां विषयनियमात्। उद्भूतरूपादिमत्सम्बद्धवर्तमानमेव विषयः। अन्यथा स्वभावविप्र-कर्षवतां तद्विषयत्वप्रसङ्गात्।

यद्युच्येत मानाभावादर्वाग्दृशां लोचनागोचरावतीतानागतौ योगविम-लाञ्जनोज्ज्वलीकृतलोचनास्त्वालोचयिष्यन्ति सकृदेव जगदुदरवर्तिवृत्तवर्ति-

ष्यमाणमर्थमात्रम्। अचिन्त्यो हीन्द्रियाणां सामर्थ्यातिशयः प्रभावातिशयश्च योगस्य, तदप्यकिञ्चित्करम्; यतो यथैव कार्यमहेतुकं न भवति कादाचित्कत्वव्याघातात्तथाऽनियतहेतुकत्वमपि नाहेतुकत्वाद् विशिष्यते, कारणस्य कार्यप्राग्भावनियमः कारणत्वं, तच्चानियतनिमित्तत्वेऽनुपपन्नम्। नहि जातु यवबीजमत्यन्तपरिकर्मितमपि कलमाङ्कुराय परिकल्पते। नानाकारणमेकं वृश्चिकादि जनयतीति तु स्थूलदृशः। कुशाग्रधियस्तु तत्रापि कमपि जातिभेदं पश्यन्ति। तस्माद्यथैव कारणान्तराणि स्वकार्यनियतसामर्थ्यानि स्वकार्याण्येव जनयन्ति स्वकार्य एवातिशयमनुभवन्ति नाकार्ये नाप्यन्यकार्ये तथेन्द्रियाण्यपि न स्वविषये, नाप्यन्यविषये। तदुक्तं जैमिनिमहर्षिणा—"विद्यमानोपलम्भनत्वात्।"

मानसमपि प्रत्यक्षं न सर्वं बोधयति, मनसो बहिरस्वतन्त्रत्वात्। रूपादौ मनसः स्वातन्त्र्येऽन्धबधिराद्यभावप्रसङ्गात्। न खल्वन्धादयो निर्मनस्कास्तेषां स्मृत्याद्यभावप्रसङ्गात्। यदप्युक्तमादरनैरन्तर्यदीर्घकालासेविता भावना करतलामलकायमानालम्बननिर्भासिविज्ञानफला भवति, यथा कामातुरस्य कामिनी भावनोक्तविशेषणत्रयवती कामिनीविषयविज्ञानविशदाभताहेतुस्तथैव सकलानेव दुःखिन आत्मसमयाभ्युपगच्छतां दानादिपारमिताभ्यासतनूकृतान्तर्मलानां विशेषणत्रयोपेतया भावनया सर्वतत्त्वज्ञानं नासम्भवम्।

न च भावनाप्रकर्षजं ज्ञानं भ्रान्तं प्रमाणसिद्धविषयत्वात्। समस्तवस्तुविषयं च तन्नैरात्म्यसाक्षात्काररूपत्वाद्विश्वनैरात्म्यवैशद्यं विश्ववैशद्यमेव। तदप्यसङ्गतम्; यतो भावनामयमपि विज्ञानं श्रुतानुमानविषयमकस्माद् भावनाऽयोगादागमानुमानपरतन्त्रमेव पूर्वज्ञानभूतार्थविपर्ययानुविधानात्सापेक्षत्वादप्रमाणमेव। न ह्यनुमानेन वह्निं व्यवस्थाप्य भावयतो वह्निविषयं विशदं विज्ञानं तत्प्रमाणमिन्द्रियसन्निकर्षजन्यस्य वह्निविज्ञानस्य भावनाधेयविशदाभविज्ञानेन सह सम्भवादनियमप्रसङ्गात्, बाहुल्येन विसंवादोपलम्भात्।

ननु भगवतो बुद्धस्य निर्मृष्टनिखिलक्लेशोपक्लेशमलं विज्ञानमनावरणं परितः प्रद्योतमानं स्वावलम्बनं प्रत्ययं सर्वाकारं गोचरयत्तस्य

साक्षात्परम्परया वा सर्वेण सम्बन्धाद् देशकालविप्रकीर्णवस्तुविशिष्टस्व-भावतया तथैव गोचरयेत् ! न च सर्वग्रहणमन्तरेणेति सर्वविषयमस्य विज्ञानमनावरणं सिद्धम् । तदेतदप्यनुपपन्नम्; रागादिमलानां तत्त्वावर-कता तदपगमे तत्त्वप्रतिभानसम्भवेऽपि न सर्वप्रतिभानं सम्भवति, भावनाप्रकर्षजमपि विशदाभमपि प्रत्यक्षमर्थाव्यभिचारनियमाभावात् संशयाक्रान्तत्वादप्रमाणमेव तत् ।

सदर्थप्रकाशनं बुद्धेः स्वभावोऽसदर्थत्वं त्वागन्तुकमित्यसति बाधके सद्विषयकत्वमेवेति चेन्न । अनुमितभावितवह्निविषयविशदाभविज्ञाना-दिप्रामाण्यप्रसङ्गात् । तद्विषयस्य क्वचिद्बाधदर्शनादप्रामाण्यमिहापि समानम् । तदिह विशेषणत्रयवत्या भावनया विशदाभविज्ञानहेतुत्व-साधने सिद्धसाधनम् । भवतु तथागतस्तथाभूतविज्ञानवान् न तत्त्वे तद्विज्ञानमस्य प्रत्यक्षमप्रमाणत्वात् ।

यदुच्यते—

"निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः ।
न बाधो यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः ॥"—इति ।

तदप्यकिञ्चित्करम्; भूतार्थत्वे हि बुद्धेस्तत्पक्षपातिता, भूतार्थैः प्रतिपक्षैर्बाधो न भवेत् । अभूतार्थात्वियं स्वात्माभावमापन्नाऽप्या-त्मीयदृष्टिरिव सम्भवद्बाधा । तस्माद्यथा कामातुरस्य कामिनी-विज्ञानमप्रमाणं तथैव भावनाप्रकर्षपर्यन्तजं ज्ञानमप्यप्रमाणमेव; अत एवाप्रत्यक्षमपि तत् । न च रागाद्यावरणविरहो विशेषः, न खल्वेते रागादयः कम्बलादिवदावरका विज्ञानस्य, किन्तु तदाक्षिप्तमना विवि-धविषयभेदतृष्णादिपरिप्लुतो न शक्नोति भावयितुमिति भावनादर-मात्र एव रागादिविरहोपयोगः । अस्ति चेहापि शिशिरतरसम्भूतजडिमम-न्थरतरकायकाण्डस्यानुमितवह्निभावनाभियोग इति न हेतुभेदः ।

यदुक्तम्—"न कालतो नियमश्चक्षुरादीनामवर्तमानरजताद्युपलब्धेः । न हि सा शुक्तिकाद्युपलब्धिरन्याकारसंविदोऽन्यविषयत्वायोगादनाश्वा-साच्च । अधिगतस्वान्त्र्यञ्च मनः स्वप्ने । न च स्वप्नज्ञानं स्मृतिरतद्रूपत्वात् । तदप्यकिञ्चित्करम्; वर्तमानशक्तिशकलादेरविषयत्वे तदसन्निधावपि

रजतादिवेदनप्राप्तेरेवं रजतावभासनं यदि शुक्तिविषयं न स्यात्तदाऽवर्त्तमानगोचरमेव तदवभासनं प्रतीयेत। तदा हि तद्रजतमित्यतीतगोचरतयैव प्रवर्तेत, नेदं रजतमिति। तथा च तत्प्रेप्सवो न प्रवर्तेरन्, अतीतस्य प्राप्त्यसम्भवात्। न खल्वतीतं तत्तयाऽवगम्य शब्दाद्वदान्यश्रेष्ठं युधिष्ठिरं क्षुत्क्षामोऽपि भिक्षुको याचितुमर्हति स्वप्ने बाह्यार्थस्य ग्राह्यस्याभावान्न बहिर्मनसः स्वातन्त्र्यमि'ति न्यायकणिकायां विस्तरः।

ननु श्वो मे भ्राता आगन्ता इत्यादि लौकिक्यां प्रतिभायामर्थलिङ्गाद्यपेक्षाभावात् बहिः स्वतन्त्रं मनो दृष्टम्। ननु तत्र भ्रातुः स्वरूपस्य प्रागुपलब्धेर्भवत्वेवम्, तथापि देशकालावस्थाविप्रकीर्णानां विश्वेषां भावानां न रूपतोऽप्युपलम्भसम्भव इति कथमत्र मनसः स्वातन्त्र्यमिति चेन्न। द्रव्यादीनां, प्रकृतिपुरुषयोः, पञ्चस्कन्धानाञ्च लोकप्रमाणवशेन मनसा विषयीकृतत्वेन भावनामयस्य स्फुटावभासस्य लोकोत्तरस्य प्रत्यक्षस्य विषयत्वेन सार्वज्ञ्यसिद्धिसम्भवात्। लौकिकेन प्रमाणेन निष्प्रकारकं सप्रकारकं वा सर्वं गृहीत्वा भावयतो भावनाऽपनीतावरणं मनः स्वातन्त्र्येण सर्वमेव गाहते। तदसत्; लोकोत्तरप्रतिभानस्यासिद्धत्वात्।

लौकिकन्तु प्रियाप्रियगोचरं ज्ञानं न स्वतन्त्रमनोजन्यम्। यतः सह प्रवृत्तहृदयप्रसादोद्वेगादिलक्षणलिङ्गाद्याभासप्रभवत्वेन न निश्चयात्मकम्, उभयकोटिसंस्पर्शस्यातुल्यत्वात् नापि संशयात्मकम्। ननु यदि न संशयो नापि निश्चयस्तर्हि प्रतिभैव तत्। न चैतद्विज्ञानं तुल्यवदुपप्लवमानविरुद्धकोटिद्वयविषयो येन संशयात्मकम्। नाप्येककोटिविषयमपि प्रमामवधारयन्ति येन निश्चयः स्यात्। न चैककोटिविषयं न प्रकाशते, येन न स्यात्। तस्मात् सिद्धं प्रतिभैवेति।

तर्हि स्वयमनिश्चयात्माऽपि निश्चयजननादस्तु प्रमाणम्, चक्षुरादिवत्। तदपि न; साम्प्रतमनिश्चयफलत्वात् प्रमाणान्तरापेक्षनिश्चयत्वाच्च।

योगजाद्धर्मात् सर्वार्थेषु मानसं प्रत्यक्षमित्यपि न सङ्गतम्। इन्द्रियसन्निकर्षोपायत्वात् बाह्यप्रत्यक्षत्वसिद्धेः, संयुक्तसंयोगानभ्युपगमात्। अन्यथा कुड्यादिव्यवहिताऽर्थोपलब्धिप्रसङ्गः। अनुमानेऽपि प्रत्यक्षत्वापातात्। अजातातिवृत्तेषु तस्याप्ययोगात्। अत एव नेन्द्रियार्थयोः सिद्धयोः

सन्निकर्षः । अतीतानागतानां तदाप्यसत्त्वादव्यवहितार्थोपलब्धिप्रसङ्गाच्च ।

कालत्रयपरिवृत्त्यर्थगोचराणि मानान्तराणि, वर्तमानविषयन्तु प्रत्यक्षम्, तत्र अतीतानागतान् वर्तमानात्मना पश्यतो मिथ्याज्ञानमेव सर्वस्यातथात्वात् । यथार्थन्तु पश्यतो न प्रत्यक्षं तस्यातीतानागतविषयत्वाभावात् । भिन्नलक्षणानामपि प्रत्यक्षत्वेऽनुमानादीनामपि प्रत्यक्षत्वप्रसङ्गः । न चाक्षजत्वं प्रत्यक्षस्य लक्षणम्, तच्च मनोजन्ये सर्वज्ञप्रत्यक्षे सम्भवत्येवेति वाच्यम्, । तथात्वे मनोजन्येऽनुमानादावतिप्रसङ्गात् । तस्मादिन्द्रियार्थसन्निकृष्टार्थजत्वमेव प्रत्यक्षलक्षणं वाच्यम् । मनसश्चेन्द्रियत्वेन तज्जन्यसुखादेः प्रत्यक्षत्वमर्थसामर्थ्यजन्याभावेन च नानुमानादावतिप्रसङ्गः सूक्ष्मविप्रकृष्टव्यवहितानां ज्ञानोत्पत्तौ सामर्थ्याभावात् ।

कल्पनापोढत्वं प्रत्यक्षलक्षणमित्यपि न समञ्जसम् । कल्पनाया अनिरूपणात् । न च शाब्दाभासा प्रतीतिः कल्पनाशब्दविषये श्रौत्रज्ञानेऽव्याप्तेः । न वाऽभिलापसंसर्गयोग्यप्रतिभासा प्रतीतिः सा, सामान्याकारस्वसंवेदनेऽप्यप्रत्यक्षत्वात् । वस्तुनि वस्त्वन्तरयोजना कल्पना इत्यपि न साम्प्रतम् । तथा सति सामान्याकारप्रतीतेः प्रत्यक्षत्वं स्यात्, सामान्यस्य वस्त्वन्तरस्यानभ्युपगमात् । अभिधानयोजना कल्पनेत्यपि न; अव्युत्पन्नाभिधानस्य तथात्वापत्तेः ।

यत्तूक्तं सर्वमेव प्रत्यक्षमसन्निहितावभासम्, अर्थज्ञानयोः कार्यकारणभावेन कालभेदात् । न च तर्हि "सर्वैकदेशस्यापि कश्चित् प्रत्यक्षदर्शी भवेत् कुतः सर्वदर्शी" । ननु ज्ञानाकारेऽर्थे वेदनाध्यवसायेनैव व्यवहारदर्शनान्नार्थहानिरिति चेन्न । अन्यवेदनेऽन्याध्यवसायानुपपत्तेः । ननु निरूढत्वादनादेरर्थग्रहाभिनिवेशापस्मारलक्षणाया अविद्याया माहात्म्यात्तत्सम्भव इति चेत् ; स्वस्ति सर्वज्ञत्वाय भूयिष्ठाऽविद्यापस्माराय । वरं कनीयोऽविद्यमेकदेशदर्शित्वमेव । न हि स्वाकारमनर्थमप्यध्यवस्यन्नन्योपायतयाऽपि भवत्यभ्रान्तः । न च भ्रान्तत्वं न्यायसिद्धं समस्तप्रत्यक्षभ्रान्तत्वभिया शक्यमपह्नोतुम्, प्रमाणसिद्धस्य प्रयोजननिरोधेनाशक्यनिह्नवत्वात । ग्राह्यत्वं हेतुत्वमेव ज्ञानाकारार्पणक्षममिति

न पुनः सर्वं तस्याहेतुत्वाद् देशतः कालतो वाऽसन्निधानात् । अन्यथा सर्वस्य सर्वदर्शित्वप्रसङ्गात् ।

अपि च सर्वं न क्रमेण शक्यावगममानन्त्यादेव न वा यौगपद्येनानन्त्यादेव ।

नैयायिकादयस्तु सर्वज्ञं जगत्कर्तारं परमेश्वरं प्रसाध्य तत्कर्तृकत्वेन वेदस्यैव धर्माधर्मादौ प्रामाण्यं साधयन्ति । तथा वार्तिकतात्पर्ये वाचस्पतिमिश्रा वेदप्रमाण्यं सम्भावयन्ति । सम्भावनायास्तद्धेतुत्वात् । तदुक्तम्—

सम्भावितप्रतिज्ञायां पक्षः साध्येत हेतुना ।
न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो हतः ॥"—इति ।

परमेश्वरस्य परमदयालोः प्रत्यक्षीकृतहेयोपादेयस्य अतएवापास्त भ्रमप्रमादकरणापाटवादिसमस्तपुँदोषसामान्यस्य भूतोद्दिधीर्षया यथार्थचिख्यापयिषया वेदनिर्मातृत्वम् । प्राणिसुखदुःखादिवैचित्र्यान्यथानुपपत्त्या कारणवैचित्र्यं कल्प्यते । तच्च दृष्टभिन्नमदृष्टापूर्वधर्माधर्मादिशब्दितम् । तच्च न कस्यचिज्जीवस्य प्रत्यक्षमतीन्द्रियत्वात् । परमेश्वरश्च तनुभुवनादिलक्षणकार्यस्य कर्तृत्वात्तन्निर्माणानुकूलतत्त्वज्ञानचिकीर्षाकृतिमत्त्वेन क्लेशकर्मविपाकाशयैरपरामृष्टत्वेन सर्वज्ञः सर्वसमर्थः परमकारुणिकश्चेति ।

ननु भुवनादिकार्यादेवानुमीयते । सोऽयमात्मीयहिताहितप्राप्तिपरिहारोपायानविदुषोऽनेकविधदुःखदहनदह्यमानानवलोकयन् कथं न तप्येत, तप्यमानश्च हिताहितप्राप्तिपरिहारोपयतत्त्वं विद्वान् कथं नोपदिशेत्; कथं वान्यथोपदिशेत् ? तस्मादनेन प्रजाः सृष्ट्वा ताभ्यो हिताहितप्राप्तिपरिहारोपायोऽवश्यमुपदेष्टव्यः । न ह्ययमनुपदिश्य स्थातुमर्हति, प्रजानां पितृकल्पस्यास्योपदेशादेवर्षिदेवर्षिमनुष्यगोचरश्चातुर्वर्ण्येन चातुराश्रम्येणादराद् ग्राह्यो धार्यश्च धर्मः । तस्माद् वर्णाश्रमाचारव्यवस्थापको महाजनपरिगृहीतो वेदस्तत्प्रणीतः, आप्तोक्तत्वान्मन्त्रायुर्वेदवत् प्रमाणमेव । न तथा शाक्यदिगम्बरसंसारमोचकादीनामागमाः ईश्वरप्रणीता बुद्धर्षभादीनां तत्प्रणेतृत्वस्य

स्फुटतरत्वात् । न च शौद्धोदनिप्रभृतयो विश्वकर्तारो येन सर्वज्ञा भवेयुः । न च सम्भावनामात्रेण तत्प्रणीतेष्वागमेषु प्रेक्षावतामाश्वासो युक्तः । न चैतेषामागमा वर्णाश्रमाचारव्यवस्थाहेतवः । नो खलु निषेकाद्याः श्मशानान्ताः क्रियाः प्रजानामेते विदधति । बौद्धाद्यागमानुसारिणोऽपि श्रुतिस्मृतिपुराणादीनुपजोव्यैव व्यवहरन्ति । सांवृतमिति प्रलपन्तोऽपि अश्वघोषादयो बुद्धचरिते पुराणेतिहासाद्याश्रया एव कथा विपर्यस्त-रूपेणोद्धृतवन्तः । तस्माद्वेदेषु जगन्निर्मातृकर्तृकत्वस्मृतिर्भवेद्वा मा वा त एव त्वीश्वरप्रणीता इति पश्यामः ।

न चैते चैत्यवन्दनादिवाक्यवदन्यकर्तृकाः स्मर्यन्ते । नान्य आगमो लोकयात्रामुद्वहन् महाजनपरिगृहीत ईश्वरप्रणीततया स्मर्यमाणो दृश्यते । तस्माद्वेदा एवेश्वरप्रणीताः, त एव त्रैवर्णिकैरद्य यावत्प्रयत्नेन गृह्यन्ते धार्यन्ते च । तदर्थपालनायाञ्च महर्षिपरम्पराभिरङ्गोपाङ्गेतिहासपुराणधर्म-शास्त्राणि प्रणीतानि । बुद्धादिवाक्यानि न तथाभूतानि । न चैतेषां मन्वा-दिवाक्यवद् वेदमूलकत्वेन प्रामाण्यम् । वेदनिन्दकबुद्धवाक्येषु वेदमूल-कत्वेन प्रामाण्यम् । वेदनिन्दकबुद्धवाक्येषु वेदमूलकत्वानुमापकलिङ्गा-भावात् । तत्सर्वज्ञत्वसंशयेन चानुभवमूलकत्वस्य च वक्तुमशक्य-त्वात् । प्रवृत्तिसामर्थ्यानुमितप्रामाण्ये मन्त्रायुर्वेदेषु वैदिकशान्तिक-पौष्टिकादिकर्माभ्यनुज्ञानात्, रसायनादिकृत्यारम्भे च वेदविहितचान्द्रा-यणादिप्रायश्चित्तोपदेशादाप्तप्रणीतेनायुर्वेदेन वेदानां प्रामाण्याभ्युपगमाद् वेदानां प्रामाण्यमेव ।

अत्रानुमानमपि—"मन्त्रायुर्वेदवाक्यानि सर्वज्ञकर्तृकानि, महाजन-परिगृहीतत्वे सत्यलौकिकार्थप्रतिपादकत्वात् ।" यानि तु न सर्वज्ञकर्तृ-कानि तानि नैवंरूपाणि, यथा बुद्धादिवाक्यानि । तान्यलौकिकार्थान्यपि न महाजनपरिगृहीतानि ।

मन्त्रायुर्वेदानां सत्यपि प्रवृत्तिसामर्थ्ये तासां तासामोषधीनां-तत्संयोगभेदानाञ्च तत्तदक्षरावापोद्धारभेदस्य च नासर्वज्ञः सहस्रेणापि पुरुषायुषैः शक्तः कर्तुम् ।

सर्वज्ञेश्वरसम्बन्धे न्यायकणिकायाम्—"सर्वकार्याणां तनुभुवनादीना-मुपलब्धिमान् कर्ता प्रतीयमानोऽन्तर्भावितसर्वज्ञत्व एव प्रतीयते। प्रदीप इवान्तर्भावितप्रभावितानः स्वप्रमाणत्वात्। न च भवतु कर्तृत्वं मा भूच्च सर्वज्ञत्वमिति वाच्यम्। लोके तथा दर्शनात्। दृश्यन्ते हि उपादानोपकर-णसम्प्रदानप्रयोजनाभिज्ञाः कुलालादयः कर्तारः। प्रकृते चेश्वरेणापि जगत्कर्त्रा परिमेशित्रापि उपादानाद्यभिज्ञेन भाव्यम्। तत्रोपादानं परमाणु-जातिचतुष्टयम्, उपकरणं समस्तक्षेत्रज्ञसमवायि-धर्माधर्माः, सम्प्रदानं क्षेत्रज्ञः, प्रयोजनं भोगापवर्गौ, एतत्सर्वाभिज्ञत्वं नासर्वज्ञतायामुपपद्यते। तदेतदसाम्प्रतम्; दृष्टान्तानुपपत्तेः। तथा हि—किं कुलालादयः स्वकार्यस्य निरवशेषोपकरणादिवेदिनः, सावशेषवेदिनो वा? नाद्यः; सर्वकार्याणां निमित्तहेतोरदृष्टस्यापरिज्ञानात्, सम्प्रदानप्रयोजनविशेषाणामपरिज्ञानाच्च। नान्त्यः; अथोपकरणादिमात्रज्ञानं न समस्तोपकरणादिज्ञानं कुलालदीनाम्। तयैव रीत्या परमेश्वरस्यापि स्वकार्योपकरणादिमात्रज्ञानमिति न सर्वज्ञता-सिद्धिः, किन्तु कतिपयज्ञतैव स्यात्। अपि च बालोन्मत्तादयो न कार्यस्योपकरणादिवेदिनः। निरभिप्रायाणां तत्र प्रवृत्तिदर्शनात्। न च कुलालादयो निदर्शनम्, न बालादय इति नियमहेतुरस्ति।

यदि तत्कर्तृत्वं साध्यम्, तर्हि कथमन्तर्भावितसर्वज्ञत्वं हेतुमन्तरेण सेत्स्यति। ननु सिद्धमेव तत्सन्निवेशादिमतां बुद्धिमत्पूर्वकत्वात्। लोके हि प्रासादाट्टालगोपुरतोरणादयश्चेतनकर्तृकाः प्रसिद्धाः, परमाण्वाकाशादय-श्चाकर्तृकाः प्रसिद्धाः, सन्दिग्धचेतनकर्तृकाश्च तनुमहीरुहादयस्तत्र विवादाध्यासितोपलब्धिमत्कर्तृकाः कार्यत्वादचेतनोपादानत्वाद्वा, यत्कार्य-मचेतनोपादानकं वा तत्सर्वमुपलब्धिमत्पूर्वकम्, यथा—प्रासादादिकम्, तथा चैते तनुभुवनादयस्तस्मात्तेऽप्युपलब्धिमत्कर्तृका महत्त्वे सति क्रिया-वत्त्वेन वस्त्रादिवत्पृथिव्यादीनां कार्यत्वसिद्धिः।

ननु कायजातस्य कर्मजत्वेन कर्मणश्चेतनहेतुकत्वेन च जगतस्तत्कारण-त्वाभ्युपगमेनोपलब्धिमत्पूर्वकत्वमात्रसाधने सिद्धसाधनम्; सर्वज्ञपूर्वक-त्वसाधने तु तेन हेतोर्व्याप्त्यसिद्धिर्दृष्टान्तश्च साध्यहीनः, कुलालादीना-

मसर्वज्ञत्वात्। कुम्भादौ उत्पत्तिमत्त्वस्याचेतनोपादानत्वस्य वाऽसर्वज्ञ-पूर्वकत्वेनैव व्याप्त्युपलब्धेर्विरुद्धता च । न चोपलब्धिमत्पूर्वकत्वमात्रं साधनविषयस्तद्विशेषस्य च सर्वज्ञपूर्वकत्वात्तद्विषयस्यापि ततः सिद्धिरिति साम्प्रतम्, साधनाव्याप्तस्य विशेषस्य तदसिद्धेः। यदि सिद्ध्येत् कथमनुमानाविषयः, विषयत्वे वा कथं न पूर्वोक्तदोषसंस्पर्श इति चेन्न। सामान्यमात्रव्याप्तावप्यन्तर्भावितविशेषस्यैव सामान्यस्य पक्षधर्मतावशेन साध्यधर्मिण्यनुमानेन तददोषात् । अन्यथाऽनुमानमात्रोच्छेदप्रसङ्गः । तथा हि—वह्न्यनुमानमपि न वह्निसामान्यमात्रविषयम्, तस्य प्रागेव सिद्धत्वात्। न तावद्विशिष्टपर्वतविषयं वह्नित्वसामान्यस्य तत्सवन्धाभाविन तद्विशेषणत्वानुपपत्तेः। वह्नित्वस्य वह्निमात्रसम्बद्धस्य तद्भिन्ने पर्वतादावसम्बन्धः स्पष्ट एव । अन्यथा गोत्वसमवायाद्यथा शावलेयादयो गावस्तथैव वह्नित्वसमवायात्पर्वतोऽपि वह्निर्भवेत् । न च वह्नित्वस्य पर्वतेन सह संयुक्तसमवायसम्बन्धोऽस्त्येवेति वाच्यम् । तथात्वेऽपि पर्वतसंयुक्तवह्निविशेषप्रतिपत्तिमन्तरा न तत्प्रतिपत्तिः सम्भवति इत्यायातं वह्निविशेषस्याप्यनुमानम्। तथा च पूर्वोक्तदोषप्रसङ्गः ।

एवमेव यद्यपि इन्द्रियकरणिका काचित्क्रिया नोपलब्धा. छिदादयश्च क्रियाः नेन्द्रियसाधनाः कुठारादीनामनिन्द्रियत्वात्। रूपादिपरिच्छेदरूपाः क्रियाश्च न कुठारादिसाधनाः, तस्माद्येव क्रियात्वसामान्यस्य सत्यधिकरणमात्राधीनत्वव्याप्तत्वे पक्षधर्मतावशेन इन्द्रियलक्षणकरणविशेषसिद्धिर्भवति तथैवोत्पत्तिमत्त्वस्याचेतनोपादानत्वस्य चोपादानोपकरणसम्प्रदानप्रयोजनज्ञकर्तृत्वमात्रव्याप्तत्वे विवादाध्यसितेषु तनुभुवनादिषु पक्षधर्मतावलेन तद्विशेषस्य सर्वज्ञ-कर्तृत्वस्य सिद्धिः। अन्यथा सामान्यस्य व्यापकाभिमतस्यासिद्धिः स्यात्; निर्विशेषस्यासम्भवाद्विशेषस्य चान्यस्यानुपपत्तेरसर्वज्ञस्य अदृष्टादिभेदविज्ञानरहितस्य जगत्कर्तृत्वासम्भवात्। तथा च यद्यप्युपलब्धिमत्कर्तृत्वं व्याप्तिविषयस्तथापि तद्विशेषस्य पक्षधर्मतावलात् प्रतिलम्भ इति विशेषविषयमनुमानं पर्यवस्यति । न च पूर्वोक्तदोषप्रसरस्तस्य साध्यदृष्टान्तयोर्धर्मत्वात् । उत्कर्षापकर्षानुयोगस्य

सर्वानुमानसाधारण्येनानुमानमात्रप्रामाण्यकप्रतिक्षेपहेतुत्वात् । तस्मात्सिद्धं विवादाध्यासिता उपलब्धिमत्कर्तृका इति ।

न च सकलक्षेत्रज्ञसमवायिधर्माधर्मज्ञानकारणाभावेन कथं परमेश्वरस्य तज्ज्ञानमिति वाच्यम्; परमेश्वरसमवेतज्ञानचिकीर्षाप्रयत्ननित्यत्वेन कारणानपेक्षत्वात् । न च तत्र तत्रानित्यानामेव बुद्ध्यादीनां दर्शनेन कथं तन्नित्यत्वमिति साम्प्रतम्; अप्रयोजकत्वात् । अन्यथा पार्थिवानां रूपादीनां कार्याणामुपलब्धेस्तोयादिपरमाणवोऽपि न रूपादिमन्तो भवेयु; तेषामकार्यत्वात् । यदि च हिमकरकादौ रूपादिदर्शनात्कार्यद्रव्यगतानां तेषां कारणगुणक्रमेण भावात् पाथसीयपरमाणूनामपि रूपादिमत्ता सदा कारणतया च तद्गतानि रूपादीनि नित्यानीति, तर्हीहापि कार्यत्वेनाचेतनोपादानत्वेन समस्तविषयज्ञानानुमानात्तस्य च सदा कारणतया तन्नित्यत्वसिद्धेः समानत्वात् । परपुरुषसमवेतावपि धर्माधर्मावधिष्ठातुं शक्नोत्येव परमेश्वरः सम्बन्धात् ।

न च संयोगसमवाययोरभावेन कस्तत्र सम्बन्ध इति वाच्यम्, साक्षात्संयोगसमवायाभावेऽपि संयुक्तसंयोगिसमवायसम्बन्धस्य सद्भावात् । परमेश्वरेणसंयुक्ताः परमाणवस्तैश्च क्षेत्रज्ञास्तत्समवेतौ च धर्माधर्माविति संयुक्तसंयोगिसमवायसम्बन्धः, संयुक्तसमवायो वा क्षेत्रज्ञैरीश्वरस्य संयोगसम्बन्धः, तैश्च धर्माधर्मयोः समवायसम्बन्ध इति तदुपपत्तिः । न च तदसिद्धिः; ईश्वरः क्षेत्रज्ञसंयुक्तो मूर्त्तद्रव्यसंयोगित्वाद् घटादिवत् इत्यनुमानेन संयोगसिद्धेः । स चास्य संयोगोऽन्यतरोभयकर्मसंयोगानां तत्कारणानामभावादजन्यः । कार्यारम्भाभिमुख्यमेव धर्माधर्मयोः प्रवृत्तिः, सा च देशकालादिवदीश्वरप्रयत्नमप्यपेक्षते । न च धर्माधर्मौ परमाणून्वा स्वधर्मानुपगृहीतान् कथमीश्वरः प्रयत्नेन प्रेरयतीति वाच्यम्, विषविद्याविदा स्वधर्मानुपगृहीतस्य विषशकलस्य प्रेरणवत्तदुपपत्तेः । एवमीश्वरीयज्ञानेच्छाप्रयत्नानां नित्यत्वसिद्धौ शरीरग्रहणमपि तस्य नापेक्षितम् तन्मात्रादेव परमाणूनामदृष्टादीनाञ्च प्रवृत्तौ शरीरपृथिव्यादिलक्षणस्य कार्यस्योत्पत्तेरुपपत्तेः । न च नेश्वरः कर्ता क्षित्यङ्कुरादीनां प्रयोजनाभावात्; तथा नेश्वरविज्ञानं नित्यं विज्ञानत्वादित्यादिप्रत्यनुमानानीति वाच्यम्; ईश्वरस्य तज्ज्ञानस्य च धर्मिणोऽप्रसिद्धौ हेतोराश्रयासिद्धत्वात् । तत्सिद्धौ कर्तुर्नित्यज्ञान-

स्येश्वरस्य च धर्मिग्राहिणोऽनुमानादेव सिद्धेस्तद्विरोधान्नोक्तप्रत्यनुमान-सिद्धिः ।

न चाज्ञातरूपाणामिन्द्रियमनसां विज्ञानोत्पत्तिं प्रति साधनभावस्य वत्सविवृद्धिनिमित्तस्याचेतनस्य क्षीरस्य स्वातन्त्र्येण प्रवृत्तेश्च, वनविट-पिनाञ्च विना प्रयत्नमुत्पादस्य दर्शनाद्व्यभिचार इति साम्प्रतम्; सर्वेषा-मेव तेषां विवादास्पदत्वेन पक्षकुक्षौ निक्षिप्तत्वात् ।

न चानुपलम्भाच्छशशृङ्गतुल्यता परमेश्वरस्येति वाच्यम्; वैषम्यात् । न च शशशृङ्गास्तिता तदनुपलब्धिविरोधाद्भगवतस्त्वपरोक्षानर्हस्य तद्वि-रोधानुपपत्तेः, अन्यथा सर्वानुमानोच्छेदप्रसङ्गः । शृङ्गस्य तु शशशिरो-वर्तिनो गवादिगतस्येव दर्शनार्हस्यानुपलब्धिनिराकृतस्य साधनानर्हत्वात् । न च पक्षेण व्यभिचारः; सर्वत्र तस्य सुलभतया सर्वानुमानोच्छेद-प्रसङ्गात् । एवं नित्येतरत्समस्तं सर्वज्ञपूर्वकमुत्पत्तिमत्त्वादचेतनोपादा-नत्वाद्वा, यन्न सर्वज्ञपूर्वकं न तदुत्पत्तिमदचेतनोपादानं वा, यथा परमाण्वादि, न चेदं तथा, तस्मात्सर्वज्ञपूर्वकमिति ।

लोके देशकालप्रतिप्रसवं कार्यमुपलभ्यते । यदि चेतनानधिष्ठितानि स्वं कार्यं कुर्युस्ततो यत्र क्वचनावच्छिन्नानि कार्यं जनयेयुरिति न देशका-लप्रतिनियतप्रसवमुपलभ्येत । तेन चेतनाधिष्ठितैरेव कारणैः कार्यं जन्यत इति मन्तव्यम् । हेतुसमवधानेन कार्यं जन्यते न प्रत्येकं कारणैर्जन्यत इति कारणसमवधायकतयापि चेतनाधिष्ठितानामेव कारणानां कार्योत्पा-दकत्वम् ।

ननु कादाचित्कपरिपाकाददृष्टविशेषादेव कारणसमवधानमिति चेन्न । तस्याचेतनत्वेन कारणसन्निधापकत्वासम्भवात् । न खलु यत्र क्वचिद्-व्यवस्थितानि दण्डादीनि विना कुलालप्रयत्नमदृष्टविशेषादेव परस्परं सन्निधीयन्ते, सन्निहितानि वा कार्यस्येशते । तस्मात्कारणसमवधान-व्याप्तत्वात्कार्योत्पादस्य तस्य चोपलब्धिमत्पूर्वकत्वाभावेऽनुपपत्तेः । व्याप-कनिवृत्त्या तद्व्याप्यकार्योत्पादस्यापि निवृत्तेः । यदुक्तमीश्वरज्ञानमप्रत्यक्ष-मिन्द्रियार्थसन्निकर्षानुत्पादादित्यादि । तदप्यकिञ्चित्करम् । एतत्तु लो-कस्य प्रत्यक्षलक्षणम् । निखिलार्थसाक्षात्कारित्वरूपस्य प्रत्यक्षलक्षणस्ये-

श्वरप्रत्यक्षे सत्त्वात्। "अत्रैवैतस्य वाऽक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठत" इत्याद्याम्नायवचनान्यपि मानम्। ईश्वरज्ञानं शरीरेन्द्रियाद्यनपेक्षमेवेत्यत्रापि 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्ण' इत्यादि श्रुतिवचनानि च प्रमाणानि।

तदेतदपि मीमांसका दूषयन्ति। तथा च तेषामिदमाकूतम्—'न पक्षधर्मतावशात्क्षित्यङ्कुरादिकार्यदर्शनेन सर्वज्ञः कर्तृविशेषः सिद्ध्यति। नहि कस्यचित्सर्वज्ञत्वमात्रेण विश्वं कार्यमुत्पत्तुमर्हति। ज्ञानचिकीर्षाप्रयत्नसमुदायमन्तरा तदसिद्धेः। न ह्युपादानाद्यभिज्ञोऽप्यलसः कुलालो ज्ञानादिसमुदायमन्तरा कुम्भोत्पादने समर्थः। यथा केवलाद्वह्नेः केवलाद्वाऽऽर्द्रेन्धनाद्धूमो नोत्पद्यते, किन्तु तदुभयसमुदायादेव तज्जन्म भवति, तथैवाऽत्रापि प्रत्येतव्यम्।

न च पृथग्जनज्ञानविलक्षणमीश्वरज्ञानमसहायमेव विश्वकार्ये पर्याप्तम्; स्वरूपातिशयस्यैव सहायत्वे केवलादपि वह्नेर्धूमोत्पत्तिप्रसङ्गात् ननु क्षेत्रज्ञगतधर्माधर्मौ परमाणवश्च सहायाः सन्त्येवेति चेन्न; तैरेव कार्योत्पत्त्युपपत्तौ ज्ञानानपेक्षत्वप्रसङ्गात्। न चाविज्ञातास्ते न प्रवर्तन्त इति ज्ञानमपीष्यते, कुम्भाद्युपायेषु तथोपलम्भादिति वाच्यम् तर्हि तद्वदेव चिकीर्षाप्रयत्नयोरप्यपेक्षाया वक्तव्यत्वात्। कुम्भाद्युपायेषु तथादर्शनाविशेषात्। तत्रापि ज्ञानं चिकीर्षाविशेष उपयुज्यते, स च प्रयत्नभेद उपयुज्यत इति प्रयत्नहेतुभेद एव साक्षात्कारोदये हेतुरिति कथं तमन्तरेण तत्सम्भवः? नहि वह्निमन्तरेण तुषप्रक्षेपफूत्कारमात्रादेवौदनः सिद्ध्यति।

यद्युच्येत चिकीर्षाप्रयत्नावपि विद्येते एव परमेश्वरे। तत्रेदं वक्तव्यम्; तौ नित्यावनित्यौ वा? नित्यौ चेत्कृतमीश्वरस्य ज्ञानेन, चिकीर्षाप्रयत्नोत्पादानुपयोगिना तयोर्नित्यत्वेन तदनपेक्षणात्। न च प्रयत्नवज्ज्ञानमपि साक्षात्कार्योत्पादाङ्गम्, प्रयत्नभेदेन खल्वयमधितिष्ठत्युपादानादि न ज्ञानस्य चिकीर्षाया वा निष्पादितक्रिये कर्मण्युपयोगोऽविशेषाधायिनः साधनस्य साधनन्यायातिपातात्। तथा चेश्वरस्य सर्वज्ञता दत्तजलाञ्जलिः स्यात्। यद्यनित्यौ, ततस्तयोरुत्पत्तिकारणं

वक्तव्यम्। न च नित्यज्ञानमेव मूलकारणं नापरेण कारणेनार्थ इति वाच्यम्; तदनुपपत्तेः। आत्ममनः संयोगविशेषासमवायिकारणौ चिकीर्षाप्रयत्नौ न ज्ञानमात्रादुपपन्नौ भवितुमर्हतस्तथा सत्यतण्डुलादपि मण्डं सेत्स्यति। नन्वीश्वरस्य मुक्तात्ममनोभिः संयोगास्तत्सहायाः सन्त्येव, तेन तत्सहायस्य चिकीर्षाप्रयत्नप्रचयो युगपदुत्पद्यते तत्तत्कार्योत्पादायेति चेन्न। विकल्पासहत्वात्।

तथाहि—किमु मनांसि तत्संयोगाश्चानधिष्ठितान्येव चिकीर्षाप्रयत्नौ जनयन्त्युताधिष्ठितानि? नाद्यस्तैरेव व्यभिचारात्। नान्त्यः प्रयत्नमन्तरेण तदनुपपत्तेः। प्रयत्नान्तरेण चिकीर्षान्तरजन्मना तदधिष्ठानमपि न वक्तुं युक्तमनवस्थानात्। अनादित्वान्नानवस्थादोष इति चेन्न; यतो यथोत्पन्नसञ्जिहीर्षः परमेश्वरो निर्व्यापारः कियन्तमपि कालं स्थित्वा यदा पुनरपि चिकीर्षति प्रयतते वा तदा तस्य चिकीर्षाप्रयत्नयोरुत्पादने चिकीर्षान्तरं प्रयत्नान्तरं वा नास्त्येवेति। ततश्च मनसां तत्संयोगानाञ्च न सम्भवत्यधिष्ठानमित्यनधिष्ठितेभ्यो मनस्तत्संयोगेभ्यो न प्रयत्नचिकीर्षे उत्पद्येयाताम्। अभ्युपगतायाञ्चोत्पत्तौ कार्यत्वाऽचेतनोत्पादनत्वहेतू व्यभिचरतः। न च सवितृप्रकाशवदीश्वरस्य ज्ञानेच्छाप्रयत्नास्तत्तद्भावभेदोपधानात्तत्तद्विषया भवन्तीति वाच्यम्, अन्योन्याश्रयप्रसङ्गात्। तत्तद्भावभेदोपधाने तत्तद्विषयत्वम्, तत्तद्विषयत्वे च तत्तदुपधानत्वम्। किञ्च—उपधीयमानानधिष्ठाने तदुपधानस्य कार्यस्याप्यनुत्पत्तिः। कार्यस्याधिष्ठानादेवोत्पत्तेः। एवमनित्यत्वपक्षे, अनवस्थादयो दोषा ऊहनीयाः। तथा चैवं विचारासहसर्वज्ञकर्तृत्वरूपो विशेषः पक्षधर्मताबलान्न धर्मिणि शक्यसाध्यः स्वयमनुपपद्यमानस्यान्योपपादकत्वासम्भवात्।

न चासति विशेषे सामान्यस्यानुमानिकस्य का गतिरिति वाच्यम्; अनुपपद्यमानविशेषे सामान्यस्य पर्यवसानेऽपि प्रमाणसिद्धमनुपपन्नमुपपादनीयमिति विप्रतिषिद्धमिति वाच्यम्; अविप्रतिषिद्धसिद्धेस्तदुपपत्तेः। अनुपपद्यमानस्यानुपपत्तिरुचितैव। न सम्भवत्येव तादृशो विशेषो यमास्थाय क्षित्यादौ बुद्धिमत्पूर्वकत्वसामान्यं व्यवतिष्ठेत। न चैवं सर्वानुमानोच्छेदप्रसङ्गः, सम्भवद्विशेषविषयत्वादितरानुमानानाम्।

नहि पर्वते वह्निविशेषो न सम्भवति। अपि चोत्पत्तिमत्त्वमात्रमत्र हेतुः क्रियते। तद्विशेषो वा (यद्दृष्टेरक्रियादर्शिनोऽपि कृतबुद्धिरुपजायते) त एवोत्पत्तिमन्तोऽचेतनोपादानाबुद्धिमत्पूर्वका ये बुद्धिमदन्वयव्यतिरेकानुविधायिभावाभावाः प्रमाणेनोपलब्धा प्रासादाट्टालगोपुरतोरणादयश्च तथा, नतु तनुभुवनादयो, न खलु तद्भावाभावयोर्बुद्धिमद्भावाभावानुविधानं कदाचिदप्युपलब्धम्। न च घटादे उत्पत्तिमतस्तथोपलम्भेनानुत्पत्तिमतो गगनादेरनुपलम्भादुत्पत्तिमत्त्वस्य च तनुभुवनादेरप्यभेदात्तथात्वमिति वाच्यम्, उत्पत्तिमत्त्वाविशेषेऽपि वैलक्षण्यात्। नहि मृद्विकारस्य घटादेर्मनुष्यकार्यत्वमिति शक्रमूर्ध्नोऽपि तत्कार्यत्वम्। यदि मृद्विकारस्य तद्विधसंस्थानस्यापि घटस्य मनुष्यनिर्माणदर्शनात्तादृशत्वेऽपि तदन्वयव्यतिरेकानुविधानाभावान्न शक्रमूर्ध्नो मनुष्यकार्यत्वमिति, तर्हीहापि साम्यात्। यस्य यस्य प्रासादादेर्बुद्धिमद्भावाभावानुविधानमस्ति तस्य तस्य तत्पूर्वकत्वाभ्युपगमेऽपि तद्विधस्यापि तनुभुवनादेस्तदन्वयव्यतिरेकानुविधानाभावान्न तथात्वम्।

नन्वेवं यो यो धूमविशेषो वह्निभावानुविधायी स स सर्वो वह्निपूर्वोऽस्तु, नतु पर्वतनितम्बवर्ती तथेति कथं ततो वह्निरनुमीयते। सामान्यविषयत्वे तु कार्यकारणभावावधारणस्येहापि साम्यमिति चेन्न; तथात्वे शक्रमूर्ध्नोऽपि मनुष्यकार्यत्वापत्तेः। यदि तु घटकुड्याद्यपेक्षया शक्रमूर्धादेर्वैशेष्यं शक्यसमर्थनं तदा प्रासादादिभ्यस्तनुभुवनादीनामपि विशेषः शक्यसमर्थन एव। वह्न्यन्वयव्यतिरेकानुविधायिनां धूमविशेषाणां पर्वतीयधूमान्न स्वरूपेण विशेषः। अतएव न पाण्डुद्रव्यमात्रात्कुमुदकपोतादेरनुमानम्। धूमत्वसामान्यस्यैव तेभ्योभेदापादकत्वात्। नच हेतुसमवधानं चेतनमन्तरेणासम्भवमदृष्टपरिपाकादेव कादाचित्कादेशकालभेदसमासादितजन्मनस्तदुपपत्तेस्तत एव कार्यनियमसिद्धेः। नहि नियतप्रकारसामर्थ्येभ्यः कारणेभ्यः कार्यमनियमेनोत्पत्तुमर्हति, अन्यथा कर्तृचैतन्येप्ययं प्रसङ्गो दुर्वारः स्यात्तस्यापि कारणसामर्थ्यानुरोधेन नियोजकत्वात्। न च चेतनमन्तरेण कुम्भादिकारणानि न प्रवर्तन्त इति पृथिव्यादिकारणैरपि न प्रवर्तितव्यम्।

यथा हि देहवत्प्रयत्नमन्तरेण कुम्भादिकारणेष्वप्रवर्तमानेष्वपि तनुभुवनादिकारणानि न देहवतः प्रयत्नमपेक्षन्ते तथैव चेतनमात्रप्रयत्नमपि नापेक्षिष्यन्ते । किन्तु अदृष्टपरिपाकवत्क्षेत्रज्ञसंयोगादेव प्रवर्त्स्यन्तीति किं तद्भिन्नेन कल्पितेन ? तस्माद्विशिष्टमुत्पत्तिमत्त्वमसिद्धम् । पृथिव्यादिषूत्पत्तिमत्त्वमात्रप्रयोजकं विशेषप्रयुक्तव्याप्त्युपजीवित्वेन स्वाभाविकप्रतिबन्धवैकल्यात् । स्वाभाविकप्रतिबन्ध (सम्बन्ध) वतश्च हेतोरनुमानाङ्गत्वात् । अन्यथोपाध्यायदर्शनादेरपि शिष्याद्यनुमापकत्वप्रसङ्गात् ।

अपि च प्रेक्षावतां प्रवृत्तिः प्रयोजनवत्तया व्याप्ता, नेश्वरस्य प्रेक्षावतो जगन्निर्माणे प्रयोजनमुपलभ्यते । प्राप्ताखिलप्रापणीयस्य प्राप्तव्याभावात् । अत एव क्रीडासाध्यस्यापि सुखस्यावाप्तत्वात् क्रीडार्थमपि न तत्प्रवृत्तिः सम्भवति । नापि कारुण्येन परार्थं प्रवर्तते । सुखमयजीवलोकसृष्टेरेव प्रसङ्गात् । दुःखमयी सृष्टिस्तु बाहुल्येनोपलभ्यते । यदि च धर्माधर्मसहायस्य सृष्टिवैचित्र्यमुपपद्यत इत्युच्यते तदापि न सङ्गतिः । जगद्दुःखहेतोरधर्मस्य कारुणिकाधिष्ठानानुपपत्तेरनधिष्ठितस्य कार्यकरणे हेतोर्व्यभिचारः । न च वैराग्यजननहेतुतया परमार्थोपयोगितया दुःखानुभवस्य परहितकाम्ययैवाधर्ममधितिष्ठतीति वाच्यम्; दुखोत्पादस्येश्वराधीनत्वात्, तस्य तत्र वैमुख्येन तदनुत्पादे तदत्यन्तविमोक्षरूपस्यापवर्गस्यायत्नसिद्धत्वात् । न च निष्प्रयोजनमपि स्वभावादेव जगत्सृजतीति प्रेक्षावत्त्वव्याघातात्तथा च तत्प्रणीतेष्वागमेष्वप्यनाश्वासः । कथञ्चिज्जगदुत्पत्तेश्चैतन्यमात्रपूर्वकत्वेऽपि नैकत्वम्, सेतुप्रासादादिष्वेकबुद्धिमत्पूर्वकत्वासिद्धेः । ईश्वरकर्तृकत्वेन सर्वस्यैककर्तृकत्वमिति चेन्न; सन्निवेशविशेषलक्षणस्य कार्यस्य चेतनमात्रनान्तरीयकतया तदसिद्धेः । दृष्टान्ते घटादावेकः कर्ता कुलालादिः साध्यते क्षित्यादावीश्वर इति व्यभिचारान्नोत्पत्तिमत्वमचेतनोपादानत्वं वा क्षित्यादीनाञ्चेतनात्मकं कर्तारं साधयितुं शक्नोति । दृष्टान्तसाध्ययोरनेककर्तृकत्वस्य दर्शनात् । यदि तु सर्वमेवेश्वरकर्तृकत्वेन साध्येत, ततो घटादीनामपि तथात्वापत्तौ पक्षकुक्षिनिक्षेपात् दृष्टान्ताभाव एव स्यात् । न च व्यतिरेकी हेतुः

सम्भवति, कादाचित्कादृष्टपरिपाकादेव देशकालादिप्रतिनियतकार्योत्पादोपपत्त्या तद्व्यतिरेकाव्यभिचारस्यानिश्चितत्वात् ।

. यदि च घटादेर्द्विकर्तृकत्वं ततः क्षित्यङ्कुरादीनामपि द्विकर्तृकत्वापत्त्येश्वरेश्वरप्रसङ्गादनवस्था । यथा प्रत्यक्षसिद्धकुलालादिकर्तृकेऽपि घटादौ तावतैवोपपद्यमानोत्पादे चेतनान्तरमीश्वरस्तत्कर्तारं कुलालमधिष्ठातुं कल्प्यते, तथैवेश्वमधिष्ठातुमीश्वरान्तरमित्यनवस्था । न चानवस्थाप्रसङ्गादेव न द्वितीयस्येश्वरस्यानुमानमिति वाच्यम; एकानुमानेऽप्यनवस्थायास्तुल्यत्वात् लब्धपरिपाकादृष्टवत् । क्षेत्रज्ञसंयोगादेव क्षित्यादिकार्योत्पत्तावीश्वरकल्पनाया अनवकाशात् । अथ न द्व्यधिष्ठातृका घटादयः सर्वमेकाधिष्ठातृकमिति नेश्वरान्तरानुमानञ्च न वानवस्थेति चेत्, सर्वज्ञत्वासिद्धेः ।

यदपि च यत्परस्परोपकार्योपकारकभावेन व्यवस्थितं तदेककर्तृकं दृष्टम् , यथा रथावयवा एकतक्षकृतिपूर्वका दृष्टास्तथा क्षित्यङ्कुरादिकमपि परस्परोपकार्योपकार्योपकारकभावेन व्यवस्थितमिति तेनाप्येककर्तृकेन भाव्यमिति जगत्कर्तुः सार्वज्ञ्यसिद्धिरिति । तदप्यकिञ्चित्करम्, रथादीनां नानातक्षकृतिपूर्वकत्वस्यापि दर्शनात् । अपि चेश्वरस्य क्लेशकर्मविपाकाशयापरामर्शाभ्युपगमात् कर्माभावे देहाद्यनुपपत्तिस्तदभावे बुद्धिरैश्वर्यं वा नोपपद्यते । कुतः सार्वज्ञ्यम् ? वह्न्यभावे धूमस्येव कर्माशयाभावे शरीरादीनामनुपपत्तेः । यस्य मते सर्वज्ञेऽपि कर्माशयसत्त्वं तन्मते सर्वज्ञत्वस्य कर्माशयपूर्वकत्वेन कर्मज्ञानमन्यतोऽभ्युपेतव्यं येन कर्माशयेनास्य शरीरादयो जनयितव्यास्तेनापि ज्ञातेनाधिष्ठितेन च भाव्यम् , तथाचानवस्था । तत्रापि चैष एव प्रसङ्गः ।

ननु हेत्वभावे कार्याभाव इति नियमेन यदि तनुभुवनादीनां हेतुपूर्वकत्वं सिद्ध्यति तथा सर्वज्ञत्वसिद्धिस्तदसिद्धौ दूषणमपि न सिद्ध्यति । तथा च ।

"यत्रोभयोः समो दोषः परिहारश्च तादृशः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥"

इति रीत्या नैकोऽनुयोगमर्हतीति चेन्न, वैलक्षण्यात् ।

अयमभिप्रायः-प्रत्यक्षं दर्शननिरपेक्षमुपजायमानमदृष्टचरमपि, त्रैलोक्य-विलक्षणमपि, स्वलक्षणमर्थं गोचरयितुं शक्नोत्येव अनुमानं तु व्याप्त्य-पेक्षितया व्याप्तेश्च पूर्वदर्शनाधीनतया दृष्टसलक्षणमेव गोचरयति न विलक्षणमदृष्टलिङ्गसम्बन्धात् । तथा च तनुभुवनादिहेतुत्वेनानुमीयमाना बुद्धिर्यथादर्शनमेवानुमीयेत । सा चानित्या शरीरात्ममनःसंयोगहेतुरसर्व-विषयास्मदाद्युपलब्धेति तद्विधैवानुमातव्या । एवञ्च नित्यत्वसर्वविषय-त्वादि व्याहन्येत । नच वह्न्याद्यनुमानस्यास्त्येव प्रसङ्गः पर्वतेऽनुमीयमा-नस्य वह्नेर्महानसादिदृष्टवह्निविलक्षणत्वाभावात् । न च देशभेदस्तद्वैल-क्षण्याय पर्याप्तोऽन्यत्वात् । न च तर्हि कथं रूपाद्युपलब्धेरिन्द्रियानुमानं तत्र दण्डादिकरणसालक्षण्याभावादिति वाच्यम्, रूपादिपरिच्छित्तिकरणा-नामिन्द्रियाणामनुमानागोचरत्वात् । न च तर्हि कथमिन्द्रियसिद्धिः, रूपादिपरिच्छित्यन्यथानुपपत्त्यार्थापत्त्या तत्सिद्धेः । सा च सम्बन्धदर्श-नानपेक्षतया न दृष्टसालक्षण्यमपेक्षते । न चैवं बुद्धिमत्पूर्वकत्वेऽपि अर्था-पत्तिरन्यथानुपपद्यमानस्य कस्यचिदप्यदर्शनात् । अदृष्टवत्क्षेत्रज्ञपरमाणु-संयोगात् तनुभुवनादेरुत्पत्तेरुपपत्तेरप्यस्ति साधकापेक्षया साधनदूषणस्य वैलक्षण्यम् । अपि च साम्येपि वैतण्डिको यः स्वपक्षस्थापनाहीनः परपक्षं खण्डयति, स न निराकर्तुं शक्यते । अपि च तुल्यत्वे प्रतिबन्ध-मात्राद् दूषणम्, साधनन्तु निरस्तप्रतिपक्षं साध्यसिद्धम् उपयुज्यते, न तु सत्प्रतिपक्षं प्रतिबन्धमात्रात् न च बुद्धिमात्रं सन्निवेशविशेषहेतुः, अपि तु प्रेक्षारूपबुद्धिविशेष एव तद्धेतुः । प्रेक्षा च विन्यासप्रयोजनविचार-निर्णयरूपा । न च सा तत्र सम्भवति, स्वार्थपरार्थाभावात् । ननु माभूत्सर्वज्ञो नियोक्ता धर्मज्ञस्त्विष्यताम् । तदुक्तम्—

'हेयोपादेयतत्त्वस्य साभ्युपायस्य वेदकः ।
यः प्रमाणमसाविष्टो न तु सर्वस्य वेदकः ॥
कीटसंख्यापरिज्ञानं तस्य नः क्वोपयुज्यते ।
दूरं पश्यतु वा मा वा तत्त्वमिष्टन्तु पश्यति ॥
प्रमाणं दूरदर्शी चेदृयं गृध्रानुपास्महे ॥"

ननु धर्मो रूपविशेषाभावात् कथं प्रत्ययपूर्व इति चेन्न । रूपवत

एव चक्षुरादीनां विषयत्वनियमे प्रमाणाभावात् । न च प्रत्यक्षस्य वर्तमानकालमात्रविषयत्वेन कथं प्रत्यक्षविषयत्वमिति वाच्यम्; धर्मस्य कदाचिद्वर्तमानत्वेऽतिशयवच्चक्षुरादिविषयत्वे बाधाभावात् । आत्यन्तिके चावर्तमानत्वे खपुष्पवदसत्त्वापत्तेः ।

यत्तु कुर्विति नियोगो धर्मः स च न वर्त्तमानः करोषीति प्रसङ्गात्, नियोगविषयस्य यागादेरेव धर्मत्वोपगमात्, तत्रैव धर्मत्वप्रसिद्धेस्तस्य चोत्पाद्यत्वेनाप्रत्यक्षत्वादिति तन्न; तदानीमप्रत्यक्षत्वेप्युत्पन्नस्य प्रत्यक्षत्वसंभवात् । न चोत्पन्नमपि यागादिर्न स्वरूपेण धर्मः, श्रेयःसाधनरूपेणैव तत्त्वात्, तच्चातीन्द्रियमिति वाच्यम्; विकल्पासहत्वात् ।

तथा हि—यदि श्रेयःसाधनता शक्तिः । पूर्वोक्तयुक्त्येन्द्रियाणां परिमाणतो विषयनियमस्तु न निरूप्यते । यदि तु श्रेयतासाधनस्य सम्बन्धः श्रेयःसाधनत्वम्, कृत्तद्धितसमासेषु सम्बन्धाभिधानं त्वतल्भ्यामिति वार्तिकात् । स च सम्बन्धिद्वयाधीननिरूपणो नान्यतरेण सम्बन्धिना निरूप्यते । तथा च कालान्तरभाविन्यसति स्वर्गादिश्रेयसि यागादिसम्बन्धः कथं प्रत्यक्षं भवितुं शक्यत इत्युच्येत; तदापि यागादीनां श्रेयःसाधनत्वाभावे धर्मत्वहान्या यागादिसमवेतातिशयद्वारा श्रेयःसाधनत्वं वर्तमानमेवेति कुतो नाक्षविषयः ? न चानुष्ठानात्प्राक्धर्माधर्मज्ञानमिष्यते, तज्ज्ञानस्यानुष्ठानाङ्गत्वात्, तथा च कथं भविष्यतोऽक्षविषयत्वमिति वाच्यम्; अनुष्ठातॄणां प्रत्यक्षाविषयत्वेऽप्युपदेष्टुरतिशयवतस्तदुपपत्तेः । स चातिशयो व्योम्नो महत्त्ववत्स्वाभाविक उपदेशान्तरजः क्रियानिबन्धनो वा, योगादिप्रभावस्यापलापानर्हत्वात् ।

तदेतदपि मीमांसका न क्षमन्ते । तथा हि—प्रलीयमानकर्मोपजनस्य पूर्वापराङ्गोपपादितावस्थान्तरस्य देशकालाद्यासादितपरिणतिभेदस्यातिशयस्य कर्तृस्थस्य चिरभाविफलसाधनत्वमुच्यते वृद्धैः । तस्य च स्वकाले वर्तमानत्वेऽपि कर्मकालेऽवर्तमानत्वेन कथं कर्मसम्बन्धितया तत्प्रत्यक्षत्वसम्भवः ? न चैवमतिशयस्य क्षेत्रज्ञसमवायित्वेन कर्मणः कथं साधनत्वमिति वाच्यम्; तदाहितत्वेन तदुपपत्तेः । नहि स्वसमवाय्येव साधनं भवतीति कश्चिदस्ति नियमः । कार्यानुमेयं तद्यत्रकार्यायालम्, तत्रैव युक्तम्, तदाहितत्वात्तस्य ।

अयमभिप्रायः—यदि हि तद्रूपमन्यनिरपेक्षं गम्यते, ततो यत्प्रत्यासन्नं गम्यते तस्य स्यात्, यथा घटस्य शौक्ल्यं, न त्वेतत्तथा। अपि तु कर्माणि कारणत्वेन फलाय चोदितानि तदुपपत्त्यैतत्कल्प्यमानं कर्मसम्बद्धमेवावगतम्; न चान्यसम्बद्धम् एतत्फलसम्बद्धमुपपादयति कर्मणः। तथा प्रतीयमानमपि चैतत्कर्मापहायान्येन सम्बद्ध्येत स्वरूपादेव हीयेतेति कर्मण्येवैतत्। न चौपचारिकः कर्मणः साधनभावः काष्ठैः पचतीत्यादौ काष्ठादिषु तथैव सिद्धेः। न खलु काष्ठादीनामपि साक्षात्पक्तिसाधनता किन्त्वौष्ण्यापेक्षस्य वह्निसंयोगप्रचयभेदस्यैव। अथ च काष्ठैः पचतीत्युच्यते काष्ठानां साधनता, अग्नितण्डुलसमवाय्यपि वह्निसंयोगस्तत्पूर्वस्तथा यागादीनामपि।

पातञ्जलास्तु आप्तेन दृष्टोऽनुमितो वार्थः परस्य स्वबोधसंक्रान्तये शब्देनोपदिश्यते। शब्दात्तदर्थविषया वृत्तिः श्रोतुरागमः। अत्रैव तत्त्ववैशारद्यां तत्त्वदर्शनकारुण्यकरणपाटवादिसम्बन्ध आप्तिस्तया वर्तत एव इति आप्तस्तेन दृष्टोऽनुमितो वार्थः श्रुतस्य पृथगनुपादानम्। तस्य दृष्टानुमितमूलत्वेन ताभ्यामेव चरितार्थत्वात्। आप्तचित्तवर्तिज्ञानसदृशस्य श्रोतृचित्ते समुत्पादः, स्वबोधसंक्रान्तिस्तस्या अर्थ उपदिश्यते। श्रोतृहिताहितप्राप्तिपरिहारोपायतया प्रज्ञाप्यते। चैत्यं वन्देत स्वर्गकाम इत्यादयो बौद्धाद्यागमास्तु न दृष्टानुमितार्थविषयाः। कस्यापि जीवस्य नालौकिकसाध्यसाधनभावः शक्यज्ञानः। न चैवं मन्वाद्यागमोपि तथाभूत एवेति वाच्यम्। तस्य वेदमूलकत्वेन तथात्वायोगात्। वेदस्य वक्ता त्वीश्वरो दृष्टानुमितार्थ एव। स चेश्वरोऽविद्यादिक्लेशैः कुशलाकुशलादिभिः कर्मभिस्तत्फलैर्विपाकैस्तदनुगुणाभिर्वासनाभिरपरामृष्टः पुरुषविशेषः। न चैवं कैवल्यप्राप्तपुरुष एव कश्चित् भविष्यतीति वाच्यम्। विशेषोपपत्तेः केवलिनां पूर्वा बन्धकोटिः प्रकृतिलीनानामुत्तरा बन्धकोटिः संभाव्यते। नैवमीश्वरस्य, तस्य नित्यमुक्तत्वात्। प्रकृष्टसत्त्वोपादानाच्छास्त्रनिमित्तकः शाश्वतिक उत्कर्षः। शास्त्रमपि प्रकृष्टसत्त्वनिमित्तम्। ईश्वरसत्त्वेऽनयोः शास्त्रोत्कर्षयोरनादिसम्बन्धः।

अत्र वाचस्पतिमिश्राः—तापत्रयपरीतान् प्रेत्यभावमहार्णवाज्जन्तूनुद्धरिष्यामि ज्ञानधर्मोपदेशेन, न च ज्ञानक्रियाशक्त्यतिशयसम्पत्तिमन्तरेण तदुपदेशः। न चैवमपहतरजस्तमोमलविशुद्धसत्त्वोपादानं विना इत्यालोच्य सत्त्वप्रकर्षमुपादत्ते। अविद्यादिभिरपरामृष्टोऽप्याहार्यरूपेण शैलूष इव तत्तदभिमानोपि न भवति भ्रान्तः। नचैवमुद्दिधीर्षया भगवता सत्त्वमुपादेयम्। तदुपादाने च तदुद्दिधीर्षा चेदन्योन्याश्रय इति वाच्यम्। सृष्टिप्रलयप्रवाहस्यानादित्वेन तदनुपपत्तेः।

नचेश्वरस्य सत्त्वप्रकर्षे न कस्यचित्प्रत्यक्षमनुमानं वास्ति, न चेश्वरप्रत्यक्षप्रभवं शास्त्रमिति युक्तम्। कल्पयित्वापि स्वात्मैश्वर्यप्रकाशनाय तथोक्तिसंभवेनानाश्वाससंभवादिति वाच्यम्, मन्त्रायुर्वेदादिष्वीश्वरप्रणीतेषु प्रवृत्तिसामर्थ्याव्यभिचारनिश्चयात् प्रामाण्यस्य सिद्धत्वेन तन्निर्मितस्य शास्त्रस्यानतिशङ्कनीयत्वात्। न चौषधिभेदानां तत्संयोगविशेषाणां च मन्त्राणां तत्तद्वर्णावापोद्धारेण सहस्रेणापि पुरुषायुषैर्लौकिकप्रमाणव्यवहारी शक्तः कर्तुमन्वयव्यतिरेकौ। न चागमादन्वयव्यतिरेकौ ताभ्यां चागमस्तयोरनादित्वादिति प्रतिपादयितुं युक्तम्। महाप्रलये तत्सत्त्वादनयोर्विच्छेदात्। न च प्रलयसत्त्वे प्रमाणाभावः। महदहङ्कारादिरूपपरिणामेन प्रधानेनापि कदाचित्सदृशपरिणामेनापि भाव्यम्। सदृशपरिणाम एव साम्यावस्था। स च महाप्रलयः। तस्मान्मन्त्रायुर्वेदवद्वेदराशिरपि परमेश्वरनिर्मितः प्रमाणभूत एव। सृष्टिप्रलयौ चागमानुमानाभ्यां सिद्ध्यतः। सर्वज्ञपूर्वकत्वे सति सिद्धमाप्तोक्तत्वेन मन्त्रायुर्वेदप्रामाण्यवद्वेदप्रामाण्यम्।

परमेश्वरीयनित्यज्ञानमूलत्वेन प्रवाहरूपेण नित्यान्येव वेदवाक्यानि। यदि न नित्यानि कथं प्रमाणानि? पुरुषनिर्मितत्वे तु पुरुषाणां चित्राभिसन्धित्वेन भ्रमशङ्का न शक्याऽपाकर्तुम्। तस्मादपौरुषेयत्वमेव पुरुषाश्रयान्दोषानपाकुर्वद्वेदे तत्प्रामाण्यव्यवस्थापकम्। तदेतत्पातञ्जलमतमपि मीमांसकैः प्रतिक्षिप्यते। परमेश्वरमूलकत्वेन शास्त्रप्रामाण्यं शास्त्रप्रामाण्येन चेश्वरसिद्धिरित्यत्योन्याश्रयान्न तदुभयसिद्धिः। न चानादित्वेन तच्छक्यसमर्थनम्। बीजाङ्कुरादिवत्तस्य

प्रमाणान्तरासिद्धत्वात्। न चानुमानेन तत्सिद्धिर्नैयायिकानुमाननिराकरणयुक्तिभिरेवान्यानुमानानामपि निराकृतत्वात्।

यदुच्यते सातियानां काष्ठाप्राप्तिः परिमाणानामुपलब्धा। यथा कुवलामलकबिल्वेषु महत्त्वस्य सातिशयस्याकाशे काष्ठाप्राप्तिः। सातिशयञ्चेदं विज्ञानमुपलभ्यते तत्तदेकद्विबहुविषयादिव्याप्त्या। तदिदमपि क्वचित्काष्ठाप्राप्तं युक्तं, सर्वज्ञतैव काष्ठाप्राप्तिः। तदपि न; विकल्पासहत्वात्। तथाहि—यदि यतः परं नास्ति सा काष्ठा भवतु तत्प्राप्तिर्न तावत् सार्वज्ञ्यप्राप्तिः। भूयिष्ठविषयत्वेन तु न सार्वज्ञ्यम्। पार्थिवस्य गोलकस्य पार्थिवान्तरापेक्षं बहुतराकाशावकाशव्यापित्वेपि न सर्वव्यापिता। अथ यतः परं न सम्भाव्यते सा काष्ठेति तन्न; कार्यद्रव्यैर्व्यभिचारात्। नहि सातिशया अपि घटादयः परा संभावनीयातिशायिनः, अन्यानवकाशप्रसङ्गात्। एकेन सर्वव्याप्तेः। न च गुणत्वेतीति विशेषणान्न व्यभिचार इति वाच्यम्, तद्गतानां गरिमादीनां तदवस्थाऽसम्भवात् सर्वैर्गुरुत्ववद्भिरेककार्य्यारम्भाभावात्।

ऐश्वर्यफलस्य धर्मस्य न सा काष्ठा तद्वदैश्वर्यादिजननाद्धर्मस्यापि। ईश्वरैश्वर्यस्य धर्मफलत्वाभावात्। क्लेशकर्मविपाकाशयापरामर्शादनेकैश्वर्यप्रसङ्गादैश्वर्यव्याघातात्।

ननु चेश्वरं विना कर्मणां फलदातृत्वञ्जगत्स्रष्टृत्वं वा नोपपद्यत इति तदर्थमीश्वरकल्पनमावश्यकमिति चेन्न, मीमांसकैः कर्मभिरेव तत्साधितत्वात्।

तथाहि—उपदेशो विधिः, नाज्ञादिः, उपदेशश्च नियोज्यप्रयोजने कर्मणि लोकशास्त्रयोः प्रसिद्धः। यथाऽऽरोग्यकामो जीर्णे भुञ्जीत, एष सुपन्था गच्छत्वनेन भवान्, आज्ञादिस्तु नियोक्तृप्रयोजनस्तत्राभिप्रायस्य प्रवर्तकत्वात्, अपौरुषेये वेदे च तदसम्भवात्। तदेवमुपदेशस्य नियोज्यानुष्ठात्रपेक्षितप्रयोजनानुकूलव्यापारगोचरत्वमेव। तथा च—"स्वर्गकामो यजेत" इत्यादौ यागादयो नियोज्यापेक्षितस्वर्गादिसाधनतया गम्यन्ते।

"स्वर्गकामो यजेत" इत्यादिश्रुतिभिः कर्मफलसम्बन्धः श्रूयते, न च

किमप्यपूर्वमनुत्पाद्य कर्म विनश्यत् कालान्तरितं फलं दातुं शक्नोतीति तदन्यथानुपपत्या कर्मणः काचिदुत्तरावस्था फलस्य पूर्वावस्था वा कल्पनीया। तथा च कर्मणो यत्फलं प्रति साधनत्वं श्रुतिषु श्रुतं तदुपपादनाय कर्मणोऽवान्तरव्यापाररूपमपूर्वमभ्युपेयते। न च व्यापारवतः कर्मणोऽनुक्षणविनाशिनोऽसत्त्वे कुतो व्यापारावस्थितिरिति वाच्यम्, व्यापारवति सत्येव व्यापारो। नासतीति नियमाभावात्।

अतएवाग्नेयादिषु प्रध्वंसिष्वसत्स्वपि तदुत्पत्त्यपूर्वाणां परमापूर्वे जनयितव्ये तदवान्तरव्यापारत्वाभ्युपगमः। असत्यपि घृतपानादिकर्मणि तेन पुष्टौ कर्तव्यायां तत्परिणामभेदानां तदवान्तरव्यापारत्वाभ्युपगमश्च।

तदेतज्जैमिनिमतं "धर्मं जैमिनिरत एव" इति सूत्रेणोत्तरमीमांसायामुपस्थाप्य "पूर्वं तु बादरायणो हेतुव्यपदेशात्"। "फलमत उपपत्तेः" इति सूत्राभ्यां जैमिनिगुरोर्भगवतो बादरायणस्य मतेनेश्वरादेव कर्मफलसिद्धिः साधिता। तदेव चोपपादितं भगवत्पादैः। तथा च न केवलात् कर्मणोऽपूर्वाद् वा फलमुपपद्यते। किन्तु कर्मापेक्षादपूर्वापेक्षाद्वा परमेश्वरादेव फलमुपपद्यते। तथाहि–"एष उह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते। एष उ ह्येवासाधुकर्म कारयति तं यमधोनिनीषते" इत्यादिशास्त्रेभ्यः। सर्ववेदान्तेषु चेश्वरहेतुकाः सृष्टयो व्यपदिश्यन्ते। तदेव चेश्वरस्य फलहेतुत्वं यत्स्वकर्मानुरूपाः प्रजाः सृजति।

अत्रैव वाचस्पतिमिश्रा भामत्यां प्राहुः- दृष्टानुसारिणी कल्पना नान्यथा। न जातु मृत्पिण्डादयः कुम्भकाराद्यनधिष्ठिताः कुम्भाद्यारम्भाय विभवन्तो दृष्टाः।

न च विद्युत्पवनादिभिरप्रयत्नपूर्वकैः कार्यं सिद्ध्यत्येवेति व्यभिचार इति वाच्यम्, तेषामपि पक्षनिक्षिप्तत्वाद् व्यभिचारानुपपत्तेः। तथाचाचेतनं कर्म वा अपूर्वमन्यद् वा चेतनानधिष्ठितं स्वतन्त्रं स्वकार्ये प्रवर्तितुं नोत्सहते, न च क्षेत्रज्ञस्याधिष्ठानं संभवति, कर्मस्वरूपसामान्यविनियोगादिविशेषविज्ञानशून्यस्य तस्य तदनुपपत्तेः।

अतएव न सिद्धसाधनम्, तस्मात् तत्तत्प्रासादाट्टालक-गोपुरतोरणायूपजननिदर्शनसहस्रैश्चेतनाधिष्ठितानामेवाचेतनानां कार्यारम्भकत्वमिति

निश्चीयते । देवताधिकरणे देवतायाश्चैतन्यमपि साधितम्, असति बाधके श्रुतिस्मृतीतिहासपुराणप्रसिद्धं तन्न प्रतिषेद्धुं शक्यते । द्वारिभूतमहावाक्यार्थाविरोधे द्वारभूतस्यावान्तरवाक्यार्थस्य प्रामाणिकत्वे बाधाभावात् । "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः, ईशानः सर्वविद्यानामीश्वरः सर्वभूतानामित्यादिश्रुतिभिरीश्वरश्च प्रामाणिक एव ।

न चोपासनाविधिशेषत्वेनान्यपरत्वान्न ता ईश्वरसाधनायालमिति वाच्यम्; अन्यपराणामपि द्वारभूतार्थबोधने बाधाभावस्योक्तत्वात् । न चाम्नायस्य क्रियार्थत्वेनानर्थक्यमतदर्थानामिति न्यायेन क्रियापरत्वमेव सर्ववेदानाम्, तन्न्यायस्य कर्मबोधकवेदभागपरत्वात्, सर्ववेदानां ब्रह्मण्येव तात्पर्यावधारणाच्च । "सर्वे वेदा यत्पदमामनन्ति "वेदैश्च सर्वैरहमेव वेद्यः" इत्यादिश्रुतिस्मृतिभ्यः । न च क्रियापरत्वेनैव, वेदानां प्रामाण्यम् अप्रयोजकत्वात् ।

फलवन्निश्चितार्थावबोधकत्वेन प्रामाण्ये कर्मबोधकवाक्यानामिव सिद्धब्रह्मबोधकश्रुतीनामपि प्रामाण्यम् । ज्वरितः सन् पथ्यमश्नीयात्, न सर्पायाङ्गुलिं दद्यादित्यादिप्रवृत्तिनिवृत्तिबोधकवाक्यानामिव नायं सर्पो रज्जुरेषा इति सिद्धवस्तुबोधकवाक्यानामपि हितशासनपरत्वं भवत्येव ।

तथा चानन्यपरैरपि 'ईशावास्यं, स पर्य्यगाच्छुक्रं, यतो वा इमानि भूतानि जायन्ते, इत्यादिमन्त्रब्राह्मणवाक्यैः परमानन्दात्ममोक्षप्राप्तये परमेश्वरोऽवबोध्यते ।

कर्मबोधकवाक्यानामपि परमेश्वराराधनविधायकत्वेन परमेश्वर एव महातात्पर्यम् ! लौकिकश्चेश्वरो दान-परिचरण-प्रणामाञ्जलिकरण-स्तुतिमयीभिरतिश्रद्धागर्भाभिर्भक्तिभिराराधितः प्रसन्नः स्वानुरूपमाराधकाय फलं प्रयच्छति । विरोधितश्चापक्रियाभिर्विरोधकायाहितमिति सुप्रसिद्धम् । तस्मादीश्वरचेतनानधिष्ठितमचेतनं कर्मापूर्वं वा फलं प्रयच्छतीति दृष्टविरुद्धम् ।

यथा विनष्टं कर्म न फलं प्रसूत इति दृष्टविरोधादेवापूर्वं कल्प्यते, तथैव देवपूजात्मको यागो देवताप्रसादमन्तरा फलं प्रयच्छतीत्यपि

दृष्टविरुद्धमेव । नहि राजपूजात्मकमाराधनं राजानमप्रसाद्य फलाय कल्पते तस्माद् दृष्टानुगुण्याय यागादिभिरपि देवताप्रसत्तिरुपकल्प्यते । तथा च स्थायिनो देवताप्रसादादेव फलोत्पत्तिरुपपद्यत इति नार्थोऽपूर्वेण । एवमशुभेनापि कर्मणा देवताविरोधनमिति श्रुतिस्मृतिपुराणप्रसिद्धम् । तत एव स्थायिनोऽनिष्टफलप्रसवः ।

न शुभाशुभकर्मानुरोधेन तदनुरूपं फलमापादयन्त्यां देवतायां द्वेषपक्षपात-वैषम्य-नैर्घृण्यादयो वक्तुं शक्यन्ते । साधुकारिणमनुगृह्णाति, पापकारिणं निगृह्णाति च राजनि तथा दर्शनात् । तथैवालौकिकेऽपीश्वरे वैषम्यनैर्घृण्यादयः परिहर्तुं शक्यन्ते । न चेश्वरस्य सृष्टिपराङ्मुखत्वेन सर्वदुःखनिवृत्तिलक्षणस्यापवर्गस्य सिद्धिः संभवति, सृष्टिमन्तरा तत्त्वज्ञानसामग्र्यलाभेन तत्त्वज्ञानानुपपत्तेः अनाद्यविद्याकामकर्मवासनानां बाधानुपपत्त्यात्तदसम्भवात् ।

यथा च परमापूर्वाणां कर्तव्ये उत्पत्त्यपूर्वाणामङ्गापूर्वाणां चोपयोगः, एवमेव प्रधानाराधनेऽङ्गाराधनानामुत्पत्त्याराधनानाञ्चोपयोगः । स्वाम्याराधन इव तदमात्यतत्प्रणयिजनानामाराधनानामिति सर्वं समानमन्यत्राभिनिवेशात् ।

तस्माद् दृष्टाविरोधनेनाराधिताया देवताया एव फलं नापूर्वान्न वा केवलात्कर्मणः ।

मीमांसकमतरीत्या षड्भिः प्रमाणैस्तत्तत्प्रमेयान् यो जानाति स एव सर्वज्ञः, तथा च सर्वज्ञोऽपि वेदवाक्यैरेव धर्माधर्मादीन् जानाति तत्रापि संशयविपर्ययराहित्येन वेदवाक्यैरेव धर्मतत्त्वदर्शनमुच्यते । यथा रसनेन्द्रियग्राह्यस्य रसस्य न कस्यापि चक्षुर्ग्राह्यत्वम् तथैव वेदैकसमधिगम्यस्य धर्मतत्त्वस्य न तदतिरिक्तवेद्यत्वम् न्यायसामान्यात् ।

तदाह-"यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् ।
दूरसूक्ष्मादिदृष्टौ स्यात् न रूपे श्रोत्रवृत्तिता ।"

यद्यपि पूर्वोक्तेश्वरातिरिक्तस्य कस्यचित्सर्वज्ञत्वं तथाविधमेव; ईश्वरस्य तु जगत्कारणत्वेन सर्वज्ञत्वं स्वसंसृष्टसर्वावभास-

कत्वेनैव । न चेश्वरासिद्धिः, "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व" इत्यादि-श्रुतिभिः जगदुत्पत्तिस्थितिलयलीलस्य ब्रह्मणः सिद्धत्वात् । तस्यैव चेश्वरत्वात् । नचासां श्रुतीनामप्रामाण्यम्, अतत्परत्वं वा वक्तुं शक्यम्, अप्रामाण्ये, अतत्परत्वे च कारणाभावात् । न च कार्यपरत्वेन प्रामाण्य-नियमः, अप्रयोजकत्वात् । फलवन्निश्चितार्थावबोधकत्वेनैव वेदानां प्रामाण्याभ्युपगमात् । विधिभागवत् वेदान्तानामपि तुल्यः सम्प्रदाया-विच्छेदः, अस्मर्यमाणकर्तृकत्वञ्चेत्यपौरुषयत्वेन स्वत एव प्रामाण्यम् ।

भूतभौतिकानि स्वोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्ज-न्यानि, कार्यत्वे सति विलक्षणत्वात्, शय्याप्रासादादिवत् इत्यादिभिरनु-मानैश्च जगत्प्रकृतेः परमेशितुः सार्वज्ञ्यावगमः सुगमः । यदा लौकिकोऽपि कर्त्ता जानाति इच्छति अथ करोति तदा किमुत अनन्तकोटिब्रह्माण्ड-ततेः रचयिता ।

केचित्तु चिकीर्षाकृतिकर्तृत्वनिर्वाहाय चिकीर्षाकृत्यन्तरापेक्षायामन-वस्थापत्त्या, कार्यानुकूलज्ञानवत्वमेव ब्रह्मणः कर्तृत्वं प्राहुः । न च ज्ञान-स्यापि कार्यत्वेन तत्रापि ज्ञानान्तरापेक्षायां तदवस्थैवानवस्थेति वाच्यम्, ज्ञानस्य ब्रह्मणः स्वरूपत्वेनाकार्यत्वात् । तथाच निखिलप्रपञ्चरचयि-तृत्वेन आर्थिकमीश्वरस्य सार्वज्ञ्यम् । हेतुसमवधायकत्वेनापीश्वरसिद्धिः सम्भवत्येव । न च कादाचित्कपरिपाकादृष्टादुत्पत्तिस्तस्याचेतनस्य तत्समवधायकत्वानुपपत्तेः ।

यत्तूक्तं सर्वज्ञपूर्वकत्वं भूतभौतिकस्य न सिद्ध्यति, तेन हेतोर्व्याप्त्य-सिद्धेर्दृष्टान्तस्य च साध्यवैकल्याच्छय्याप्रासादादौ कार्यत्वस्यासर्वज्ञ-पूर्वकत्वेनैव व्याप्त्युपलब्धेश्च । न च ज्ञानवत्पूर्वकत्वमात्रं साधन-विषयस्तद्विशेषस्य च सर्वज्ञपूर्वकत्वादिति तत्सिद्धिरिति वाच्यम्; साधनाव्याप्तस्य विशेषस्य तदसिद्धेरिति । तत्तुच्छम्, सामान्य-मात्रव्याप्तावप्यन्तर्भावितविशेषस्यैव सामान्यस्य पक्षधर्मतावशेन सिद्धेर्नि-ष्प्रत्यूहत्वात् । अत एव क्रियात्वसामान्यस्य करणमात्राधीनव्याप्तत्वेऽपि

पक्षधर्मतावशाच्चेन्द्रियकरणविशेषसिद्धिर्भवति' अत एव न दृष्टसलक्षणस्यैव साध्यस्य सिद्धिरुक्तेन्द्रियानुमाने दृष्टविलक्षणसाध्यसिद्धेरिष्टत्वात्।

यत्तु रूपादिपरिच्छित्त्यन्यथानुपपत्त्यातत्सिद्धिरिति तदप्यकिञ्चित्करम्। सर्वज्ञत्वसिद्धावपि तथैव वक्तुं शक्यत्वात्।

यदप्युक्तमदृष्टवत्क्षेत्रज्ञपरमाणुसंयोगाद्भूतभौतिकाद्युत्पत्त्युपपत्त्या न तदनुपपत्त्या सर्वज्ञसिद्धिरिति तदतीव मन्दम्, चेतनानधिष्ठितस्यापूर्वस्य तदुपपादकत्वासम्भवात्। न च क्षेत्रज्ञाधिष्ठानेन तदुपपत्तिस्तस्याल्पज्ञस्याधिष्ठातृत्वानुपपत्तेः।

यच्चोक्तं परमेश्वरस्य प्राप्ताखिलप्रापणीयस्य प्राप्तव्याभावादत एव क्रीडासाध्यस्यापि सुखस्यावाप्तत्वान्न क्रीडार्थमपि तत्प्रवृत्तिर्नापि कारुण्येन परार्थं प्रवृत्तिः सुखमयस्यैव लोकस्य सृष्टिप्रसङ्गादित्यादि, तदप्यसङ्गतम्। धर्माधर्मसापेक्षस्य परमेश्वरस्य विचित्रप्रपञ्चनिर्माणे बाधानुपपत्तेः। न च दुःखहेतोरधर्मस्य कारुण्येनाधिष्ठानं नोपपद्यत इति वाच्यम्, तस्यापि पापक्षयवैराग्यादिजननाद्युपायतया कारुण्येन तदधिष्ठानोपपत्तेः। न च दुःखोत्पादस्येश्वराधीनत्वेन तस्य तत्र वैमुख्येन तदनुत्पादे तदत्यन्तविमोक्षरूपस्यापवर्गस्यानायासेन सिद्धत्वात्कृतं कारुण्येन परार्थप्रवृत्त्येति वाच्यम्; सृष्टिमन्तरा तदनुपपत्तेः।

तथाहि—"ऋते ज्ञानान्न मुक्तिः" "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इत्यादिश्रुतिप्रामाण्यात् तत्त्वसाक्षात्कारमन्तराऽनाद्यविद्याकामकर्मलक्षणबन्धनिवृत्तिपूर्वकपरमानन्दावाप्तिलक्षणो मोक्षो न सिद्ध्यत्येव। तत्त्वसाक्षात्कारश्च वेदान्तश्रवणादिसाधनमन्तरा नोपपद्यते, श्रवणादिकञ्च देहेन्द्रियादिसृष्टिमन्तरा नोपपद्यत इति—कुतः सृष्टिमन्तरा तद्वैमुख्यमात्रेण मोक्षसिद्धिः?

यत्तूक्तं नासर्वज्ञः सर्वज्ञं ज्ञातुं शक्नोति, तज्ज्ञानाय सर्वज्ञान्तराभ्युपगमेऽनवस्थाप्रसङ्ग इति; तदपि धूलिप्रक्षेपमात्रम्, पूर्वोक्तैरनुमानैः श्रुतिस्मृतीतिहास-पुराणादिभिः परमेश्वरस्य सार्वज्ञ्यमस्मदादिभिरपि ज्ञातुं शक्यत्वात्। अपि चैवमेव शास्त्रज्ञज्ञानेऽपि विकल्पः सम्भवति।

शास्त्रज्ञं ज्ञात्वा शास्त्राध्ययनाय छात्राः प्रवर्तन्ते। तत्रापि नाशास्त्रज्ञः शास्त्रज्ञं ज्ञातुं शक्नोति, तज्ज्ञानमन्तरा कथमध्ययनाय प्रवर्त्स्यते? शास्त्रज्ञश्चेन्नतराँ प्रवर्तिष्यते?

वस्तुतस्तु पूर्वमीमांसकानामपि नेश्वरस्य तत्सर्वज्ञतायाश्च खण्डने तात्पर्यम्। किन्तु तत्रानुमानस्वातन्त्र्यखण्डन एव। उत्तरमीमांसकैस्तु "तन्त्वौपनिषदं पुरुषं पृच्छामि" "नावेदविन्मनुते तं बृहन्तम्" "शास्त्रयोनित्वात्" इत्यादिश्रुतिसूत्रादिभिर्धर्मस्येव ब्रह्मणोऽपि वेदैकसमधिगम्यत्वमुपेयते। वेदार्थस्योपपत्तये बुद्ध्यारोहाय च "मन्तव्य" इति श्रुत्यनुरोधेनैव श्रुत्यविरुद्धानुमानानि युक्तिरूपेणोपादीयन्ते "मन्तव्यश्चोपपत्तिभिरि"त्याप्तोक्तेः।

नैयायिकादिभिस्त्वीश्वरोक्तत्वेन वेदस्य प्रामाण्यमुपेयते, तस्य च वेदोक्तत्वेन सिद्धावन्योन्याश्रयापत्त्या तत्र स्वातन्त्र्येणानुमानप्रामाण्यमुच्यते। तत्रानुमानेनेश्वरसामान्यसिद्धावपि न तस्य वेदकारत्वं साधयितुं शक्यते। तथात्वेऽन्यैरपि वेदविरोधिभिर्बौद्धजैनखृष्टीयमौहम्मदमतानुयायिभिः स्वस्वसम्प्रदायानुगतग्रन्थकारस्यापि परमेश्वरत्वसर्वज्ञत्वादिकञ्च साधयितुं शक्यत एवेति तैरविशेषापत्तिरेव वेदस्य भविष्यति। तथात्वे सापेक्षत्वेनैव वेदस्य प्रामाण्यस्वतस्त्वं भज्येत।

वैदिकैस्तु चतुर्मुखस्य ब्रह्मणो निर्मात्रापीश्वरेण वेदा न निर्मीयन्ते किन्तु प्रवाहरूपेण नित्यसिद्धा एव वेदा ब्रह्मणो हृदि प्रकाश्यन्ते। "यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इत्यादिश्रुतेः।

वेदान्तमतरीत्या वेदानां ब्रह्मोपादानकत्वे तत्र ब्रह्मणः स्वातन्त्र्याभावेनापौरुषेयत्वमेव। तावतैवापास्तसमस्तपुंदोषशङ्काकलङ्कत्वेन धर्म इव ब्रह्मण्यपि स्वत एव प्रामाण्यम्। नैवात्र मीमांसकानां विरोधलेशोऽपि। न च सृष्टिप्रलयाऽङ्गीकारेण सम्प्रदायविच्छेद इति वाच्यम्, परमेश्वरे सम्प्रदायाविच्छेदस्य वर्तमानत्वात्। न च बहुषु सम्प्रदायाविच्छेदे यथाश्वासो न तथैकस्मिन्नीश्वरेपीति वाच्यम्, बहूनामप्यपेक्षयाऽऽप्ततम एकस्मिन्नपि तत् सम्भवात्। बहुष्वनाप्तेषु तदसम्भवाच्च। अपि च सुप्तप्रतिबुद्धन्यायेन हिरण्यगर्भादिषु बहुषु प्रजापत्यादिषु

विशिष्टतपःसमासादितसिद्धिषु सम्प्रदायपारम्पर्याविच्छेदः सृष्टिप्रलया-ङ्गीकारेऽपि शक्यसमर्थन एवेति न काचिदनुपपत्तिः। ननु वेदस्य ब्रह्मोपादानकत्वे कथमपौरुषेयत्वमिति चेन्न; प्रामाणान्तरेणार्थमुपलभ्य विरचितत्वस्यैव पौरुषेयत्वेन वेदे तदभावेनापौरुषेयत्वस्यानपायात्। नहि पुरुषोच्चरितत्वं पौरुषेयत्वं तथात्वे मीमांसकम्मन्यस्यापि मते पौरुषेयत्वापातात्। वर्णनित्यत्ववादिनोऽपि विभूनां नित्यानां वर्णानां देशतः कालतश्च पौर्वापर्यरूपमानुपूर्व्यं नोपपद्यते। न चानुपूर्व्यमन्तरा वर्णानां पदत्वं पदानां च वाक्यत्वं वा सम्भवति। तस्मात्कण्ठताल्वाद्यभिघातज-ध्वनिषु वर्णाभिव्यक्तीनामेव कालतः पौर्वापर्यमुपपादनीयम्। तेनैव वर्णानां पदता, पदानाञ्च वाक्यतेत्युक्तमेव वाचस्पतिमिश्रैः—"व्यक्तीनां पौरुषेयत्वमकामेनाप्यभ्युपेयम्।" तथा च न पुरुषोच्चरितत्वेन पौरुषेयत्वं किन्तु पूर्वानुपूर्वीनैरपेक्ष्येणानुपूर्वीनिर्माणं स्वतन्त्रोच्चारणं, वा पौरुषेयत्वं प्रथमोच्चारणं वा तत्त्वम्, वेदस्य तु न स्वतन्त्रोच्चारणं, न वा पूर्वानुपूर्वी नैरपेक्ष्येणोच्चारणं, न वा कालिदासादिवाक्यस्येव प्रथमोच्चारणम्। अतएव न प्रमाणान्तरेणार्थमुपलभ्य निर्माणं किन्तु पूर्वकोटिशून्यायां सृष्टिप्रलयपरम्परायामनादिसिद्धेन परमेश्वरेण पूर्वपूर्वकल्पीयामानुपूर्वी सर्वज्ञत्वेन सुप्तप्रतिबुद्धन्यायेन वा संस्मृत्योत्तरोत्तरकल्पीयानुपूर्वी निर्मीयते। अतएव वेदस्य ब्रह्मोपादानकत्वेऽपि पौरुषेयत्वम् तद्रीत्यैव।

"तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत"

"अस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदः" इत्यादि-वेदानामुत्पत्तिश्रवणम।

"वाचा विरूपनित्यया" "ऋचोऽक्षरे परमे व्योमन्नधिविश्वे निषेदुः" "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा" "अत एव च नित्यत्व" मित्यादिं नित्यत्वश्रवणं स्मरणं चोपपद्यते। न च सृष्टेरीक्षणपूर्वकत्व-स्योपपादितत्वाद्वेदसृष्टेः कथमबुद्धिपूर्वकत्वं वक्तुं शक्यते, कार्यत्वेन बुद्धिपूर्वकत्वेऽपि वाक्यार्थज्ञानत्वेन तदपूर्वकत्वेऽपि बाधाभावात्।

ननु जीववदन्तःकरणाभावेन ब्रह्मणो ज्ञातृत्वासम्भवेन कुतः सर्वज्ञ-त्वमिति चेन्न, सर्ववस्तुविषयकसर्वप्राणिबुद्धिसंस्कारोपरक्तमायोपाधि-

कत्वेन सर्वज्ञत्वसिद्धौ बाधानापत्तेः। अथ वान्तःकरणपरिणामवच्चित्प्रतिबिम्बग्राहिभिर्मायापरिणामैस्तत्सिद्धत्वात् परमेश्वरस्य ज्ञातृत्वसम्भवेन अन्तःकरणराहित्येऽपि सर्वज्ञतासिद्धेः। तैरेव मायापरिणामात्मकवृत्तिप्रतिबिम्बितस्फुरणैः कालत्रयवर्तिनः प्रपञ्चस्यापरोक्ष्यात् सार्वज्ञ्यम्।

यद्यपि च अतीतानागतानामवर्तमानत्वेन विद्यमानमात्रविषयकत्वेन प्रत्यक्षस्य न तद्विषयत्वसम्भवः। यद्यपि च रसस्य नेत्राद्यविषयत्ववत् न धर्माधर्मादेः प्रत्यक्षविषयत्वम्; तथापि सर्वकारणस्य चैतन्यरूपस्य सर्वसंसृष्टत्वेन अतीतानागतानामपि कारणात्मना विद्यमानत्वात् सर्वविषयापरोक्ष्ये न काचिदनुपपत्तिः। परमेश्वरस्य यथा श्रोत्रादिनैरपेक्ष्येण शब्दाद्यवगमादौ जीववैलक्षण्यम् तथैव धर्माधर्मादिप्रत्यक्षादावपि वैलक्ष्यण्यम्। 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इति श्रुतेः।

अन्ये तु विद्यमाननिखिलसाक्षात्कारजनितसंस्कारवत्तयातीतानां स्मरणम्। सृष्टेः प्राङ् मायाया जीवादृष्टानुरोधेन सृज्यमानपदार्थविषयकवृत्तिरूपेण विवर्तनात्। तत्साक्षितया तदुपाधिकस्य तत्साक्षितयानागतविज्ञानमुपपद्यत इत्याहुः।

वस्तुतस्तु सर्वकारणत्वाद्ब्रह्मणः स्वरूपज्ञानेनैव स्वसंसृष्टसर्वावभासकत्वेनैव सार्वज्ञ्यम्। अतीतानागतानां धर्माधर्मादीनाञ्च संस्कारात्मना सत्त्वेन तत्संसर्गस्याप्युपपत्तेः। ब्रह्मातिरिक्तस्य सर्वस्यैव वेदान्तमतरीत्या कार्यत्वेन धर्माधर्मादीनामपि तथात्वम्। कारणचैतन्यसंसृष्टत्वेन प्रमातृचैतन्याभिन्नत्ववत् ईश्वरचैतन्याभिन्नत्वेन आपरोक्ष्ये बाधाभावात्। स्वरूपज्ञानेनैव स्वसृष्टसर्वावभासकत्वपक्षे न वृत्तिज्ञानैर्ब्रह्मणः सर्वज्ञत्वम्। 'तमेव भान्तमनुभाति सर्वम्" इत्यवधारणश्रुतिविरोधात्। सृष्टेः प्राक् "एकमेवाद्वितीयम्" इत्यवधारणानुरोधेन महाभूतानामिव वृत्तिज्ञानानामपि प्रलयस्य वक्तव्यत्वेन ब्रह्मणस्तदा सर्वज्ञत्वाभावापत्त्या प्राथमिकमायाविवर्तरूपे ईक्षणे तत्पूर्वकमहाभूतादौ स्रष्टृत्वाभावप्रसङ्गाच्च, तथा च ब्रह्मणः सर्वविषयकज्ञानात्मकत्वमेव सर्वज्ञत्वमुक्तम्। सर्वज्ञानकर्तृत्वरूपं ब्रह्मणो नास्त्येव। 'यः सर्वज्ञः सर्ववित्" इति श्रुतिरपि तस्य सर्वज्ञानरूपत्वाभिप्रायेण योजनीया।

वाचस्पतिमिश्रास्तु—यद्यपि ब्रह्मणः स्वरूपचैतन्येनैव स्वसंसृष्टसर्वावभासकत्वं तस्य च स्वरूपेणाकार्यत्वेऽपि दृश्यावच्छिन्नरूपेण ब्रह्मकार्यत्वेन ज्ञानकर्तृत्वश्रुतेरपि न विरोध इत्याहुः।

"जीवाश्रया ब्रह्मपदा अविद्या तत्त्वविन्मता" इति हि प्रसिद्धम्। वाचस्पतिमते जीवाश्रयाया ब्रह्मविषयाया अविद्याया विषयीकृतं ब्रह्म स्वत एव जाड्याश्रयप्रपञ्चाकारेण विवर्तमानतयोपादानम्, माया तु सहकारिमात्रम्, ब्रह्मणोऽविद्याविषयत्वे सत्त्वेऽपि सर्वज्ञस्य तस्याविद्याश्रयत्वायोगः। "मूढोऽहं त्वां कथं जाने मोहितस्तव मायये"त्यादौ मोहविषयत्वे न दुर्ज्ञेयमाहात्म्यातिशयत्वं भगवत उच्यते। मोहाश्रयत्वेन मूढत्वापत्तिर्भगवति प्रसज्येतेति वाचस्पतिमतमेव भक्तिश्रद्धानुकूलम्।

यद्यपि संक्षेपशारीरककृद्भिर्निर्विशेषचितिरेवाश्रयत्वविषयत्वभागिनीत्युपेयते। पूर्वसिद्धतमसः पश्चिमस्य जीवस्येश्वरस्य वा नाश्रयत्वं न विषयत्वं वा सम्भवति कार्यापेक्षयापूर्वतनस्य कारणस्य कार्याश्रयत्वायोगात्। वाचस्पतिमतरीत्या तु पूर्वपूर्वाध्यासव्यक्तीनामुत्तरोत्तराध्यासहेतुत्वेनानादिसिद्धेऽध्यासात्मके तमसि प्राथम्यायोग इति न तदनुपपत्तिः। न च 'मायिनं तु महेश्वर'मिति श्रुतिविरोधः, गृही धनी देवदत्त इत्यादौ देवदत्तस्य गृहाद्याश्रयत्वाभावेऽपि प्रत्ययस्य स्वस्वामिभावलक्षणसम्बन्धान्तरबोधकत्ववन्महेश्वरस्य मायाश्रयत्वाभावेऽपि मायाब्रह्मणोर्विषयविषयिभावलक्षणसम्बन्धान्तरबोधकतया मायिनमिति श्रुत्युपपत्तेः। यथा शुक्तिरजतादेः पुरुषाश्रिताज्ञानविषयीकृतशुक्त्यवच्छिन्नब्रह्मचैतन्यविवर्तत्वं तथैव जीवाश्रिताज्ञानविषयीकृतब्रह्मविवर्तत्वमिति सुसङ्गतोऽयं पक्षः।

समेषामास्तिकानां धर्मब्रह्मप्रतिपादकत्वेन वेदानामेवासाधारणः समादरः। वाचस्पतिमिश्राश्चास्तिकशिरोमणयः शास्त्रयोनित्वाधिकरणे सविशेषं स्वरूपं प्रामाण्यञ्च तेषां ते प्रतिपादयामासुः। चातुर्वर्ण्यस्य चातुराश्रम्यस्य च यथायथं निषेकादिश्मशानान्तासु ब्राह्ममुहूर्तोपक्रमप्रदोषपरिसमापनीयासु नित्यनैमित्तिककाम्यकर्मपद्धतिषु च ब्रह्मतत्त्वे च शिष्याणां शासनाच्छास्त्रं ऋग्वेदादि महाविषयत्वान्महत्पुराणन्याय-

मीमांसादिभिरङ्गोपाङ्गैरुपबृंहितत्वेन च तन्महदिति। तेषाञ्च प्रतीपवत्स-र्वार्थावद्योतकत्वेनानवबोधकत्वलक्षणमप्रामाण्यमपाकृतम्। स्पष्टबोधक-त्वोक्त्यान्यादृशमप्यप्रामाण्यं वारितम्। ईश्वरस्य ज्ञानं सर्वविषयं, शास्त्रस्याभिधानं च सर्वविषयम्।

परमेश्वरनिश्वसितत्वेन निश्वासवदेव पुरुषबुद्धिप्रयत्नविशेषानपेक्ष-त्वेनाकृत्रिमत्वमपास्तसमस्तपुंदोषशङ्काकलङ्कपङ्कत्वम्, पूर्वमीमांसकैः पुरुष-सम्बन्धाभावादपौरुषेयत्वमुच्यते। वाचस्पतिमिश्रैस्तु पुरुषसम्बन्धेऽपि पुरुषस्य तत्रास्वातन्त्र्येणापौरुषेयत्वमुच्यते। ब्रह्मातिरिक्तस्य सर्वस्यैव ब्रह्मनिष्ठात्यन्ताभावप्रतियोगित्वेन वर्णनित्यत्वानभ्युपगमेऽपि पूर्वमीमां-सकानामिवोत्तरमीमांसकानामप्यपौरुषेयत्वमक्षुण्णमेवेत्युक्तमेव।

येऽपि वर्णानां नित्यत्वमास्थिषत तैरपि पदवाक्यादीनामनित्यत्व-मभ्युपेयम्। आनुपूर्वीभेदवन्तो हि वर्णाः पदम्, पदानि च आनुपूर्वी-भेदवन्ति वाक्यम्। व्यक्तिधर्मश्चानुपूर्वी न वर्णधर्मो वर्णानां नित्यानां विभूनाञ्च कालतो देशतो वा पौर्वापर्यायोगात्। व्यक्तिश्चानित्येति कथं तदुपगृहीतानां वर्णानां नित्यानामपि पदता नित्या? पदानित्यतया च वाक्यादीनामप्यनित्यता व्याख्याता। अतएव नृत्तानुकरणवत्पदाद्यनुक-रणमेव। नर्तको यादृग्गात्रविक्षेपादिकं करोति तादृशमेव शिक्ष्यमाणा अनुकरोति नर्तकी। एवमेवाचार्ये वैदिकानां वर्णपदादीनां यादृशीमानु-पूर्वीं करोति तादृशीमनुकरोति माणवकः। आचार्यवर्णव्यक्तिभ्यो माणवक-वर्णव्यक्तीनां भिन्नत्वात्। ततश्च लौकिकवैदिकपदवाक्यादिपौरुषेयत्वं नित्यानित्यादिवर्णवादिनां समानमेव। किन्तु वेदवाक्येषु पुरुषस्वा-तन्त्र्यास्वातन्त्र्ये एव परं विप्रतिपत्तिः। तदुक्तं भट्टपादैरपि—

"यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता।"

यथा यागादिब्रह्महत्यादयो ब्रह्मविवर्ता अपि न सर्गान्तरे विपरि-यन्ति। यथा वा तेजोऽबादिभूतानां दाहकत्वादिस्वभावो न विपर्येति, एवमेव सर्गेऽस्मिन् यथा नियतानुपूर्व्यं वेदाध्ययनम् निश्रेयसहेतुरन्यथा तदेव वाग्वज्रतयानर्थहेतुरेवं सर्गान्तरेष्वपि। तदनुरोधात् सर्वज्ञोऽपि सर्वशक्तिरपि पूर्वपूर्वसर्गानुसारेण विरचयन्न स्वतन्त्रः। पुरुषास्वातन्त्र्यमे-

वापौरुषेयत्वमिति जैमिनीया अपि रोचयन्ते। नचैकस्य प्रतिभानेऽनश्वास इति युक्तम्। नहि बहूनामप्यज्ञानां विज्ञानां वाऽऽशयदोषवतां प्रतिभाने युक्त आश्वासः। तत्त्वज्ञानतश्चापास्तसमस्तदोषस्यैकस्यापि प्रतिभाने युक्त एवाश्वासः। सर्गादिभुवां प्रजापतिदेवर्षीणां धर्मज्ञानं वैराग्यैश्वर्यसम्पन्नानामुपपद्यते तत्स्वरूपावधारणम्। तत्प्रत्ययेन चार्वाचीनानामपि तत्र सम्प्रत्ययः।

यथाग्निहोत्रादिचोदनावाक्यैरग्निहोत्रादीनां स्वर्गादिभिः कार्यकारणभावोऽवगम्यते, तथैव वेदान्तवाक्यैः सर्वज्ञस्य सर्वशक्तिमतः परमेश्वरस्य जगत्कारणत्वं शास्त्रयोनित्वञ्च विज्ञायते।

यदपि पूर्वकालो, न वेदशून्यः, कालत्वाद्, वर्तमानकालवत् इत्यादिरीत्या वर्णपदवाक्यरूपस्य वेदस्य नित्यत्वमपौरुषेयत्वञ्चोपपद्यते, तथापि तन्नोपपद्यते, सावयत्वेन जगतः कार्यत्वसिद्ध्या कार्यत्वेन चानित्यत्वसिद्ध्या आंशिकप्रलयस्य प्रत्यक्षसिद्धत्वेन समष्टिप्रलयस्याप्यनुमातुं शक्यत्वात्। वेदान्तेषु च स्पष्टं सृष्ट्यादिकं श्रूयते। प्रतिज्ञादृष्टान्तोपरोधापत्त्या वेदान्तिभिर्ब्रह्मातिरिक्तस्य सर्वस्यैव कार्यत्वाभ्युपगमेन वेदस्य कार्यत्वेऽपि प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वरूपप्रथमोच्चारगलक्षणस्य पौरुषेयत्वस्याभावादपौरुषेयत्वमेव, न वेदनित्यत्वाभ्युपगमादिकमास्तिक्यप्रयोजकम्, किन्तु तत्प्रामाण्याभ्युपगमस्यैव तद्धेतुत्वम्। "अत्र वेदा अवेदा भवन्ति" "वेदास्तं परादुर्योऽन्यत्रात्मना वेदान् वेद", इत्यादिश्रुतिभिरेव वेदानां ब्रह्मानतिरिक्तत्वं बोध्यते। तदनुरोधेनैव वाचा विरूपनित्यया इत्यादिनित्यत्वप्रतिपादकवचनानां प्रवाहनित्यत्वबोधनपरत्वमेवाभ्युपगन्तव्यमित्युक्तमेव। वेदार्थस्य धर्मस्य ब्रह्मणो वा प्रत्यक्षाद्यविषयत्वेन तत्राज्ञातज्ञापकस्यापौरुषेयत्वेनापास्तसमस्तभ्रमप्रमादादि-पुंदोषशङ्काकलङ्कस्य वेदादिलक्षणशास्त्रस्यैव प्रामाण्यम्, तत्र यथा चक्षुषैव रूपमुपलभ्यते नान्येन श्रोत्रादिनेत्यन्ययोगव्यवच्छेदोऽभिप्रेतस्तथैवालोकादिसहकृतेन निर्दोषमनःसंयुक्तेन विमलेन चक्षुषा रूपमुपलभ्यत एव, न चोपलभ्यत इत्ययोगव्यवच्छेदोऽप्यभिप्रेतः। एवमेव चोदनैव लक्षणं धर्मस्य नान्यत् प्रत्यक्षादिकम्, चोदना च लक्षण (बोधक) मेव धर्मस्येति रीत्याऽयोगान्ययो-

गत्यावृत्त्यैव चोदनाया धर्मे प्रामाण्यम्। एवं शास्त्रमेव योनिः स्वरूप-सिद्धौ प्रमाणं यस्य, शास्त्रञ्च योनिरेव तत्स्वरूपसिद्धावित्यादावपि बोध्यम्, यथाऽऽलोकादि सहकार्यभावे चक्षुषा रूपानुपलब्धावपि नायोगस्तथैव साधनसम्पत्त्युपक्रमोपसंहरादिभिर्विचाराभावे शास्त्रस्य तदलक्षकत्वेऽपि नायोगः शक्यशङ्कः। नैतावदेव प्रपञ्चस्य मिथ्यात्व-सत्यत्वग्राहिणोः श्रुतिप्रत्यक्षयोर्विरोधेऽपि दोषाशङ्काकलङ्कित्वेन प्रथम-प्रवृत्तस्यापि प्रत्यक्षस्य दौर्बल्यम्, निर्दोषत्वेनापच्छेदन्यायेन परत्वाच्च श्रुतेरेव प्राबल्यम्, तत एव पृथिव्यादिषु सङ्कीर्णतया प्रतीयमानानां गन्धादीनां —

'उपलभ्याप्सु चेद् गन्धं केचिद् ब्रूयुरनैपुणाः।
पृथव्यामेव तं विद्यादपो वायुञ्च संश्रितम्॥"

व्यवस्थाया वक्तव्यत्वेन प्रत्यक्षादागमप्राबल्यं निर्विशङ्कमेव। पृथिव्यादीनां परस्परव्यतिषक्ततयाऽन्योन्यधर्माणामन्योन्यस्मिन्नवभासः सम्भवत्येवेति प्रत्यक्षस्य शङ्कितदोषत्वेन निर्दोषस्यागमस्यैव प्राबल्यं स्पष्टम्।

न चैवमागमस्य प्रत्यक्षात्प्राबल्ये "यजमानः प्रस्तरः "आदित्यो यूपः' इत्यादौ प्रत्यक्षाविरोधाय यजमानादित्यादिशब्दानां प्रस्तरयूपादिषु गौणीवृत्तिरनाश्रयणीया स्यात्। सोमेन यजेदित्यत्र च वैयधिकरण्ये-नान्वये यागसोमयोरिष्टयागसाधनत्वबोधने वाक्यभेदप्रसक्त्या सामा-नाधिकरण्येनान्वये प्रत्यक्षाविरोधाय सोमवता यागेनेति मत्वर्थलक्षणा च न कल्पनीया। सत्यपि प्रत्यक्षविरोधे प्रबलेनागमेन प्रस्तरे यजमाना-भेदस्य यागे सोमाभेदस्य च सिद्धिसम्भवादिति चेदत्र भामती-काराः—तात्पर्यवती श्रुतिरेव प्रत्यक्षाद् बलीयसी न श्रुतिमात्रं मन्त्रार्थवादानां तु स्तुतिद्वारम्। तेऽवान्तरेऽर्थे वाक्यार्थद्वारभूते पदार्थ इव न तात्पर्यम्। न च द्वारभूतेऽवान्तरवाक्यार्थे तात्पर्याभावे मानान्तराविरुद्धदेवता-विग्रहादिरन्यपरेभ्यो मन्त्रार्थवादेभ्यो न सेत्स्यति। तात्पर्यवत्येव शब्दस्य प्रामाण्यनियमादिति वाच्यम्, एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसा मकृत्त्वा पशुकामो ह्येतेन यजेतेति विशिष्टविधेस्तात्पर्यगोचरेऽपि

विशेषणस्वरूपे प्रामाण्यदर्शनेनोक्तनियमासिद्धेः। अत्र हि रेवती ऋगाधारं वारवन्तीयं सामविशेषणं, न च सोमादिविशेषणवदेतत्प्रसिद्धं, येन वाक्यस्य तद्विशिष्टयागविधिमात्रे प्रामाण्यं स्यात्, न वा विशिष्टविधिना विशेषणाक्षेपः, आक्षेपाद्विशेषणप्रतिपत्तौ विशिष्टगोचरो विधिर्विशिष्टविधौ च तेन विशेषणाक्षेप इति परस्पराश्रयतापत्तेः। अतो विशिष्टविधिपरस्यैव वाक्यस्य विशेषणस्वरूपेऽपि प्रामाण्यमभ्युपगन्तव्यं, न च तत्रापि तात्पर्यम् उभयत्र तात्पर्ये वाक्यभेदप्रसङ्गात्। एवं मन्त्रार्थवादानामपि विधेयस्तुति-क्रमस्मरणपर्यवसितानां तद्द्वारभूतेऽर्थे न तात्पर्यमित्य-तत्परेभ्यस्तेभ्यः प्रत्यक्षस्यैव प्राबल्येन तदविरोधाय वृत्त्यन्तरकल्पनम्।

सोमेन यजेतत्यत्र विशिष्टविधिपरे वाक्ये सोमद्रव्याभिन्नयागरूपं विशिष्टं विधेयमित्यभ्युपगमे तस्य विधेयस्य दध्ना जुहोतीत्यादौ विधेयस्य दध्यादेरिव लोकसिद्धत्वाभावेन विधिपराद्वाक्यादेव रेवत्याधारवारवन्तीयविशेषणस्यैव विना तात्पर्यसिद्धिरेष्टव्या, नहि तात्पर्यविरहितादागमात्। यागसोमलताभेदग्राहिप्रत्यक्ष-विरुद्धार्थः सिद्ध्यतीति तत्रापि तदविरोधाय मत्वर्थलक्षणाश्रयणं सिद्धान्तलेशे। अद्वैतश्रुतिस्तूपक्रमोपसंहारैकरूप्यादिषड्विधलि-ङ्गावगताद्वैततात्पर्या प्रत्यक्षाद्बलवतीति ततः प्रत्यक्षस्यैव बाधो न तद-विरोधाय श्रुतेरन्यथानयनम्।

यत्तूक्तं न तात्पर्यवत्वेन प्रत्यक्षाच्छ्रुतेः प्राबल्यम्। कृष्णलान् श्रपयेदिति विधेः श्रपणस्य कृष्णलार्थप्रतिपादने तात्पर्येऽपि कृष्णले रूपरसपरावृत्ति-प्रादुर्भावपर्यन्तमुख्यश्रपणसम्बन्धः प्रत्यक्षविरुद्ध इति तदविरोधाय श्रपणशब्दस्योष्णीकरणमात्रे लक्षणाभ्युगमादिति तन्न; शास्त्रस्यान-धिगतगन्तृत्वेनाकृतकर्तृत्वाभावात्। नहि शास्त्रस्य बलवत्त्वेन श्रपणानर्हस्य श्रपणविधानं सम्भवत्यशक्यस्योपदेशायोगात्। अद्वैत-श्रुतिविरोधेन प्रत्यक्षस्य व्यावहारिकविषयत्वेनाप्युपपत्तिर्भवति। कृष्णले श्रपणस्याशक्यत्वादुष्णीकरणे लक्षणा न, प्रत्यक्षविरोधात्तदुक्तमेव सिद्धान्त-लेशसंग्रहे "अथवा कृष्णलं श्रपये' दित्यादौ न प्रत्यक्षानुरोधेन लक्षणा किन्तु अनुष्ठानाशक्त्या।

सर्वभूतहितैषिणां परमकारुणिकानामपि लौकिकवैदिकसामर्थ्यानुरोधेनाधिकारानधिकारव्यवस्था सम्मता। तत एव शास्त्रीयसामर्थ्यविधुराणां लौकिकसामर्थ्यवतामपि शूद्रादीनां वेदाध्ययनतदर्थानुष्ठानादिनानुमतमिति सूत्रभाष्यभामत्यादिषु स्पष्टम्।

यथा विधिविहितमध्ययनादि निःश्रेयसकरं तथैव निषिद्धं विधिविरुद्धञ्च तदनिष्टकरमपि भवत्येव।

'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥'

इति याज्ञवल्क्यस्मृतौ मिताक्षराकारैरेतानि त्रैवर्णिकैरध्येतव्यानीत्युक्त्वा तत्र प्रमाणरूपेण—

"निषेकादिश्मशानान्तो मन्त्रैर्यस्योदितो विधिः।
तस्य शास्त्रेऽधिकारोऽस्मिन् ज्ञेयो नान्यस्य कस्यचित्॥"

इति मनुवचनमुद्धृतम्।

"वेदान्तगो ब्राह्मणः स्यात् क्षत्रियो विजयी भवेत्।
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात्॥"

इति विष्णुसहस्रनामपाठादिफलबोधके वाक्ये स्वभाष्ये श्रीशङ्कराचार्येण शूद्रः श्रवणात्सुखमवाप्नुयात् इति रीत्या शूद्रस्य विष्णुसहस्रनामपाठं निषिद्ध्य तच्छ्रवणमेव व्याख्यातम्। बृहदारण्यकोपनिद्भाष्ये च 'य इच्छेद् दुहिता मे पण्डिता स्यादि'त्यत्र दुहितुः पाण्डित्यं गृहतन्त्रविषयं वेदेऽनधिकारात् इति व्याख्यातम्। तस्माद् यावदुक्तमित्यादि जैमिनिसूत्रे शबरस्वामिनापि 'अतुलया हि स्त्री पुंसा। अतुल्यता च द्वेधा स्त्रीत्वादविद्यात्वाच्चेत्युक्तम्।

'नाध्येतव्यमिदं शास्त्रं वृषलस्य च सन्निधौ।' (कूर्मपुराणे)

अध्येतव्यं ब्राह्मणेन वैश्येन क्षत्रियेण च।
श्रोतव्यमेव शूद्रेण नाध्येतव्यं कदाचन॥
श्रौतं स्मार्तञ्च वै धर्मं प्रोक्तमस्मिन्नृपोत्तम।
तस्माच्छूद्रैर्विना विप्रं न श्रोतव्यं कदाचन॥' (भविष्यपुराणे)

अथ शूद्राणां विहितनिषिद्धधर्मा इत्युपक्रम्य शूद्रकमलाकरे १९ पृष्ठे स्कन्दमहापुराणीयप्रभासखण्डवचनान्युद्धृतानि । तानि यथा -

'न दर्भानुद्धरेत्प्राज्ञः' इत्यादीनि—

'नोच्चरेत्प्रणवं मन्त्रं पुरोडाशं न भक्षयेत्' इत्यादीनि च ।

शूद्राचारशिरोमणावपि ३७ पृष्ठे स्कान्दे प्रभासखण्डीयवचनानि 'न दर्भानीत्यादीनि उद्धृतानि ।

मन्त्रचन्द्रिकायां-'न वैदिकं जपेच्छूद्रः स्त्रियश्चैव कदाचन ।
नमोन्तं शिवमन्त्रं वा वैष्णवमिष्यते बुधैः ॥' इति

देवीयामलेऽपि-'स्वाहा प्रणवसंयुक्तं मन्त्रं शूद्रे ददद्द्विजः ।
शूद्रो निरयगामी स्यात् विप्रः शूद्रत्वमाप्नुयात् ॥'

षडङ्गन्यासे स्वाहापदस्थाने नमः पदोच्चारणं शूद्रैः कार्यम् ।

श्रीमद्देवीभागवते-'वेदस्याध्ययने शूद्रो नाधिकारी यथा भवेत् ।
त्रिपुण्ड्रेण विना विप्रो नाधिकारी शिवार्चने ॥'
स्कान्दे ११ अध्यायः १२ श्लोकः २८ ।

श्रीमद्भागवते-'स्त्री शूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।'
कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ॥ १।४।२५

श्रीमद्वाल्मीकीयरामायणे-सुन्दरकाण्डे

'भावं नचास्याहमनुप्रदातु मलं द्विजो मन्त्रमिवाद्विजाय ॥'

नृसिंहतापनीयोपनिषदि ।' 'सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्री शूद्राय नेच्छन्ति; सावित्रीं लक्ष्मीं यजुः प्रणवं यदि जानीयात् स्त्रीशूद्रः समृतोऽधोगच्छति ।

स्कान्दे प्रभासखण्डे शूद्रविषये-

नोच्चरेत्प्रणवं मन्त्रं पुरोडाशं न भक्षयेत् ।
न शिखां नोपवीतञ्च नोच्चरेत्संस्कृतां गिरम् ॥

पुराणान्यधिकृत्य कूर्मपुराणे-

'अध्येतव्यमिदं नित्यं विप्रैः पर्वणि पर्वणि ।
नाध्येतव्यमिदं शास्त्रं वृषलस्य च सन्निधौ ।
योऽधीते चैव मोहात्मा स याति नरकान् बहून् ॥

भविष्ये

यस्य राज्ये सदा शूद्राः पुराणं संहितां तथा ।
पठन्ति स्यात्स चाल्पायू राजा राष्ट्रेण सान्वयः ।

बृहद्धर्मपुराणे-उत्तराखण्डे चतुर्थेऽध्याये ५०७ पृष्ठे –

शूद्रस्तु ब्राह्मणादीनां पूजां कुर्यादतन्द्रितः ।
आज्ञां न लङ्घयेच्चापि न च तानवधीरयेत् ॥
न तेषामाचरेद् धर्मं वैदिकं लौकिकं तथा ।
पुराणपठनं वेदपठनं नापि चाचरेत् ॥
शास्त्रार्थकथनञ्चैव न शूद्रः क्वचिदाचरेत् ।
विप्रं क्षत्रं विशं वापि पाठयेन्न कदाचन ॥
वर्णान् व्याकरणादीन् वा श्लोकं श्लोकार्धमेव च ।
ब्राह्मणोऽपि पठ शूद्रादात्मानमेवन् पातयेत् ।
स्वाहाप्रणवसंयुक्तं शूद्रो मन्त्रं विवर्जयेत् ॥
दद्यान्न देवनैवेद्यं शूद्राय ब्राह्मणः क्वचित् ।
पादोदकं ब्राह्मणस्य पिबेच्छूद्रः प्रयत्नतः ॥
ब्राह्मणे भक्तिमासाद्य शूद्रस्तरति दुर्गतिम् ।
नोपदेशेन मन्त्रैश्च न स्तवैः कवचैरपि ॥'

गरुडपुराणे प्रेतखण्डे चतुर्थेऽध्याये--

वेदाक्षरं पठेच्छूद्रः कापिलं वा पयः पिबेत् ।
धारयेद् ब्रह्मसूत्रञ्च भवेद् वा ब्राह्मणीपतिः ॥२२॥
राजभार्याभिलाषी च परदारापहारकः ।
कन्यायां कामुकश्चैव सतीनां दूषकश्च यः । ॥२३॥
एते चान्ये च बहवो निषिद्धाचरणोत्सुकाः ।
विहितत्यागिनो मूढा वैतरण्यां पतन्ति ते ॥२४॥

हरिवंशेऽपि-'सुगतिमियाच्छ्रवणाच्च शूद्रयोनिः ।'

व्याससमृतौ-प्रथमेऽध्याये-

शूद्रो वर्णचतुर्थोऽस्ति वर्णत्वाद् धर्ममर्हति ।
वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना ॥

महाभारते-आनुशासनिके पर्वणि १० अध्याये—

'उपदेशो न कर्त्तव्यो जातिहीनस्य कस्यचित् ।
उपदेशे महान् दोष, उपाध्यायस्य भाष्यते ॥४॥
पूर्वदेहे यथावृत्तं तन्निबोध द्विजोत्तम ।
जातिं स्मराम्यहं ब्रह्मन् अवधानेन मे शृणु ॥५४॥
शूद्रोऽहमभवं पूर्वं तापसो भृशसंयुतः ।
ऋषिरुग्रतपास्त्वञ्च तदाऽभूर्द्विजसत्तम ॥५५॥
प्रीयताहि तदा ब्रह्मन्ममानुग्रहबुद्धिना ।
पितृत्वया पूर्वकार्य्येमुपदेशः कृतोऽनघ ॥५६॥
एवं प्राप्तो महत्कृच्छ्रमृषिःसन्नृपसत्तम ।
ब्राह्मणेन न वक्तव्यं तस्माद् वर्णावरे जने ॥६६॥
ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः ।
एतेषु कथयन् राजन् ब्राह्मणो न प्रदुष्यति ॥६८॥
स्कन्दपुराणे ब्रह्मखण्डे दशमेऽध्याये—
'उपदेशो न कर्त्तव्यो जातिहीनस्य कर्हिचित् ।
उपदेशे महान् दोष उपाध्यायस्य विद्यते ॥३९॥
नाध्यापयेद् बुधः शूद्रं तथा नैव च याजयेत् ।
न पाठयेत्तथा शूद्रं शास्त्रं व्याकरणादिकम् ॥४०॥
काव्यं वा नाटकं वापि तथाऽलङ्कारमेव च ।
पुराणमितिहासञ्च शूद्रं नैव तु पाठयेत् ॥४१॥
यदि चोपदिशेद्विप्रः शूद्रस्यैतानि कर्हिचित् ।
त्यजेयुर्ब्राह्मणा विप्रं तं ग्रामाद् ब्रह्मसङ्कुलात् ॥४२॥
शूद्राय चोपदेष्टारं द्विजं चण्डालवत्त्यजेत् ।
शूद्रं चाक्षरसंयुक्तं दूरतः परिवर्जयेत् ॥४३॥
बहुकालं द्विजस्याभूत्संसर्गः शूद्रयोनिना ।
स्नेहस्य वशमापन्नः शूद्रोक्तं नातिचक्रमे ॥५७॥
अथागतं द्विजं शूद्रः प्राह स्नेहवशीकृतम् ।
हव्यकव्यविधानं मे कृत्स्नं ब्रूहि मुनीश्वर ॥५८॥
एवमुक्तः स शूद्रेण सर्वमेतदुपादिशत् ।

कारयामास तस्यायं पितृकार्यादिकं तथा ॥६१॥
त्यक्तो विप्रगणैः सोऽयं पञ्चत्वमगमद्द्विजः ।
वैवस्वतभटैर्नीत्वा पातितो नरकेष्वपि ॥६२॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
भुक्त्वा क्रमेण नरकांस्तदन्ते स्थावरोऽभवत् ॥६४॥
गर्दभस्तु ततो जज्ञे विड्वराहस्ततः परम् ।
जज्ञेऽथ सारमेयोऽसौ पश्चाद्वायसतां गतः ॥६५॥
अथ चण्डालतां प्राप शूद्रयोनिमगात्ततः ।
गतवान् वैश्यतां पश्चात् क्षत्रियस्तदनन्तरम् ॥६६॥
प्रबलैर्वर्द्धमानोऽसौ ब्राह्मणो वै तदाऽभवत् ।
उपनीतः स पित्रा तु वर्षे गर्भाष्टमे द्विजः ॥६७॥
वर्तमानः पितुर्गेहे स्वाचाराभ्यासतत्परः ।
गच्छन् कदाचिद् गहने गृहीतो ब्रह्मरक्षसा ॥६८॥
रुदन् भ्रमन् स्खलन् मूढः प्रहसन् विलपन्नसौ ।
शश्वद् हाहेति वदन् वैदिकं कर्म सोऽत्यजत् ॥६९॥
तेनोपदिष्टो यः शूद्रः स भुक्त्वा नरकान् क्रमात् ।
अनेकेषु जनित्वा च कुत्सितेष्वपि योनिषु ॥९४॥
गृध्रजन्माऽभवत्पश्चात् गन्धमादनपर्वते ॥

ननु महाभारते आनुशासनिके पर्वणि दशमेऽध्याये—

'शूद्रोऽहमभवं पूर्वं तापसो भृशसंयुतः ।
ऋषिरुग्रतपास्त्वञ्च तदाऽभूर्द्विजसत्तम ॥५३॥
प्रीयता हि तदा ब्रह्मन् ममानुग्रहबुद्धिना ।
पितृकार्ये त्वया पूर्वमुपदेशः कृतोऽनघ ॥५६॥
बृस्यां दर्भेषु हव्ये च कव्ये च मुनिसत्तम ।
एतेन कर्मदोषेण पुरोधास्त्वमजायथाः ॥५७॥
अहञ्च राजा विप्रेन्द्र पश्चात् कालस्य पर्ययम् ॥

इत्यादिवचनैः उपदेष्टुरुग्रतपसोऽपि महर्षेरधोगतित्वं विज्ञायते, उपदेशनीयस्य शूद्रस्य चाभ्युदयो राजत्वमिति स्कन्दपुराणीयवचनैश्च उपदेशनीयस्य चोभयोरधोगतित्वमिति परस्परं महान् विरोध आपततीति चेन्न;

'हव्यकव्यविधानं मे कृत्स्नं ब्रूहि मुनीश्वर ॥५८॥
पितृकार्यविधानार्थं देवकार्यार्थमेव च ।
मन्त्रानुपदिशत्वं मे महालयविधिं तथा ॥५९॥
अष्टकाश्राद्धकृत्यञ्च वैदिकं यच्च किञ्चन ।
सर्वमेतद्रहस्यं मे ब्रूहि त्वं हि गुरुर्यतः ॥ ६० ॥
एवमुक्तः स शूद्रेण सर्वमेतदुपादिशत् ।
कारयामास तस्यायं पितृकार्यादिकं तथा ॥ ६१ ॥
पितृकार्ये कृते तेन विसृष्टः स द्विजो गतः ।
अथ दीर्घेण कालेन पोषितः शूद्रयोनिना ॥ ६२ ॥
त्यक्तो विप्रगणैः मोक्षं पञ्चत्वमगमद् द्विजः ।
वैवस्वतभटैर्नीत्वा पातितो नरकेष्वपि ॥ ६३ ॥"

अथ—

"पूर्वजन्मनि ते पुत्रो ब्राह्मणोऽयं महामते ॥ ७७ ॥
सुमतिर्नाम विप्रोऽयं मतिं शूद्राय वै ददौ ।
कर्माणि वैदिकान्येष सर्वाण्युपदिदेश वै ॥ ७८ ॥
अतोऽयं नरकान् भुक्त्वा ... ... ... ..."

इत्यादि वचनैर्ब्राह्मणस्येव शूद्रस्यापि निषिद्धाचरणस्मरणेनोभयोरपि दुर्गतिरति भेदेन कथानकयोरेनयोर्भेदावगमात् । स भारते तु शूद्रपौरोहित्यलक्षणात दोषात् ब्राह्मणस्य दुर्गतिः । शूद्रस्य तु शास्त्राविरुद्धदेवताराधनादिस्वधर्माचरणेनाभ्युदयो जातः ।

श्रीविद्यार्णवतन्त्रे द्वितीयभागे एकोनविंशे निश्वासे ३३ तमे पृष्ठे कालिकापुराणे—

मोहाद्वा कामतः शूद्रः पुराणं संहितां स्मृतिम् ।
पठन्नरकमाप्नोति पितृभिः सह पापकृत् ॥

पञ्चरात्राणान्तु श्रवणेऽपि—

ब्राह्मणो वेदमन्त्राद्यैः क्षत्रियः संहितादिभिः।
पौराणिकाद्यैर्वैश्यस्तु शूद्रस्तु प्राकृतादिभिः॥
यः शूद्रो बुद्धिपूर्वं तु शृणुयात् श्रावयेद् द्विजः।
वदन्तौ द्वौ दुःखितौ स्तोऽस्मिन् भवेऽन्ते च नारकौ॥
अधिकारमदाद्यस्तु धनस्य मदतोऽपि वा।
शूद्रश्च शृणुयाद्वेदं सनिर्वंशश्च निर्धनः॥
अज्ञानाच्चेच्छ्रुतो वेदः श्रावितो वा द्विजन्मना।
प्राजापत्यत्रयं कृत्वा तौ द्वौ शुद्धौ भविष्यतः॥

तत्रैव च 'नोच्चरेत्संस्कृतां गिरमि'त्यप्युक्तम्। संस्कृता वाग् द्विजातीनामेवेति वाल्मीकीये रामायणे स्पष्टम्। तत्र सुन्दरकाण्डे हनुमताप्युक्तम्।

"यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम्।
रावणं मन्यमाना मां सीता भीता भविष्यति॥"

अत एव मानुषीं वाचमालम्ब्य तेन सीता भाषिता। सर्वमेतत्प्रक्षिप्तमित्युक्तिमन्तरा शास्त्रप्रामाण्याभ्युपगन्तृभिः संस्कृतस्य राष्ट्रभाषात्वस्वीकारेण सर्वसाधारणाधिकारः कथं साधयितुम् शक्य इति त एव विदाङ्कुर्वन्तु।

वाचस्पतिमिश्रास्तु यदि न्यायसूत्रभाष्यादिभिरनधिकारिणां व्युत्पत्तिर्भवेत्तदा सूत्रकारादीनां तु तपःप्रभावात्तन्मार्जनं सम्भवति परं मन्दतापसानान्तु तद्व्युत्पादनप्रवृत्तौ दोषमेव वदन्ति वार्तिकतात्पर्यटीकायाम्—"न वानधिकृतव्युत्पादनेनास्य तपोनिधेः कश्चन दोषस्तथा च विश्वामित्रस्त्रिशङ्कुं याजयामास, वसिष्ठश्चाधमयोनिजामक्षमालामुपयेमे, ततःप्रभाव एव हि तादृशस्तेषां यत एवंविधाः पाप्मानो विलीयन्ते। न चास्मदादीनां मन्दतपसामयं प्रसङ्गः। न हि गजानामुदर्येण तेजसा वटकाष्ठमशितं पच्यत इत्यस्मदादीनामपि उदर्येण तेजसा तथा भवितव्यम्। 'अथ जगदेव दुःखपङ्कनिमग्नमुद्दिधीर्षुरष्टादशविद्यास्था-

नेष्वभ्यर्हिततमामान्विक्षिकीं परमकारुणिका मुनिः प्रणिनाय, इति चिन्तामणिः—

तत्र दीधितिः—'नचानधिकारिणः शद्रादीनध्यापयाम्बभूव प्रवरो मुनीनां येनाशङ्क्येतापि प्रत्यवायस्तस्य'

दीधितौ गदाधारः—'ननु शूद्रादीनामपि जगदन्तर्गततया विद्यानधिकारिणां तेषामर्थज्ञानेच्छया शास्त्रप्रणयने महर्षिः प्रत्यवेयात्, अनधिकारिणामर्थज्ञानेच्छया शब्दप्रयोगरूपतदध्ययनस्य प्रत्यवायहेतुत्वात् इत्यधिकारित्वमपि विशेषणमस्तु, इत्याशङ्क्य परिहरतीत्यादि।

नैवात्र मनागपि द्वेषलेशावकाशः, सर्वहितैषिणां तदसम्भवात्। यथा मल्लचन्द्रोदयादिरससेवने न सर्वेषां निर्विशेषाधिकारः केषाञ्चित्तस्यानिष्टकरत्वदर्शनात्तद्वदेवात्राप्यवगन्तव्यम्। यथाधिकारमेवागमोपयोगो योग्यस्तथैव यथाधिकारमेव धर्मोऽपि धर्त्तव्यः। पुराणश्रवणादिद्वारा भगवद्भक्तिज्ञानादिषु समेषामधिकारसमर्थनात्। न च "दैवीवाग् व्यवकीर्णेयमशक्तैरभिधातृभिः" इति वाक्यपदीयरीत्या नित्यसिद्धाया दैव्या एव वाचः प्रयोक्तॄणामशक्त्यैव व्यवकीर्णतेति सुतरां शक्तिमता तु संस्कृतैव वागभ्युपेतव्येति वाच्यम्, शद्रादीनां वैदिकेषु कर्मस्विव लौकिकशक्तिसत्त्वेऽपि शास्त्रीयशक्तेरभावात्। न च संस्कृताया वाचो भिन्ना मानुषी वाक् पूर्वं नासीदिति वाच्यम्। 'स यदि पुरा मानुषीं वाचं व्याहरेत्। तत्रो वैष्णवीमृचं वा यजुर्वा जपेद्यज्ञो वै विष्णुस्तद्यज्ञं पुनरारभते। तस्यो हैषा प्रायश्चित्तिः॥' (शत ब्रा० काण्डम् १ अध्यायः ७ ब्राह्मणम् ४ कण्डिका २०)

'स यदिदं पुरा मानुषीं वाचं व्याहरेत्। तत्रो वैष्णवमृचं वा यजुर्वा जपेद्यज्ञो वै विष्णुस्तद् यज्ञं पुनरारभते। तस्यो हैषा प्रायश्चित्तिर्देववीतये त्वा गृह्णामीति देवानवदित्यु हि हविर्गृह्यते।' (शत० ब्रा० काण्डम् १ अध्यायः १ ब्राह्मणम् ४ कण्डिका ९)

इति शतपथश्रुत्या संस्कृताया वाचो भिन्नाया मानुष्या वाचो यज्ञकाले प्रयोगेण प्रायश्चित्तं विहितं तेनानादिश्रुतिप्रमाणसिद्धं मानुषीणां

वाचामनादित्वम्। न च वैदिकीं वाचमपेक्ष्य संस्कृताया एव वाचो मानुषीत्वमिति वाच्यम्, प्रयोगकाले पौरुषेयसूत्रादिप्रयोगे तथा प्रायश्चित्ताविधानात्। संस्कृताया वाचो यज्ञकाले प्रयोगदर्शनात्।

अध्यगमदयं वेदप्रामाण्यविमर्शः परिपूर्णताम्।

अत्र मीमांसिता मीमांसनीया। समीक्षिताः समीक्षणीयाः, समाहिता सामधानीया,उत्तरिता उत्तरणीयाः, परीक्षिताश्च परीक्षणीयाः। वेदेषु प्रामाण्यमाधृत्य विवदमानाः सौगता; विवसनाश्च सन्ति पूर्वपक्षिणः। आधुनिका अपि कतिपये पाश्चात्यसंस्कारसंस्कृता भवन्ति प्रत्यालोचयितारः। सिद्धान्तिनैयायिका, मीमांसका वेदान्तिनश्च। अपरेऽपि विद्यन्ते वेदश्रद्धालवो मनीषिणः सिद्धान्तपक्षे। यद्यपि प्रामाण्यांशेऽपि भूयांसः प्रतिलोमव्यवहारा अवतरन्ति, तदर्थमुद्भावयन्ति अंशानाक्षेपार्हान् तथापि अपौरुषेयेणैवेकेन स्थापितेन सर्वे प्रतिविधीयन्ते। तदर्थं शास्त्रोक्तायुक्तयः प्रमाणानि च उपन्यस्य सर्वे यथावत्प्रतिविहिताः। आधुनिकाश्च आक्षेपा नव्यैरपि तर्कैः कुण्ठीकृताः। अत्र प्रामाण्यापौरुषेयत्वयोः सिद्धान्तित्वे उपशतं कोटिप्रकोटयः सम्यग् विस्तरेण निरूपिताः। प्रसक्तानुप्रसक्तानि विचारान्तराण्यपि यथास्थानं सन्निवेशितानि चरमाश्च युक्तयो वेदान्तसम्प्रतिपन्नाः प्रतिवादिभ्योऽपि रोचेरन्। विज्ञास्तु सन्तुष्येयुरेव समुपलभ्य मीमांसामिमां गुणग्रहणैकपक्षपातिनः। इति।



# वेदापौरुषेयत्वविमर्शः ।

'वेदापौरुषेयत्वपरोक्षणप्रसङ्गे' कश्चिज्जल्पति—

"सन्ति हि विश्वस्य पुस्तकालयेषु विविधानि पुस्तकानि । तान्यखिलान्यपि पौरुषेयाणि पुरुषरचितानि मन्यन्ते । परं वेदादिधर्मग्रन्थानां विषयेऽन्यदेव मतमुपलभ्यते । ख्रिष्टीयानां मते यथा 'बाइबिलस्य, यवनानां मते यथा 'कुरान'स्य, पारसीकानाञ्च मते यथा 'जेन्दावस्ता'यास्तथैव हिन्दूनां मते वेदानामपौरुषेयत्वमीश्वरीयज्ञानत्वञ्चाभ्युपगम्यते । वेदादिग्रन्थानामपौरुषेयत्वप्रश्नोऽतीव महत्त्वपूर्णः । यतो हि तेषामपौरुषेयत्वपक्ष एव स्वतः प्रामाण्यं सम्भवति । यदि नाम ते पौरुषेयाः स्युस्तर्हि तेषां प्रामाण्यमपि परत एवाभ्युपगतं स्यान्नतु स्वतस्तेषां पुरुषदोषाशङ्काशून्यत्वाभावात् । तत्र विचारणीयोऽयं विषयो यद् वेदादिग्रन्थानामपौरुषेयत्वं सम्भवति न वा ? अपौरुषेयत्वपक्षेऽपि अपौरुषेयत्वेन किं नाम विवक्षितं स्यात् ? वेदानामपौरुषेयत्वपरीक्षा मुखेनैवान्येषामपि परीक्षा सुकरेति स्थालीपुलाकन्यायेन वेदानामपौरुषेयत्वपरीक्षा ऽत्र प्रस्तूयत' इति ।

तन्न; यतः अर्थातथात्वं प्रमाणानामप्रामाण्यम् । अर्थतथात्वं तु प्रामाण्यम् । तच्च अन्यानपेक्षत्वात् स्वत इति । तेन पौरुषेयाणामपि प्रामाण्यस्वतस्त्वमेव । पुरुषाश्रितभ्रमादिदोषाशङ्कया तु अप्रामाण्यं शंक्यते तत्सिद्धौ अप्रामाण्यम्, तदसिद्धौ तु अनपोहितं प्रामाण्यस्वतस्त्वं तिष्ठत्येव । तेन अपौरुषेयत्वमूलकं प्रामण्यस्वतस्त्वमिति परास्तम् । अत एव प्रत्यक्षानुमानादीनामपि प्रामाण्यस्वतस्त्वमेव ।

यदुक्तं 'वेदा अपौरुषेया न तु पौरुषेया इति भारतीयविदुषां प्राचीनपरम्पराप्राप्तं मतम् । यजुर्वेदस्य पुरुषसूक्ते परमेश्वरादेव वेदानामुत्पत्तिः श्रूयते—

'तस्माद्यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥'

इति (यजुर्वेदे ३१।७)। परमेश्वरोऽपि यद्यप्यस्मिन्सूक्ते पुरुषशब्देनैव व्यपदिष्टः, परं तस्य कर्मफलोपभोगोपनतशरीरसम्बन्धाभावान्न शरीरधारि जीववत् पुरुषशब्दाभिधेयत्वं सम्भवति। पौरुषेयशब्देन चात्र जीवरचितत्वमेवाभिप्रेतम्। अतो वेदाः परमेश्वररचिता अपि अपौरुषेया एवेति अपौरुषेयवादिनां विचारसरणिः।"

तन्न; वस्तुतस्तु ईश्वररचितस्यापि पौरुषेयत्वमेव। अत एव सर्वेषां भारतीयविदुषां वेदा अपौरुषेया इति न मतम्। नैयायिक-वैशेषिकादिभिः वेदानां पौरुषेयत्वस्यैवाभ्युपगमात्। अत एव तन्मतरीत्या वेदानां प्रामाण्यस्वतस्त्वमपि नास्त्येव, ईश्वरस्य आप्तत्वेन कारणगुणसापेक्षतयैव वेदानां प्रामाण्याभ्युपगमात्। अत एव पौरुषेयशब्देन जीवरचितत्वमेव इत्यपि न सङ्गतम्, ईश्वररचितत्वस्यापि पौरुषेयत्वानपायात्। अपौरुषेयत्ववादिनां रीत्या तु 'तस्मात् यज्ञात् सर्वहुतः' इत्यादिश्रुत्या परमेश्वरात् वेदानां सम्प्रदायप्रवर्तनरूप एव उत्सर्गः नित्यानां अन्यादृशस्य उत्सर्गस्य असम्भवदुक्तिकत्वात्।

यदुक्तं परमत्र विचारणीयमस्माभिर्यद् वेदानामपौरुषेयत्वेन किं विवक्षितम्? कथं नाम च तेषामपौरुषेयत्वं सामञ्जस्यमुपेयात्, वेदः कथमीश्वरविरचिताः स्युः? किं शब्दरूपाणां वेदानामपि विरचनमीश्वरेणैव कृतम्? वेदवाक्यान्यपि लौकिकवाक्यवत् पदसमूहरूपाण्येव पदानि पुनरक्षरसमूहरूपाणि। कथं तर्हि वाक्यरूपाणां मन्त्राणामीश्वररचितत्वं सूपपाद्यम्? किमीश्वरेण वेदानां लेखनं कृतम्? किं वा तेन तेषां श्रावणं कृतम्? तत्र न तावत् प्रथमः पक्षस्तर्कसहः, ईश्वरस्य पत्रमस्यादिरहितत्वेन हस्तपादादिशून्यत्वेन च लेखनासम्भवात्। न द्वितीयः, तस्याशरीरित्वेन वर्णोच्चारणोपयोगिकण्ठताल्वादिरहितत्वात्। तत् कथं परमेश्वरेण वेदानां रचना कृतेति नो जानीमहे वयम्, इति।

तन्न; पूर्वमीमांसकरीत्या वेदानां नित्यत्वेन रचनानपेक्षत्वात्। तन्मतरीत्या वेदानां वर्णाः पदानि वाक्यानि च नित्यान्येव। उत्तरमीमांसकानां रीत्या वर्णाः प्रलयपर्यन्तावस्थायित्वेन नित्याः। पौर्वापर्यभाञ्जि पदानि वाक्यानि च तथाविधान्येव। सृष्ट्यारम्भे तु

परमेश्वरेण तानि पूर्वपूर्वसर्गानुपूर्वीसापेक्षतया आविर्भाव्यन्ते। नैयायिकादिरीत्या तु वर्णादीनामनित्यत्वेऽपि पूर्वपूर्वकल्पीयानुपूर्वी सव्यपेक्षतयैव ईश्वरेण तानि निर्मीयन्ते।

न चेश्वरस्य कण्ठताल्वाद्यभावेन वर्णवाक्याद्युच्चारणमसम्भवदुक्तिकमिति वाच्यम् ; लीलया परमेश्वरस्य विग्रहवत्त्वोपपत्त्या तदुपपत्तेः। यथा वा श्रोत्रपादादिरहितस्य श्रवणगमनादिक तत्तच्छक्तिमत्त्वेन ईश्वरस्योपपद्यते, तथैवोच्चारणमपि नासम्भवि। 'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादि श्रुतेः। अन्यथा निर्विग्रहस्य शरीरादिविचित्रप्रपञ्चनिर्मातृत्वमपि शङ्कनीयं स्यात्।

यत्तूक्तं निपुणोऽपि पुरुषः स्वस्कन्धारोहणेऽसमर्थः, तथैव वेदानामीश्वररचितत्वे वेदः स्वयं प्रमाणं भवितुं नार्हति' इति।

तत्तुच्छम् ; स्वपरप्रकाशकानां सूर्यादिभावानां बहुलमुपलब्धेः।

यत्तु "वेदानामपौरुषेयत्वं सिषाधयिषता सायणाचार्येण स्वरचितायाम् 'ऋग्वेदभाष्यभूमिकायां, तेषां पौरुषेयत्वखण्डने स्वीया समस्ता प्रतिभा प्रदर्शिता। परं नासौ वेदानां पौरुषेयत्वं प्रत्याख्यातुं समर्थोऽभूत्। पूर्वपक्षोत्थापितस्य 'अनित्यदर्शनाच्च' (जै० १।१।२८) इत्यस्य तर्कस्य सायणाचार्येण कृतं खण्डनं सर्वथैव असन्तोषास्पदम्। वेदेष्वनित्यानां पदार्थानां दर्शनान्न तेषां नित्यत्वमभ्युपगन्तुं शक्यते इति पूर्वपक्षाभिप्रायः। अस्य खण्डनं चिकीर्षता सायणाचार्येण प्रतिपादितं यद् वेदेष्वनित्यानां पदार्थानां वर्णनं न क्वचिदप्युपलभ्यते। यत्र चानित्यद्रव्याणां वर्णनं प्रतिभाति, तत्रान्य एव कश्चन गूढार्थोऽनुसन्धेयः। तद्यथा—'बबरः प्रवाहणिरकामयत' इत्यत्र प्रवहणपुत्रस्य बबर नामकस्य पुरुषस्य वर्णनं प्रतीयते परं विचारप्रहितचेतसा विज्ञायतेऽस्माभिर्यदत्र बबरध्वनियुक्तस्य प्रकर्षेण वहनशीलस्य वायोरेव वर्णनम् न तु कस्यचित् पुरुषस्येति।

किन्तु सायणाचार्यप्रदर्शितेयं व्याख्याप्रणाली न विदुषां सन्तोषकारिणी। स्वयं सायणाचार्येणाप्येषा प्रणाली मन्त्राणां व्याख्यानावसरेऽनेकशो गत्यभावादुपेक्षिता। तद्यथा—ऋग्वेदस्य प्रथममण्डले 'सोमानं स्वरणं कृणुहि

ब्रह्मणस्पते। कक्षीवन्तं य औशिजः' ( ऋ० मं० १ अ० ५ सूक्तम् १८ )
अस्य मन्त्रस्य व्याख्यानावसरे उशिक्-पुत्रस्य कक्षीवन्नामकस्य ऋषेर्वर्णनं स्वीकृतं सायणाचार्येण। किञ्च ऋग्वेदस्य तृतीयमण्डले कीकटनाम्नो जनपदस्य, प्रमगन्दनाम्नो राज्ञः, नैचाशाखनाम्नो नगरस्य च वर्णनमभ्युपगतम्। अत्र प्रमगन्दस्य, कीकटस्य, नैचाशाखस्य च किं तात्पर्यं ग्रहीतव्यमिति तु न प्रदर्शितं तेन विद्वद्वरेण।

एवमुच्चावचैरभिप्रायैर्मन्त्रद्रष्टयो भवन्ति' ( नि० ७।३ ) 'हर्षशोक-निन्दाप्रशंसादिना मन्त्राणां द्रष्टारोभ वन्ति' ( इति तत्रैव व्याख्याने दुर्गाचार्यः )। तास्त्रिविधाः परोक्षकृताः, प्रत्यक्षकृताः, आध्यात्मिक्य-श्चेति। परोक्षकृता ऋचः सर्वाभिर्नामविभक्तिभिः प्रयुज्यन्ते, प्रथम-पुरुषैश्चाख्यातस्य। यथा—'इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रमिद्गा-थिनो' इति।

त्वमिति चैतेन सर्वनाम्ना 'त्वमिन्द्र बलादधि विन इन्द्र मृधो जहि, कुसिकाश्चेतयध्वम्'। शपथाभिशापयोरुदाहणरम्—'अद्यामुरीय यदि यातु धानो अस्मि ( ऋ० सं० ७।१०४।१५ ) राक्षस इत्यभियुक्तः। सोऽनया ऋचा शपथं प्रतिपेदे। परञ्चाभिशशाप। अथापि परिदेवना—'सुदेवो अद्य प्रपतेदनावृत् परावतं परमां गन्तवा उ। अधाशयीत निर्ऋते रुपस्थेऽधैनं वृका रभसासो अद्युः ॥" ( ऋ० सं० १०।९५।१४ ) पुरूरवस आर्षम्।

निन्दा—'मोघमन्नं विन्दते' ( ऋ० सं० १०।११७।६ )

प्रशंसा—'भोजायाश्वं सम्मृजन्त्याशुं भोजायास्ते कन्या शुम्भ-माना। भोजस्येदं पुष्करिणीव वेश्म परिष्कृतं देव माने व चित्रम् ॥ ( ऋ० सं० १०।१०७।१० ) द्यूतनिन्दा कृषिप्रशंसा—'अक्षैर्मादीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहुमन्यमानः। तत्र गावः कितव तत्र जाया तन्मे विचष्टे सवितायमर्यः ॥' ( ऋ० सं० १०।३४।१३ )

अत्र सर्वत्रेतिहासस्य वक्तृविशेषस्य च प्रतीयमानेत्वेऽपि सुखाव-बोधार्थाख्यायिका रूपत्वेन नेतिहासत्वं न वा पुरुषविशेषवक्तृत्वम् किन्तु तत्तद्रूपधारिण्याः श्रुतेरेव वक्त्रीत्वम्।

'त्रितं कूपेऽवहितमेतत्सूक्तं प्रतिबभौ' ( नि० ४।६ ) तच्च सूक्तम्—'इषिरेण ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव रायः।' ( ऋ० सं० ८।४८।७ )

'रमध्वं मे वचसे सोम्याय ऋतावरी रूपमुहूर्त्तमेवैः। प्रसिन्धु-मच्छा बृहतीमनीषा वस्युरह्वे कुशिकस्य सूनुः॥ ( ऋ० सं० ३।३३। )

लिङ्गानुसरेणास्य सूक्तस्य नदीस्तुतौ विनियोगः। कुशिकसूनोः प्रथित-प्रभावस्य वक्तृत्वे नापि स्तुतिगौरवबोधन एव तात्पर्यम्, रामस्येश्वर-त्वकथनेन रामेश्वरशिवमाहात्म्यप्रख्यानवत्, कुशिकसूनुकर्तृकत्वा-त्स्तुतेर्वैशिष्ट्यम्। न च व्यक्तिविशेषाभावे तद्वैशिष्ट्यमेव कुतः-सिद्ध्येत् ? व्यक्तिमत्त्वे चेतिहाससिद्धिरिति वाच्यम्, मीमांसकानां जातौ शक्त्यङ्गीकारेण कल्पभेदेन व्यक्तिभेदमङ्गीकृत्य कौशिकत्ववसिष्ठत्वादि-जातिमाश्रित्य सेनापतिप्राड्विवाकादिवत् वसिष्ठादिपदविशेषाभ्युप-गमेन वा व्यक्तिविशेषतद्विवेषगौरवाङ्गीकारेऽपि शब्दार्थसम्बन्ध-स्यौत्पत्तिकत्वोपपत्त्या पौरुषेयत्वानापत्तेः।

न च केवलमेतेषामेव परमनेकेषां पुरुषाणामृषीणां जनपदानां नगराणां पर्वतानां नदीनाञ्च वर्णनं वेदेषु बहुशः समुपलभ्यते। तद्यथा—'अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत' ( ऋ० १।१।२ ) इत्येष मन्त्रः पूर्वान्नूतनान् च ऋषीन् वर्णयति। कण्वः कक्षीवान्पुरुमीढो अगस्त्यः' ( अथ० २८।३।१५ ) इत्यस्मिन् मन्त्रे कण्वस्य, विश्वामित्रस्य, वसिष्ठस्य, भरद्वाजस्य, कश्यपस्य, वामदेवस्य, गोतमस्य ऋषेर्नामानि श्रूयन्ते। यजुर्वेदस्य पञ्चमाध्याये उर्वश्यस्यायुरसि पुरूरवा असि ( यजु० ५।२ ) इत्यत्र उर्वश्या पुरूरवसश्च वर्णनमुपलभ्यते। अम्बे अम्बिके अम्बालिके न मा नयति कश्चन ( यजु० २३।१८ ) इत्यत्र अम्बादीनां महाभारतोपवर्णितानां कन्यकानां नामानि दृश्यन्ते। एवमेव नहुषस्य ययातेस्तस्य यदु-पुरु-द्रुह्यादीनां पञ्चपुत्राणां च वर्णन यदिन्द्राग्नीयदुषु तुर्वशेषु यद् द्रुह्युष्वनुषु पूरुषु स्थ ( ऋ० ११०८।८ ) इत्यत्र समुपलभ्यते। ऋग्वेदस्य दशममण्डले शन्तनोः देवापेश्च वर्णनं निरुक्तकारेण यास्कमुनिनापि स्वीकृतम् ( नि अ० २, पा० ३ )। तस्मिन्नेव मण्डले

इमं मे गङ्गे यमुने सरस्वति ( ऋ० १०।७५।७ ) इत्यत्र गङ्गादीनां सप्तसिन्धूनामपि वर्णनमुपलभ्यते ।

एवं सत्स्वप्येतेष्वनेकेषु वर्णनेषु को नाम मेधावी वेदेष्वनित्यद्रव्याणां वर्णनं नानुमन्येत । यद्यपि कैश्चित् विद्वद्भिर्वेदेषूपलभ्यमानानां गङ्गादिपदानां व्याख्यानमन्यरूपेणैव क्रियते । परमेतादृशं व्याख्यानं न विदुषां बुद्धिसन्तोषं जनयति" इति ।

तन्न; तस्यानेकधा शक्यसमर्थनत्वात् । तथा हि उर्वश्यादिशब्दाः जातिवाचकाः, उर्वश्यादिपदार्थानामनित्यत्वेऽपि तत्तज्जातीनां नित्यत्वेन नित्येषु वेदेषु तद्वर्णनं सङ्गच्छते एव । अत एव ।औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध' इत्यादि सूत्रं सङ्गच्छते । सेनापत्यादिशब्दवत् स्थानवाचका वा वैदिका शब्दाः । स्थानानि च प्रवाहरूपेण नित्यान्येव । घटनास्तु सुखबोधार्था आख्यायिका रूपा एव । न तु वृत्तमात्रपर्यवसायिन्यः निष्फलत्वात् । फलवन्निश्चितार्थविबोधकत्वेनैव वेदानां प्रामाण्याभ्युपगमात् तेनानित्यपदार्थवर्णनं स्वार्थपर्यवसायित्वेन वेदेषु नास्त्येवेति सायणमतं सम्यगेव, 'यत्परः शब्दः स शब्दार्थः' इति शास्त्रतात्पर्यविदां डिण्डिमघोषात् ।

आख्यायिकारूपाणां मन्त्राणां ब्राह्मणानाञ्च आख्यायिकारूपार्थवर्णने अवान्तरतात्पर्याभ्युपगमेऽपि कैमर्थ्यापेक्षायां विधिनिषेधाद्यङ्गत्वेन स्तुतिनिन्दारूपेऽर्थे एव पर्यवसानम् । अत एव शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् 'अत एव च नित्यत्वम्' इत्यादिभिः सूत्रैः बादरायणेनायमेवार्थः समर्थितः । तत्तत्कथार्थानां मन्त्रार्थवादानां प्रमाणान्तरविरुद्धेऽर्थे गुणवादत्वं प्रमाणान्तरसिद्धेऽर्थेऽनुवादत्वम् तदविरुद्धे तदसिद्धे वार्थे भूतार्थवादत्वमभ्युपगतम् । सर्वत्र च एषु पक्षेषु वेदा पौरुषेयत्वनित्यत्वादिकमक्षुण्णमेव । अनित्यार्थवर्णने तात्पर्याभावस्य समत्वात् ।

'अकारि त इन्द्र गोतमेभिः ( ऋ० सं० १।६३।९ ) इतिमन्त्रस्यापि मरुत्वतीयशस्त्रे विनियोगात् स्तुतावेव तात्पर्यम् । अत्रापि गोतमगोत्रोत्पन्नैर्ऋषिभिः सम्बन्धाच्च स्तुतेर्माहात्म्यबोधः । नात्रापि नाम-

निर्देशेन पौरुषेयत्वं शक्यसमर्थनं' वेदशब्दानां घटनापूर्वकत्वाभावेऽपि घटनानां वेदपूर्वकत्वं तु न विरुद्धम्। तेन वैदिकशब्दानुसारेण क्वचित्कल्पे प्रतिकल्पं वा गोतमस्य तद्गोत्रोत्पन्नानामृषीणां तद्वैशिष्ट्यस्य सत्त्वेऽपि न दोषः। तच्चोक्तमेव 'शब्दानुसारिण्यो भवन्त्यस्तु घटना न वार्यन्ते।' तेनैव तदंश इति वृत्ताभ्युपगमेऽपि न दोषः। अपौरुषेयत्वस्याव्याहतत्वात्। एवमेव परुच्छेदपुत्रेणानानतेन दृष्टस्य 'कारुरहं ततो भिषक्' ( ऋ० सं० ९।११२।३ इत्यादि मन्त्रस्य सोमश्च्योतनाङ्गत्वेन तत्रैव विनियोगात् न स्वार्थे तात्पर्यम्। 'यत्परः शब्दः स शब्दार्थ' इति न्यायात्। अत्र स्तोमानां कर्ता कारुः, तस्य पुत्रस्तु यज्ञस्य ब्रह्मा भूत्वा सर्वं त्रय्या विद्यया भिषज्यतीति भिषक्, माता दुहिता वा चरुपुरोडाशाद्युपयोगि यवादिचूर्णनिर्मात्री। एवं महत्त्वपूर्णः सुसंस्कृतधर्मिष्ठसदस्योपेतपरिवारः महर्षिरस्य मन्त्रस्य द्रष्टेति मन्त्रमाहात्म्यद्योतनं तेन च स्तुतेः माहात्म्यबोधः। आख्यायिकारूपवृत्तवर्णनस्य स्वार्थे तात्पर्याभावेन स्तुतावेव तात्पर्यम्, द्वारीभूतमुख्यार्थतात्पर्याविरोधेन द्वारभूतस्यावान्तरतात्पर्यस्य प्रमाणान्तराविरोधे सत्येव भूतार्थवादित्वम् विरोधे तु गुणवादित्वमेव।

'आभोगयं प्रयदिच्छन्त ऐतना' ( ऋ० सं० १।११०।२ ) अत्र मन्त्रे कुत्सेन स्वपूर्वजा ऋभुदेवता उक्ताः। पुराणादिभ्यः कुत्सकुलस्य ऋभोरुत्पत्तिर्ज्ञायते। अत्रापि 'आर्षभं शंसति' ( ऐ० ब्रा० ११,१६ ) इति रीत्या ऋभुदेवतास्तुतिपर्य्यवसाय्ययं मन्त्रः मन्त्रशब्दानुसारेण क्वचित् कल्पे ऋभोः कुत्सकुल्योत्पत्तिर्न विरुद्धयते सृष्टेः शब्दपूर्वकत्वादभ्युपगमात्. इति नानेनापि मन्त्रेण सादित्वशङ्का, कैमर्थ्याकाङ्क्षावशात् मन्त्राणामर्थवादानाञ्च विधिनिषेधस्तुतिनिन्दादिष्वेव पर्यवसानमित्यसकृदावेदितम्। एवं द्वारीभूतार्थाविरोधेन कामं व्यक्तिविशेषस्य वृत्तविशेषस्य वा द्वारभूतार्थत्वमभ्युपगम्यताम्।

'अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत' इत्यत्र तु ऋषीणां पूर्वत्वं नूतनत्वं च मन्त्रोच्चारयितॄनपेक्ष्यैव न प्रथमोच्चारयितारमपेक्ष्य तस्यासिद्धत्वात्! 'वाचा विरूपनित्यया' इति नित्यत्वबोधकमन्त्रविरुद्धाच्च।

कीकटादिदेशस्य नैचाशाखस्य नगरस्य तेषां तेषां जनपदानां पर्वतानां नदीनाञ्च कण्वकक्षीवद्दुर्मौढागस्त्यवसिष्ठ-भरद्वाज-कश्यप-वामदेव-गोतमादीनां नामश्रवणेऽपि न वेदस्यानित्यत्वम् जातिपदबोधकत्वेन उक्तोत्तरत्वात्। न चैकत्वेन जातिबाधः; कल्पभेदेन व्यक्तिभेदसंभवात्। कथार्थतात्पर्यं तूक्तमेव।

'अम्बे अम्बिके अम्बालिके न मां नयति कश्चन' इत्यत्र तु न महाभारतोपवर्णितानां कन्यकानां वर्णनम् किन्तु अश्वमेधानुष्ठातुः सार्वभौमस्य राज्ञः महर्षीणां परिचारिण्यः काश्चिदन्या एव। सूत्रादिविनियोगानुसारिणः तथैवार्थनिश्चयात्। यदु-तुर्वसु-द्रुह्यु आदीनामपि कथावर्णनं न स्वार्थपर्यवसायि फलवन्निश्चितार्थत्वाभावात् गङ्गादिवर्णनमपि तथैव द्रष्टव्यम्। तात्पर्यानभिज्ञानां तु तत्तदनित्यपदार्थभानं भ्रान्त्यैव। 'भ्रमयति भारती त उरुवृत्तिभिरुक्थ जडान्' इत्यादि भागवतोक्तेः।

यत्तु "वेदानामपौरुषेयत्वं साधयितुं जैमनिमुनिना 'कृते चाविनियोगः कर्मणः समत्वात्' इत्यस्मिन् सूत्रे एको विचित्रस्तर्कः समुद्भावितः। सायणाचार्येण चास्य सूत्रस्य व्याख्यानपुरःसरं वेदानामपौरुषेयत्वं सिषाधयिषितम्। यदि नाम वेदाः पौरुषेयाः स्युस्तर्हि कथं स्वर्गादि-फलार्थं ज्योतिष्टोमादि यागानां विनियोगः संभवेत्? ज्योतिष्टोमयागः साधनं स्वर्गश्च साध्यः। अनयोश्च साध्यसाधनभावसम्बन्ध इत्यमुमर्थं कथं नाम अल्पज्ञः पुरुषोऽवगन्तुं शक्नुयात्, ज्ञानाभावे च कथं स्वर्गार्थं ज्योतिष्टोमस्य विनियोगस्तेन क्रियेत? अतोऽनुमीयते नैतद् वाक्यं मानव-मस्तिष्कप्रभवम्। सर्वज्ञः परमेश्वर एव एतादृशस्य अलौकिकस्य ज्ञानस्य दाने समर्थः। अतो वेदा ईश्वररचिता एव। एषा हि तेषामपौरुषेयवादिनां वाचो युक्तिः। परमेषा तु सर्वथैव तर्कासहा। कथमेतद्धि सुदृढं कथयितुं शक्यते यज्ज्योतिष्टोमयागेन स्वर्गावाप्तिर्भवत्येव? ज्योतिष्टोमादि-वाक्यानां प्रामाण्यमभ्युपेत्यैव तेषामपौरुषेयत्वं साध्यते अपौरुषेयत्वे सिद्धे पुनस्तेषां प्रामाण्यं सिद्ध्यतीति अन्योन्याश्रयो दोषोऽत्र वज्रलेपायते। एवमस्मिन्त्रे वेदानामपौरु-

षेयत्वं साधयितुं प्रदर्शितस्य हेतोः साध्यसमहेत्वाभासरूपत्वान्न साध्य-साधने शक्तिः।"

तदपि तुच्छम्; सूत्रभाष्यादि-तात्पर्यानभिज्ञानात्। तथा हि सम्प्रदायाविच्छेदे सति अस्मर्यमाणकर्तृकत्वेन सिद्धस्यैव अपौरुषेयत्वस्य उपोद्वलनायैव एतदुक्तिः। अपूर्वसाध्यसाधनभावबोधकत्वेनापि तदुपोद्वलनम्।

न च ज्योतिष्टोम-स्वर्गयोः साध्य-साधनभावमनभ्युपगच्छतः तदकिञ्चित्करमिति वाच्यम्; तदभ्युपगन्तॄन् प्रत्येव तत्साधनात् अनेके पौरुषेयत्ववादिनः ज्योतिष्टोमस्वर्गयोः साध्यसाधनभावमभ्युपगच्छन्ति अपौरुषेयत्वं ईश्वरकर्तृकत्वं च वेदानां नाभ्युपगच्छन्ति तान् प्रति ज्योतिष्टोमस्वर्गयोः साध्यसाधनज्ञानपूर्वकः विनियोगो न सम्भवतीति अपौरुषेयत्वं सर्वज्ञकर्तृकत्वं वा अभ्युपेयम्। न च ऋषीणामपि तद्विषये योगजसाक्षात्कारः सम्भवति; धर्मस्य योगजसाक्षात्कारविषयत्वानभ्युपगमात्।

किञ्च—स्वर्गकामः ज्योतिष्टोमेन यजेत इत्यादिवाक्यैः स्वर्गज्योतिष्टोमयोः अवगम्यमानः कार्यकारणभावो नापलपितुं शक्यः, चक्षुषा जायमानस्य रूपज्ञानस्येव विदितपदतदर्थस्य वाक्यैः जायमानस्य वाक्यार्थज्ञानस्य सर्वानुभवसिद्धत्वात्। प्रमाणान्तराविषयत्वात् तद्बाधकज्ञानमपि नास्त्येव। कारणदोषज्ञानमपि पुरुषसम्बन्धाभावात् असिद्धमेव। कारणदोषबाधकज्ञानयोरेव अप्रामाण्यप्रयोजकत्वेन तदभावेन प्रामाण्यस्वतस्त्वस्य अनपोहितत्वात्। उक्तवेदवाक्यानां प्रामाण्यं सुस्थिरमेव। अयञ्च कार्यकारणभावः भ्रमप्रमादविप्रलिप्सादि-दोषदुष्टत्वेन पुरुषैर्ज्ञातुमशक्यत्वात् अपौरुषेयवेदवाक्यैकगम्य इति वेदानामपौरुषेयत्वं सिद्ध्यति।

यत्तु-"किञ्च', वेदानामानादित्वं साधयितुं औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" (जै०१।५) इत्येतत् सूत्रमुद्धृतं सायणाचार्येण ऋग्वेद-भाष्य-भूमिकायाम्। शब्दार्थसम्बन्धनित्यात्वाद्धेतोः शब्दरूपस्य वेदस्य नित्यत्वं साध्यते। परमत्र विचारणीयमस्माभिर्यत् शब्दार्थसम्बन्ध-

नित्यत्वस्य कोऽर्थः। कीदृशो हि शब्दार्थ सम्बन्धो नित्यो विवक्षितः? किं प्राप्तिलक्षणः सम्बन्धः' आहोस्वित् ज्ञाप्यज्ञापकलक्षणः?

तत्र न तावत् प्रथमः कल्पः शब्दे अर्थोपस्थापनायोगात्। यदि नाम शब्देनाऽर्थस्य उपस्थितिः संभवेत् तर्हि अन्नशब्दोच्चारणेन मुखपूरणं स्यात्, अग्निशब्दोच्चारणेन मुखज्वलनं स्यात् असिशब्दोच्चारणेन च जिह्वाच्छेदनं भवेत्। तथा चाह गोतममुनिर्न्यायसूत्रे–पूरणप्रदाहपाटनानुपलब्धेश्च सम्बन्धाभावः (न्या० २।२।५२) इति।

न च द्वितीयोऽपि पक्षः क्षोदक्षमः ज्ञाप्यज्ञापक-लक्षणसम्बन्धस्यापि सामयिकत्वेन अनित्यत्वात्। तथा चाह गोतमः-न सामयिकत्वाच्छब्दार्थ-सम्प्रत्ययस्य (न्या०२।२।५ इति। नहि शब्दार्थयोः सम्बन्धः स्वाभाविकः सामयिक एवैषः।

तत्रत्यं वात्स्यायन भाष्यम्—न सम्बन्धकारितं शब्दार्थव्यवस्थानम्। किं तर्हि? समयकारितं यत् तदवोचाम। कः पुनरयं समयः अस्य शब्दस्येदमर्थजातमभिधेयमिति अभिधानाभिधेयनियमनियोगः। तस्मिन्नुपयुक्ते शब्दार्थसम्प्रत्ययो भवति, विपर्यये हि शब्दश्रवणेऽपि प्रत्ययाभावः। सम्बन्धवादिनाऽपि चायमवर्जनीय इति।

शब्दार्थसम्बन्ध नित्यत्वपक्षे गोपदेनैव गोपदार्थस्य बोधः स्यात् नतु आङ्ग्लभाषायाः 'फादर' शब्देन, फ्रेञ्चभाषायाः 'पेक्षर' शब्देन, पारसीकभाषायाः 'पिदर' शब्देन वा। तथा हि न्यायसूत्रम् 'जातिविशेषे चानियमात्' (न्या० २।३।५५) इति।

सामायिकः शब्दार्थसम्प्रत्ययः न स्वाभाविकः। ऋष्यार्यम्लेच्छानां यथाकामं शब्दविनियोगोऽर्थप्रत्यायनाय प्रवर्तते। स्वाभाविके हि शब्दस्यार्थप्रत्यायकत्वे यथाकामं न स्यात्। यथा तैजसस्य प्रकाशस्य'। रूपप्रत्ययहेतुत्वं न जातिविशेषे व्यभिचरतीति वात्स्यायनभाष्यम्। अतो ज्ञायते शब्दार्थयोः सम्बन्धो न नित्यः परं सामयिकः साङ्केतिक एव।

तन्न ज्ञाप्यज्ञापकभावसम्बन्धस्य नित्यत्वाभ्युपगमे दोषाभावात् नित्यस्यैव सम्बन्धस्यावगमः आप्तोपदेशादिना भवति। अत एव न

सम्बन्धग्रहमन्तरा शाब्दबोधः। यथा—धूम-धूमध्वजयोः सम्बन्धे स्वाभाविके सत्यपि व्याप्तिज्ञानमन्तरा न धूमेन धूमध्वजावबोधः तथैव सम्बन्धग्रहमन्तरा पित्रादिशब्दैः तदर्थावगमोऽपि न भवतीति युक्तमेव। गौतमवात्स्यायनादयस्तु वेदपौरुषेयत्ववादिनः न शब्दनित्यत्वमपि अभ्युपगच्छन्ति कुतस्तरां सम्बन्धनित्यत्वम्? पूर्वोत्तरमीमांसकास्तु वर्णपदयोरिव वेदवाक्यानामपि नित्यत्वमभ्युपगच्छन्ति सुतरां तन्मतरीत्या सम्बन्धनित्यत्वमपि सम्भवत्येव। अर्थव्यक्तीनामनित्यत्वेऽपि तत्तजातीनां नित्यत्वेन तन्निर्वाहात्। तथापि गौतमादीनां वेदानामीश्वरकर्तृकत्वमभिमतमेव। उदयनाचार्याः न्यायमञ्जरीकाराश्च वेदानामीश्वरकर्तृकत्वं प्रतिकल्प नियमेन वेदाविर्भावाभ्युपगमेन प्रवाहरूपेण नित्यत्वञ्च अभ्युपगच्छन्ति।

यदुक्तम्—'पितृ-पिदर फादर-प्रभृति विविधदेशीयशब्दानां स्वार्थप्रत्यायकत्वदर्शनात् न स्वाभाविकः सम्बन्धः किन्तु समयकारितः, 'जातिविशेषे चानियमात्' ऋष्यार्यम्लेच्छानां यथाकाममर्थप्रत्यायनाय शब्दविनियोगः प्रवर्तते, यथा तैजसस्य प्रकाशस्य रूपप्रत्ययहेतुत्वं न जातिविशेषे व्यभिचरतीति, तदपि मन्दम्—बोधकतारूपायाः शक्तेस्तत्राप्यभ्युपगमेन वाधाभावात्। न च तर्हि शक्तत्वस्यैव साधुत्वप्रयोजकतया तत्र साधुत्वमपि स्यादिति वाच्यम्, अपभ्रष्टशब्दैः साधुशब्दाननुमायैव तेषां बोधकत्वाभ्युपगमेन तत्र साधुत्वानापत्तेः। तथा च लिपिवत्तेषां साधुशब्दस्मरण एवोपयोगात् न दोषः। तदुक्तं वाक्यपदीये—

'ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः' इति। (वा० प० ब्र० का–१५०)

पित्रादिशब्दतादात्म्यप्रकारकज्ञानविषयतामापाद्य फादरादयः शब्दा बोधका भवन्ति। तदप्युक्तं तत्रैव 'तादात्म्यमुपगम्येव शब्दार्थस्य प्रकाशकाः।' इति। (वा० प० ब्र० का० १५०)

ननु साक्षादेव तेषां वाचकत्वं किं न स्यात् शक्तिकल्पकव्यवहारादेस्तुल्यत्वादिति चेन्न, तत्तद्देशभेदभिन्नेषु शक्तिकल्पने गौरवात्।

न च पर्यायतुल्यता, तेषां सर्वत्रैकत्वात्, विनिगमनाविरहात्। पर्याय-वाचकेषु सर्वेषु शक्तिकल्पनायुक्ता। नापभ्रंशे तत्सम्भवः कोषादिषु पर्यायतया तेषामपि गणनापत्तेः।

शक्तत्वमेव साधुत्वमिति मते अपभ्रंशशब्दानां लिपिवत् साधु-शब्दस्मरणहेतुत्वेन वाचकत्वमिति न शक्तत्वं न चासाधुत्वम्।

'न शिष्टैरनुगम्यन्ते पर्याया इव साधवः।
ते यतः स्मृतिमात्रेण तस्मात्साक्षादवाचकाः॥'

(वा० प० ब्र० का १५१)

यथा बालः शिक्षभाषाः 'अम्बाम्वे' त्यव्यक्तं प्रभाषते तेनाव्यक्त-शब्दज्ञानपूर्वकव्यक्तशब्दज्ञानात् बोधो भवति।

'एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते।
तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते॥'

(वा० प० ब्र० का १५३)

अन्येषां रीत्या—अपभ्रंशानामपि साक्षादेव वाचकत्वम्, अशक्तत्वे बोधासम्भवात्। न च साधुशब्दस्मरणात्ततोबोधः, साधुशब्दानभि-ज्ञानामपि बोधदर्शनात् साधुशब्दात्तेषामबोधाच्च। न च शक्तिभ्रमात्ते-भ्यो बोधः, बोधकत्वस्याबाधेन तद्ग्रहणस्याभ्रमत्वात्। प्रतीतेर्भ्रमत्वे विषयबाधस्यैव तन्त्रत्वात्।

यत्तु लाक्षणिक इव वाचकत्वव्यवहाराभावस्यैव बाधकत्वमस्त्विति, तदपि न, ईश्वरेच्छाशक्तिरिति मतेऽपि सन्मात्रविषयिण्यास्तस्या बाधाभावात्, शक्तेः पदपदार्थविशेषघटिताया भ्रमासम्भवाच्च। तदुक्तंवाक्यपदीये—

'पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु।
प्रसिद्धिमागता तेषु तेषां साधुरवाचकः॥ १५४॥
दैवीवाग्व्यवकीर्णेयमशक्तैरभिधातृभिः।
अनित्यदर्शिनां त्वस्मिन् वादे बुद्धिविपर्ययः॥१५५॥

अभिधातृषु विगुणेषु दन्तादिभङ्गवशेन विकलेषु जायमाना अप-भ्रंशा अशिक्षतेषु पारम्पर्यात् प्रसिद्धिं गताः। तेषां दृष्ट्या साधुरवाचकः

किन्तु असाधव एव वाचकाः। साधवश्चासाधुस्मरणद्वारा बोधका इति मतिर्भवति।

पुरा यथा अनृतादिभिरसङ्कीर्णा वागासीत्। तथा सर्वैरपभ्रंशैरसङ्कीर्णा पश्चात् अनृतादिभिरिवापभ्रंशैरपि सङ्कीर्णा जाता। तत एव व्यवकीर्णा दैवीवाक् अपभ्रंशपङ्कमलिनीकृता। अनित्यदर्शिनामत्र बुद्धिविपर्ययो जातः साधूनां धर्महेतुत्वमजानताम्। ते तु मल्लसमयादिसदृशीं साधुव्यवस्थां मन्यन्ते। ते साधूनां शब्दानां समूहं प्राकृतं प्रकृतौ भवमाचक्षते। विकारश्च पश्चात् सम्भिन्नबुद्धिभिः पुरुषैः स्वरसंस्कारादिभिर्निर्णीयते। परन्तु येषां पुरा कल्पो नास्ति न वा दैवी वागसङ्कीर्णासीत् तेषामपि गम्यागम्यादिकव्यवस्थावत् साध्वसाधुव्यवस्था शिष्टैरविच्छेदेन स्मर्यते।

अन्यशब्दविवक्षया बालप्रलापवदर्थे प्रयुज्यमानो यः शब्दो रूढो यश्च न तावुभावपि वाचकौ। तत्र साधुव्यवहितार्थप्रतिपत्तिरभ्यासाद्वा प्रमत्तानामक्षिनिकोचादिवत् प्रत्ययमात्रं जायते।

केचित् शब्दापशब्दयोरुभयोरपि स्वातन्त्र्यमूरीकुर्वन्ति न प्रकृतिविकृतिभावम्, उभयोरप्यनादित्वात् तथापि अश्वशब्दविवक्षया अस्वशब्दः प्रयुक्तस्तुरगस्य न बोधकः किन्तु तेन स्मृतोऽश्व शब्द एव तदर्थाभिधायकः।

वस्तुतस्तु विनिगमनाविरहात् अपभ्रंशेष्वपि शक्तिः, न च तेषां नानात्वं दोषः, संस्कृतपर्यायशब्दानामिव विनिगमनाविरहात्तेष्वपि शक्तिकल्पने दोषाभावात्। न च पर्यायतया तेषामपि गणनापत्तिः, साधूनामेव कोशादौ विभागाभिधानात्। भाषान्तराभिधानकोशेषु डिक्शनरी पदवाच्येषु तेषां गणनादर्शनाच्च।

सकलशिष्टपरिगृहीतत्वन्तु न विनिगमकम्, 'शवतिर्गतिकर्मा कम्बोजेषु प्रयुज्यते, विकार एवैनमार्या भाषन्ते' इति महाभाष्यात्तत्देशनियतसंस्कृतेषु शक्तिसिद्ध्यनापत्तेः। वाचकस्य व्यञ्जकतायामालङ्कारिकाणां प्राकृतभाषोदाहरणस्यासङ्गत्यापत्तेश्च। तत एव तद्देशीयशिष्टानां तत्तद्भाषासु निःसन्दिग्धशक्तत्वप्रत्ययः सङ्गच्छते।

न चासौ भ्रमः, बाधकाभावात् । न च तर्हि शक्तत्वात्साधुत्वमपि तेषां स्यादिति वाच्यम्, पुण्यजननयोग्यत्वस्यैव साधुत्वप्रयोजकत्वात्, पापजननयोग्यत्वस्य चासाधुत्वप्रयोजकत्वात्, 'साधुभिर्भाषितव्य'मिति विधिना पुण्यजननाय साधूनां प्रयोगः पापवर्जनाय च नासाधुभिरिति निषेधः । साधुत्वज्ञापकं तु व्याकरणकोषादिकम्, राजसूयादेर्ब्राह्मणे फलाजनकत्ववत् अश्वादिशब्दानां नाश्वादौ साधुत्वम् । तथा च यः शब्दो यत्रार्थे व्याकरणेन व्युत्पादितः स तत्र साधुः । अयं विचारो वैयाकरणभूषणसारादौ स्पष्टः ।

तत्र मञ्जूषा दृष्ट्या आप्तोपदेशः शब्दः प्रमाणं भवति । 'आप्तो नामानुभवने वस्तुतत्त्वस्य कार्त्स्न्येन निश्चयवान् रागादिवशादपि नान्यथावादो यः स' इति चरके पतञ्जलिवचनात् तादृशपौरुषेयवाक्यानाम् अपौरुषेयत्वेनानाप्तप्रणीतत्वेन वाऽपास्तसमस्तपुंदोषशङ्काकलङ्कत्वादपौरुषेयवाक्यानाञ्च प्रामाण्यम् ।

तत्र नागृहीतवृत्तिकाच्छब्दादर्थावगतिः । वृत्तिस्तु त्रिधा (१) शक्तिः (२) लक्षणा (३) व्यञ्जना च । सा च 'अस्माच्छब्दादयमर्थो बोद्धव्यः' 'इदं पदमिमर्थं बोधयत्वित्याकारा'वेति नैयायिकादयः । पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मक इति वैयाकरणाः, योऽयं शब्दः सोऽर्थो योऽर्थः स शब्दः इत्यनुभवात् । डित्थादियदृच्छाशब्देषु पुरुषेच्छाया एव प्रवृत्तिनिमित्तता । तत्रार्थगतप्रवृत्तिनिमित्तत्वाभावात् तद्रीत्या तादात्म्यं तु तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम् । अभेदस्याध्यस्तत्वान्न विरोधः । अभेदाभिप्रायेण 'ओमित्येकाक्षरं ब्रह्म'' 'घट इति शब्दः' 'घट इति अर्थः' 'घट इति ज्ञान' मिति तेषामभेदः । भेदाश्रयेण तस्य वाचकः प्रणवः । अस्यायं वाचक इति ।

यथा घटशब्दस्यैकव्यक्तौ शक्तिस्वीकारे घटव्यक्त्यन्तरस्य न बोधः, सर्वासु घटव्यक्तिषु शक्तिस्वीकारे शक्त्यानन्त्यमिति घटत्वजातौ शक्तिरुपेयते तथैवैकस्य घटशब्दस्य शक्तत्वे घटशब्दान्तराद् बोधे व्यभिचारः । सर्वस्य शक्तत्वे शक्त्यानन्त्यमिति घटशब्दत्वजातिः शक्त्याश्रयत्वेनाभ्युपगम्यते ।

तस्या नित्यत्वेन सर्वदा सत्त्वेऽपि न सर्वदार्थबोधापत्तिः, वर्णोच्चारणेनाभिव्यक्ताया एवार्थबोधजनकत्वात् । अयमेव जातिस्फोटवादोऽपि । 'अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृतः ।'

यथा-अयं घटः, अयं घटः, इत्यनुगतप्रतीत्या घटत्वं जातिरङ्गीक्रियते तथैव शुक-सारिका-मनुष्यादि-प्रयुक्तेषु प्रतीयमानवैलक्षण्येषु भिन्नेषु घटशब्देषु अयं घटशब्द इत्यनुगतप्रतीत्या घटशब्दत्वं जातिरिति स्वीक्रियते ।

ननु घटशब्दे गुणत्व-शब्दत्व-घटशब्दत्व-जातीनां सत्त्वात् घटशब्दत्वे कथं शक्त्याश्रयत्वमिति चेन्न, घटे द्रव्यत्व-पृथिवीत्व-घटत्वजातीनां सत्त्वेऽपि घटत्वस्यैव शक्तत्ववत् घटशब्दत्वस्यैव शक्तत्वव्यवस्थापनात् ।

यद्यपि घटावयवैर्घटावयविद्रव्यवत् क्रमजन्मवद्भिः क्षणिकैरयुगपत्कालैर्वर्णैरवयवैरव्यवस्थितैर्व्यवस्थितं शब्दान्तरं नारब्धुं शक्यमिति घटत्वजातेः क आश्रयः स्यात् ? न च शब्दत्वजातिवत् घटशब्दत्वजातिः प्रत्येकवर्णपरिसमाप्ता, तथात्वे घकारादिष्वप्युच्चारितेषु घटशब्दत्वप्रतीत्यापत्तेः, द्वितीयादिवर्णवैयर्थ्यापत्तेश्च । तथापि कर्मत्वजात्युपलक्षितेषु क्रमविशेषयुक्तेषु पूर्वापरीभूतेषु कर्मसु भ्रमणत्वोत्क्षेपणत्वादिजातिवत् घटशब्दत्वजातिः सिध्यत्येव । यद्यपि तत्रापि पूर्वं कर्म, ततो विभागः, ततः पूर्वसंयोगनाशः, ततः उत्तरसंयोगः, ततः कर्मनाशः, ततः कर्मान्तरम्, कर्मवति द्रव्ये च पूर्वकर्मणि संयोगः, ततः कर्मनाशः, ततः कर्मान्तरम्, कर्मवति द्रव्ये च पूर्वकर्मणि अविनष्टे सति न कर्मान्तरम् कर्मणोः सहानवस्थानात् । अतः कर्मान्तरसहितैः कर्मविशेषैरवयविस्थानीयं कर्मान्तरं नारब्धुं शक्यमिति क भ्रमणत्वादि जातिः स्यात् ? तथापि उत्क्षिपति, भ्रमतीति भिन्नप्रत्ययभ्रमजनककर्मणि उत्क्षेपणकर्मापेक्षया वैलक्षण्यदर्शनात् भिन्नानि कर्माणि प्रत्यवयवं भ्रमणत्वाश्रयत्वं प्रतिपद्यमानान्यपि प्रत्येकं कर्मदर्शनवेलायामुत्क्षेपणत्वाश्रयकर्मापेक्षया भेदमप्रतिपद्यमानान्यपि इदं कर्मोत्क्षेपणत्वाभिव्यञ्जकं भ्रमणत्वाभिव्यञ्जकं वेति निर्धारयितुमशक्यत्वेऽपि यद्देशविशेषे संयोगविशेषान् जनयन्ति, अपेक्षाबुद्ध्या विषयीकृतानि क्रमानुवृत्तिं जनयन्तो दृश्यन्ते । तथा

पूर्वपूर्वकर्मप्रत्यक्षाहितसंस्कारसहितेन चरमकर्मप्रत्यक्षेण भ्रमणत्व-मुत्क्षेपणत्वं वा जातिरभिव्यज्यते इति वैशेषिकाभ्युपगमः। तथैव घकारादयो घटशब्दस्याश्रयत्वं प्रतिपद्यमाना घन-घटक-घकाराद् भेदम-प्रतिपद्यमाना घटशब्दत्वमनभिव्यञ्जयन्तोऽपि तदुत्तरोत्तरवर्णोपलम्भेन अपेक्षाबुद्ध्या विषयीकृताः क्रमानुवृत्तिं जनयन्ति तत्र पूर्वपूर्ववर्णप्रत्यक्षा-हितसंस्कारसहितेन चरमवर्णप्रत्यक्षेण पूर्वमगृहीता व्यक्तं गृहीता घटशब्दत्वरूपा जातिः संस्कृते अन्तःकरणे व्यज्यते।

तदेवोक्तं श्लोकवार्तिके—

'कण्ठताल्वादिसंयोगविभागक्रमपूर्वकम् ।
ध्वनीनामानुपूर्व्यं स्याज्जात्या चोभयनित्यता ॥
यथैव भ्रमणादीनां भागैर्जात्या च लक्षितैः ।
क्रमानुवृत्तिरेवं स्यात्ताल्वादिध्वनिवर्णभाक् ॥'

वाक्यपदीयरीत्यापि शब्दार्थसम्बन्धानां नित्यतैव—

'नित्याः शब्दार्थसम्बन्धास्तत्राम्नाता महर्षिभिः ।
सूत्राणां सानुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः ॥'

(वा० प० ब्र० का० २३)

तत्र केषाञ्चिद्रीत्या आकृतिनित्यत्वान्नित्यः शब्दः। आकृतिप्र-युक्तञ्चेदं शास्त्रम्। आकृतिरत्र जातिर्नावयवसन्निवेशविशेषः। तन्मते शब्दस्य गुणत्वेन निरवयवत्वात्।

शब्दार्थसम्बन्धानामनित्यत्वे पुरुषाणां स्वातन्त्र्ये शब्दार्थ-सम्बन्धाः स्वेच्छयाऽन्यथापि कृता भवेयुः। तस्मात्—

शक्यत्व इव शक्तत्वे जातेर्लाघवमीक्ष्यताम् ॥

यथा अर्थजातयः घटत्वादयः शब्दजातिबोध्याः। यथा वा अर्थ-जातीनां शक्यत्वम् शब्दजातीनाञ्च शक्तत्वम् इति।

केचित्तु अनेकध्वनिव्यङ्ग्यां नित्यां शब्दव्यक्तिं मन्यन्ते। शब्द-व्यक्तिगतस्तु कैश्चिद्वर्णभेदोऽभ्युपगम्यते।

जातेर्नित्यत्वेन तदाश्रये शब्देऽपि नित्यत्वव्यवहारः। तदुक्तम्— 'आकृतिनित्यत्वान्नित्यः शब्दः'। नित्येषु शब्देषु कूटस्थैरविचालिभिर्वर्णै-र्भवितव्यम्।

'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।

एकदेशविकारे हि नित्यत्वं नोपपद्यते॥'

शब्दानित्यत्ववादिमतेऽपि अनादिवृद्धव्यवहारपारम्पर्याविच्छेदेन शब्दव्यवहारस्य व्यवस्थितत्वात् शब्दानां नित्यत्वम्।

न्यायवार्तिककारा अपि नित्या वर्णा नित्या वेदा इति च सम्प्रदायाविच्छेदात् नित्या पृथ्वी, नित्याः पर्वताः इतिवत्। घटशब्दत्वादिजातयोघ टत्वाद्यर्थानां बोधकाः।

अन्येषां रीत्या नष्टविद्यमानयोरव्यवहितोत्तरत्वस्य वक्तुमशक्यत्वेन पूर्वापरीभावरूपक्रमविशेषस्य ज्ञानासम्भव इति पूर्वोक्तरीत्या अन्त्यवर्णानुभवोद्बुद्धसंस्कारेण युगपत्संस्कारोद्बोध इति नियमाभावेन विपरीतक्रमेण संस्कारोद्बोधे सरो रसः, नदी दीन इति विपरीतक्रमापत्तौ प्रत्येकमन्यार्थबोधापत्तेः। तस्मादनेकध्वनिव्यङ्ग्याया नित्याया अक्रमाया स्फोटाख्यायाः शब्दव्यक्तिवाचकत्वेनाङ्गीकारः। प्रतिवर्णं प्रतिपदं प्रतिवाक्यमेक एव शब्दात्मा क्रमोत्पन्न-कत्वादिरूपेण क्रमोत्पन्नावयवप्रतिभासो भासते। परमार्थतस्ते वर्णा पदानि च सन्त्येव। तथा च मीमांसकानां स्फोटवादिनाञ्च शब्दनित्यत्वं सूपपादम्। कार्यशाब्दिकानां मते स्वतोऽनित्यत्वेऽपि व्यवहारनित्यतया आकृतिनित्यतया शब्दपदस्य शब्दाकृतिपरतया शब्दस्य नित्यत्वम्। अखण्डस्यापि'स्फोटस्य जपाकुसुमादिभिः स्फटिकस्य लौहित्यादिभानवत् मणिकृपाणादिभिर्दैर्घ्यादिप्रतिभानवच्च वर्णावयवादिव्यञ्जकत्वेन वर्णत्वपदत्वादिप्रतिभानं भवति।

मीमांसकरीत्या पौर्वापर्यलक्षणक्रमस्यानित्यत्वेऽपि प्रवाहरूपेण पदवाक्यादीनां नित्यत्वमित्यन्यत्र विस्तरः।

पूर्वापरचिरप्रत्ययाश्च कालालम्बनाः। तेन ध्वनिभिर्वर्णेषु व्यज्यमानेषु पूर्वापरभावेन व्यज्यमानः काल एव क्रमः। स च नित्य इति तद्विशिष्टस्य नित्यत्वबोधकाभावः। तद्विशिष्टपदादीनां नित्यत्वे न बाधा। तदुक्तं वाक्यपदीये—

'प्रत्यक्षप्रत्यभिज्ञानाद्वर्णैकत्वं प्रतिष्ठितम् ।
वर्णात्मकं पदं तच्च तदभेदान्न भिद्यते ॥'

ननु कालस्यैव क्रमत्वे कालस्य नित्यत्वविभुत्वाभ्यां कथं पौर्वापर्यरूपेण विभागावभासः इति चेन्न, नित्यस्य विभोश्च वर्णस्य यथा दीर्घह्रस्वादिरूपेण भेदावभासो ध्वन्युपाधिवशान्न विरुद्ध्यते तथैवाभिन्नस्यापि कालस्यादित्यगतिक्रियोपाधिवशाद् भिन्नत्वोपपत्तिः ।

आकृतिनित्यतया प्रवाहनित्यतया चार्थोऽपि नित्यः । मिथ्योपाध्यवच्छिन्नं ब्रह्मैव वाच्यम् । जातिः शब्दार्थ इति मते च सुतरामर्थो नित्यः । 'सिद्धे शब्दार्थसम्बन्धे, इति वार्तिके जात्याख्यायामिति सूत्रे च भाष्ये तत् स्पष्टम् ।

शब्दार्थसम्बन्धोऽपि नित्यः । नेदंप्रथमतया स कर्तुं शक्यः, सर्वपदशक्त्यग्रहकाले केनापि पदेन सम्बन्धोपदेशासम्भवात् प्रयोक्तृप्रतिपत्त्रोरगृहीतसङ्गतिकयोरज्ञातसङ्गतिकैः शब्दैर्व्यवहारासम्भवात् । 'सिद्धे शब्दार्थ-सम्बन्धे' 'नित्यो हि-अर्थवतामर्थैरभिसम्बन्धः, औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति । कात्यायन-पतञ्जलि-जैमिनिवचनेभ्यः । औत्पत्तिक इति नित्यं ब्रूम इति शाबरभाष्यम् । औत्पत्तिकः स्वभावसिद्धोऽनादिरिति । सच सम्बन्धः शब्दैरर्थानां बुद्धौ कल्पनात् कार्यकारणभावरूपः इन्द्रियविषययोः प्रकाश्यप्रकाशकभावरूपो वा योग्यतालक्षणो वा । योग्यता च बोधजनकत्वरूपा वाच्यवाचकभावरूपशक्तिग्रहतादात्म्यरूपा वा । उभयविधस्य सम्बन्धस्य परिच्छेदकः सङ्केत इति । नागृहीतसङ्केतच्छब्दादर्थावबोधः ।

तार्किकाणां रीत्या तु ईश्वरेच्छारूपा शक्तिरेव सम्बन्धः । सा च नित्यैव । वाच्यवाचकभावलक्षणः सम्बन्धः । शक्तिस्तु मीमांसकरीत्या पदार्थान्तरम्

व्याकरणन्तु साधुत्वबोधनार्थम् । साधुत्वन्तु धर्मजनकत्वरूपमेव 'एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः' इति श्रुतेः । तदुक्तम् वाक्यपदीये-

शिष्टेभ्य आगमात्सिद्धाः साधवो धर्मसाधनम् ।
अर्थप्रत्यायनाभेदे विपरीतास्त्वसाधवः ॥'

(वा० प० ब्र० का० २७)

'समानायामर्थावगतौ शब्दैश्चापशब्दैश्च शास्त्रेण धर्मनियमः क्रियते शब्देनैवार्थोऽभिधेयो नापशब्देन, एवं क्रियमाणमभ्युदयकारिभवतीति। महाभाष्ये च आगमात् व्याकरणात् सिद्धाः साधवः शब्दाः धर्मसाधनम्, विपरीतास्त्वनिष्टसाधनम्। 'तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः, तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः', इति श्रुत्या असाधूनां शब्दानामधर्मसाधनत्वबोधनात् आगमविहितेषु यागादिषु निषिद्धेषु हिंसानृतवदनादिषु धर्माधर्मसाधनत्वस्याविप्रतिपन्नत्वात्।

शब्दकृतकत्वपक्षेऽपि अनादौ संसारे अप्रवृत्तशब्दव्यवहारस्य कालस्यासत्त्वात् प्रवाहनित्यता भवत्येव। यथा मीमांसकरीत्या अर्कः, अश्व, अर्थः, आदौ पदभेदेऽपि अवर्णो न भिद्यते तथैव वाक्यभेदेऽपि तदेवेदं गोपदमिति प्रत्यभिज्ञया पदैकत्वम्। तद्रीत्या वर्णव्यतिरिक्तं पदं वर्णपदव्यतिरिक्तं वाक्यं नास्ति।

'वर्णा एव तु शब्द' इति भगवानुपवर्षः।

'यावन्तो यादृशा ये च यदर्थप्रतिपादने।<br>
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः॥'

स्फोटपक्षे निरवयवं वाक्यं निरवयवस्य वाक्यार्थस्य बोधकम्। तदवयवाः पदात्मका वर्णात्मकाश्चावयवाः मिथ्याभूता एव। तथा च पद तदवयवाश्रितस्योहादेर्महावाक्यावयवान्तरवाक्यार्थप्रयाजाद्याश्रितप्रसङ्गतन्त्रादेः कार्यस्य मृषात्वं स्यात्, अतस्तत्सत्यता सिद्ध्यर्थं स्फोटनिराकरणम्।

अपभ्रंशादिसंबन्धेऽपि मीमांसका एकस्मिन्नर्थे प्रयुज्यमानान् गो-गावी-गोण्यादि शब्दान् व्याकरणानुगताननुगतांश्चोदाहृत्य चिन्तयन्ति, किमेते सर्वे एकस्मिन्नर्थे प्रयोक्तव्याः साधवः, किं वा व्याकरणानुगता एव साधवोऽन्ये त्वसाधवो न प्रयोक्तव्याः? तदर्थमन्योऽप्ययं विचारः। किं सर्वेऽप्यविच्छिन्नपारम्पर्यप्रयोगजा उत केचिदशक्तिजा अपभ्रंशाः, तदर्थं किं व्याकरणं प्रमाणमप्रमाणं वेत्यपि चिन्तनीयम्। तस्य किमपिमूलं सम्भवति न वा? मूलसम्भवे प्रमाणभूतव्याकरणस्मृतिशास्त्रबली-

यत्त्वेन तदभियुक्तपुरुषाचारवलेन साधारणजनाचारवाधात् गाव्यादीनामसाधुत्वम् । निर्मूलत्वे तु तदप्रामाण्याल्लौकिकप्रयोगाविशेषात् सर्वेषां साधुत्वेन प्रयोज्यतेति तत्र पूर्वपक्षः; साधूनेव प्रयुञ्जीत नासाधूनिति एको नियमः, गवादय एव साधवो न गाव्यादय इति साधुत्वस्वरूपोऽपरोनियमः । तद्द्वयमपि न नियन्तुं शक्यम् ; तत्र न प्रथमः, अर्थावगमाय शब्दोच्चारणं भवति न धर्माय, अर्थस्त्वसाधुभ्योऽप्यवगम्यते, तेनानर्थकः साधुनियमः, अथ न गम्यतेऽसाधुभ्यः ततः सुतरां शास्त्रनियमानर्थक्यम । अथवा साधुशब्देभ्योऽर्थेऽवगम्यमानेऽपि शब्दप्रयोगमाश्रित्य धर्मनियमाय साधुत्वनियमः शास्त्रेण क्रियते इत्युच्येत, तदपि न, मूलासम्भवात् । न प्रत्यक्षादीनां मूलत्वं सम्भवति तेषां धर्माधर्मयोरप्रवृत्तेः ।

न च वेदवाक्यानि, गवादिशब्देषु प्रतिपदं कल्पयितुमशक्यत्वात्, अनन्तवाक्यपाठासम्भवात्, अपठितानाञ्च मूलत्वानुपपत्तेः । न च 'सुशब्दानेव' प्रयुञ्जीत नापशब्दमित्येकेनैव सर्वेषां सङ्ग्रहः, गाव्यादीनामपि श्रोत्रग्रहणत्वेन सुशब्दत्वात् व्यवस्थानुपपत्तेः । न चावान्तरं सामान्यं गाव्यादिव्यावृत्तम् । किञ्चिदासीद् येनव्यवस्था स्यात् । न च वाचकत्वरूपं साधुत्वमेव तद्भविष्यतीति वाच्यम्, तस्या गाव्यादिष्वपि अविशिष्टत्वात् । अवाचकानां प्रयोगस्य प्रत्यायकत्वस्य चाघटमानत्वात् । न च यवादीनामिव प्रियङ्ग्वादिषु गुणात्प्रयोगसम्भवः, मुख्याभावात् । मुख्यपूर्वको हि गौणो भवति । न चात्यन्तावाचकस्य गाव्यादेरवकल्पते ।

ननु साधुस्मरणात् शक्तिभ्रमाद्वा प्रयोगप्रत्यया इति चेन्न, गवादिष्वपि तथात्वस्य वक्तुं शक्यत्वात् । एतेनैव लक्षणापि प्रत्याख्याता । गोणीशब्दस्यावपने मुख्यस्यापि तत्सम्बन्धप्रतीतिपूर्वकत्वाभावात लक्षणा न सम्भवति, गाव्यादीनामप्यपशब्दत्वाभावात् । 'तस्माद् ब्राह्मणेन न म्लेच्छितवै, 'अहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयते, इत्यादि निषेधो न गाव्यादिविषयः । किन्तु अर्थापेतोऽपशब्द इति व्युत्पत्त्या अर्थशून्यानृतवदननिषेधः वैदिकादपेत इति स्वरवर्णादिभ्रंशविषयो-

वा 'न म्लेच्छभाषाशिक्षितव्ये'ति स्मृत्यनुसारेण म्लेच्छभाषाविषयो वा।

गाव्यादिनामवाचकत्वं लोकविरुद्धमपि, लोके तेषां प्रत्यायकत्वदर्शनात्। अनादित्वं साधुत्वमित्यपि न, गाव्यादिष्वपि तत्सम्भवात्। तत्रापि सम्बन्धुरस्मरणात् अदृष्टसाधनत्वमिति चेन्न, तस्य प्रत्यक्षाद्यविषयत्वात्।

वेदवाक्यानां प्रतिपदमसम्भवादुपलक्षणानुपपत्तेश्च। साधुत्वस्यैव नोपलक्षणत्वमात्माश्रयापत्तेः। साधुत्वमदृष्टसाधनत्वरूपं चेददृष्टसाधनमदृष्टार्थं प्रयुञ्जीतेत्येवमुपलक्षणस्य प्रमेयस्य चैक्यात् धर्मप्रयोजनतां शास्त्रस्य सूत्रकारो न वक्ति, भाष्यवार्तिककारौ तु वदत इति विगीतत्वञ्च। भाष्यकारो ज्ञाने धर्ममाह। वार्तिककारस्तु शास्त्रपूर्वके प्रयोगे धर्मं वक्तीति तयोरपि मिथो विरोधः। न च रक्षोहादिकं व्याकरणप्रयोजनं सम्भवति, तेषां शिष्याचार्यसम्बन्धात् लोकमीमांसादिभ्यः सिद्धेः।

वेदविरुद्धं चेदं व्याकरणम्, तथाहि—व्याकरणशास्त्रे 'दृष्टं साम' इत्यधिकृत्य 'कलेर्ढक्' 'वामदेवाड्ड्यड्ड्यौ' इति रीत्या कलिना दृष्टं साम इत्यर्थे कलिशब्दात् ढकि कालेयशब्दो व्युत्पादितः। वामदेवेन दृष्टं साम इत्यर्थे वामदेवशब्दात्ड्यत् प्रत्ययेन वामदेव्यशब्दसिद्धिरुक्ता। वेदे तु यदकालयत् तत्कालेयस्य कालेयत्वमिति कालनक्रियानिमित्तकः कालेयशब्द उक्तः।

तथा 'आपो ऋत्वियमार्च्छंस्तासां वायुः पृष्ठे व्यवर्तत। ततो वामं वसु सम्भवत्। तन्मित्रावरुणावपश्यताम्। तावब्रूताम्। वामं वा देवेभ्योऽजनि।' रजोधर्मं प्राप्ताभिरद्भिर्वायोः सङ्गमे सति उत्तमं धनं जातं तच्च देवतासम्बन्धि जातम्। तेनेदं वामदेव्याख्यं साम जातमिति स्पष्टं विरोधः।

किञ्च अर्थप्रयुक्तानां हि शब्दानां व्याकरणं प्रतिज्ञातम्, वाक्यमेव च संस्कर्तव्यं न पदान्यनर्थकत्वात्। यथोक्तम् वाक्यपदीये—

'ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बले।
देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः॥'
(वा० का० २)

तेन वाक्यमेव संस्कर्त्तव्यम्।

यत्तु पदद्वारा व्याकरणेन वाक्यमेव संस्क्रियते तत्तुच्छम्, वाक्यस्याविद्यमानत्वात् विषाणद्वारेणेव शशस्य संस्कारासम्भवात्। सिद्धान्तस्तु गवादय एव साधवो न गाव्यादयः इति साधुस्वरूपनियमः। साधव एव प्रयोज्या नासाधव इति धर्माय प्रयोगनियमः, इति द्वौ व्याकरणेन प्रतिपाद्येते। मूलसम्भवात् अन्वेत्येव प्रामाण्यम्। मन्वादिवत् सप्रत्ययप्रणीतत्वात् सम्भवत्येव वेदमूलकत्वम्। व्याकरणस्मृतिर्वेदमूलिका सप्रत्ययप्रणीतस्मृतित्वात् मन्वादिस्मृतिवदित्यनुमानात्, तस्माद् ब्राह्मणेन न म्लेच्छितवै, म्लेच्छो ह वा एष यदपशब्दः, आहिताग्निरपशब्दं प्रयुज्य सारस्वतीमिष्टिं निर्वपेदिति वाजसनेयिनः, इति व्याकरणस्य प्रत्यक्षश्रुतिमूलकत्वाच्च। न चैवमाहिताग्निमात्रस्य स्वभाषोच्छेदव्यवहारोच्छेद इति वाच्यम्। आहिताग्निशब्दस्यान्वाहिताग्निपरत्वेनाग्न्यन्वाधानानन्तरं कर्ममध्येऽपशब्दप्रयोग एव प्रायश्चित्तम्। ततोऽन्यत्र दोषाभावात्।

'उत त्वः पश्यन्नित्यादयो बहवो मन्त्राः शब्दापशब्दविभागाभिज्ञतदनभिज्ञस्तुतिनिन्दारूपाः। दृष्टार्थेऽपि शब्दप्रयोगे तदाश्रितः साधुनियमो भोजनाश्रितदिङ्नियम इव शास्त्रेण क्रियते इति न प्रयोगोत्पत्त्यशास्त्रत्वादव्यवस्था। यथावस्थितार्थरूपसत्यकथनं धर्माय भवति। तथैव यथावस्थिताविप्लुतशब्दरूपसत्योच्चारणमपि धर्माय भवति। यथार्थानृतमन्यथावस्थितस्यान्यथावचनम् प्रत्यवायाय तथा शब्दानृतमप्यरूपे वाचके सत्यन्यरूपोच्चारणमपि।

साधूनेव शब्दान् सत्यपर्यायान् प्रयुञ्जीत नासाधूनपशब्दानृतपर्यायानिति द्वाभ्यामेव वाक्याभ्यां समस्तशब्दापशब्दविधिप्रतिषेधसिद्धेर्नानन्यवाक्यकल्पनापत्तिः।

साध्वसाधुत्वे एव च शब्दापशब्दसत्यानृतपर्याय उपलक्षणे अनादिवाचकत्वमेव साधुत्वम् तद्विपर्ययश्चासाधुत्वम्

ननु प्रयोगप्रत्ययान्यथानुपपत्त्या गाव्यादीनामपि वाचकत्वात् व्यवस्थानुपपत्तिरिति चेन्न; तेषां वाचकत्वाभावेऽपि मुख्याभावे गौण-लाक्षणिकयोर-

सम्भवेऽपि वाचकाशक्तिजतया मूलशब्दोपस्थापनेन प्रत्यायकत्वोपपत्तेः, तदज्ञानात्तु शृण्वन्तो बालाः साधारणश्च तत्रैव संज्ञासंज्ञिसम्बन्धं शिक्षित्वा स्वयं व्यवहरन्ति। तेभ्यश्च शिक्षित्वाऽन्येपीत्येवमपि प्रयोगप्रत्ययोपपत्तौ नैकान्ततः सर्वेषामप्यविच्छिन्नपारम्पर्यवाचकत्वनिर्णयः सम्भवति। तत एवानेकशब्दत्वमेकस्यार्थस्याभ्युपगन्तुं युक्तम्, अनेकशक्तिकल्पनाप्रसङ्गात्। गोशब्देन सास्नादिमानभिधीयते इत्याप्तवाक्यात् वाचकत्वग्रहदशायामभिधानक्रियामभिधानक्रिया द्वारा तत्कर्मकरणयोर्वाच्यवाचकयोरर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यादिति अनेन न्यायेन नियमरूपः सम्बन्धोऽवगतः।

ततश्च गाव्यादेरपि सास्नादिमदर्थवाचकत्वस्वीकारे सास्नादिमत्कर्मकाभिधानक्रियायां गोशब्द एव करणमिति नियमस्य व्युत्पत्तिकालावगतस्य बाधः स्यात्। तस्मादेकैकस्य वाचकत्वमितरे त्वशक्तिजा इत्येव न्याय्यम्।

कर-हस्त-पाण्यादिषु तु विशेषानवधारणादनेकशब्दता गत्यन्तराभावादूरीक्रियते। गाव्यादिषु तु शिष्टस्मरणाभावान्न तथेति न सर्वेषां वाचकत्वम्। वाचकरूपनियमेऽपि स्मृतेः स्मृत्यन्तरमेव मूलम् तस्याप्यन्यदित्यनादिरेवैषा स्मृतिपरम्परा।

न चेयमन्धपरम्परा शब्दस्वरूपशब्दान्तराद्विविक्तस्य प्रत्यक्षत्वात्। सर्वो हि स्वे काले गवादिशब्दान् प्रत्यक्षत उपलभन्ते। वृद्धेभ्यः श्रुत्वाऽतीतकालेऽपि सत्तामवधारयन्ति।

सर्वकालमपि केचन वृद्धाः सन्ति, तत्प्रत्यक्षसम्भवान्न कदाचिदपि प्रत्यक्षविच्छेदः। सर्वकालवर्तित्वमेवानादित्वं साधुत्वञ्च। तथा च तत्तत्कालिकवृद्धप्रत्यक्षसध्रीचीनया शिष्यस्मरणपरम्परया सास्नादिमदर्थेषु गवादिशब्दानामनादिवाचकत्वरूपं साधुत्वं स्वध्यवसानम्।

न चैतत्सर्वं गाव्यादिष्वपि सम्भवति, तत्र प्रत्यक्षपरम्परायाः कथञ्चित् सम्भावितत्वेऽपि तन्मात्रेण साधुत्वानिश्चयात्, अशक्तिजत्वस्यापि सम्भवाच्च।

शिष्टस्मरणाभावान्न गाव्यादिषु अनादित्वनिश्चय इति न साम्यम्। न च विगानादप्रामाण्यम्, श्रुतीनामपि ग्रहणाग्रहणादिविगानदर्शनात्। नापि निष्फलत्वं व्याकरणशास्त्रस्य, धर्माधर्मप्राप्तिपरिहारार्थं तदुपादानहानोपयोगिशब्दापशब्दविभागज्ञानस्वरूपफलस्य सत्त्वात्। रक्षोहादेश्च वेदविरुद्धस्य सर्ववेष्टनस्मरणस्येवाप्रामाण्येऽपि न सर्वस्याप्रामाण्यं, अप्रामाण्यहेत्वभावात्। 'प्रयोगोत्पत्त्यशास्त्रत्वात् शब्देषु न व्यवस्थास्यात्, (१।३।२४) शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम्, (१।३।२५) अन्यायश्चानेकशब्दत्वम्, (१।३ २६) तत्र तत्त्वमभियोगविशेषात् स्यात् (१।३।२७ तदशक्तिश्चानुरूपत्वात्, (१।३।२९) एकदेशत्वाच्च विभक्तिव्यत्यये स्यात्, (१।३।२९) यत्रार्य-म्लेच्छयोरभिधानप्रतिपत्तिर्यथा पीलुशब्दमार्या वृक्षविशेषे म्लेच्छास्तु हस्तिनि प्रयुञ्जते, तत्रोभयोरपि शब्दार्थयोर्लोके प्रसिद्धिगम्यत्वात् तुल्यबलत्वं प्राप्यते। यच्चार्येषु अवंध्यस्मरणसनादित्वकारणं तदपि समानं म्लेच्छेषु इति पूर्वः पक्षः। सिद्धान्तस्तु प्रातिपदिकतामात्रं म्लेच्छेष्वप्यवगम्यते। अविप्लुतशब्दस्त्वार्येष्वेवावधार्यते। न चोभावपि शब्दार्थौ, अनेकादृष्टशक्तिकल्पनाप्रसङ्गात्। शब्दप्रयोगोप्यन्यतरस्यानवारणात्, व्यवहारानुपपत्त्या कदाचित्कस्यचिदुपादाने विकल्पापत्तिश्च स्यात्। तेनैकत्र मुख्यत्वेनान्यत्र गौणत्वेनापि प्रयोगोपपत्तिः। गौणत्वेऽपि पार्श्वस्थानां मुख्याभिमानसंभवात्। तैरेव चान्येभ्यो मुख्यत्वस्य कथनात् मुख्याभिधानपरम्परानुवृत्तिसम्भवात्। यदि विशेषोनावधार्येत तदा गत्यभवाद् द्वयोरभिधेयता अस्ति तु विशेषः।

शास्त्रस्था हि शब्दैकगम्यधर्माधर्माविप्लुतिलिप्सया शब्दार्थतत्त्वं विविच्य पालयन्ति। म्लेच्छास्तु दृष्टार्थव्यवहारस्य यथाकथञ्चित् सिद्धेः प्रयोजनाभावात् नाविप्लुतिसिद्धौ यतन्ते। अतः प्रतिपादकतामात्रं यद्यपि म्लेच्छेष्वपि सिद्ध्यति तथापि विप्लुतिसम्भवान्न तेषु शब्दार्थतत्त्वासिद्धिरिति निर्दोषयार्यप्रसिद्ध्यैवार्थसिद्धिरिति पील्वादिशब्द वृक्षाद्यर्थभिधायिनः।

आर्यप्रसिद्धिविरोधे म्लेच्छप्रसिद्धेरप्रामाण्येऽपि अविरोधे तु तस्या अपि भवत्यभिधेयनिर्णये प्रामाण्यम्। पिक-नेम-सत-तामरसादिशब्दा

न कदाचिदार्याणां प्रसिद्धाः । म्लेच्छानान्तु कोकिलादिषु प्रसिद्धाः । पिकः कोकिले, नेमेत्यर्धे, सतशब्दस्तु शतच्छिद्रपरिमण्डलदारुपात्रे, तामरसः पद्मे इति वेदे पिकमालभेत, सते हिरण्यं निधाय, इत्यादि तदर्थावधारणाय म्लेच्छप्रसिद्धिरादरणीया ।

यद्यपि म्लेच्छेषु पदार्थानां विप्लुतिव हुल्यदर्शनात् प्रसिद्धेऽर्थे न विस्रम्भः । पदानि पदार्थाश्चापभ्रंसप्रायास्तेषु तेष्वप्रामाण्यं प्रसक्तं तेन निरुक्तद्वाराऽर्थकल्पनं युक्तमाभाति, तथापि म्लेच्छपदार्थ एवात्र ग्राह्यः । पदानि तु वेदादिषु दर्शनादविप्लुतान्येव; तेषाञ्चार्थेन केनचिन्नित्येन भाव्यम् । नचार्येषु कश्चिदर्थः प्रसिद्धः । तत एव न तेषु गौणभ्रान्त्यादिनिमित्तस्तत्प्रयोगः शक्यकल्पनः, मुख्येऽसति गौणाद्यसम्भवात्; ततो म्लेच्छप्रसिद्ध एव नित्योऽर्थोऽत्र ग्राह्यः । एवमेवान्धप्रसिद्धया 'राजा राजसूयेन यजेत इत्यत्र राजशब्दः क्षत्रियजातिपरः न राज्यकरणादिनिबन्धनः, ब्राह्मणादिष्वपि प्रसङ्गात् ।

'चोदितं तु प्रतीयेताविरोधात् प्रमाणेन' (पू॰मी॰ १।३।१०)

'तेष्वदर्शनाद् विरोधस्य समा विप्रतिपत्तिः स्यात्' (पू.मी. १।३।८)

'शास्त्रस्था वा तन्निमित्तत्वात्' (पू. मी. १।३।९)

हेलयो हेलय इति श्रुतिवचनेन वेदेऽपि हेलय इति अपभ्रंशब्ददर्शनात् अपभ्रंशशब्दानामप्यनादित्वं सिद्धयति ।

अन्येषां रीत्या अरय इति स्थाने अशक्तिजत्वेन अलयप्रयोगात् साधुस्मरणेन प्रतिपादकत्वेन सादित्वमेव ।

मञ्जूषा-भूषणसारादिदृष्टया तु साधुशब्दानामिवापभ्रंशानामपि शक्तत्वबोधकत्वाभ्यां साम्येऽपि धर्माय शास्त्रान्वितसाधुशब्दप्रयोगनियमः शास्त्रेण क्रियते ।

सर्गादिभुवां महर्षिदेवतानामीश्वरेण साक्षादेव कृतः सङ्केतः इति । न्यायवाचस्पत्ये ।

सर्वे च शब्दाः सर्वार्थाभिधानसमर्था इति सर्वैरर्थैः सर्वेषाञ्च शब्दानां सम्बन्धः । ईश्वरसङ्केतस्तु प्रकाशकः । अत एव नित्यः शब्दार्थसम्बन्धः इति तान्त्रिकाः ।

सर्वैरर्थैः सर्वशब्दानां सम्बन्धश्च योगिज्ञानगम्य एव। तेषां भोगबलेनोभयरूपपराप्रत्यक्षात्। युक्तञ्चैतद्-एकस्यैव स्फोटस्य शब्दब्रह्मरूपस्य सर्वशब्दतदर्थोभयोपादानत्वेनोभयरूपतया उभयोरपि तत्कार्ययोरुभयरूपत्वात्।

स्फोटात्मकस्य शब्दस्य व्यञ्जकतया वैखरीशब्द उच्चार्यते। करणव्यापारादुपजातक्रमः श्रोतृबुद्धिस्थस्य अक्रमस्य प्रत्यायकस्यार्थनिमित्तम्।

यथा काष्ठगतमव्यक्तं ज्योतिरेव निघर्षणेन दाहकत्वप्रकाशकत्वाविशिष्टवह्निरूपेण व्यज्यते। तथैवाक्रमः स्फोटो बुद्धिस्थः अर्थबोधनेच्छया पौर्वापर्यवान् विभिन्नशब्दानां कारणं भवति। वर्णाभिव्यङ्ग्येऽर्थाभिव्यञ्जकः गौरित्येकं पदमिति बुद्धिविषयतया भासमानः स्फोटः। तथा च बौद्धस्य शब्दस्य बौद्धेनार्थेनाध्यासरूपात्सङ्केतात् बौद्धशब्दार्थयोस्तादात्म्यमुपगम्यते। बौद्धे शब्दे वाच्यवाचकभावरूपा शक्तिर्भवति, स वक्तृबुद्धिस्थः स्फोटः। तन्महिम्नैव कण्ठताल्वादिनिर्वृत्तध्वन्यनुगहीतः परकीयश्रोत्रद्वारा परबुद्धौ स्फोटं व्यनक्ति।

यथा ज्ञाने ज्ञेयं विशेषणतया भासते तथैव श्रूयमाणे शब्दे विशेषणतयाऽर्थोऽपि भासते। यथा मयूरकपोतादीनामङ्गचन्द्रकादीनां सूक्ष्मरूपेणाण्डेषु रसेषूपसंहारात् निलीयमानत्वेनाण्डादाविर्भावः, एवं वैखरीरूपः वर्णरूपावयवान् सक्रमः शब्दोऽवयवानुपसंहरन्नक्रमशब्दरूपतामपद्यमानः अन्तः करणेऽवतिष्ठते। पुनरर्थबोधनेच्छायां सत्यां तत् आविर्भवन् सावयवः सक्रमः प्रादुर्भवति। यथा तेजसो ग्राह्यत्वं ग्राहकत्वञ्चेति द्वे शक्ती भवतस्तथैव शब्देष्वपि ज्ञातव्यम्। तत् एव गृहीतैः शब्दैर्नार्थावगतिः।

यद्यपि प्रकाशस्तम्भयोरिव ध्वनिस्फोटयोर्न विभागेन ग्रहणं तथा द्रव्यजन्यत्वकाष्ठजन्यत्वाभ्यां भेदो भवति, तथैव ताल्वादिकारणजन्यत्वनित्यत्वाभ्यां तयोर्भेदः सिद्ध्यति।

पित्तानवगमेऽपि पित्तगततिक्तत्वेन गुडोपलम्भवत् पीतरूपेण शङ्खोपलम्भवत् वायोरिव वायुसंयोगविभागरूपस्य संयोगविभागविशिष्टवायुरूपस्य वा ध्वनेरश्रोत्रत्वेनानुपलम्भेऽपि स्फोटाभिव्यञ्जकत्वम्।

यथेन्द्रियस्यावेद्यत्वेऽपि विषयप्रतीत्यन्यथानुपपत्त्याऽनुमेयस्यैव विषयप्रतीतिजनकत्वं तथैव स्फोटोपलब्ध्यन्यथानुपपत्त्या कश्चिदत्यन्तापरोक्षो ध्वनिरपि स्फोटव्यञ्जको भविष्यति।

अन्यैश्च-स्वतन्त्रः स्फोटासंपृक्तो ध्वनिर्गृह्यते इत्यभ्युपेयते। अव्यक्तानां ध्वनिरेव गृह्यते, व्यक्तानां शब्दानान्तु ध्वनिः स्फोटश्चेत्युभयमपि गृह्यते।

तत्रैकध्वनेर्व्यञ्जकत्वेऽन्यध्वनिवैयर्थ्यापत्त्या ध्वनिसमुदायस्यैव व्यञ्जकत्वम्, क्षणिकपूर्वपूर्वध्वनिसंस्कारसध्रीचीनान्त्यध्वनिना स्फोटः स्फुट्यते। न चैवं सरो रस इत्यविशेषः स्यादिति वाच्यम्, उपलब्धिक्रमारोपितक्रमवन्तो ध्वनयः पश्चाद् युगपत्स्मयमाण अपि तत्क्रमेण स्मृताः स्फोटमवबोधयन्ति। यथा ज्ञानस्य घटपटाद्युपाधिरेव भेदस्तथैव स्फोटस्यापि व्यञ्जकध्वनिगतः क्रमविशेषोपाधिक एव भेदः। यथा शतत्वादिसंख्यायाः अपेक्षाबुद्धिजन्यत्वेन एकत्वादिग्रहणमुपायः, तथैव वाक्यस्फोटप्रतिपत्तये देवदत्ताद्यवान्तरपदश्रवणमुपायः। यथा च चरमैकत्वग्रहणे ततोऽत्यन्तविलक्षणायाः शतत्वादिसंख्याया बोधः वर्णपदभिन्नत्वेऽपि तथैव अखण्डस्फोटस्य ग्रहणे वर्णादिग्रहणमुपायः।

यथा वर्णपदवाक्यव्यञ्जका ध्वनयः प्रत्येकं भिन्नास्तथापि सादृश्याद्भिन्नतयाऽप्रतीयमाना वर्णादीन् व्यञ्जयन्ति। वर्णाभिव्यञ्जकध्वनिसदृशध्वन्यभिव्यङ्ग्यत्वात्पदेषु वर्णाः पदाभिव्यङ्ग्यध्वन्यभिव्यङ्ग्यत्वात् वाक्ये पदानि भासन्ते। परमार्थतो मिथ्याभूतान्यपि भासन्ते।

ननु जन्यजनकयोरेव नियतत्वम्। तन्तुभिरेव पटः, कपालाभ्यामेव घटः, न व्यङ्ग्यव्यञ्जकयोः, घटव्यञ्जकेनापि दीपेन पटव्यक्तिदर्शनात्। नाप्यभिव्यङ्ग्यत्वेऽभिव्यञ्जकनियमः मणिप्रदीपौषधिरपि घटाद्यभिव्यक्तेः। तथा च ध्वनिशब्दयोर्व्यङ्ग्यव्यञ्जकभावे कण्ठाभिघातजेन ध्वनिना अकार एव, ताल्वाद्यभिघातजेन चकार एवेति नियमो न स्यात् नियमस्य च दर्शनात् ध्वनिशब्दयोर्जन्यजनकभाव एव युक्तः। न व्यङ्ग्यव्यञ्जकभाव इति चेन्न, इन्द्रियविषययोरिव व्यङ्ग्याव्यञ्जकत्वेऽपि ध्वनिस्फटयोर्योग्यतानियमोपपत्तेः। यथा चक्षुषिरूपग्राहकता घ्राणे

गन्धग्राहकता, रूपे चक्षुर्ग्राह्यता, गन्धे घ्राणग्राह्यतेति जन्यजनकत्वाभावेऽपि योग्यतानियता। तथैव प्रकृतेपि तदुपपत्तेः।

यदप्युक्तम्-घ्राण-श्रोत्रयोः स्वसजातीयद्रव्यमात्रसमवेतगुणग्राहकत्वम्, ततश्च रूप-रस-स्पर्शाः विसदृशेन्द्रियग्राह्याः, गन्धशब्दौ सदृशेन्द्रियग्राह्यौ। तत्र यथा सदृशेन्द्रियग्राह्ये गन्धेऽभिव्यञ्जकनियमो नास्ति, तथैव तादृशे शब्देऽप्यभिव्यञ्जकनियमेन न भवितव्यम्। दृश्यते तु नियमस्तस्माच्छब्दो न व्यङ्ग्यः किन्तूत्पाद्य एव। तदपि न; गन्धेऽपि व्यञ्जकनियमदर्शनात्। यथाहि कुङ्कुमगन्धाभिव्यञ्जकं गोघृतं नियतं तथैव शब्देपि नियमो युक्तः।

ननु गन्ध-रस-रूप-स्पर्शेषु सदृशेन्द्रियग्राह्यत्वेन अभिव्यञ्जकानां संख्यावृद्धिह्रासांश्च अभिव्यङ्ग्योऽनुवर्तते। तैले श्यामं, जले गौरं, वज्रमणौ लघु, दर्पणे बृहत्, खड्गे-दीर्घं, मुकुरे वर्तुलं च प्रतिबिम्बं दृश्यते, तथैवाभिव्यञ्जकध्वनेर्भेदे वृद्धौ चाभिव्यङ्ग्ये शब्दे भेदो वृद्धिश्च भासते।

वैशेषिकाणां रीत्या संयोगाद्विभागाच्छब्दाद्वा शब्दोत्पत्तिं वदन्ति। यथा वातेनैका वीचिस्तया तरङ्गान्तरं तेनान्यदिति पूर्वपूर्वतरङ्गेभ्य उत्तरोत्तरतरङ्गाणामुत्पत्तिः। एवं भेरीदण्डसंयोगात् वेणुदलविभागाद्वा शब्द आकाश उत्पद्यते। सचासमवायिकारणतया शब्दान्तरमारभते। तच्चान्यदिति परम्परया श्रोत्रपथमवतीर्णो गृह्यते। भेरीशब्दो मया श्रुत इत्यनुभवस्तु भ्रम एव।

वैयाकरणास्तु-स्फोटस्य ग्रहणे प्राकृतध्वनिं हेतुमाहुः। वैकृतं ध्वनिं वृत्तिभेदे हेतुमाहुः। तदुक्तम् संग्रहकारैः-

स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।
वृत्तिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते॥'

यथा प्रकाश उद्यन्नेव पटादिभ्यो भिन्नं घटं प्रकाशयति पश्चात् प्रकाशेन पुनः पुनर्दृश्यमानोऽपि घटः, न पूर्वप्रकाशिताद्घटात् भेदमालम्बते तथा प्राकृतध्वनिरेव भिन्नं स्फोटं व्यञ्जयति। अनन्तरं वैकृतध्वनिस्तु पूर्वाभिव्यक्तस्यैव तावत्कालमुपलम्भे हेतुर्भवति, न पूर्वाभिव्यक्ताद् भेदे।

अतएव द्रुतादिवृत्तिभेदेऽपि अकार एव पुनः पुनरुपलभ्यते। तमेवायं विलम्बितमुच्चारितवान् अन्यो द्रुतम् इत्यनुभवात्। ह्रस्वदीर्घयोस्तु नैवमनुभवः। यथा गन्तृणामालस्याद् गतिभेदेऽपि न मार्गभेदः। तथैव सर्वासु वृत्तिषु न वर्णानामुपचयापचयौ। एवमालस्यादिनोच्चारणक्रियया वैकृतध्वनिभेदेऽपि न वर्णस्वरूपभेदः।

ह्रस्वदीर्घप्लुताश्च स्वत एव भिन्ना भिन्नैर्ध्वनिभिर्व्यज्यन्त इति युक्तस्तेषां कालभेदः। यथा भेरीसाहत्य कश्चित् विंशति पदानि कश्चिदन्यः त्रिंशत् अपरश्च चत्वारिंशत् पदानि गच्छति स्फोटस्तावानेव ध्वनिकृता वृद्धिः वृत्तिषूपलब्धीनां कालभेदो विषयस्य त्वभेद एव।

प्राकृतध्वनिमेव तार्किका वाचकं शब्दं मन्यन्ते। वैकृतं ध्वनिमुपगच्छन्ति।

व्यङ्ग्यं व्यञ्जकधर्मानुगमदर्शनेन स्वतः कालभेदरहितेष्वेव वर्णपदवाक्येषु प्राकृतवैकृतध्वनिभेदात् द्रुतादिकालः स्वकालः स्वीयस्य स्वाभिव्यञ्जकस्य प्राकृतध्वनेः मात्रादिकालभेदश्च विभाव्यते।

प्राकृतः स्फोटेऽध्यस्यमानः ह्रस्व-दीर्घ-प्लुतव्यवहारकारणं भवति। वैकृतस्तु शब्देऽवधारिते भवन् गृहीतभेदत्वात् नाध्यासनिमित्तं किन्तु याह्यद्रुतादिकालव्यवस्था कारणं भवति। तावत्कालस्फोटोपलम्भकारणं भवति। तेन न स्फोटभेदः। ह्रस्व दीर्घत्वादिकं तु ध्वनिधर्म एव।

ध्वनिरूपः शब्दो द्विविधः। उत्तरोत्तर शब्दानां कारणरूपः प्राकृतः, कार्यरूपश्च वैकृतः। आद्यः स्फोटव्यञ्जकः, अपरो वैकृतः। तत्रापि भेरीदण्डाभिघातजस्य परम्परापूरमनुपतति लोहकांस्याभिघातजस्य प्रत्यासन्नम्।

यथा प्रदीपः प्रभया सहोत्पद्यते तथैव स्फोटो ध्वनिना सहोत्पद्यते। दूरात्प्रभामात्रं लक्ष्यते न दीपः, दूरतस्तथैव ध्वनिमात्रं लक्ष्यते न शब्दः (स्फोटः)। घण्टादीनां शब्देषु भेदोऽयं स्फुटः।

केचिद्वीचीतरङ्गन्यायेन सर्वासु दिक्षु शब्दप्रसरो न सम्भवतीति कदम्बमुकुलन्यायेन सर्वदिक्षु प्रसरति। तत्र कार्यभूतानां वैकृतध्वनीनां वशेन कारणभूताः स्फोटशब्दा अकारादयः प्रचिता उपचिता व्यवह्रियन्ते।

उच्चैरुच्चारिते ह्रस्वे अकारे केवलं ध्वनिरधिकदेशं व्याप्नोति। अकारस्तु न भिद्यते।

द्रव्याभिघातात् ध्वनिकारणवायुसंयोगप्रचयात् दीर्घप्लुतयोः प्रचयः। अधिककालं वादितायां घण्टायां कम्पोऽनुवर्तते। स्पन्दे उपरते सञ्जाता नादा वैकृतध्वनयः। तैरेव द्रुतादिव्यवस्था भवति। शब्दानित्यत्वपक्षे तु ह्रस्वत्वादयोऽकारादिधर्मा एव।

अन्येषां रीत्या तु कम्पेऽनिवृत्तेऽपि ज्वालान्तराज्ज्वला इव स्फोटादेव वैकृतध्वनयो जायन्ते।

केषाञ्चित् वायोरन्येषामणूनामपरेषां ज्ञानस्य शब्दत्वापत्तिर्भवति। वेणुशङ्खादिभिरुपहितो वायुः शब्दतां प्रतिपद्यते। तथैव बाह्याभ्यन्तरप्रयत्नोत्थितवायुरेव च कण्ठाद्यभिघातेन वर्णो भवति।

अन्ये तु सर्वशक्तित्वाद्भेदसंसर्गवृत्तयः परमाणव एव छायातपतमः शब्दभावेन परिणमन्ते। प्रयोक्तृयत्नेन संह्रियमाणाः शब्दत्वापत्तिशक्तियुक्ताः परमाणवः शब्दरूपेण परिणमन्ते। शब्दः पौद्गलिकः अस्मदादिप्रत्यक्षत्वे सति अचेतनत्वे च सति क्रियावत्त्वात् बाणादिवत् इत्यनुमानं तत्र मानम्।

साधिष्ठानं वृत्तिविशिष्टमन्तःकरणं सूक्ष्मशब्दाकारशक्तिमत्त्वेन स्थितं स्वस्य रूपस्य व्यक्तये शब्दत्वेन विवर्तते।

'अथायमान्तरो ज्ञाता सूक्ष्मवागात्मना स्थितः।
व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते॥'

(वा० प० ब्र० का० ११२)

तदुक्तम् शिक्षायाम्—

आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः।
वर्णान् जनयते ॥"

मतान्तरे तु—

अजस्रवृत्तिर्यः शब्दः सूक्ष्मत्वान्नोपलभ्यते।
व्यजनाद्वायुरिव स स्वनिमित्तात्प्रतीयते॥'

(वा० प० ब्र० का० ११६)

श्लोकवार्तिकेऽपि—

'त्रिगुणः पौद्गलो वायमाकाशस्याथवा गुणः ।
वर्णादन्योऽथ नादात्मा वायुरूपोऽर्थवाचकः ॥
पदवाक्यात्मकः स्फोटः सारूप्यान्न निवर्तते ॥'

नादः प्रतीतपदार्थको ध्वनिः शब्दो वायुरूपोऽर्थवाचकः इति शिक्षाकारः । बौद्धैरपोहो वाचकत्वेनोक्तः ।

यथैवैकस्य ब्रह्मणो भोक्तृभोक्तव्यरूपेणावस्थानम्, तथैवोपायोपेयरूपेणापि तस्यैवावस्थानमिति वेदरूपेणापि तस्यैवाविर्भावः । तदुक्तम्—

'प्राप्त्युपायोऽनुकारश्च तस्य वेदो महर्षिभिः ।
एकोऽप्यनेकवर्त्मेव समाम्नातः पृथक् पृथक् ॥'
(वा. प. ब्र. का. ५)

स्मृतयोऽपि वेदमूलिका एव । शब्दमूलकाः सर्वे लौकिका वैदिकाश्च व्यवहाराः । शब्दतत्त्वबोधस्तु व्याकरणाधीनः, मोक्षोऽपि तदधीन एव । वाङ्मलानां चिकित्सारूपमपि व्याकरणम् । तदुक्तम्—

'तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् ।
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते ॥'
(वा. प. ब्र. का. १४)

धर्मजनकत्वरूपस्य साधुत्वस्य व्याकरणशास्त्रमन्तरा ज्ञानं न सम्भवति ।

'न चागमादृते धर्मस्तर्केण व्यवतिष्ठते ।
ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम् ॥'
(वा० प० ब्र० का० ३० )

न तर्केणागमबाधः, किन्तु शास्त्रेण तर्कबाधः । नरकपालाशुचित्वबोधकेनागमेन प्राण्यङ्गत्वेन शङ्खवन्नरकपालशुचित्वबोधकानुमानस्य बाधदर्शनात् ।

धान्यबीजानामङ्कुरजनकत्वेऽपि मूषिकाघ्रातानां तदजनत्वदर्शनात् । आर्द्रस्य पिप्पल्योषधस्य कफजनकताशक्तेः, शुष्कस्य त्रिदोषशमनशक्तेश्च दर्शनात् ।

जलत्वहेतुना जले नोष्णत्वस्य शैत्यस्य वानुमानम्। हैमवतीष्वप्सु अग्निकुण्डोदकेषु च व्यभिचारात्। अग्निं न व्यभिचरति धूम इति अभिमानमात्रम्। अवस्थाभेदेन पदार्थानां वैचित्र्यदर्शनात्। कश्चिद् धूमो वह्नि व्यभिचारी गोपालघुटिकादौ धूमसत्वेऽपि वह्न्यदर्शनात्। शालूकादपि शालूको भवति गोमयादपि भवति। यदा लोकेप्येवं दुरवस्था तदागममात्रवेद्येऽर्थे कथमनुमानमात्रेणार्थनिर्णयः।

किञ्च निर्ज्ञातशक्तेरग्न्यादिद्रव्यस्य मणिमन्त्रौषधादिभिर्विशिष्टसम्बन्धैः सा शक्तिः प्रतिबद्ध्यते। तथा चायं दहति अग्नित्वादिति नानुमातुं शक्यम्। तदुक्तमेव—

'यत्नेनानुमितोप्यर्थः कुशलैरनुमातृभिः।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥'
(वा० त्र० का० ३४)

रत्नशास्त्रपरीक्षाभ्याससंस्कारसचिवमनःसव्यपेक्षैर्नेत्रैरेव रत्नतत्त्वविज्ञानं न पौनः पुन्येनावलोकनात्, षड्जादिभेदस्य च गान्धर्वशास्त्राभ्याससंस्कारसध्रीचीनमनःसचिवश्रोत्रैरेवाधिगमो न बहुश्रोत्रव्यापारेणापि। पितृ-रक्षः-पिशाचानाञ्च प्रत्यक्षमनुमानञ्चातिक्रम्य कर्मजाः सिद्धयश्च प्रसिद्धाः। कुड्यादिव्यवहितवस्तुदर्शनमन्तर्धानादयश्च कर्मजन्यादृष्टजाः प्रसिद्धाः।

'आविर्भूतप्रकाशानामनुपप्लुतचेतसाम्।
अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ॥'
'अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा।
ये भावान् वचनं तेषां नानुमानेन बाध्यते ॥'
(वा० प० त्र० का० ३८)

'यो यस्य स्वमिव ज्ञानं दर्शनं नातिशङ्कते।
स्थितं प्रत्यक्षपक्षे तं कथमन्यो निवर्तयेत् ॥
(वा. प. त्र. का. ३९)

अनाद्यपौरुषेयवेदप्रोक्तधर्मोपासनाद्यनुष्ठानेनैव तादृगार्षं ज्ञानं भवति, तस्मान्मूलधर्मस्तु चोदनैकसमधिगम्यः। तमाश्रित्योपजायमाने-

नार्षज्ञानेनानन्तानन्तशब्दापशब्दनिष्ठधर्माधर्मजनकत्वं लक्ष्यैकचक्षुष्काः पश्यन्ति ।

यथा विज्ञाने जायमाने तत्प्रामाण्यं स्वत एव गृह्यते, यथा वा आत्मनि अहं वा नाहं वेति न सन्दिग्धे, न च नाहमिति विपर्यस्यति, स्वप्रकाशत्वादेव, तथैव श्रुतिस्मृतिलक्षण आगमोऽनादिशिष्टपरम्परया प्राप्तत्वादसन्दिग्धविपर्यस्ततया बोधजनकत्वादपौरुषेयत्वतन्मूलकत्वाभ्याम्श्रापास्तसमस्तपुंदोषतया स्वतः प्रमाणमेव ।

किं बहुना श्रुतिस्मृत्यनपेक्षयापि आप्तानामृषीणां वचनबलादेव जनसाधारणस्य हिंसाव्यभिचारादौ पापबुद्धिः, दानयज्ञपरोपकारादौ धर्मबुद्धिर्वद्धमूला । तदुक्तम्–

'इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये ।
आचाण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम् ।।

( वा. प. ब्र. का. ४० )

किमु वक्तव्यमनाद्यपौरुषेयमन्त्रब्राह्मणात्मकवेदतच्चरणाश्रितार्षग्रन्थानामपास्तसमस्तशंकाकलङ्कपङ्कानां शास्त्राणां प्रामाण्यस्वतस्त्वे । हस्तस्पर्शादिना मार्गमनुमाय विषमे पथि धावतोऽन्धस्येव तर्कप्रधानस्य विनिपातो न दुर्लभः । तस्मादेव शिष्टैस्तमागममाश्रित्यैव शब्दानुशासनमारभ्यते । तदुक्तम्–

'तस्मादकृतकं शास्त्रं स्मृतिञ्च सनिबन्धनाम् ।
आश्रित्यारभ्यते शिष्टैः शब्दानामनुशासनम् ।।'

वैयाकरणैर्वेदानामकृतकत्वेनापौरुषेयत्वमेवाभ्युपेयते ।

'न जात्वकृतकं कश्चिदागमं प्रतिपद्यते ।
बीजं सर्वागमापाये त्रय्येवातो व्यवस्थिता ।।'

( वा० प० ब्र० का० १३३ )

'अस्तं यातेषु वादेषु कर्तृष्वन्येष्वसत्स्वपि ।
श्रुतिस्मृत्युदितं धर्मं न लोको व्यतिवर्तते ।।'

( वा० प० ब्र० का० १३४

कपिलादिज्ञानानामप्याम्नायपूर्वकत्वम् ।

'ज्ञाने स्वाभाविके नार्थः शास्त्रैः कश्चन विद्यते ।
धर्मो ज्ञानस्य हेतुश्चेत्तस्याम्नायो निबन्धनम् ॥'

( वा० प० ब्र० का० १३५ )

रूपत्वेन तुल्येऽपि यथा नीलं रूप चक्षुषोऽनुग्राहकम् भास्वरं तूपघातकम्, रसत्वेन तुल्येऽपि मधुरः श्लेष्माणं जनयति कटुकश्च पित्तम् । जलत्वेन तुल्येपि कर्मनाशाजलं पुण्यनाशकं गाङ्गञ्च पापनाशकम्, गोमूत्रं पवित्रमन्यत्तु अशुद्धम्, शङ्खः शुचिः नरकपालमशुचि, तथैव विषापहरणादिषु शब्दानामपि नियताः शक्तयो दृश्यन्ते । एवमेव साधुशब्देभ्यो धर्मो निष्पद्यतेऽपशब्देभ्योऽधर्मः ।

'रूपादयो यथा दृष्टाः प्रत्यर्थं यतशक्तयः ।
शब्दास्तथैव दृश्यन्ते विषापहरणादिषु ॥'

( वा० प० ब्र० का १३६ )

'यथैषां तत्र सामर्थ्यं धर्मेऽप्येवं प्रतीयताम् ।
साधूनां साधुभिस्तस्माद्वाच्यमभ्युदयार्थिभिः ॥'

( वा० प० ब्र० का० १४० )

'सर्वोऽदृष्टफलानर्थानागमात्प्रतिपद्यते ।
विपरीतं च सर्वत्र शक्यते वक्तुमागमे ॥'

( वा० प० ब्र० का० १४१ )

अनादिमव्यवच्छिन्नां श्रुतिमाहुरकर्तृकाम् ।
शिष्टैर्निबद्ध्यमाना तु न व्यवच्छिद्यते स्मृतिः ॥'

( वा० प० ब्र० का० १४५ )

आयुर्वेदशास्त्रं कायरोगान्निवारयति । अध्यात्मशास्त्रं बौद्धान् रागादीनपहन्ति ।

'कायवाग्बुद्धिविषया ये मलाः समवस्थिताः ।
चिकित्सालक्षणाध्यात्मशास्त्रैस्तेषां विशुद्धयः ॥'

( वा० प० ब्र० का० १४७ )

व्याकरणशास्त्रं वाङ्मलं निवारयति। संस्कारहीनः शब्दोऽपि फादर, गावी, पित्तेति प्रयुयुक्षिते फादर गावीत्यादि निष्पद्यते स एवापभ्रंशः। 'शब्दप्रकृतिरपभ्रंशः' इति सङ्ग्रहवचनात्।

केचित्तु प्राकृतं मूलं संस्कारेणोत्पन्नं संस्कृतमेव सादिं वदन्ति। तत्तु प्राकृतव्याकरणविरुद्धम्। तत्र तु प्रकृतिः संस्कृतं तस्माद्भवं प्राकृतमिति संस्कृतमेव प्रकृतिरित्युक्तम्।

संस्कारस्त्वत्र असाधुशब्देभ्यः साधुशब्दानां विवेचनमेव। यथा तितउना ( चालन्या ) अनुपादेयेभ्यः उपादेयानां पृथक्करणमेव संस्कारः तथैवात्रापि वोध्यम्।

'शब्दः संस्कारहीनो यो गौरिति प्रयुयुक्षिते।
तमपभ्रंशमिच्छन्ति विशिष्टार्थनिवेशिनम्॥'

( वा० प० ब्र० का० १४८ )

तत्रापि अस्वगोण्यादयः अश्वगवादिसम्बन्ध एवासाधवः, धनहीने आवपने तु साधव एव।

तदुक्तम्—

उभयेषामविच्छेदादन्यशब्दविवक्षया।
योऽन्यः प्रयुज्यते शब्दो न सोऽर्थस्याभिधायकः॥

( वा. प. ब्र. का. १५६ )

अन्ये तु साधूनामसाधूनाञ्चाविच्छेदात् वाचकत्वं सममित्याहुः। 'समानायामर्थावगतौ शब्दैश्चापशब्दैश्च शास्त्रेण धर्मनियमः क्रियते' इति महाभाष्यवचनात्। अनादिकालात्साध्वसाधुशब्दानां एव तितउस्थानीयेन व्याकरणेन पृथक्करणलक्षणसंस्कारेण साधुशब्दानां संस्कृतत्वं युज्यते। तत एव वेदेऽपि संस्कृताया वाचो भिन्ना काचिन्मानुषी वाक् स्वीकृता।

आधुनिका अपि व्याहरन्ति यत् लैटिन ग्रीक जेन्द संस्कृतादिभाषाः परस्परं भगिन्य एव, तासां परस्परं साम्यदर्शनात्। कदाचित्तत्तद्भाषाभाषिणः समानदेशस्था आसन्निति तेषां भाषैक्यञ्चानुमीयते। यथा यथा ते परस्परं विप्रकर्षमुपगतास्तथा तथा तद्भाषासु भेदाः सञ्जाताः।

यस्यास्तु भाषाया इमा दुहितरः सा तु मृतेत्यपि तदनुपलम्भादनुमानम् ।"
तदपि मन्दम्; यतः संसारस्य पुस्तकालयेषु प्राचीनतमस्य ऋग्वेदस्यैवोपलम्भात् संस्कृतभाषाया एव सर्वाधिकप्राचीनता विज्ञायते। सैव च लैटिन ग्रीक जेन्द भाषाणां जननी, उपस्थितं परित्यज्यानुपस्थितकल्पने मानाभावात् । विपुलसंस्कृतधातुप्रत्ययेभ्यः सर्वशब्दानां निष्पत्तिसम्भवाच्च।

एवं पिदर फादर आदिशब्दानां संस्कृतप्रकृतिकत्वेन साधु स्मरणात् पित्रादिवाचकत्ववृत्त्यभावेऽपि अक्षिनिकोचादिवत्तज्ज्ञापकत्वं वा स्वतन्त्रतया वाचकत्वं वा । न साधुशब्दतदर्थ-सम्बन्धानामौत्पत्तिकत्वे ( स्वाभाविकत्वे ) काचिद् बाधा। व्याकरणशास्त्रेण येषां साधुत्वं तेभ्यः पुण्यविशेषो जायते इति नियमस्तु विशेषः। यदृच्छाशब्दवन्नव्यशब्दतदर्थानां तु सङ्केतोऽपि नव्यः।

वस्तुतस्तु वैयाकरणानां मते बौद्ध एवार्थः शक्यः। पदमपि बौद्धमेवेति तयोरभेदः। सामयिकः शब्दादर्थप्रत्ययः। समयस्तु 'अस्येदं नामधेय'-मिति नियोगरूपः, 'अयमयमिति नियोग' इति पातञ्जलात्।

तत्रापि पाणिन्यादिस्मार्तसङ्केतस्यैव वाचकता नियामकत्वम्, न त्वाधुनिकस्य। आधुनिकसङ्केतस्थले 'द्वादशेऽह्नि पिता नाम कुर्यात्' इति स्मृत्यनुसारेण क्रियमाणनामस्थले लक्षणैव। तत्र घट-गोविन्दादिगुणाद्यारोपेण तन्मूलकप्रवृत्तिनिमित्तारोपेण च बोधः । गामानयेति प्रयोजकवृद्धवचनेन गवानयनप्रवृत्तिरूपं प्रयोज्यप्रयोजकवृद्धव्यवहारं पश्यता व्युत्पित्सुना बालेन प्रयोज्यप्रवृत्त्या स्वस्तन्यपानप्रवृत्तिमूलज्ञानवज्ज्ञानमनुमाय ज्ञानस्य चोपस्थितत्वात् शब्दमेव कारणत्वेन गृहीत्वा असम्बद्धस्य कारणत्वानुपपत्या सम्बन्धः कल्प्यते । गां बधान अश्वमानयेति अवापोद्वापाभ्यां सास्नादिमदादिषु गवादिपदानां शक्तिर्गृह्यते । व्यवहारस्यैव शक्तिग्राहकेषु प्राधान्यम्। यथा वृश्चिकाद्गोमयाच्च वृश्चिकोत्पत्तिः। एवं सर्गादौ केवलादृष्टात्। इदानीं तु ब्राह्मणाद्ब्राह्मणोत्पत्तिः। यथा मायावी मायामयं प्रयोज्यं निर्माय घटमानयेत्यादि प्रयुज्य शक्तिं ग्राहयति । तथेश्वरोऽपि केवलादृष्टाच्छरीरद्वयं कृत्वा शक्तिं ग्राहयति।

सर्वे च शब्दाः सर्वार्थाभिधानसमर्था इति सर्वैरर्थैः सर्वेषां शब्दानां सम्बन्धः। ईश्वरसंकेतस्तु प्रकाशकः। पितापुत्रयोः धूम-धूमध्वजयोर्विद्यमानस्यैव सम्बन्धस्योपदेशस्तथैव विद्यमानस्यैव शब्दार्थयोः सम्बन्धस्योपदेशः।

'सूक्ष्मामर्थेनाप्रविभक्ततत्त्वामेकां वाचमभितः स्यन्दमानाम्।
तामन्ये विदुरन्यामिव च नानारूपामात्मनि सन्निविष्टाम्॥'
'अक्षराणामकारस्त्वं स्फोटस्त्वं वर्णसंश्रयः'।

सा च शक्तिः साधुष्विवापभ्रंशेष्वपि शक्तिग्राहकशिरोमणेर्व्यवहारस्य तुल्यत्वात्। व्यवहारदर्शनं च पूर्वजन्मानुभूतशक्तिस्मरणम्। अतएव बालानां तिरश्चां च बोधः।

तदर्थज्ञापकत्वेन स्मरणं तु नार्थोपस्थापकम्, शक्ततावच्छेदकानुपूर्व्यग्रहात्, तद्वाचकसर्वस्मरणाननुभवाच्च। गगरी इत्यादौ असाधोः साधुप्रकृतिकत्वात् सादृश्येन तज्ज्ञानं न संभवति तत्र सादृश्यानवबोधात्। उच्चरितस्यैव बोधकत्वेन स्मृतसाधुतो बोधासंभवाच्च।

न च शक्तिभ्रमाद्बोधः पूर्वपूर्वभ्रमाच्चोत्तरोत्तरभ्रम इति पामराणां शक्त्यग्रहेऽपि तदुपपत्तिरिति वाच्यम। घटत्वादिविशिष्ट घटादिरूपार्थनिरूपिताया घटादिवृत्तित्वेन गृहीताया भिन्नानुपूर्वीकत्वरूपविशेषदर्शनसत्त्वेन साधारणधर्मदर्शनाभावेन च गगरी पदादौ भ्रमानुपपत्तेः।

मीमांसकाः—अशक्त्या केनचिद्गारी इति प्रयुक्ते अम्बाम्बेत्यादाविव घट इति स्मरणात् प्रयोज्यस्य बाधे तटस्थस्य गगरी शब्दादेवास्य बोध इति भ्रमेणाद्यस्य शक्तिभ्रमः तन्मूलकश्चान्येषामपि। तदुक्तं वाक्यपदीये—

तादात्म्यमुपगम्येव शब्दार्थस्य प्रकाशकः।

'उपगम्येवेत्यत्र इव शब्देन तादात्म्यरूपसम्बन्धस्य भ्रमो बाधितः। जैमिनिनाऽपि—

"तदशक्तिश्चानुरूपत्वात्" १।३।२८ शबरस्वामिना च तदेवोपपादितम्। अत एव यव शब्देन दीर्घशूकविशेष एव ग्राह्यो न कङ्गुरित्येतत् प्रति-

पादकाधिकरणसंगतिः । शब्दशक्तेरुभयत्र तुल्यत्वे त्वसंगतिरेव । न च तत्र वसन्ते सर्वसस्यानां जायते पत्रशातनम् । मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः" इति वाक्यशेषेण तत्र निर्णय इति वाच्यम् पैलवोदुम्बरौ वैश्यस्य दण्डावित्यत्र वाक्यशेषाभावात् पीलुशब्देन हस्तिनोऽपि ग्रहणापत्तौ, हस्तिभवास्थिदण्डस्यापि ग्रहणापत्तेः ।

न संस्कृतत्वं न वा प्राकृतत्वं शक्त्यवच्छेदकं किन्त्वानुपूर्वी । सा च भिन्नभिन्नैव सर्वत्र घटकलशपर्य्यायवाचकेष्विव नैकेनापरान्यथा सिद्धिः । आर्य्यम्लेच्छाधिकरणस्य त्वयमभिप्रायः- आर्य्या यवशब्दं दीर्घशूके म्लेच्छाः प्रियङ्गौ प्रयुञ्जन्ते । तमेव च बुद्ध्यन्ते । तथाप्यार्य्य-प्रसिद्धेर्बलवत्त्वेन वेदे दीर्घशूकपरतैवेति ।

शवतिर्गतिकर्मा काम्बोजेषु इति भाष्यात् द्वयोरपि शक्तिग्रहा-द्बोधेनोभयत्रापि साधुत्वेऽपि शक्तत्वेन च तृतीयस्य सन्देहे विकल्प-बोधे वा आर्य्यप्रसिद्धेर्बलवत्वेन वेदे तद्बोध एवोचितः । तथाचानार्य्यैरपि यज्ञे यवा एव ग्राह्याः । पूर्वपक्षे तु प्रियङ्गव एवोपादेया । अत्रापभ्रंश-भाषित्वेन म्लेच्छत्वम् । प्रसिद्धम्लेच्छानां वेदे तत्प्रसक्त्यभावात् । अत एव 'म्लेच्छपदेनानार्य्याः' इति मञ्जूषाकारः ।

जैमिनिरपि 'तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात्' (जै० सू० १।३।८) यवादिशब्देष्वदर्शनात् देशकर्तृकभेदात् तटस्थस्य समा विप्रतिपत्तिः स्यात् विकल्पः स्यात्तदिति पूर्वपक्षः । 'शास्त्रस्थानां तन्निमित्तत्वात्' (१।३।९) यः शास्त्रस्थानां शिष्टानां स शब्दार्थे वेदे इति शेषः । तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च

न्यायभाष्यकारोऽपि 'आप्तोपदेशः शब्दः' इति (न्यायद० १।१।७) सूत्रे अर्थ साक्षात्कारवानाप्तः । स यथादृष्टार्थबुबोधयिषया यं प्रयुङ्क्ते स प्रमाणशब्दः इति ऋष्यार्यम्लेच्छानां समानमाप्तलक्षणमित्याह । ऋषिर्वेदः, म्लेच्छोऽपशब्दवक्ता । साधुत्वं तु नापशब्दानां शिष्टैर्धर्म-बुद्ध्या तदप्रयोगात् । ततो बोधदर्शनेनासाधुनिश्चयस्य न बोध-प्रतिबन्धकत्वमपि । साधुत्वं तु व्याकरणव्यङ्ग्योऽथविशिष्टशब्दनिष्ठः पुण्यजनकतावच्छेदको जातिविशेषः । 'एकः शब्दः सम्यग् ज्ञातः

शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके च कामधुग् भवति, इत्यादि वचनात्। एकः पूर्वपरयोः' पा० स० ३।१।९४ ) इति सूत्रभाष्यात्।

ननु साधुस्मरणाच्छक्तिभ्रमाद्वा प्रयोगप्रत्यय इति चेन्न; गवाष्विपि तथात्वस्य वक्तुं शक्यत्वात्। तस्मात्पुण्यपापयोरेव वैशेष्यम्। तदुक्तं वाक्यपदीये–

वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः।'

अपभ्रंशे शक्त्यंशे कदापि कस्यापि व्यवहर्तुर्बाधादर्शनेन न शक्तिग्रहस्य भ्रमत्वम्, असति बाधके प्रमात्वस्यैव न्याय्यत्वात्। ऋषीणां भ्रमासंभवेन ततो बोधानापत्तेः।

वैयाकरणैर्ग्राह्यग्राहकभाववर्जिता सर्वतः संहृतक्रमाऽपरिच्छिन्ना-वागेव ब्रह्माभ्युपेयते। सैव चाविद्याविशिष्टा ज्ञेयशन्या जीवरूपेण-भोक्तृत्वमुपगच्छति। सैव चार्थविशेषोपलक्षिता मनोविज्ञानरूपा मध्यमा भवति। सैव च वक्त्रकुहरं प्राप्ता कण्ठताल्वाद्यष्टस्थानानुषक्ता-ग्नेयवागिन्द्रियजनितविभक्ताकारादिवर्णरूपा वैखरीवाग् भवति। सैव बाह्यार्थवासनयाऽविद्यारूपया घटपटाद्याकारैर्विवृत्ता चक्षुरादिना गृह्यते। सर्वस्यैव ज्ञेयस्य ज्ञानग्राह्यत्वात् ज्ञानस्य च शब्दानुविद्धत्वात्

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥

इति वाक्यपदीयवचनात्

यथाग्नेः प्रकाशकत्वं स्वरूपं, पुरुषस्य चैतन्यं स्वरूपम्, तथैवाव-बोधस्य शाश्वती वाग्रूपता। सा यद्युत्क्रामेत् तदोत्पन्नोऽपि प्रकाशो न प्रकाशेत। सा प्रकाशस्यापि प्रकाशिका। विमर्शः प्रकाशस्य प्रकाशक इति शैवाः।

'वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी॥"

( वा० प० ब्र० का० १२४ )

वागेव सर्वव्यवहारप्रवर्तिका। तदुत्क्रान्तौ काष्टकुड्यवत् विसंज्ञोऽयं लोको भवति। अत्यन्तासत्यप्यर्थे शब्दप्रवृत्तिः। प्रयोक्तुरन्तरवस्थितमन्त र्यामिणमेव शब्दं प्राहुः। तदुक्तम्–

अपि प्रयोक्तुरात्मानं शब्दमान्तरवस्थितम् ।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते ॥'

( वा० प० ब्र० का १३१ )

नित्यः शब्दः सर्वव्यवहारयोनिः संहृतक्रमः सर्वेषामन्तः प्रविष्टः सर्वविकाराणां प्रभवः शब्दब्रह्मरूपः । अयमेवाविद्यावृतः घटस्थदीपवत् नानाविषयान् भासयन् जीवभावमापन्नः कर्मणामाश्रयः सुख-दुःखयोरधिष्ठानं भवति ।

निरुक्तभाष्ये—'व्याप्तिमत्त्वात्तुशब्दस्य' अभिधानाभिधेयरूपा बुद्धिः हृदयप्रकाशप्रतिष्ठिता परबोधनेच्छया पुरुषेणोदीर्यमाणा कण्ठादिषु-वर्णभावमापद्य बाह्याकाशस्थं शब्दस्वरूपं कृत्वा श्रोत्रद्वारेण तत्र स्थिता श्रोतुर्बुद्धिमनुप्रविश्य सर्वार्थसर्वाभिधानरूपा तद्बुद्धिं व्याप्नोति पुरुषप्रयत्नजा वक्त्रोद्गाताः परं नश्यन्ति न शब्दः, स च तदनुरक्तोऽर्थ-प्रत्ययं जनयति । तत्रत्यपदत्वादिकं वक्त्रोद्घातेष्वारोपयन्ति, तद्गतना-शादिकं शब्देष्वारोपयन्ति, पुरुषबुद्ध्यवस्थस्यैव चार्थस्य प्रत्ययमादधा-तिशब्दः, तेनैव तस्य सम्बन्धात् । शब्दो वस्तुत एकोऽपि तत्तद्वर्णसंस्कारैः प्रतिबिम्बितः तत्तद्रूपः सर्वपदरूपः सर्वाभिधानशक्तिः अनन्तपदरूपता-मिवापन्न इति ।

यत्तु—"किञ्च शब्दार्थसम्बन्धनित्यत्वपक्षाभ्युपगमेऽपि न वेदानामपौरुषेयत्वं साधयितुं शक्यते । शब्दार्थसम्बन्धनित्यत्व-मात्रेणैव वेदाश्चेदपौरुषेयाः स्युस्तर्हि समस्तमपि ग्रन्थजातं तेनैव हेतुना किमिति अपौरुषेयाः न स्युः ? वेदानामेवापौरुषेयत्वं नान्येषां ग्रन्थानामित्यत्र को हि विनिगमको हेतुः ? यथा हि लौकिकवाक्येषु क्रियाकारकादिसम्बन्धो दृश्यते तथैव वेदमन्त्रेष्वपि समुपलभ्यते । तत्कथं शब्दार्थसम्बन्धनित्यत्वबलात् वेदानामेव अपौरुषेयत्वं साध्यते नान्येषां ग्रन्थानाम् ।" इति

तन्न; भावानवबोधात् । तथा हि—नात्र शब्दार्थनित्यत्वमात्रेण वेदानामपौरुषेयत्वं साध्यते किं तर्हि ! शब्दार्थसम्बन्धानित्यत्वेन तत्सम्बन्धमुखेन पुरुषानुप्रवेशेन प्राप्तं पौरुषेयत्वमेव निवार्यते ।

एतेन—"वस्तुतस्तु न केवलं शब्दार्थसम्बन्धस्यैव अनित्यत्वम्, परं शब्दस्याप्यनित्यत्वं बोध्यम्। नहि शब्दो नित्यो भवितुमर्हति, उत्पत्तिप्रध्वंसशीलत्वात् तस्य। तथा हि न्यायसूत्रम्—'आदिमत्त्वात्' ऐन्द्रियकत्वात् कृतकवद् व्यवहाराच्च' (न्या० २।३।१४) इति आदिर्योनिः कारणम् आदीयते अस्मादिति। कारणवदनित्यं दृष्टम् संयोगविभागजश्च शब्दः कारणवत्त्वादनित्य इति। ऐन्द्रियकत्वात्, इन्द्रियप्रत्यासत्तिग्राह्यः ऐन्द्रियः। किमयं व्यञ्जकेन समानदेशोऽभिव्यज्यते रूपादिवत् अथ संयोगजाच्छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नो गृह्यते इति। दारुव्रश्चने दारूपरशुसंयोगः। निवृत्तौ दूरस्थेन शब्दो गृह्यते। न च व्यञ्जकाभावे व्यङ्ग्यस्य ग्रहणं भवति। तस्मान्न व्यञ्जकः संयोगः उत्पादके तु संयोगे संयोगजात् छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नस्य ग्रहणमिति। इतश्च शब्द उत्पद्यते नाभिव्यज्यते कृतकवदुपचारात्। तीव्रं मन्दमिति कृतकमुपचर्यते तीव्रं सुखम्, मन्दं सुखम्, तीव्रं दुःखम्, मन्दं दुःखमिति। उपचर्यते च तीव्रः शब्दः मन्दः शब्द इति (वा० भा०)।

तथा च 'प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च' (न्या० २।२।१९) इति।

"न शब्दस्य नित्यत्वं सम्भवति। प्रागुच्चारणान्नास्ति शब्दः। कस्मात्? अनुपलब्धेः। सतोऽप्यनुपलब्धिरावरणादिभ्यः। एतन्नोपपद्यते। कस्मात्? आवरणादीनामनुपलब्धिकारणानामग्रहणात्। सोऽयमुच्चार्यमाणः शब्दः श्रूयते श्रूयमाणश्च भूत्वा भवतीति अनुमीयते, ऊर्ध्वंचोच्चारणान्न श्रूयते, स भूत्वा न भवतीति अभावान्न इति (वा० भा०)।

एवं शब्दस्यानित्यत्वात् कथं शब्दरूपवेदस्य नित्यत्वं सम्भाव्यम्। वेदस्याऽनित्यत्वे च कथं तस्यापौरुषेयत्वमभ्युपगतं स्यात्।" इत्यप्यपास्तम्।

पूर्वमीमांसायां महर्षिणा जैमिनिना तादृशस्यापि पूर्वपक्षस्योत्थाप्य खण्डितत्वात्। तथाहि—'कर्मैके तत्र दर्शनात्' (पू. मी १।१.६) एके नैयायिकादयः कर्म अनित्यं शब्दं वदन्ति, तत्र शब्दविषये प्रयत्नदर्शनात्। यद्विषयः प्रयत्नः सोऽनित्य इति व्याप्तेः। 'अस्थानात्' (पू. मी १।१।७) अस्थिरत्वात्। क्षणादूर्ध्वमनुपलब्धेरपि शब्दस्यानित्यत्वं सिद्ध्यति।

'करोति शब्दात्' (पू. मी. १।१।८) यथा घटं करोति तथा शब्दं करोतीत्यनित्यव्यवहाराच्च शब्दोऽनित्यः। 'सत्त्वान्तरे यौगपद्यात्' (पू. मी. १।१।९) देशान्तर इत्यपि पूरणीयम्। तथा च देशान्तरे सत्त्वान्तरे प्राण्यन्तरप्रत्यक्षे यौगपद्यमेककालिकत्वं दृष्टम्।

इदमत्राकूतम्—यथा लाघवान्नित्यत्वं तथैव तेनैव हेतुना शब्दे एकत्वमपि सेत्स्यति। तथा च यथैकस्यापकृष्टपरिमाणस्य वस्तुनो यौगपद्येन सन्निकृष्टविप्रकृष्टपुरुषप्रत्यक्षं न भवति तथैव शब्दस्य नित्यत्वैकत्वे चोच्चारणस्थानात् सन्निकृष्टविप्रकृष्टवर्तिनां पुरुषाणां युगपत्प्रत्यक्षं न स्यात्। नहि निःक्षिप्तेनैकेन दण्डेन निःक्षेप्तुः स्थानात् सन्निकृष्टविप्रकृष्टदेशवर्तिनां युगपदाघातो भवति। तस्माच्छब्दोऽनित्योऽनेकश्च। 'प्रकृतिविकृत्योश्च' (पू. मी. १।१।१०) दधि + अत्रेति प्रकृतिस्थितौ प्रकृतिभूतेकारस्थाने यकाररूपो विकारो भवतीति प्रकृतेर्विकारः सोऽनित्य एवेति मन्तव्यम्। 'वृद्धिश्च कर्तृभूम्नाऽस्य' (पू. मी. १।१।११) कर्तृबाहुल्ये शब्दस्य वृद्धिः (महत्त्वं) दृश्यते। अतोप्यनित्यः शब्दः। पुरुषप्रयत्नेन शब्दो व्यज्यते नोत्पद्यत इति पक्षे तन्नोपपद्यते, व्यञ्जकसहस्रेणापि व्यङ्ग्यस्य वृद्ध्यदर्शनात्। दीपसहस्रेणापि व्यङ्ग्यस्य घटस्य तददर्शनात्। एतावत्येव न्यायसूत्रोक्तानि दूषणानि गतार्थानि।

तत्परिहारोऽपि तत्रैव पूर्वमीमांसायाम्। तथाहि—'समन्तु तत्र दर्शनम्' (पू. मी.) १।१।१२)। मतद्वय इति क्षणमिति च पदद्वयमत्र पूरणीयम्। अर्थात् अभिव्यक्तौ, उत्पत्तौ चेति मतद्वयेऽपि क्षणं क्षणमात्रदर्शनं शब्दप्रत्यक्षं सममविवादम्। 'सतः परमदर्शनं विषयानागमात्' (१।१।१३) समत्वेऽपि कतरः पक्षो वरिष्ठः इति प्रश्ने व्यञ्जकत्व-

पक्षो युक्त इत्याह-सतः सर्वदा विद्यमानस्य परं पूर्वोत्तरकालेऽदर्शनम् संस्कर्तुः व्यञ्जकस्य विषयं शब्दं प्रत्यनागमात्।

अयमभिप्रायः-स एवायं गकार इति प्रत्यभिज्ञानेन लाघवेन च नित्यः शब्दः स्वीकर्त्तव्यः। तस्य च मुखोद्गतवायुसंयोगविभागैः शब्द-प्रत्यक्षप्रतिबन्धकीभूतस्य स्तिमितवायोरपसारणेन भवत्यभिव्यक्तिः। ततएव तदानीमेव शब्दप्रत्यक्षं भवति। संयोगविभागाभावे स्तिमित-वायुरूपप्रतिबन्धकसमवधानात्।

केषाञ्चिद्रीत्या ध्वनिभिरिन्द्रियस्य संस्कारः। अन्येषां रीत्या शब्दस्य-संस्कारः। अपरेषामुभयस्य संस्कारः। चित्तैकाग्र्येणाञ्जनादिभिश्च यथा चक्षुष एव संस्कारो न विषयस्य। विषयसंस्कारे तु एकेन समाहितेन चेतसा चक्षुषा विषये संस्कृते तदन्यैरपि विषयग्रहणं स्यात्।

एवं ध्वनिभिः श्रोत्रस्यैव संस्कारो न शब्दस्य, तथात्वे शब्दस्य विभुत्वेन सर्वश्रोत्रसम्बद्धत्वात् सर्वैरपि तद्ग्रहणप्रसक्तेः। ध्वनौ काचिदतीन्द्रियशक्तिरेव संस्कारजनिका। अत एव केनाकारेण संस्कृतिरिति न पर्यनुयोगः। उत्पत्तावपि तादृक्पर्यनुयोगस्य तुल्यत्वात्।

अन्यरीत्या विषयस्य तैलादेर्यथातपे न संस्कारः शुष्कभूमेर्गन्धस्यो-दकेन संस्कारो भवति तत्प्रतिपत्तये न घ्राणेन्द्रियस्य संस्कारः तथात्वे संस्कृता संस्कृतपृथ्वीगन्धयोर्भेदो न स्यात्, तथैव ध्वनिभिः शब्दस्यैव सस्कारो न श्रोत्रस्य सर्वशब्दप्रकाशकत्वापत्तेः। नहि घटायोन्मी-लितंचक्षुः परं न बुद्धयते। अपररीत्या चक्षुषः प्राप्यकारित्वेन तथा लोकस्य विषयेन्द्रिययोरपि संस्कारकत्वम् तथैव ध्वनेरपि क्रमो ज्ञेयः।

तेजसाविषये तमोनिवृत्तिः, चक्षषि नद्रश्मिवर्धनञ्च क्रियते तथैव ध्वनिनाशब्दश्रोत्रयोरुभयोरपि कश्चित्संस्कारः क्रियते। शब्दे तदावरकस्तिमितवाय्वपसारणस्सः श्रोत्रे च श्रोत्रमभिव्याप्य स्थितस्य कोष्ठस्थवायोरपसारणरूपः संस्कारः क्रियते।

यदि चक्षुर्मात्रं संस्कुर्यादालोकस्तदा आलोकदेशस्थितोपि अन्धकारस्थं घटं पश्येत्। यदि विषयमात्रं संस्कुर्यात्तदा आलोकस्थघटस्य सर्वैरपि ग्रहणं स्यात्। सन्तमसस्थस्य पुरुषस्य त्वालोकस्थितग्रहणं नानुपपन्नं, चक्षुषः प्राप्यकारित्वेन घटप्रदेशगतस्य चक्षषस्तत्रस्थेनालोकेन संस्कारसम्भवात्।

गोलकमात्रं चक्षुरिति बौद्धमते। तच्च विषयासम्बद्धमेव विषयप्रकाशकम्। प्राप्यकारित्वे रसनादिवदधिष्ठानसम्बद्धं गृह्णीयात्। न चैवं दृश्यते गोलकासम्बद्धग्रहणात्। स्वतोऽधिकपरिमाणवच्च न गृह्णीयात् तन्न, अधिष्ठानासम्बद्धार्थग्राहिण्याः प्रदोपप्रभाया इव चक्षुषोपि प्राप्यकरित्वे पृथुलग्रहणे च बाधाभावात्, स्वाधिकपरिमाणग्राहिणा त्वगिन्द्रियेण व्यभिचारात् प्राप्यग्राहिणा नाधिकपरिमाणवद्ग्रहणमितिनियमे मानाभावाच्च।

'प्रयोगस्य परम्' ( पू० मी० १।१।१४ ) शब्दं करोतीत्यत्र करोतीति पदं तु प्रयोगस्योच्चारणस्य परं तत्तात्पर्यकम्। अर्थात् उच्चारणं करोतीत्यर्थकं शब्दं करोतीऽति पदमिति। तेन प्रयत्नादिकारणवत्त्वं तूच्चारण एवोपक्षीणमित्यर्थः। 'आदित्यवद्यौगपद्यम्' (पू० मी० १।१।१५ ) यथैकः सूर्यः नानादेशस्थैर्युगपद्वीक्ष्यते तथादित्यवन्महान् शब्दो न सूक्ष्मस्तस्मादेव शब्दो नानासन्निकृष्टविप्रकृष्टदेशस्थैः पुरुषैर्युगपदुपलभ्यते। तेन सत्त्वान्तरे देशान्तरे यौगपद्येनोपलम्भादपि न शब्दस्यानित्यत्वनानात्वसिद्धिः। 'वर्णान्तरमविकारः' ( पू० मी० १।१।१६ ) इकारस्थाने यकारो वर्णान्तरमन्य एव वर्णः, नेकारस्य विकारस्तृणानां कट इव। तथात्वे कटकर्त्रानियमेन तृणसम्पादनवत् यकारं प्रयुञ्जानो नियमेनेकारमाददीत। तस्मान्न प्रकृतिविकारभावेन शब्दानित्यत्वसाधनं सम्भवति।

'नादवृद्धिपरा' ( पू० मी० १।१।१७ ) वृद्धिश्चेत्यस्योत्तरमाह—परा अतिशयिता शब्दवृद्धिरिति भ्रान्तिरेव नादवृद्धिमूलिका। बहुभिर्भेरीमाघ्नद्भिर्वर्णात्मकशब्दमुच्चारयितृभिर्वा महान् शब्द उपलभ्यते। तत्रशब्दस्य वृद्धिर्न सम्भवति। तत्र मते प्रतिपुरुषं शब्दावयवा उत्पन्नाः

सन्तोऽमहत्त्ववच्छब्दे महत्त्वं सम्पादयन्तीति वक्तुं न शक्यते। परमते शब्दस्य गुणवत्त्वेन निरवयवत्वात्। ततोऽगत्या कणशष्कुलीमण्डलस्य सर्वां सरणिं व्याप्नुवद्भिः संयोगविभागैर्नैरन्तर्येण असकृद् ग्रहणात् महानिवावयववानिव प्रतीयते। तथा च नादपदवाच्यानां संयोगविभागानामेव वृद्धिः।

अन्ये तु ध्वनिरेव नादस्तत्र वर्णा व्यज्यन्ते, तत्र ध्वनीनां वृद्ध्यैव शब्दवृद्धिविभ्रमः।

न च रूपादिवद् व्यञ्जकसमानदेशे व्यङ्ग्याभिव्यक्तौ बाधा, नवा-दारुव्रश्चने दारुपरशुसंयोगनिवृत्तौ दूरस्थेन शब्दग्रहणानुपपत्तिः, नवा व्यञ्जकाभावे व्यङ्ग्यग्रहणम ,दारुव्रश्चने दारुपरशुसयोगनिवृत्तावपि दारुपरशुसंयोगजनितानां वायुसंयोग-विभागानां श्रवणकाले सत्वात्। ते च यावद् दूरं गच्छन्ति तावत्पयन्तमेवस्तिमितवायुसमुत्सारणं तावद्दूरमेव शब्दप्रत्यक्षमपि भवति। शब्दस्य तीव्रत्व-मन्दत्वादिकमप्युच्चारणस्यैव तीव्रत्वमन्दत्वादिसमारोपनिबन्धनं भ्रान्तिमूलकमेव।

एवं पूर्वपक्षं निराकृत्य महामुनिर्जैमिनिः शब्दनित्यत्वं साधयितुं सूत्रमारचयाञ्चकार। 'नित्यस्तु स्याद्दर्शनस्य परार्थत्वात्' (पू० मी० १।१।१८) नित्यः शब्दः स्यात्, दर्शनस्य दृश्यते व्यज्यतेऽनेनेति दर्शनम् उच्चारणम्, तस्य परार्थत्वात्, अन्यस्यार्थस्य प्रतिपत्त्यर्थत्वात्। अनित्यत्वे कथं श्रोतुरर्थावगमपर्यन्तं स्थितिः स्यात्? अतथात्वे कारणाभावात्कथमर्थापत्तिः स्यात्? अर्थावगमपर्यन्तावस्थानेन नाशकाभावादनाशे नित्यत्वमेव शब्दस्य सिद्ध्यति।

'सर्वत्र यौगपद्यात्' (पू० मी० १।१।१९) सर्वत्र देशेषु कालेषु चोच्चारितगोशब्दमात्रे गकार एक एव यौगपद्यात्। अबाधितप्रत्यभिज्ञाया युगपदुपपत्तेः। स एवायं गकार इति युगपदनेकेषां भवति प्रत्यभिज्ञानम्। न ह्यनेके युगपद्भ्रान्ता भवन्ति।

'संख्या ऽभावात्' (पू० मी० १।१।११) दशकृत्वो गोशब्दोच्चारे दशबारमुच्चारितो गोशब्दः इत्येव वदति लोकः। न च दशगोशब्दा-

उच्चारिता इति शब्दसंख्याभावात् नित्यः शब्दः । 'अनपेक्षत्वात्' ( पू० मी० १ । १ । २१ ) शब्दनाशकारणस्य सर्वसाधारण्येन ज्ञानाभावात् । घटपदादर्शनमात्रेण यथाऽसमवायिकारणादिनाशान्नाशो ज्ञायते । न तथा शब्दनाशकारणात् शब्द नाशो ज्ञायते ।

'प्रख्याभावाच्च योग्यस्य' ( पू० मी० १।१।२२ )

यदुक्तम्–वायुपरमाणुप्रकृतिकः शब्दः तदीयसंयोगैर्जन्यते; जन्यत्वाच्चानित्य एव शब्दः, वायुरापद्यते शब्दतामिति शिक्षावचनादिति तन्न, योग्यस्य श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयस्य शब्दस्य प्रख्याभावात् । अन्यवायुविकारस्येव वायुविकारस्य शब्दस्य श्रोत्रेन्द्रियग्राह्यत्वासम्भवात् ।

लिङ्गदर्शनाच्च' ( पू० मी० १।१।२३ ) 'तस्मैनूनमभिद्यवे वाचा विरूपनित्यया । वृष्णे चोदस्व सुष्टुतिम्' इति मन्त्रे नित्यया वाचेति लिङ्गं दृश्यते । तेनापि शब्दस्य नित्यत्वमेव सिद्ध्यति ।

आदिमत्त्वं कारणवत्त्वं कृतकवद्व्यवहारश्चोच्चारणस्यैव भवति न शब्दस्य, उच्चारणस्यैव संयोगविभागजन्यत्वात् । ऐन्द्रियकत्वन्तु नानित्यत्वप्रयोजकम् । त्वन्मतेऽपि नित्यस्य शब्दत्वस्यैन्द्रियकत्वाभ्युपगमात् ।

यदुक्तम्––शब्दो गुणः शब्दत्वात् ध्वनिवदिति तन्न, वर्णा न गुणा ध्वन्यन्यत्वे सति श्रावणत्वात् शब्दत्ववत् । एतेन स्पर्शविरहितत्वे सति एकेन्द्रियग्राह्यत्वात् रूपादिवत् शब्दस्य गुणत्वमिति । तदपि न, पूर्वोक्तसत्प्रतिपक्षस्य तद्बाधकत्वात् । ह्यस्तनाद्यतनयोः प्रत्यभिज्ञानेन न वर्णानां प्रत्युच्चारणमन्यत्वम् । उच्चारणञ्च न वर्णानां कारणं किन्त्वभिव्यञ्जकमेव ।

वायुरापद्यते शब्दतामिति शिक्षावचनन्तु वायुः शब्दाभिव्यक्तिहेतुतामापद्यते इत्यर्थक एव । यथा धूमत्वमग्नेर्विषाणित्वञ्च गोर्गमकं तथैव स्थिरः शब्दः सम्बन्धानुभवसापेक्षः सामान्यार्थावबोधको भवति ।

न कृतकत्वेनानित्यत्वसाधनं सम्भवति, कृतकत्वस्य परं प्रत्यसिद्धत्वात् । शब्दं करोतीति व्यवहारस्योच्चारणपरत्वस्योक्तत्वाच्च । नाप्यैन्द्रियकत्वमनित्यत्वहेतुः, आद्यमध्यमशब्दयोरैन्द्रियकत्वाभावात् ।

अन्त्यस्यैव शब्दस्य वैशेषिकादिभिरैन्द्रियकत्वाभ्युपगमात् । अथान्त्य एव पक्षोऽस्तु मीमांसकं प्रत्याश्रयासिद्धेः । ऐन्द्रियकत्वस्य सामान्ये सत्त्वाद् व्यभिचाराच्च ।

एवं वर्णानां नित्यत्वेन न तत्पौरुषेयत्वेन वेदानां पौरुषेयत्वम् । घटादिपदगता वर्णानुपूर्वी चापि प्रवाहरूपेण नित्यैव, तस्या सादित्वे प्रमाणाभावात् । कुम्भकारादिपदे पदानामपि चानुपूर्वी नित्यैव । तस्माद्वर्णपदानुपूर्वीणामपि पौरुषेयत्वमुखेनापि न वेदानामपौरुषेयत्वम् बाध्यते । तथैव वेदे वर्णपदानुपूर्वी भाञ्जि वाक्यान्यपि नित्यान्येवेति न कथञ्चन तत्र पौरुषेयताप्रवेशः इति दिक् ।



# ब्राह्मणानां वेदत्व-विमर्शः

कश्चन सामाजिकः प्रत्यवतिष्ठते—"मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति वचनबलादेव ब्राह्मणानां यद्वेदत्वम्, तद्धि केवलं कृष्णयजुर्वेदीय-श्रौतसूत्रेष्वेव, न ऋग्वेद - यजुर्वेद - सामवेदीय - श्रौतसूत्रेषु। निर्वृत्त-प्रयोजनमिदं वचनमेषु सूक्तेषु। यतो हि—वेदत्रयस्य मन्त्रसंहिताः स्वतन्त्राः पृथक् पठ्यन्ते, ब्राह्मणानि च स्वतन्त्राणि पृथक्। एवञ्च प्राचीनपरम्परानुसारं कृष्णयजुर्वेदमन्त्र-ब्राह्मणयोः सम्मिश्रणात् तदेक-देशानां मन्त्राणामेव वेदसंज्ञा प्राप्ता, न ब्राह्मणानाम्। अतः सम्पूर्ण-संहिताया वेदत्वसिद्ध्यै कृष्णयजुःश्रौतसूत्रकारैरेव वचनमेतादृशमुपनि-बद्धम्। अत एव सूत्रस्यास्य व्याख्यायां हरदत्तेन धूर्तस्वामिना च स्पष्ट-मुल्लिखितम्—"कैश्चिन्मन्त्राणामेव वेदत्वमाश्रितम्" इति। अतः स्पष्ट-मेतत् प्रतीयते यत्प्राचीनैरनेकैः आचार्यैः मन्त्राणामेव वेदत्वमङ्गीकृतम्, न ब्राह्मणानाम्। कथञ्चित् स्वीकृतेऽपि वचनस्यास्य प्रामाण्ये आपस्तम्बा-दिश्रौतसूत्र-परिभाषाप्रकरणपठितत्वादस्य सा पारिभाषिक्येव संज्ञा भवेत्। सा च प्रतिशास्त्रं प्रातिस्विकी पृथगेव। यथा पाणिनेः 'अ-ए-ओ' वर्णानां गुणसंज्ञा। लोके न्यायादिशास्त्रेषु वा 'गुण'शब्देन न 'अ-ए-ओ' वर्णानां ग्रहणम्। स्पष्टमेतत् यत् ऋग्वेदादौ मन्त्राणां ब्राह्मणानाञ्च पूर्णतया पार्थक्यम्। अतस्तत्र ब्राह्मणानां वेदत्वप्रसक्तिरेव नोपसर्पति" इति।

तदेतदसङ्गतम्; 'कात्यायनभिन्नैः ऋषिभिर्वेदसंज्ञाया अस्वी-कृतत्वादि'ति तदाचार्य-स्वामिदयानन्दोक्तिविरोधात्। एतद्रीत्या कात्यायनमहर्षिणा ब्राह्मणानां वेदत्वमङ्गीक्रियते। कात्यायनश्च शुक्ल-यजुर्वेदीयो न कृष्णयजुर्वेदीयः। परमेतदुक्तिरपि न सङ्गता, ब्राह्मणानां वेदत्वबोधकवचनान्तराणामभावेऽपि परमाप्तस्य श्रौतसूत्रकारस्य कात्यायनस्य वचनमेव तत्र पर्याप्तम्। यदि सम्भवेदार्षवचनेन केन-चिदस्य विरोधस्तर्हि विचारायावकाशः स्यादपि। न हि कस्यचित्

स्वकपोलकल्पनया परमाप्तस्य ऋषेर्वचने अप्रामाण्यमारोपयितुं शक्यम्। तद्विपरीतमनेकेषां महर्षीणामधोनिर्दिष्टवचनैः मन्त्राणां ब्राह्मणानां च वेदत्वं प्रमीयते।

'मन्त्रब्राह्मणयोर्वेदनामधेयमि'ति वचनं बौधायनगृह्यसूत्रे ( २।६।३ ), बौधायनधर्मसूत्रे ( २।६।७ ), आपस्तम्बश्रौतसूत्रे ( २४।१।३१ ), सत्याषाढश्रौतसूत्रे ( १।१।७ ), कात्यायनपरिशिष्ट-प्रतिज्ञासूत्रे, ( २ ) च समायाति। एवं पारस्करगृह्यसूत्रे 'वेदं च समाप्य स्नायात्' इत्यत्र 'विधिर्विधेयस्तर्कश्च वेदः' इत्युक्तम्। अत्र विधेयो मन्त्रः, विधिस्तर्कश्च ब्राह्मणम्। एवमृग्वेदीये कौशिकगृह्यसूत्रे 'मन्त्रब्राह्मणयोर्वेदशब्दः' ( ३।१२।२३ ), अथर्ववेदीये कौशिक-सूत्रे च 'आम्नायः पुनर्मन्त्राश्च ब्राह्मणानि च' इत्युक्तम्। एवं शुक्लयजुर्वेदीय-प्रातिशाख्ये 'स्वरसंकारयोश्छन्दसि नियमः' ( १।१।२ ) इति सूत्रे उक्तम्—'ब्राह्मणेऽपि स्वरविधानात् ब्राह्मणभागस्य मन्त्रत्वम्।' प्रातिशाख्यप्रतिज्ञासूत्रे 'ब्राह्मणे तूदात्तानुदात्तौ भाषिकस्वरौ' ( ८ ) इतिसूत्रेण ब्राह्मणेऽपि स्वरविधानाद् ब्राह्मणानां वेदत्वमुक्तम्।

सायणेनापि 'मन्त्रब्राह्मणत्वं तावद्वेदस्यादुष्टं लक्षणम्' इति वदता मन्त्रब्राह्मणयोर्वेदत्वमङ्गीकृतम्। षड्गुरुशिष्येऽपि उक्तम्—'मन्त्रब्राह्मणयोराहुर्वेदशब्दं महर्षयः' इति। कौटल्येनापि ब्राह्मणानामाम्नायत्वमङ्गीकृतम्। शुक्रनीतावपि उक्तम्—'मन्त्रब्राह्मणयोर्वेदनाम प्रोक्तमृगादिषु' (४ ।२७१) पूर्वमीमांसायामुक्तम्—'तच्चोदकेषु मन्त्राख्या' (२।१।३२ 'शेषे ब्राह्मणशब्दः' ( २।१।३३ ) इति। अत्र शेषे मन्त्रभागादवशिष्टे वेदैकदेशे ब्राह्मणशब्द इत्युक्तम्। उभयोर्वेदत्वानङ्गीकारे शेषशब्दस्य वैयर्थ्यम्। अत्र अङ्गार्थे शेषशब्दं व्याचक्षाणानां मते 'शेषे यजुःशब्दः' इति सूत्रानुसारं यजुर्मन्त्राणामपि मन्त्रत्वाभावः प्रसज्येत। 'विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात्' ( पूर्वमीमांसा-दर्शने २।१।३० ) इत्यत्र विधिर्ब्राह्मणम्, तेन विधि-मन्त्रयोरैकार्थ्यं सिद्धम्। 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्' ( १।२।१ ) इत्यत्र आम्नायशब्देन मन्त्रब्राह्मणात्मकः सम्पूर्णवेदराशिरेव गृहीतः। 'शेषे ब्राह्मणशब्दः' ( २।१।३३ )

इति जैमिनिसूत्रभाष्ये शास्त्रतात्पर्यविदां शबरस्वामिनामपि अयमेवार्थोऽभिप्रेतः। भट्टपादेन कुमारिलेनापि तन्त्रवार्तिके मन्त्रब्राह्मणयोर्वेदनामधेयम्' उक्तम्।

'वेदशब्देन ऋग्यजुःसामानि ब्राह्मणसहितानीत्युच्यन्ते' इति मेधातिथिः। 'वेदोऽखिलो धर्ममूलम्' इत्यत्र ब्राह्मणानां वेदत्वप्रतिपादनायैव अखिलेति विशेणम्। मनुस्मृतेर्वचनान्तराण्यपि ब्राह्मणानां वेदत्वं प्रमापयन्ति। यथा—

'धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः।'

इत्यत्र ब्राह्मणेष्वेव धर्मप्रतिपादनात् श्रुतिशब्देन तान्येव गृह्यन्ते। विधिरूपब्राह्मणेनैव यागादिरूपो धर्मो बुद्ध्यते। तथैव—

'तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना॥'

इत्यत्र कृत्स्नशब्दस्यापि मन्त्रब्राह्मणयोरुभयोर्वेदत्वबोधने तात्पर्यम्।

'उदितेऽनुदिते चैव समयाध्युषिते तथा।
सर्वथा वर्तते यज्ञ इतीयं वैदिकी श्रुतिः॥' इति च।

कोषाणामपि प्रचुरतरप्रमाणमत्र उपलभामहे। तथा हि मेदिनीकोषे-'ब्राह्मणो ब्रह्मजातौ स्याद्वेदभागे नपुंसकम्।' इति अमरकोषे-'श्रुतिः स्त्री वेद आम्नायः' इति। विश्वकोषे-'श्रुतिः क्षेत्रे तथाम्नाये वार्तायां श्रौतकर्मणि।' इति।

'जन्माद्यस्य यतः' इति सूत्रेण ब्रह्मलक्षणं ब्रुवाणो भगवान् बादरायणः 'शास्त्रयोनित्वात्' इति सूत्रेण शास्त्रप्रमाणकं ब्रह्मप्रतिपादयत् पूर्वसूत्रद्वारा विचारणीयं 'यतो वा इमानि भूतानि जायन्ते' इत्यादिब्राह्मणवाक्यमेव 'शास्त्र' पदेन विवक्षति। एवमेतेन सिद्ध्यति यत् पूर्वपक्षिणो विचारो निराधारोऽसङ्गतश्चेति।

प्रतिज्ञापरिशिष्टे कात्यायनेन स्पष्टमेव सूत्रितम्-'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति। येषां किल प्रतिज्ञापरिशिष्टं कात्यायनकृतं नाभिमतम्। कात्यायनसूत्रत्वेन तेषामभिमतो ग्रन्थो यदि कश्चित् शङ्केत, कात्यायनाद् भिन्नव्यक्तिद्वारा निर्मितं च प्रतिपादयेत्, तर्हि किं तेषां सविधे समाधानम्? परम्परया पुस्तकस्थनाम्ना च ग्रन्थकर्तुः परिचयो

जायते। यदि च तत्र न विश्वस्युस्ते तर्हि 'सत्यार्थप्रकाश'स्य श्री स्वामिदयानन्दरचितत्वमेव कथङ्कारं सिद्ध्येत् ? पुस्तकस्थनामोल्लेखेन वैदिक-याज्ञिकपरम्परया च 'कात्यायनप्रतिज्ञा-परिशिष्टं' कात्यायनकृतमेव प्रसिद्धम्। तत एव लिखितं दयानन्देन—'कात्यायनभिन्नैर्ऋषिभिर्वेद-संज्ञाया अस्वीकृतत्वात्' इति। यदा तु समाजिनां पुरतः 'आपस्तम्ब'—'सत्याषाढ' 'बौधायना'दीनमेतदर्थप्रतिपादकानि सूत्राणि सनातनधर्मानुयायिभिरुपक्षिप्तानि तदैतद्विषयं स्वामिदयानन्दस्य अज्ञानमेव समाजिनामौपयिकमासीत्, बहुभिर्ऋषिभिरुक्तत्वात् ब्राह्मणानां वेदत्वाङ्गीकारश्च कर्तव्यपतित आसीत्। किन्तु यथार्थामपि श्रीस्वामिदयानन्दस्य कात्यायनप्रोक्तां ब्राह्मणभागस्य वेदत्वाङ्गीकृतिरूपां वार्तां मिथ्यैवामंसत। ब्राह्मणभागस्य वेदत्वं व्याचक्षाणानां कात्यायनभिन्नानामप्यनेकेषां महर्षीणां विद्यमानत्वात्।

यद्यपि श्रीस्वामिदयानन्दस्य अज्ञानमूरीकृत्य सर्वसम्मतं ब्राह्मणभागस्य वेदत्वं सामाजिकैरङ्गीकर्तव्यमासीत्, किन्तु तद्विपरीतं ते सनातनिसम्मतं स्वामिदयानन्दसम्मतञ्च 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति सूत्रमेव नाङ्गीकृतवन्तः। उपरिष्टात् प्रदर्शितं यत् ऋग्वेदीय-कौषीतकीगृह्यसूत्रस्य अथर्ववेदीय कौशिकगृह्यसूत्रस्य च सम्मतं ब्राह्मणानां वेदत्वं, कणाद-गोतम - पाणिनि - पतञ्जल्यादिसम्मतञ्च। किमेते सर्वेऽपि कृष्णयजुःसम्बन्धिनः ? पूर्वोत्तरमीमांसे सम्पूर्णवेदस्यैव विचारार्थं प्रवृत्ते। तयो रचयितारौ जैमिनिर्व्यासश्च ब्राह्मणानां वेदत्वमङ्गीकुरुतः। सामवेदस्य सहस्रशाखानां महाविद्वान् शवरस्वामी मीमांसकेषु प्रसिद्धः। भगवत्पादैः श्रीशङ्कराचार्यैस्ते शास्त्रतात्पर्यवित्त्वेन स्मर्यन्ते—तथा चाहुः शास्त्रतात्पर्यविदः शबरस्वामिनः' इति। स्वयं शुक्लयजुर्वेदी भगवान् शङ्कराचार्यो ब्राह्मणानां वेदत्वमङ्गीकरोति। स्वामिदयानन्देन प्रमाणपदवीमारोपिता शुक्रनीतिरपि ब्राह्मणानां वेदत्वमूरीकरोति। चरणव्यूहेऽप्ययमेव सिद्धान्तः। सत्सु चैवं परःशतेषु प्रमाणेषु कृष्णयजुःसम्बन्धिन एव सूत्रकारा ब्राह्मणानां वेदत्वमङ्गीचक्रुरिति साहसजल्पितमेव।

एतेन समाजिना एतदपि दुःसाहसजल्पितं यत् ''सत्सु चैतेषु प्रमाणेषु बहुतिथं कालं यावत् लोको नाङ्गीचकार ब्राह्मणानां वेदत्वम्, अत

एव हरदत्तेन धूर्तस्वामिना चोक्तं यत् 'कैश्चिन्मन्त्राणामेव वेदत्वमाख्यातमि"ति पूतिकूष्माण्डायितमेतत्; यतो हि मीमांसायाः प्रत्येकमधिकरणे प्रथमं पूर्वपक्षोपन्यासो लभ्यते। किमेतस्य तदेव तात्पर्यं यत् पूर्वपक्ष एव आस्तिकानां शिष्टानां सम्मतः ? यदि वाढं कश्चिदङ्गीकुर्यात् तदा वेदाप्रामाण्यमेव आस्तिकशिष्टसम्मतत्वेन तस्य शिरोऽवस्कन्देत्। यतो—हि वेदप्रामाण्यसाधकाधिकरणे पूर्वपक्षरूपेण वेदाप्रामाण्यमेव निर्दिष्टम्। अत एव हरदत्त-धूर्तस्वाम्यादिभिर्येषां सूत्राणां परमादरणीयतां प्रामाणिकतां चाङ्गीकृत्य तानि सूत्राणि व्याख्यायन्ते, तेषां सूत्राणामप्रामाणिकत्वभणितिः श्रुतिरहस्यानभिज्ञानां कतिपयपुंसामेवेति स्वारस्यं 'कैश्चित्'शब्देन अभिव्यज्यते।

एतेन समाजिना एतदपि प्रतिज्ञायते यत् "येषु येषु श्रौतसूत्रेषु 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इति सूत्रितम्, सर्वत्र परिभाषाप्रकरण एव सूत्रितम्, अतः तस्य श्रौतसूत्रस्य पारिभाषिकोऽयं स्वकीयो व्यवहारः। लोकेषु अप्रसिद्धानामेव संज्ञानां पारिभाषिकत्वं भवति। पारिभाषिक्यश्च संज्ञाः स्वस्मिन्नेव प्रस्थाने ग्राह्या भवन्ति, न प्रस्थानान्तरे, पाणिनेर्गुणवृद्धिसंज्ञादिवत्। एवमेव लोके अप्रसिद्धा एव ब्राह्मणानां वेदसंज्ञा श्रौतसूत्रेण विधीयते। अतः पारिभाषिकी सा कृष्णयजुःशाखास्वेवाभिमता नान्यत्रे"ति।

किन्त्वेतदपि असङ्गतमेव; परिभाषाप्रकरणेऽपठितानामपि पाणिनेः टि-घ्वादिसंज्ञानां संज्ञात्वमेव। न क्वचिन्मन्त्रमात्रेऽर्थे वेदशब्दः प्रसिद्धः। ज्ञानार्थकाद् विदेर्निष्पन्नत्वात् वेदशब्दस्य ज्ञानमर्थः। 'वेदं कृत्वा वेदिं करोती'त्यादिस्थलेषु कुशमुष्टिविशेषेऽप्यर्थे वेदशब्दः प्रयुज्यते। 'मन्त्रब्राह्मणयोर्वेदनामधेयमि'ति वैदिकानामेव संज्ञा। यथा सास्नादिमत्यां व्यक्तौ गोशब्दः प्रयुज्यते इति कोषेण ज्ञायते, तथैव श्रौतसूत्रेण मन्त्रब्राह्मणानां वेदेति नाम ज्ञायते। कोषादिभिर्यथा अनादिसिद्धनामनामिनोः सम्बन्ध (शक्ति) ग्रहो जायते तथैव 'मन्त्रब्राह्मणयोरि'ति सूत्रेण अनादि-सिद्धनामनामिनोः शक्तेरेव ग्रहः। यद्येतत्सूत्रविधानात् कृष्णयजुर्वेद एव ब्राह्मणभागस्य वेदसंज्ञा ग्राह्या भवेत्तर्हि एतत्सूत्रविधाना-

देव मन्त्राणामपि वेदसंज्ञा कृष्णयजुर्वेद एव ग्राह्या स्यात् । एवमितरत्र अधीतानां मन्त्राणामपि वेदसंज्ञा न सिद्ध्येत् । न केवलमनेन ब्राह्मणानामेव वेदसंज्ञा विधीयते । यावत्र चाद्यपरिहारौ ब्राह्मणे तावेव मन्त्रेऽप्युद्भावयितुं शक्यौ ।

'ययोरेव समो दोषः परिहारश्च तादृशः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥' इति ।

वस्तुतोऽपौरुषेयं वाक्यमेव वेदः । अपौरुषेयता च अविच्छिन्नपारम्पर्येण अस्मर्यमाणकर्तृकत्वेन च निश्चीयते । ते च मन्त्रवत् ब्राह्मणेऽपि तुल्ये । अत एव 'तुल्यं तु साम्प्रदायिकम्' इति सूत्रेण अर्थवादानामपि साम्प्रदायिकता ( अविच्छिन्नपारम्पर्यम् ) उक्ता । कौथुम-माध्यन्दिनादिसमाख्यानां समाधानवत् काठक-तैत्तिरीयकादिसमाख्यानां समाधानं सम्भवि ।

किञ्च—महर्षिर्गोतमो वेदप्रामाण्यसिद्धये पूर्वपक्षरूपेण पूर्वं वेदप्रामाण्यप्रदर्शनाय यान् दोषानुदाजहार, 'तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः' इत्यादिना सूत्रेण तेषामुदाहरणानि ब्राह्मणवाक्यान्येव सम्भवन्ति; न मन्त्रवाक्यानि । अत एव न्यायभाष्यकारेण वात्स्यायनेन 'पुत्रकामः पुत्रेष्ट्या यजेत', 'अग्निहोत्रं जुहोति,' 'उदिते होतव्यम्', 'अनुदिते होतव्यम्', 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति ब्राह्मणवाक्यान्येव उदाहृतानि । यदि ब्राह्मणं वेदो न स्यात् तर्हि वेदाप्रामाण्यप्रदर्शनाय ब्राह्मणाप्रामाण्यप्रदर्शनमसङ्गतमेव भवेत् । अत एव सिद्धान्ते कृतायामपि पुत्रेष्टौ पुत्रानुत्पत्तेः कर्तृ-कर्म साधनादिवैगुण्येन समाधानम्, अग्निहोत्रयागानन्तरमेव स्वर्गाप्राप्तेरपि तज्जनकादृष्टद्वारा कालान्तरे स्वर्गरूप-फलस्य प्राप्त्या च समाधानमुक्तम् ।

यत्तु सामाजिका संहिताचतुष्टयोमेव वेदत्वेनाङ्गीकुर्वन्ति, तत्र प्रमाणत्वेन 'अग्निमीडे पुरोहितम्' इत्यादिप्रतीकचतुष्टयोदाहरणपरं महाभाष्यमुपन्यस्यन्ति । तत् तुच्छम्; तद्विपरीतापत्तेः । तथा हि—'शन्नो देवीरभिष्टये' इति मन्त्रम् अथर्ववेदप्रतीकत्वेनोद्धृतवान् महाभाष्यकारः । स च मन्त्रो न सामाजिकाभिमतशौनकीयसंहिताया आदिमो मन्त्रः, किन्तु

पैप्पलादसंहितायाः आदिमो मन्त्रः। सा च संहिता न तैर्वेदत्वेनाङ्गीक्रियते।

यदुक्तम्-"'द्वितीया ब्राह्मणे' (२।३।६०) 'चतुर्थ्यर्थे बहुलं छन्दसि' (२।३।६२) 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' (४।३।१०५) इत्यादि सूत्रेषु छन्दोब्राह्मणयोर्भेददर्शनेन ब्राह्मणस्य छन्दोभिन्नतैव। तयोरैक्ये तु द्वितीया ब्राह्मणे इत्यस्मात् ब्रह्मपदानुवृत्तौ 'चतुर्थ्यर्थे बहुलं छन्दसि' इत्यत्र छन्दसीति व्यर्थमेव स्यात्" इति।

तन्न; ब्राह्मणस्य वेदैकभागत्वेऽपि सम्पूर्णवेदत्वाभावात्। तथा हि, उक्तसूत्रेण ब्राह्मणमात्रे द्वितीया विधीयते, न सर्वत्र। वेदे 'गामस्य तदहः सभायां दीव्येयुः' इति तदुदाहरणम्। ब्राह्मणस्य सम्पूर्णवेदत्वे तु 'दिवस्तदर्थस्य' (२।३।५८) इति सूत्रेण द्वितीयां बाधित्वा षष्ठी स्यात्। मन्त्रवत् ब्राह्मणमपि वेदैकदेश एव। श्रुतिछन्दोनिगमाम्नायशब्दास्तु मन्त्रब्राह्मणात्मकस्य सम्पूर्णवेदस्य बोधकाः; 'चतुर्थ्यर्थे बहुलं छन्दसी'ति सूत्रेण सम्पूर्णे वेदे चतुर्थ्यर्थे षष्ठी भवति। तेनास्योदाहरणद्वयम् - 'पुरुषमृगश्चन्द्रमसे' इति मन्त्रभागस्य 'या खर्वेण पिबति तस्यै खर्वः' इति च ब्राह्मणभागस्य। तेनोभयार्थं छन्दोग्रहणं युक्तमेव। अन्यथा 'मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्' (३।२।७१) 'अवे यजः' ३।२।७२), 'विजुपे छन्दसि' (३।२।७३) इत्यत्र मन्त्रे इत्यनुवृत्त्या कार्यनिर्वाहे छन्दो ग्रहणं व्यर्थं स्यात्। मन्त्रछन्दसोर्भिन्नत्वे ब्राह्मणस्येव मन्त्रस्यापि अवेदत्वमापद्येत; तस्माद् ब्राह्मणं मन्त्रश्च एकैकदेशवाचकौ, छन्दो वेदादयश्च सम्पूर्णवेदवाचकाः। एवं 'छन्दोब्राह्मणानि च तद्विषयाणि' (४।२।६६) इत्यत्रापि छन्दोग्रहणेनैव मन्त्रवद् ब्राह्मणस्यापि ग्रहणसम्भवेन तद् व्यर्थं सत् ब्राह्मणविशेषं ज्ञापयति। तेन प्राचीनर्षिप्रोक्त-ब्राह्मणग्रहणमिह भवति, न नवीनर्षिप्रोक्त-ब्राह्मणग्रहणम्।

अत एव 'याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्क्यानी'त्यत्र 'छन्दो ब्राह्मणानि च' इति सूत्रं न प्रवर्तते। तदर्थमेव महाभाष्यकारः 'याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यस्तुल्यकालत्वात्' इति वार्तिकेन णिनिं प्रतिषिध्य तत्साधयति। प्रवाहरूपेण सर्वेषामृषीणामनादित्वेन

तुल्यकालत्वमेवेति वार्तिकोपयोगः। प्रवाहरूपेण अनादित्वेऽपि एकस्मिन् कल्पे प्रादुर्भावपौर्वापर्याभ्यां प्राचीनत्वर्वाचीनत्वव्यवस्थाऽपि उपपद्यते। तत एव 'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' इति सूत्रे 'पुराणपदोपादानम्। तं दृष्ट्वैव याज्ञवल्क्यानि ब्राह्मणानीति नवीनप्रोक्त-ब्राह्मणव्यतिरिक्त-पुराण-प्रोक्तब्राह्मणग्रहणार्थं 'छन्दोब्राह्मणानी'त्यत्र ब्राह्मणग्रहणं सार्थकं भवति। अन्यथा पुराणप्रोक्तेति सूत्रं व्यर्थमेव स्यात्।

किञ्च—वेदार्थविचारार्थमेव पूर्वोत्तर-मीमांसयोः प्रवृत्तिः। तत्र च प्रायः ब्राह्मणभागमधिकृत्यैव विचारः प्रवर्तते। अल्पीयानेव तत्र खलु मन्त्र-विचारः। धर्मस्य चोदनालक्षणत्वेन, चोदनायाश्च विधिरूपत्वेन, विधेश्च 'जुहुयात्' 'यजेत' 'निर्वपेत्' इत्यादि ब्राह्मणरूपत्वेन ब्राह्मणस्य अवेदत्व-वचनं मूढजनजल्पनमेव। 'धर्मं जिज्ञाशमानानां प्रमाणं परमं श्रुतिः' इति मनुस्मृतौ श्रुतिपदेन वेदस्यैव ग्रहणम्। धर्मबोधकत्वन्तु ब्राह्मणभागस्यैव। मन्त्राणां तु धर्माङ्गदेवतास्तवनादौ उपयोगः। 'अम्नायस्य क्रियार्थत्वादि'-त्यत्रापि ब्राह्मणानामेव विधिभिन्नार्थवादानां क्रियार्थत्वाभावादानर्थक्य-माङ्कितम्, विधिना त्वेकवाक्यत्वात् स्तुत्यर्थत्वेन सार्थक्यञ्च उपपादितम्। ब्राह्मणस्यावेदत्वे तदुभयमप्यसङ्गतं स्यात्। 'तत्सामार्थ्यं समाम्नाये। (१।४।१७) इति सूत्रे 'वैश्वानरं द्वादशकपालं निर्वपेत्' इति ब्राह्मण-मेव समाम्नायशब्देनोक्तम्। 'वेदे हि त्रयाणां निर्देशो भवति' (६।१।३३) इति सूत्रभाष्ये 'वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम्। शरदि वैश्यन् इति ब्राह्मणवाक्यमेव वेदशब्देनोक्तम्। विधौ तु वेदसंयोगात्' (६।७।२९) इत्यत्र 'माषान् मे पचत' इति ब्राह्मणवाक्यमेव वेदशब्दे-नोक्तम्। 'आम्नायवचनं तद्वत्' (११।२।४१) इति सूत्रे 'यदेवाध्वर्युः करोति' इति ब्राह्मणवाक्यम् आम्नायवचनमुक्तम्। 'सत्रे गृहपतिरसंयोद्धौत्रवदाम्नायवचनाच्च' (१२।३।३०) इति सूत्रे 'यो वै सूत्रे बहूनां यजमानानां गृहपतिः' इति ब्राह्मणवाक्यं आम्ना-यशब्देनोक्तम्। 'यज्ञो मन्त्रब्राह्मणस्य विषयः' (गो. सू. ४।१।६२) इति वात्स्यायनभाष्ये यज्ञविषयत्वं वेदस्य विषय उक्त। यज्ञप्रतिपादनञ्च ब्राह्मणभाग एव। 'विध्यर्थवादानुवाद-वचनविनियोगात्' इति सूत्रे

गोतमेन ब्राह्मणत्रैविध्यमुक्तम्। विस्तरस्तु अस्मन्निबद्धे 'वेद का स्वरूप और प्रामाण्य'-पुस्तके द्रष्टव्यः। नियमस्तु दक्षिणाभिः श्रुतिसंयोगात्' (३।७।३६), 'विरोधे च श्रुतिविरोधादव्यक्तः शेषः' (३।८।३२), 'शक्लश्रुतेः' (४।२।४) इत्यादौ श्रुतिशब्देन ब्राह्मणान्येव गृहीतानि। किं बहुना, वेदविचाररूपायाः पूर्वमीमांसाया नवशताधिकरणेषु प्रायेण सर्वत्रैव ब्राह्मणवाक्यानामेव विचारः एवमेव वेदान्तविचाररूपाया उत्तरमीमांसाया अपि अधिकरणेषु ब्राह्मणारण्यकोपनिषदामेव बाहुल्येन विचारः। ब्राह्मणानामवेदत्वे सर्वमेतद् व्याकुप्येत।

यदुक्तम्--"सामाजिकैः मन्त्रभाग ब्राह्मणभागेति भागद्वयपदप्रयोगो न कर्तव्यः, तथात्वे मन्त्रभागस्य वेदत्वे तद्भागान्तरस्य ब्राह्मणस्यापि वेदत्वापत्तिः स्यात्। नहि कलिन्दस्यैको भागः कलिन्दोऽपरस्तद्भिन्नो भवितुमर्हती"ति। तदेतत् साहसमात्रम्; मन्त्रभाग ब्राह्मणभागेति भागद्वयात्मकस्य वेदत्वप्रसिद्धेः; ब्राह्मणो ब्रह्मजातौ स्याद्वेदभागे नपुंसकम्' इति कोषात्, 'तच्चोदकेषु मन्त्राख्या, शेषे ब्राह्मणशब्दः' इति जैमिनिसूत्राच्च। सनातनधर्मानुयायिभिः प्रदर्शिता याः कलिन्दोदाहरणरूपयुक्तेः सम्मुखे सामाजिकानामेष पराजय एव। उक्तसूत्रद्वयेन च स्पष्टमेकभागस्य मन्त्रत्वमुक्त्वा शेषस्य भागान्तरस्य ब्राह्मणत्वमुक्तम्।

यत्तु--केनचित् अत्र शेषशब्दस्य अङ्गमर्थं विधाय "वेदस्य शेषे अङ्गे ब्राह्मणशब्द" इत्युक्तम्। तत्तुच्छम्; तथात्वे 'शेषे यजुःशब्दः' इत्यत्रापि तथार्थाङ्गीकारप्रसङ्गात् यजुषो मन्त्रत्वानापत्तेः।

यदुक्तम्-"स्वरहीनस्य गोपथादिब्राह्मणस्य न वेदत्वमि"ति। तदपि तुच्छम्; शतपथतैत्तिरीयै-तरेयादिवत् गोपथादि-ब्राह्मणस्यापि सस्वरत्वानुमानात्। यथा अनेकासां शाखानां लोपः, कासाञ्चिद् ब्राह्मणलोपः कासाञ्चिच्च मन्त्रसंहिता-लोपः, तथैव केषाञ्चिद् ब्राह्मणानां स्वरलोपोऽपि। न च स्वरलोपेन वेदत्वलोपो भवतीति वक्तुं शक्यम्।

किञ्च--नहि रेखात्मका एव स्वराः, रेखाणां लिपिरूपत्वेन काल्पनिकत्वात्। न च हस्तचालनविशेष एव स्वरः; क्वचिच्छिरश्चालनस्यैव

सम्प्रदायसिद्धत्वात् । क्वचिच्छस्त्रादिपाठे हस्त-शिरसोरुभयोरपि न प्रयोगः । स्वरराहित्यस्य अवेदत्वप्रयोजकत्वे सामाजिकोच्चरित-मन्त्रे स्वराप्रयोगात् तदभिमन्त्राणामपि अवेदत्वमेव स्यात् । न च शस्त्रपाठे वेदत्वं नास्तीति वक्तुं शक्यम्; तत्र 'यज्ञकर्मण्यजप-न्यूङ्ख-सामसु' ( पा० सू० १।२।३४ ' इत्येकश्रुतिविधानात् । स्वरसामान्या-भावश्च एकश्रुतिः । तथा च रेखात्मकस्वराभावेऽपि वैदिकाः परम्परानु-सारेणैव गोपथादीन् पठन्ति । तत्र चोच्चारणं स्वराप्रतिकूलमेव । शृङ्गपुच्छादिवैकल्येऽपि गोर्गोत्ववत् 'एकदेशविकृतमनन्यवदि'ति न्यायेन कुत्रचित् स्वरसम्प्रदायलोपेऽपि वेदत्वमक्षुण्णमेव । अत एव स्वराप-राधेऽपि न मन्त्रे मन्त्रत्वहानिः । स्वरसत्त्वे साङ्गत्वेन शक्तिशालित्वम् विपरीतस्वरत्वे वाग्वज्रत्वेन यजमानानिष्टकारित्वञ्च । स्वरहीनत्वे किञ्चिद्धीनशक्तित्वमेव । तदुक्तं पाणिनीयशिक्षायाम्—

'मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥'
( पा० शि० ५२ )

वर्णव्यत्ययेन तु आनुपूर्वीनाशाद् वेदत्वापगम एव, वर्ण-पदानु-पूर्वीविशेषस्यैव वेदत्वात ।

यद्यपि स्वरसूत्रानुसारं कस्मिंश्चिदपि पौरुषेयग्रन्थे स्वरसंस्कारो विधातुं शक्यत एव, तथापि न तावता तस्य वेदत्वम्, तस्य गुरु-परम्परया अप्राप्तत्वात्, कर्तृस्मरणाच्च । यत्र न खलु कर्ता स्मियते, अर्थात् अनन्यथासिद्धप्रमाणैः प्रमीयते, कामं स्वरलोपः स्यात्, तत्रैव अपौरुषेयत्वं वेदत्वञ्च । कल्पादीनां कर्तारः स्मृतिगोचरा एव । काठकादि-समाख्यायास्तु जैमिनिनैव 'आख्या प्रवचनात्' इत्यन्यथा-सिद्धता उपपादिता ।

न च क्वचिदारण्यकेषु कूपेषु प्रकीर्णवाक्येषु च कर्ता न प्रमीयते, तावतापि तस्य पुरुषनिर्मितत्वं पौरुषेयत्वञ्च अनुमीयत एवेति वाच्यम्;

तत्रावश्यस्मर्तव्यत्वे सतीति विशेषणत्वात्। तत्र व्यवहारे कर्ता नावश्यं स्मर्तव्यः, तत्स्मरणमन्तरापि व्यवहाराबाधात्। मन्त्राणां ब्राह्मणानां तु यदि कश्चित् कर्ता स्यात्तदा स गुणवृद्धिसंज्ञादिकृत्-पाणिन्यादिवदवश्यं स्मर्तव्यः स्यात्। कर्तुराप्तत्वविज्ञानमन्तरा तत्कृतग्रन्थोक्तोपायेषु शिष्टानां प्रवृत्त्यसम्भवात्। नहि येषां कुरान-बाइबिलादिप्रणेतृषु मोहम्मदादिषु आप्तत्वबुद्धिर्न भवति तेषां तदुक्तोपायेषु प्रवृत्तिर्दृश्यते। ब्राह्मणानि यदि पौरुषेयाणि भवेयुस्तदा तत्कर्तुराप्तत्वज्ञानेनैव तदुक्तोपायेषु प्रवृत्तिर्वैदिकानां स्यात्।

न च ब्राह्मणानां कर्तुस्तदाप्तत्वस्य च ज्ञानं दृश्यते, तथा च कुतः प्रवृत्तिः तत्स्मरणमन्तरोपपद्यते? कर्तृस्मरणमन्तरापि ब्राह्मणाध्ययनाध्यापने तदर्थानुष्ठाने च आप्तानां प्रवृत्तिदर्शनादवश्यस्मर्तव्यत्वे सत्यपि कर्तुरस्मरणाद् अपौरुषेयत्वमेव निर्णेतव्यम्। क्वचित् स्वरसम्प्रदायलोपेऽपि गुरुशिष्यपारम्पर्यमस्त्येव। अनुष्ठानञ्च तस्य प्रचलत्येव। ताण्ड्यादिब्राह्मणानाम् अध्ययनाध्यापन-तदर्थानुष्ठानस्य अविच्छेदः स्वरादिसम्प्रदायविच्छेदोऽपि लुप्तशाखानामिव परमेश्वरे महर्षिषु च विद्यत एव। लुप्तशाखीया अपि मन्त्राः श्रौतसूत्रेषु ब्राह्मणेषु च वेदमन्त्रत्वेनैव व्यवह्रियन्ते।

निरुक्तकारोऽपि शाकल्य-शौनक-कौथुम-वाजसनेयिसंहिताभ्योऽन्यशाखासंहितामन्त्रान् ब्राह्मणवाक्यानि च निगमत्वेन उदाहरति। तथा हि—"अमेनांश्चिज्जनिवतश्चकर्थ' 'स्नात्वा कृन्तन्नतपसोऽतन्वत' इत्यपि निगमौ भवतः" (३।२१।२)। अत्र 'अमेनांश्चित्' इति ऋक्संहितायां स्नात्वा इति च सामवेदीये ताण्ड्यब्राह्मणे (१।१।८) मैत्रायणीयसंहितायां (१।९।४) काठकसंहितायां (९।५) च लभ्यते। एवमेव "यस्मात्परं नापरमस्ति किञ्चित्, तेनेदं पूर्णं पुरुषेण सर्वम्' इत्यपि निगमो भवति' (निरुक्तम् २।३१) इति श्वेताश्वतरोपनिषदि (३।९) दृश्यते। एवमेव "व्यवहितत्वाच्च" (अष्टाध्यायी १।४।८१) इत्यस्योदाहरणं मामन्द्रैरिन्द्रहरिभिर्याहि' इति ऋक्संहितायाम् (३।४।१),

'समिधं सोम्य आहर, उप त्वा नेष्ये' इति छान्दोग्योपनिषदि ( ४।४५ ) च लभ्यते । "पियति त्वो' 'नेमे देवाः' इत्यपि निगमौ भवतः" ( नि० ३।२०।१ ) अत्र 'नेमे देवा' इति मन्त्रो यजुः- काठकसंहितायाम् ( १४।६ )। 'नो परस्याविष्कुर्यात्' ( नि० ३।५।२ ) अयं ब्राह्मणभाग एव ।

पाणिनेरप्येवमेव अभिमतम् । तथा हि--'मतुवसोरु सम्बुद्धौ छन्दसि' ( ८।३।१ ) अस्योदाहरणं 'भगवः इति शुश्राव' ( छा० ४।५।१ )।

गोपथोऽथर्ववेदस्य ब्राह्मणमिति स्वामिदयानन्दोऽपि ( सत्यार्थ-प्रकाशे ३ समुल्लासे, ४२ पृष्ठे ) मनुते । तत्रैव गोपथब्राह्मणे—

"अग्निमीळे" इत्येवमादिं कृत्वा ऋग्वेदमधीयते ।
'इषे त्वे'त्येवमादिं कृत्वा यजुर्वेदमधीयते । 'अग्न आयाहि' इत्येवमादिं कृत्वा सामवेदमधीयते ।
'शन्नो देवी' इत्येवमादिं कृत्वा अथर्ववेदमधीयते ।"

( १।१।२९ )।

एवञ्च 'शन्नो देवीरि'ति मन्त्रस्य सर्वासु संहितासु विद्यमानत्वेऽपि 'आदिं कृत्वा' इत्युक्त्या पिप्पलादसंहिताया एवात्र अथर्ववेदत्वमुक्तम् । यजुःसामान्यविवक्षायां 'यजुष्युरः' इत्यादौ निर्विशेषेण यजुषीति प्रयोगात् । यजुर्विशेषविवक्षायां 'देवसुम्नयोर्यजुषि काठके' ( ७।४।३८ ) इत्यादौ सविशेषणं यजुःशब्दप्रयोगात् पाणिनेरपि वाजसनेयिसंहिताव्यरिक्तानामपि यजुषां सत्त्वं नूनमभिप्रेतम् ।

प्रत्याहाराह्निके 'एओङ्'सूत्रे—"ननु च भोः छन्दोगानां सात्यमुग्रिराणायनीया अर्धमेकारमर्धमोकारञ्च अधीयते । 'सुजाते एश्व सूनृते' 'अध्वर्यो ओद्रिभिः सुतम्' 'शुक्रं ते एन्यद्यजतं ते एन्यत्' इति । पार्षदकृतिरेषा तत्रभवताम् । नैव हि लोके नान्यस्मिन् वेदेऽर्ध एकारोऽस्ति" इत्युक्त्या राणायनीयशाखाया वेदत्वं महाभाष्यकारोऽभिप्रैति । अन्यत्र स एव लिखति—"वेदे । तद्यथा-'सप्तास्ये रेवती-रेवदूष "यद्वां रेवत्यां तमूष" इति ।

'यद्वो रेवती रेवत्यां तमूष' इति पाठश्चतसृषु सामाजिकाभिमत-संहितासु नोपलभ्यते।

एवमेव महाभाष्यकारः—वेदशब्दा अपि एवमभिवदन्ति' इत्युक्त्वा योऽग्निष्टोमेन यजते, य उ चैनं वेद' इति ब्राह्मणमुदाहरति। तथा—'वेदे खल्वपि वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतुभिर्यजेतेति' ब्राह्मण-वाक्योदाहरणानि वेदत्वेन अभिमतानि।

निरुक्ते मन्त्रसार्थक्यविचारे 'ओषधे त्रायस्वैनम्' (१।१५।६) इति मन्त्रः समायाति। अयमेव च मन्त्रो मीमांसादर्शने (१।२।३५) उद्धृतः। परन्तु 'एनम्'-पदयुक्तो नायं मन्त्रो वाजसनेयिसंहितायां लभ्यते। काण्वेऽपि नायं पाठः, किन्तु कृष्णयजुष्येव काठकसंहितायाम् (३।२।९) मैत्रायणीसंहितायां (१।२।२) तैत्तिरीयसंहितायां (१।२।१।१, १।३।५।१) तत्र-तत्र लभ्यते। एवमेव वनस्पतिनिगममुदाहरन् यास्क आह—तस्यैषा अपरा भवति' (८।२०।१),

वनस्पते रशनया नियूय पिष्टतमया वयुनानि विद्वान्।
वहा देवत्रा दिधिषो हवींषि प्र च दातारममृतेषु वोचः॥'

शाकलसंहितास्था च ऋक् एतद्विलक्षणा। तथा हि तत्र—

'वनस्पते रशनया नियूया देवानां पाथ उपवक्षि विद्वान्।
स्वदाति देवः कृणवद् हवींषि अवतां द्यावापृथिवी हवं मे॥'

(१०।७०।१० इति पाठः।

एतेन अन्यशाखास्थापि ऋगभीष्टा। निरुक्तप्रदर्शिता चेयमृक् मैत्राय-णीसंहितायां (४।१३।६५) किञ्चित् पाठभेदेन उपलभ्यते। निरुक्ते 'दिधिषो' इति पाठः, संहितायाञ्च 'दधिषो' इति पाठः। यदि तावतैव कस्यापि पाठस्यानृक्त्वं तदा शाकलसंहितायां (१०।१८।८) 'दिधिषोः' शौनकीयाथर्वसंहितायाञ्च (१८।३।२) 'दधिषोः' इति पाठः—एतयो-रन्यतरस्य अवेदत्वमायास्यति। परं तन्नेष्यते सामाजिकैरपि। निरुक्ते—'एक एव रुद्रोऽवतस्थे न द्वितीयः' (१।१५।७), 'अग्नये समिध्यमानाय अनुब्रूहि' (१।१५।८) इति मन्त्रोदाहरणम्। परं समाजिकसम्मतवेद-चतुष्टये नैतदुपलभ्यते।

यदुक्तम्—"माध्यन्दिनीयसंहितापदपाठस्य सम्प्रदायाविच्छेदे सति अस्मर्यमाणकर्तृत्वेऽपि वेदत्वमपौरुषेयत्वं च नास्ती"ति, तन्न; तस्यापि अवश्यस्मर्तव्यत्वाभावेन व्यभिचारात्। मन्त्रसंहिताब्राह्मणानामेव च पौरुषेयत्वे कर्तुरवश्यस्मर्तव्यता उक्ता। कर्तुः आप्तत्वज्ञानमन्तरा तदर्थानुष्ठानादौ प्रवृत्त्यभावापत्तेः। नहि खलु पदपाठज्ञानस्य साक्षाद् वाक्यार्थज्ञाने उपयोगः, पदार्थस्मरणहेतुत्वेन तस्य अन्यथासिद्धत्वात्।

पदप्रकृतिः संहिता' (निरुक्त १।६) इति प्रसङ्गे पदानां या प्रकृतिः सेयं पदप्रकृतिः संहिता, यतः संहितातः पदानि प्रक्रियन्ते। तस्मात् संहितैव प्रकृतिर्विकारः पदानीत्येके मन्यन्ते। अपरे तु—पदानि प्रकृतिर्यस्याः सा पदप्रकृतिरिति रीत्या पदान्येव संहत्यमानानि संहिता भवति। तेन पदान्येव प्रकृतिर्विकारः संहिता। एवञ्च कृत्वा पदप्रकृतीनि सर्वचरणानां पार्षदानि सर्वेषां चरणानां शाखान्तराणां स्वचरणपर्षद्येव यैः प्रतिशाखानियतमेव पदावग्रह-प्रगृह्याप्रगृह्यक्रम-संहिता-स्वरलक्षणमुच्यते। तानि इमानि पार्षदानि प्रातिशाख्यानीत्यर्थः। तत्तच्छाखीय-प्रातिशाख्यनियमानुसारीण्येव पदावग्रहादीनीत्यर्थः। तेषां रीत्या च पदान्येव प्रकृतिः संहिता विकारः। अथापि याज्ञे दैवतेन बहवः प्रदेशा भवन्ति। तदेतेन उपेक्षितव्यम्। ते चेद् ब्रूयुर्लिङ्गज्ञा अत्र 'स्य' इति इत्यंशस्य तात्पर्यं वदता दुर्गाचार्येणोक्तम्—'ऋषेर्मन्त्रदृशो मन्त्रोऽभिव्यज्यमानः संहितयैव अभिव्यज्यते, न पदैः। एतेन समाधिना परमेश्वरानुग्रहेण वाऽऽर्षज्ञानमृषीणां जायते, मन्त्रस्वरूपनिर्माणं तु ऋषिकर्तृकमित्यपास्तम्। अतश्च संहितामेव पूर्वमध्यापयन्त्यनूचानाः, अधीयते चाध्येतारः, यज्ञकर्मणि च संहितयैव विनियुज्यन्ते मन्त्राः, न पदैः यदि पदानां प्रकृतित्वं स्यात् तदा तेषामेव पूर्वमध्यापनादिकं स्यात्। न त्वेतद् भवति। तस्मात् संहितैव प्रकृतिः, समयमात्रमितरत् स्वशाखानियतमेव।

यदुक्तम्—"पदप्रकृतीनि सर्वचरणानां पार्षदानि, तेष्वेव हि व्याख्यायमानेषु पदानां प्रकृतित्वं भवति, न सर्वत्रैव। अनया रीत्याऽस्मिन् प्रसङ्गे मन्त्राणामेव ऋषिष्वभिव्यक्तिः। तेषामेव च यज्ञे प्रयोगः। तेषामेव

च अस्मर्यमाणकर्तृकत्वेन अपौरुषेयत्वम्। अस्मिन्नेव च पक्षे निरुक्तकारकृतम् 'वने न वायः' इति पदपाठेऽनुदात्तत्वापत्त्या तदित्यध्याहारापेक्षत्वासुसमाप्तत्वदोषप्रदर्शनेन पदपाठस्य असाधुत्वदोषप्रदर्शनं युक्तम्। इममेव पक्षमाश्रित्य महाभाष्य-कैयट-नागेशाद्युक्तयः सङ्गच्छन्ते !

वस्तुतस्तु--ऐतरेयारण्यके संहिता-पद-क्रमाणां निर्देशात् तत्पाठकनिन्दाजनितानिष्टप्राप्तिनिर्देशाच्च संहिताया इव पद-क्रमयोरपि उपास्यत्वम्, नित्यत्वम्, अपौरुषेयत्वञ्च । अत एवात्र उद्योतकारेग नागेशेन सम्प्रदायमात्रशरणतामभिधाय लक्षणानामविषयतैव समर्थिता।

ऐतरेयारण्यके च सायणः—"माण्डूकेयाभिमतोपासनकथनान्तरं शाकल्याभिमतमुपासनम्। ततश्च उपासनान्तरं प्रतिजानीते—'अथातो निर्भुजप्रवादाः' इति (ऐ० आ० ३।१।३)। 'अथ केवलसंहितोपासनोक्त्यनन्तरम्। यतः पाठकानां संहितापाठादनन्तरं पदक्रमौ पठ्यमानौ सन्धिस्थौ, अतः कारणात् निर्भुजप्रवादाः संहितोपासका महर्षयः संहितायाः पदस्य क्रमस्य च सहोपासनं प्राहुरिति शेषः। निर्भुजशब्दः संहितावाचीत्यभिधीयते। तन्निर्भुजं प्रकर्षेण वदन्ति ध्येयदेवतासहितं कथयन्तीति निर्भुजप्रवादाः।

उपास्यवस्तुनः स्वरूपं दर्शयति—'पृथिव्यायतनं निर्भुजं दिव्यायतनं प्रतृण्णमन्तरिक्षायतनमुभयमन्तरेण' इति (ऐ० आ० ३।१।३)। यथा निर्भुजशब्दः संहितावाचीत्यभिधास्यते तथा प्रतृण्णशब्दः पदवाची। उभयमन्तरेणेत्यनेन क्रमो विवक्षित इत्यभिधास्यते। तत्र यन्निर्भुजं संहितारूपं तत्पृथिव्यायतनं पृथिवीमाश्रित्य वर्तते, पृथिवीरूपत्वेन ध्यायेदित्यर्थः। तथा पदस्य द्युलोकरूपत्वम्, क्रमस्य अन्तरिक्षरूपत्वञ्च ध्यायेत्।

यथोक्तपृथिव्यादिरूपनिर्भुजादिध्यानं प्रशंसितुमुपासकस्य सामर्थ्यं दर्शयति—'अथ यद्येनं निर्भुजं ब्रुवन्तमुपवदेद् अच्योष्ठाऽवराभ्यां स्थानाभ्यामित्येनं ब्रूयात्। अथ यद्येनं प्रतृण्णं ब्रुवन्तमुपवदेद् अच्योष्टा उत्तराभ्यां स्थानाभ्यामित्येनं ब्रयात्। यस्त्वेवोभयमन्तरेणाह तस्य नास्त्यु-

पवाद:' इति ( ऐ० आ० ३।१।३ )। अथ उपासनानन्तरं निर्भुजं ब्रुवन्तं संहितामधीयानमेनमुपासकं यद्यन्यः कश्चित् उपवदेत् उपासकेन पठ्यमानायां संहितायां स्वर-वर्णादिवैकल्यदोषमुद्भावयेत्, तदानीमेनं दोषोद्भावकमयमुपासक एव ब्रूयात्—हे उपवादिन् अवराभ्यामधोवर्तिभ्यां स्थानाभ्यां पृथिव्यन्तरिक्षलोकाभ्यामच्योष्टा त्वं प्रच्युतोऽसीति। युक्तञ्चैतदुपासकस्य वचनम्, संहितायाः पृथिवीरूपत्वध्यायेन परिहारात्। अतो निर्दोषायां संहितायां दोषमुद्भावयितुः पृथिवीलोकात् तत्सहभाविनोऽन्तरिक्षलोकाच्च प्रच्युतिर्भवति।

अथशब्दः पर्वोक्तवैलक्षण्यार्थः। संहितायां दोषमनुक्त्वा प्रतृण्णं ब्रुवन्तं पदमधीयानमेनमुपासकं यदि कश्चिदुपवदेत्। अधीयाने पदे दोषोद्भावनमुपवादः। तदानीमेनमुपवादिनं प्रत्युपासक उत्तराभ्यां स्थानाभ्यामन्तरिक्षद्युलोकाभ्यामच्योष्टा प्रच्युतोऽसीत्येवं ब्रूयात्।

यस्तु उपासक उभयमन्तरेणाह क्रममधीते तस्योपासकस्य उपवादः परेणोद्भावयितव्यः क्रमविषये दोषो नास्त्येव। संहितायां पदे च भ्रान्तदृष्ट्या दोषः सम्भाव्यते। तथाहि—'अग्निमीले' इत्यस्यां संहितायामुत्तरपदगत ईकारः स्वरितः। एकारः प्रचयः। पदकाले तु तदुभयमुदात्तम्। तथा सति पदवासनावासितस्य कस्याचिच्छ्रद्धाजडस्य संहितायां स्वरान्यथात्वभ्रान्तिरुदियात्, तथा संहितावासनावासितस्य श्रद्धाजडस्य पदच्छेदकाले स्वरान्यथात्वभ्रान्तिः। क्रमकाले त नोक्तभ्रमद्वयमस्ति, द्विविधस्वरस्य पठ्यमानत्वात्। 'अग्निमि'त्यनेन पूर्वपदेन सह संहितायाम् ई इतिपदेन सह स्वरितप्रचयौ पठ्येते। 'पुरोहितम्' इत्यनेन उत्तरपदेन सह संहितायामनुदात्तद्वयं पठ्यते। तस्मात् क्रमे स्वरान्यथात्वभ्रमो नोदेति। कथञ्चिदन्यथात्वेऽपि देवताध्यायेन दोषः समाधीयते। तस्मात् उपासन प्रशस्तमित्यर्थः।

निर्भुजादिशब्दानां विवक्षितार्थे लोकप्रसिद्ध्यभावात् श्रुतिरेव तमर्थं दर्शयति—'यदि सन्धिं विवर्तयति तन्निर्भुजस्य रूपम्। अथ यच्छुद्धे अक्षरे अभिव्याहरति, तत्प्रतृण्णस्याग्र उ एवोभयमन्तरेणोभयं व्याप्तं भवति' इति (ऐ० आ० ३।१।३)। यदुच्चारणसन्धिं पदयोरुभयो-

रत्यन्तं सन्निकर्षं विवर्तयति विशेषेण सम्पादयति, तदुच्चारणं निर्भुजशब्दार्थस्य स्वरूपम्। निर्दिष्टौ भुजसदृशौ पूर्वोत्तरशब्दौ यस्मिन् संहितारूप उच्चारणे तदुच्चारणं निर्भुजम्। अथशब्दः पूर्ववैलक्षण्यार्थः। शुद्धे विकाररहिते पूर्वोत्तरे उभे अक्षरे अभिव्याहरति स्पष्टमुच्चारयतीति यदस्ति तत् प्रतृण्णशब्दाभिधेयस्य पदच्छेदस्य स्वरूपम्। तद्यथा—'इषे त्वोर्जे त्वा' इत्यत्र योऽयमोकारः सोऽयं संहितास्वरूपः यदा त्वाकारान्तं त्वेति पदम् ऊकारादिकम् ऊर्जे इति पदमुच्चारयति तदानीम् आकार ऊकारश्चेत्युभे अक्षरे शुद्धे भवतः। तदानीं सन्निकर्षरूपायाः संहिताया विच्छिन्नत्वात् विच्छेदरूपहिंसावाचिना प्रतृण्णशब्देन विच्छिन्न पदमभिधीयते। यदेतत् प्रतृण्णस्य स्वरूपं तदेतदग्र उ प्रथमभाव्येव। सिद्धे पदस्य स्वरूपे पश्चात् संहिता प्रवर्तते, संहितायां सन्धीयमानपदद्वयधर्मत्वेन पदपूर्वकत्वस्य अवश्यंभावात्। येन क्रमेण संहिता पदञ्चेत्युभयं व्याप्त भवति, सोऽयं क्रम उभयमध्यवर्तित्वात् उभयमन्तरेणेत्युच्यते।"

इत्थमुपर्युक्तश्रुतितद्भाष्यैः स्पष्टं संहिता-पद-क्रमाणाम् उपास्यत्वं तन्निन्दकानामनिष्टप्राप्तिश्च सिद्ध्यति। यथा छान्दोग्यादौ ऋचः पृथिवीरूपत्वम्, साम्नोऽग्निरूपत्वमुक्तम्, तथैव इहापि ध्येयम्। न च तेषां पौरुषेयत्वेऽनित्यत्वे च नित्यापौरुषेये वेदे तदुपासनविधानमाञ्जस्येन युज्यते। न केवलं संहिता-पद-क्रमाणमेव किन्तु जटा-माला-शिखा-रेखा-ध्वज-दण्ड-रथ-घनाख्यानामष्टविकृतीनामपि नित्यत्वमपौरुषेयत्वञ्च, शाखीयब्राह्मणप्रामाण्यात्। तथा हि—'सत्याषाढ'श्रौतसूत्रस्य रत्नमालाख्यायां टीकायां गोपीनाथभट्टः—'शाखीयब्राह्मण उक्तत्वादष्टौ विकृतीरपि सति सामर्थ्ये पठेत्। तासां लक्षणानि तैत्तिरीय-बह्वृच-प्रातिशाख्यादिभ्योऽवगन्तव्यानि।' तैत्तिरीयाणां स्वप्रातिशाख्ये जटान्तविकृतिविषय एव प्रमाणोपलम्भात् सत्यपि सामर्थ्ये तावदेवाध्ययनम्।' (सत्याषाढश्रौतसू०. आनन्दाश्रमप्रकाशन, पृ० ३०५)

शाकल्यप्रभृतय ऋषयस्तु वैशम्पायन-याज्ञवल्क्यादिवत् सम्प्रदायप्रवर्तकाः। तावतैव केषाञ्चित्तत्र पौरुषेयत्वभ्रान्तिः। परं

नैतद्युक्तम्; प्रदर्शितश्रुतियुक्तिविरोधात् कस्याश्चिच्छाखाया अपरेऽपि विशेपज्ञाः। तथा हि—

'भगवान् संहितां प्राह पदपाठं तु रावणः।
बाभ्रव्यर्षिः क्रमं प्राह जटां व्याडिरवोचत॥
मालापाठं वशिष्ठश्च शिखापाठं भृगुर्व्यधात्।
अष्टावक्रोऽब्रवीद्रेखां विश्वामित्रोऽपठद् ध्वजम्॥
दण्डं पराशरोऽवोचत् कश्यपो रथमब्रवीत्।
घनमत्रिमुनिः प्राह विकृतीनामयं क्रमः॥'

इति मधुशिक्षायां मधुमुनिः। श्रीसातवलेकरकृत वेदव्याख्यानम्, पृ० १६)

अत्र व्याडि-रावणौ कोचिन्महर्षी, प्रसिद्धावेव वा। 'यस्यां पदकृदात्रेयः क्रमकारस्तु कुण्डिनः' इति काण्डानुक्रमण्यादिरीत्यापि पद-क्रमसम्प्रदायप्रवर्तकत्वमेव। न च कृञः कर्तृत्वमेवार्थः, तथात्वे 'मन्त्रकृतः, नमो मन्त्रकृद्भ्यः' इति मन्त्राणामपि कर्तृत्वापत्तेः।

एतत्पक्षानुसारी 'वने न वायः इति श्रुत्यर्थस्तु—हे भुरणौ भर्तारौ इन्द्राग्नी य एष स्तोमोऽस्मासु निहितः, शुचिर्निर्दोषः, वने तदवयवे वृक्षे निहितः, वायः वेरयं वायः शकुनिशिशुः, न इव, चाकन् पश्यन् कामयमानो वा, इन्द्रमास्ते यस्येन्द्रः पुरुदिनेषु आह्वाता अभूदपि। कीदृश इन्द्रः नृतमः नर्यः नृभ्यो हितः, यश्च क्षपावान् रात्रिपर्यायेषु सोमभागी, यमेवेन्द्रः प्रार्थयते स एष स्तोमः तम्प्रति गच्छति, चाकन् शुचिर्वा स्तोमो भुरणावजीगः यस्येन्द्रः पुरुदिनेषु होता नृणां नर्यो नृतमः क्षपावान्।

अत्र 'वा' 'यः' इति पदच्छेदे यद्यपि 'यद्वृत्तान्नित्यम्' इति शासनेन यद्वृत्तात् परस्य नित्यमाख्यातो निघातो न भवतीत्यर्थान् 'न्यधायि' इति पदस्य अनुदात्तत्वाभावः प्राप्तः। न चेदमुदात्तम्, किन्तु न्यधायीत्यनुदात्तमेव। तथा 'वा' 'यः' पदद्वयस्य प्रकरणासङ्गत्या नैरर्थक्यमेव। तथापि 'छन्दसि दृष्टानुविधि'न्यायेनास्य समाधानम्। अध्याहारोऽपि तदनुरोधी न दोषाय। यथा—'युष्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वानावौ' इत्यार्षनिर्देशात् स्वार्थे प्रयुज्यमानयोरेव तयोर्वानाविति सङ्कोचः क्रियते, तथैव श्रुतिनिर्देशात् 'यद्वृत्तान्नित्यम्' इत्यस्यापि अत्र सङ्कोचः।

किञ्च—यजतेर्निष्पन्नस्यापि यजुःशब्दस्य श्रौतनिर्देशात् यथा 'यत्, जूः' इति पदच्छेदः क्रियते, तथैव 'वेरयम्' इति निष्पन्नस्यापि 'वाः' इत्यस्य अपौरुषेय-पदपाठनिर्देशात् 'वा' 'यः' इति पदच्छेदो नानुपपन्नः। अर्थलापने वाय इति पदाङ्गीकारेऽपि पदपाठजनित-पुण्यविशेषलाभार्थं 'वा' 'यः' इति पदच्छेदो युक्तः। श्रीवैद्यनाथदीक्षितीय-निबन्धग्रन्थीयायाः 'पाठ काले वरेण्यं स्यात् जपकाले वरेणियम्' इति प्रसिद्धेरिव अत्रापि तथात्वाङ्गीकारे बाधाभावात्।

यदुक्तम्" "पदपाठस्य अपौरुषेयत्वे यास्कदोषदर्शनमयुक्तम्" इति। तदपि न साधु; पदपाठापौरुषेयत्वे यास्कदोषदर्शनमयुक्तम्" इति। यदपि न साधु; पदपाठापौरुषेयत्वे यास्कप्रभृतीनां मतभेदेन तदुपपत्तेः। यथा जैमिनीयरीत्या वेदानामपौरुषेयत्वेऽपि गौतममहर्षिदृष्टया तेषामीश्वरकर्तृकत्वेन पौरुषेयत्वं तथा यास्कदृष्टया पदपाठस्य पौरुषेयत्वमेव। तथापि 'वाचा विरूपनित्यया' इति विरुद्धत्वात् यथा गोतमसम्मतमपि पौरुषेयत्व नाद्रियते, तथैव पूर्वोक्तश्रुतिविरुद्धत्वात् यास्कोक्तिरपि नार्तव्या।

श्रुत्यानुगुण्येन 'वने न वायः' इति श्रुत्यर्थस्तु—हे भुरणौ यः स्तोमो वने न अरण्य इव निर्मक्षिके शुद्धे मम हृदये न्यधायि निहितः। वा समुच्चयार्थः। वा यश्च स्वयमपि शुचिः, यस्य पूर्वदिनेषु नृणां नर्यः नृतमः क्षपावान् इन्द्रः होता आह्वाता मामयं स्तौत्विति कामयिता असीत् स युवामजीगः युवां प्रति गच्छति युष्मत्पर्यवसायित्वेन युवामेव स्तौति। अत्र सङ्गतत्वात् स इत्यध्याहारो न दोषाय।

श्रुत्यनुसारी निरुक्तार्थस्तु—'वा' 'यः' इति चकार शाकल्यः, 'वा' 'यः' इति पदपाठं प्रवर्तयामास। तत्र यद्यपि आख्यातस्य उदात्तत्वापत्तिः, अर्थश्चासुसमाप्तो भवति, तथाप्यापौरुषेयपदपाठस्य अपर्यनुयोज्यत्वेन तत्समाधानमूहनीयमिति शेषः। अदृष्टविशेषार्थो वा तथा पदपाठः इति वा शेषः।

यदुक्तम्—'संहिताया एव नित्यत्वं पदविच्छेदस्य तु पौरुषेयत्वम्' (पा. ३।१।१०९) इति पदपाठस्यानित्यत्वं कैयटेनोक्तम्। यच्चं नागेशेन

पदपाठस्य सम्प्रदायभ्रंशोऽङ्गीकृतः। यच्च पतञ्जलिना 'न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणमनुवर्त्यम्' इति कथितम्" इति। तदप्यविचारितरमणीयम्; वेदरूपसम्बन्ध इव पदपाठेऽपि कैयट-नागेशयोः वैदिकैर्मतभेदेन तदप्रामाण्यात्। पतञ्जलेस्तु उक्तभाष्यांशो वैदिकशब्दानुपूर्व्या अनित्योक्तिवत् एकदेश्येव। तथा हि-'तेन प्रोक्तम्'(४।३।१०१ इति सूत्रे 'ननु चोक्तं नहि छन्दांसि क्रियन्ते· नित्यानि छन्दांसीति। यद्यप्यर्थो नित्यो या त्वसौ वर्णानुपूर्वी साऽनित्या' इति महाभाष्ये अर्थनित्यत्वेनैव वेदानां नित्यत्वमुक्तम्। वर्णानुपूर्वीविशिष्टस्य वेदस्य तु अनित्यत्व-मेवाङ्गीकृतम्। कैयट-नागेशाभ्यामपि अर्थानित्यत्वेनैव वेदानां नित्यत्वमुक्तम्। शब्दानुपूर्वीरूपेण त्वनित्यत्वमेव। शब्दार्थोभयनिष्ठवेदत्वमङ्गीकुर्वन्ति नागेशादयः।

शब्दार्थोभयनिष्ठकाव्यत्वमपि केचित् तत्संस्कारेणैव अङ्गीकुर्वन्ति। रसगङ्गाधरादयस्तु वैदिकसंस्कारानुसारेण 'रमणीयार्थ प्रतिपादकः शब्दः काव्यमि'ति ऊरीकुर्वन्ति। न चानुपूर्व्या अनित्यत्वं वैदिकसम्मतम्। अर्थनित्यत्वेन तन्नित्यत्वे तन्त्रादीनामपि नित्यत्वापत्तिर्दुर्निवारा।

वस्तुतस्तु यद्यपि वर्णानां विभुत्वनित्यत्वाभ्यां पौर्वापर्यलक्षणाऽऽनुपूर्वी नोपपद्यते। तथापि कण्ठताल्वादिजनितवर्णाभिव्यक्तीनामनित्यत्वेन तत्पौर्वापर्यलक्षणानुपूर्वी न दुःसम्पाद्या। सा चानित्यैव। आनुपूर्वीविशिष्टानामेव वर्णानां पदानाञ्च पदत्व-वाक्यत्वादीनि। यद्यप्येवं समेषामेव पदवाक्यानामनित्यत्वम्; तथापि नियतानुपूर्वीकत्वेन पदानां वाक्यानाञ्च नित्यत्वव्यवहारो भवति। शिक्षकनर्तक-गात्रविक्षेपमनुकुर्वाणा शिक्ष्यमाणा नर्तकीव आचार्योच्चरितामानुपूर्वीमनुकरोति, माणवकः। यद्यप्याचार्यानुपूर्वीतो माणवकानुपूर्वी भिन्नैव, तथापि वैदिकीनां सर्वासामप्यानुपूर्वीणां पूर्वानुपूर्वीसव्यपेक्षत्वेन ऐकरूप्यात् नित्यत्वमेव। तत्र कस्यचन स्वातन्त्र्यं प्राथम्यञ्च नास्त्येव। तदभिसन्धायैवोक्तं भट्टपादेन—

"यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता।' इति।

उत्तरमीमांसकरीत्या परमेश्वरोऽपि पूर्वपूर्वकल्पीयामानुपूर्वीं संस्मृत्यैव उत्तरकल्पीयामानुपूर्वीं सृजति, न स्वातन्त्र्येण। एवञ्च प्रवाहरूपेण

नित्यत्वमेव अनुपूर्व्या अपि। यथा वैयाकरणनां निकाये घटादिशब्दनामानुपूर्वीविशिष्टानामपि नित्यत्वं तथैव मीमांसकानां राद्धान्ते वेदवाक्यानामपि नित्यत्वम्। नागेशकैयटादयोः घटादिशब्दानामिव वैदिकवाक्यानां नित्यत्वं नाङ्गीकुर्वन्ति। 'यद्यप्यर्थो नित्यः या त्वसौ वर्णानुपूर्वी साऽनित्या' इति भाष्यमपि तदभिप्रायकमेव।

इदं भाष्यं त्वेकदेशि, तच्च वैदिकसम्मतम्। तथैव पदपाठसम्बन्धी भाष्यविचारोऽपि मन्तव्यः। वैदिकानामुक्तसिद्धान्तो महाभाष्यकारेणान्यत्र समर्थितः। तथा हि—'मतौ छः सूक्तासाम्नोः' (५।२।५९) इत्यन्त्र भाष्यम्—'स्वरो नियत आम्नायेऽस्यावामशब्दस्य। वर्णानुपूर्वी खल्वप्याम्नाये नियत।' 'अस्यवाम' (ऋ. सं. १।१६४।१) इत्युपलक्षणम्, आम्नायपदवाच्ये सर्वस्मिन्नपि मन्त्रब्राह्मणात्मके वेदे वर्णानुपूर्वी नियता एकरूपा भवति। प्रवाहरूपेण नित्या भवतीत्यर्थः।' इदमेव सिद्धान्तभाष्यम्। एतद्विरुद्धास्तदुक्तय एकदेशिय एव।

'वेदोऽनादिः शिवस्तस्य व्यञ्जकः परमार्थतः।
अभिव्यक्तिमपेक्ष्यैव प्रणेतेत्युच्यते शिवः॥'

इति सूतसंहितावचनाच्च नित्यत्वमेव वेदानाम्। तद्विकृतीनाञ्च वेदप्रामाण्येनैव अपौरुषेत्वमुक्तमेव। तद्विरुद्धानां समेषामपि पौरुषेयवचनानामप्रामाण्यमन्यपरत्वञ्च। श्रुतीनां सर्वप्रमाणमूर्धन्यतया तत्प्रामाण्यादपौरुषेयत्वं विकृतीनाम्।

अन्ये तु—व्यासादिसङ्कलित-संहितादिगतमन्त्रादि-क्रमस्य अनित्यत्वेन आनुपूर्व्या अनित्यत्वमभिप्रयन्ति। मन्त्राणां ब्राह्मणानाञ्च अपौरुषेयत्वेऽपि तत्तद्विनियोग द्रष्टृदृष्ट-क्रमोपन्यासस्तु पौरुषेय इत्यप्याहुः।

केचित्तु—पाठभेदेन शाकलसंहिताया एव पौरुषेयत्वमापादयन्ति। "वने न वायो न्यधायि' अत्र 'वा' 'यः' इति चकार शाकल्यः, उदात्तं त्वेवमाख्यातमभविष्यत्। असुसमाप्तश्चार्थः" (निरुक्त) ६। २८। ३) इति दर्शनेन विज्ञायते यद् यस्यां संहितायां 'वायः' इति पाठस्तस्यैव वेदत्वं यास्को मन्यते। 'वैदिक-यन्त्रालय, अजमेर' इति स्थानात् प्रकाशितायाः संहितायाः प्राचीनसंस्करणे ५६० पृष्ठे (१०।२९।१)

'वा यः' इति मुद्रितम् । तेन समाजिनां मूलवेदत्वेनाभिमता ऋक्-संहिता यास्कदृष्टया शाकल्यकृता पौरुषेयी एव सिद्ध्यति ।

श्रीविश्वेश्वरानन्दश्च शाकलसंहितासूच्यां 'वायः' इत्येकं पदं न प्रकाशितवान् । किन्तु सूच्याः ३७१ पृष्ठे 'वा', ३७२ पृष्ठे च 'य' इति प्रकाशितवान् । तत एव प्रकाशितायाम् अथर्वसंहितायां 'वा' 'यः' इति पृथक् पृथगेव पाठः । तेनोभयोः संहितयोः पौरुषेयत्वमापतति । अर्थस्तु 'वायः, इति पाठं मत्त्वैव कृतः । तेषां स्वाभिमतरीत्या तु सर्वेऽपि पाठा अपौरुषेया एव । पाठभेदेन पौरुषेयत्वोक्तिस्तु निन्दार्थ-वाद एव ।

'शाखाभेदाश्च ये केचित् याश्च शाखासु गीतयः ।
स्वरवर्णसमुच्चाराः सर्वांस्तान् विद्धि मत्कृतान् ॥'

महा० शान्ति० ३४२।१००-१००-१०१ (९७)

इति भगवत्कृतत्वादपौरुषेयत्वेन शाखाभेदीयगीतिस्वरवर्णसमु-च्चाराणानाम् अपौरुषेयत्वमेवोक्तम् ।

आनुपूर्व्या अनित्यत्वञ्चेत् ? तद् यथा ब्राह्मणभागस्य तथैव मन्त्रभागस्यापि, यथेतरसंहितानां तथैव समाजिसम्मत-शाकली-शौनकी-कौथुमी-माध्यन्दिनीति संहिताचतुष्टयस्यापि । ४। ३ । १०१ सूत्रे महाभाष्योद्धृतानि काठक-कालापक-मौदक-पैप्पलादशाखानामामि अन्यासामुपलक्षणार्थमेव । अन्यथा समुद्धृतनाम्नीनां शाखानामेव आनु-पूर्व्या अनित्यत्वे तद्भिन्नानां मैत्रायणी-काण्व-तैत्तिरीयक-कापिष्ठलक-जैमिनि-राणायनीय-बाष्कलादि संहितानाम आनुपूर्व्या नित्यत्वापत्तिः स्यात् । न च सामाजिकानामिष्टं तत् ।

"महाभाष्यकारेण-'छन्दोऽर्थ तर्हीदं वक्तव्यम् । नहि छन्दांसि क्रियन्ते, नित्यानि छन्दांसि' (छन्दोऽर्थं 'तेन प्रोक्तमि' तिसूत्रम्) इति पूर्वपक्षं विधाय समाहितम्-"तुल्यमेतद् भवति, ग्रामे ग्रामे काठकं कालापकं प्रोच्यते, तत्रादर्शनात् ।' न च तत्र (नित्यछन्दस्सु प्रोक्त-प्रत्ययो दृश्यते । तथात्वे सुशर्मणा प्रोक्ता सौशर्मणी काठक-संहिता, सौशर्मणी शाकली संहितेति स्यात् । यत्र च प्रोक्तप्रत्ययो

दृश्यते, ग्रन्थः संभवति ( ग्रन्थस्य कृतत्वात् 'कृते ग्रन्थे' इत्येव सिद्धम् न च तत्र 'तेन प्रोक्तमि'त्यधिकारस्य प्रयोजनीयता ।

पुनः पूर्वपक्षः—'ननु चोक्तं ननि छन्दांसि क्रियन्ते, नित्यानि छन्दांसि?'

उत्तरपक्षः—'यद्यपि छन्दसां वेदानाम् अर्थो नित्यः, या त्वसौ सर्वेषां छन्दसाम् आनुपूर्वी सा अनित्या ।' 'छन्दः'शब्देन मन्त्रभागस्य मूलवेदस्य ग्रहणमिति स्वामिदयानन्दः स्वीयेऽष्टाध्यायीभाष्ये २।३।६२ सूत्रे स्वीचकार । 'अनित्या' इत्यस्य असमाना इत्यर्थः । तद्भेदाच्च काठकम्, कालापकम्, मौदकम्, पैप्पलादकम् इति । अत्र छन्दःशब्देन ११३१ शाखागतः मन्त्रसंहिताभागो ब्राह्मणभागश्च गृह्यते । अत एव नागेशभट्टः—'वेदानुपूर्वी अनित्या इत्यर्थः । अर्थस्तु सर्वस्य वेदस्य नित्यः ।' यथा 'शृणोत ग्रावाणः' श्रोता ग्रावाणः' इति आनुपूर्व्या असमानत्वेऽपि अर्थः समान एव । वार्तिककारदृष्ट्या असमानतैव अनित्यता ।

"सर्वास्ता हि चतुष्पादः सर्वाश्चैकार्थवाचकाः ।
पाठान्तरे पृथग्भूता वेदशाखा यथा तथा ॥" इति

( वायुपुराणे ६१।५९ )

पाठभेदेऽपि समानार्थकता उक्ता ।"छन्दसामर्थो नित्यः, परं छन्दसां वर्णानुपूर्वी अनित्या । वेदत्वं शब्दार्थो-भयवृत्तिइति ध्वनितम्" इति नागेशः । संहितानामसमानत्वेन अनित्यत्वेऽपि अर्थः सर्वासां नित्य एकरूप एव ।

'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वा.........'

( ऋक्संहिता १०।९०।१ ),

'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं सर्वतः स्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥'

( वाजसनेयि-संहिता ३१।१ ),

'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं सर्वतो वृत्वा...

( साम०, आरण्यके पर्व० ६।४।३ ),

सहस्रबाहुः पुरुषः सहस्राक्षः सहस्रपात्।
स भूमिं विश्वतो वृत्वा...
(अथर्व० शौनकसंहिता १९।६।१),
'छन्दांसि जज्ञिरे तस्मात्' (ऋक् सं० १०।९०।९), 'छन्दो ह जज्ञिरे तस्मात्' (अ० सं० १९।६।१३), 'त्रिपादूर्ध्व उदैत्...ततो विश्वङ्' (ऋक् सं० ४) 'त्रिभिः पद्भिर्द्यामरोहत्' तथा 'व्यक्रामत् विष्वङ्' (अथर्व २), 'एतावानस्य महिमातो' (ऋक् सं० ३), 'तावन्तोऽस्य महिमानस्ततो' (अथर्व सं० ३), उतामृतत्वस्येशानो' (ऋक् सं० २), 'उतामृतत्वस्येश्वरो' (अथर्व सं० ४), 'ऊरू तदस्य यद्वैश्यः' (ऋक् सं० १२), 'मध्यं तदस्य यद्वैश्यः' (अथर्व सं० ६),–'को बाहू का ऊरू पादा' (ऋक् सं० ५), इति तर्वत्र आनुपूर्व्या असमानत्वेऽपि अर्थस्य समानत्वम्। इदमेव शब्दानुपूर्व्या अनित्यत्वम्, अर्थस्य च नित्यम्।

यदुक्तम्—"स्वरो नियत आम्नाये' 'अस्य वामशब्दस्य वर्णानुपूर्वी खल्वप्याम्नाये नियता अस्य वामशब्दस्य' इत्याम्नाये वर्णानुपूर्व्या नित्यत्वमेवोक्तम्। तथा च भाष्योक्तिषु परस्परविरोधः स्यात्, आम्नाय-छन्दःशब्दयोः समानार्थकत्वे आनुपूर्व्या अपि नित्यत्वमनित्यत्वमेव वा स्यात्। न च काठकादिसंहितानां छन्दस्त्वं शाकलादिसंहितानामाम्नायत्वमिति वाच्यम्; 'यत्र ब्रह्मापवमानः छन्दस्यां वाचं वदन्' (ऋक् सं० ९।११२।६), 'छन्द्यं वचः' (साम० पूर्वा० ३।३।२), 'छन्दांसि जज्ञिरे' (शुक्लयजुः) इत्यादि विरोधादि"ति। तन्न; नियते'त्यस्य निश्चितार्थकत्वात्। 'एतस्मिंश्चातिमहतिशब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते' इत्यादिषु नियतशब्दस्य निश्चितार्थतादर्शनात्। नात्र नित्यार्थको नियतशब्दः। अस्मिन् प्रसङ्गेऽपि "देशः खल्वप्याम्नाये नियतः, 'श्मशाने नाध्येयम्' 'चतुष्पथे नाध्येयम्।' कालः खल्वप्याम्नाये नियतः—'नामावास्यायामध्येयम्, न चतुर्दश्याम्।' पदैकदेशः खल्वप्याम्नाये दृश्यते—'अस्यत्रामोय'मिति। सर्वत्र नियत-शब्दो निश्चितार्थकः।

किञ्च–'श्मशाने नाध्येयमि'ति वचनं न सामाजिकसम्मतेष्वाम्नायेषु दृश्यते। एवमेव–'अस्य वामीयमि'ति पदैकांशोऽपि न सामाजिकसम्मतासु संहितासु दृश्यते। लौकिकेष्वपि एतत् नियतवाचो युक्तयो नियतानुपूर्व्या भवन्ति १।१६।४ इति निरुक्ते पितापुत्रौ इन्द्राग्नी इत्यानुपूर्व्या नियतत्व वक्तुं शक्यं न नित्यत्वम्। नियतशब्दस्य 'तुष्यतु दुर्जन' न्यायेन नित्यार्थकत्वेऽपि न विरोधः 'अथवा नेदमेव नित्यलक्षणं ध्रुवं कूटस्थमविचालिअनपायोपजनविकारि यत्तन्नित्यम्, तदपि नित्यं यस्मिन् तत्त्वं (तद्भावो) न विहन्यते।' इति महाभाष्यम्। अन्यत्र च 'अयं खलु नित्यशब्दो नावश्यं कूटस्थे अविचालिषु भावेषु वर्तते। किं तर्हि ? आभीक्ष्ण्येऽपि वर्तते। तद्यथा—'नित्य प्रहसितः, नित्य प्रचल्पितः।' तेनानित्येऽपि नित्यशब्दो महाभाष्ये प्रयुक्तः। तदुक्तं नागेशेन–'सा आनुपूर्वी तत्कल्पसमाप्तिपर्यन्तं नियता इत्यर्थः।' गौतमसूत्रे (२।१६८) 'अतीतानागतसम्प्रदायाभ्यासप्रयोगाविच्छेदेन वेदनित्यता' इति वात्स्यायनः।

अस्मिन् पक्षे गोतम-वात्स्यायनादिनैयायिकादिवत् महाभाष्यकारस्यापि वेदपौरुषेयवादित्वमेव सिद्ध्यति। कल्पपर्यन्तस्थायित्वेन तु नित्यत्वापौरुषेयत्ववादित्वमौपचारिकमेव तच्च न केवलं शाखान्तरीयपाठभेदेन असमानानुपूर्वीकत्वेनैव, किन्तु एकस्यामपि शाखायां कल्पान्तरीयासमानानुपूर्वीकत्वेनापि पौरुषेयत्वमनित्यत्वञ्च। अत एव 'तेन कृतम्' इत्यनेनैव प्रत्ययो न 'तेन प्रोक्तमि'ति छन्दोऽर्थे सम्भवति। छन्दस्त्वस्य शब्दार्थोभयवृत्तित्वेन अर्थस्य नित्यत्वेनैव नित्यत्वम्, शब्दानुपूर्वी रूपेण त्वनित्यत्वमेव। अस्मिन् पक्षे नित्यार्थक-नियतशब्दोऽपि प्रलयपर्यन्तावस्थायित्वेन चरितार्थः। निश्चितार्थको नियतशब्दोऽपि तत्तत्कल्पे तत्तच्छाखासु च निश्चितानुपूर्वीकत्वेनैव नियतता, न नित्यानुपूर्वीकत्वेनेति।

वस्तुतस्तु—नित्यानां विभूनां वर्णानां देशकालकृतपौर्वापर्यलक्षणक्रमासम्भवात् अनित्यानां वर्णाभिव्यक्तीनामेव देशकालकृतपौर्वापर्य-

रूपानुपूर्वी सम्भवति। सा च सर्वथा अनित्यैव सम्भवति, न नित्या। अत एव शिक्ष्यमाणा नर्तकी यथा शिक्षकगात्रविक्षेपमनुकरोति तथैव माणवकोऽप्याचार्योच्चारितां मन्त्रानुपूर्वीमनुकरोति। अनुकरणीयगात्रविक्षेपादनुकर्त्रविक्षेपादनुकर्त्र्या गात्रविक्षेपभेदवत् आचार्योच्चारिताया आनुपूर्व्या [माणवकोच्चारितानुपूर्व्या अपि भेद एव। तथापि प्रतिकल्पं समानरूपत्वात् एकरूपत्वात् निश्चितत्वाच्च आनुपूर्व्याः प्रवाहरूपेण नित्यता व्यपदिश्यते। प्रतिकल्पं तद्भेदेन चासमानरूपत्वेन अनिश्चितत्वात् अनित्यतोच्यते। तत्रानुपूर्व्या अनित्यता नैयायिकादिरीत्या, नियतता किञ्च मीमांसकरीत्या सङ्गच्छते। अस्मिन् पक्षे 'तेन प्रोक्तमि'त्यनेनैव प्रत्ययः। बहूनां प्रवक्तृत्वेऽपि कठादिविशिष्टनाम्नैव प्रत्ययः। यथा बहूनां मातृत्वेऽपि देवदत्तमातेति समाख्या भवति, तद्वत्। अत्र पक्षे 'समाख्या प्रवचनात्' इति जैमिनिसूत्रं 'वाचा विरूप नित्यया' इति मन्त्रश्च आञ्जस्येन सङ्घटते।

सर्वथाऽपि 'पदकारैर्नाम लक्षणमनुवर्त्यमि'ति भाष्यं प्रौढिवादाभिप्रायकमेव ज्ञातव्यम्। पदपाठपौरुषेयत्ववादिनापि पदपाठस्य शाकल्याद्यृषिकर्तृकत्वाङ्गीकारात्। पदक्रममूलिका एव जटा-मालाद्या अष्टौ विकृतयोऽपि। तासामपि पौरुषेयत्वे वशिष्ठ-विश्वामित्र-पराशराष्टावक्राद्यृषिकर्तृकत्वमेव। ऋषयश्च लक्ष्यैकचक्षुष्का एव भवन्ति, न लक्षणैकचक्षुष्काः। तेन लक्षणान्येवताननुवर्तेरन्, न ते लक्षणानुवर्तिनः। ऋषिकृतपदानां छन्दस्तुल्यत्वेन न तत्र लक्षणविरोधो दूषणाय भवति, 'छन्दोवत् सूत्राणि भवन्ति' इत्युक्तेः। तदर्थमेव 'पृषोदरादीनि यथोपदिष्टम्'। (पा० सू० ६। ३। १०६) इति सूत्रञ्च।

न च पाणिन्याद्युक्तय एव तथाभूता इति वाच्यम्; वाल्मीकाद्युक्तीनामपि आर्षत्वेनैन लक्षण-विरोधपरिहारदर्शनात्। 'मनायेतरायवा' इत्याद्युदाहरणानि।

'आविर्भूतप्रकाशानामनुपप्लुतचेतसाम्।
अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते॥

अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा।
ये भावान् वचनं तेषां नानुमानेन बाध्यते ॥'

इति 'पृषोदरादीनि' सत्रे कैयटः।

छन्दसि दृष्टानुविधिर्हि भवति। अत एव 'व्यत्ययो बहुलम्' (पा० स० ३।१।८५) इत्यत्र भाष्यम्—

'सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङाञ्च।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन ॥' इति।

वस्तुतस्तु पदपाठस्यापौरुषेयत्वमित्युक्तमेव। सूर्यऋषिर्मन्त्रकृत्' (ऐ० ब्रा० ६।१) 'यत्र धीरा मनसा वाचमक्रत' (ऋ० सं० १०।७१।२) 'ऋषिः कुत्सः कर्ता भवति स्तोमानामित्युपमन्यवः' (नि० ३।२।५) 'ऋषे मन्त्रकृतां स्तोमैः' (ऋक्संहिता ६' ११४।२) इत्यादिप्रमाणैः यथा मन्त्राणां कर्तृत्वश्रवणेऽपि सम्प्रदायप्रवर्तनमेव अर्थः, तथैव ऐतरेय-याज्ञवल्क्यादीनामपि कर्तृत्वश्रवणं सम्प्रदायप्रवर्तन एव पर्यवस्यति। वस्तुतः पदपाठस्यापौरुषेयत्वमित्युक्तमेवेति आस्तां विस्तरः।

इति पदवाक्यप्रमाणपारावारीणपरमहंसपरिव्राजकाचार्यवर्य अनन्त-
श्रीस्वामिहरिहरानन्दसरस्वती महाराज विरचितः
वेदस्वरूप विमर्शः पूर्णतामभजत्।

॥ ॐ तत्सत् ॥



# पुस्तक प्राप्ति स्थान

१–सन्तशरण वेदान्ती
धर्म संघ
दुर्गाकुण्ड, वाराणसी ।

२–श्री बाबूलाल गनेड़ीवाले
कमला स्टोर
काटन स्ट्रीट, कलकत्ता ।

३–श्री मोतीलाल बनारसीदास
चौक, वाराणसी।

४–श्री मास्टर खेलाड़ीलाल एण्ड सन्स
कचौड़ीगली, वाराणसी ।

५–श्री भारती विद्या प्रकाशन
कचौड़ीगली, वाराणसी ।

६–धर्मसंघ महाविद्यालय
७ इन्द्रप्रस्थ मार्ग सिविल लाइन दिल्ली ।